वि. भा. ग्रन्थमाला—१५ V. I. Series—15

# अथर्ववेदः (शौनकीयः)

स च

पदपाठेन च श्रीसायणाचार्यकृतभाष्येण च पाठविमर्शौपयिकेन
पाठभेदादिटिप्पणेन च संयोज्य
भीमदेव-विद्यानिधि-मुनीश्वरदेव-सायुज्यभाजा

**विश्वबन्धुना**

**संपादितः**

तत्र चाऽयम् ११–१८ काण्डात्मकः

**३यो भागः**

होशिआरपुरम्

विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्

२०१८ वि.

# ATHARVAVEDA (ŚAUNAKA)

*With*

**The Pada-pāṭha and SĀYAṆĀCĀRYA'S Commentary**

**EDITED**

**And annotated with text-comparative data from original manuscripts and other Vedic works**

*By*

**VISHVA BANDHU**

*In collaboration with*

**BHĪMDEV, VIDYĀNIDHI AND MUNĪSHVARDEV**

**PART III (Kāṇḍas XI—XVIII)**

**HOSHIARPUR**

**Vishveshvaranand vedic Research Institute**

**1961**

प्रथमं संस्करणम्, २०१८ वि.

प्रकाशकृत् —विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्,

साधु-आश्रमः (पत्रगृहम्), होशिआरपुरम्, (पं., भारतम्)



FIRST EDITION, 1961

*Publishers:* Vishveshvaranand Vedic Research Institute,
Sadhu-Ashram (P. O.), Hoshiarpur (Pb., India).




Perpared and published under the patronage of the Government of India in the Ministry of Scientific Research and Cultural Affairs, the Government of Panjab, the University Grants Commission, the University of Panjab, the Dayanand Anglo-Vedic College Management, New Delhi, and the Trusts and Charities of Shri Vishva Bandhu, Shri Moolchand Khairaitiram and other donors,

# शोधपत्रम्

## The Corrigenda

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३८१ | १० | यजूंषि | यजूंषि |
| १३८५ | १८ | सत्य | सत्यं |
| १५२४ | १९ | देवस्यं | देवस्यं |
| १५३२ | १८ | कुमारी पालाय | कुमारीपालाय |
| १५३३ | ५ | °यति | °हयति |
| ,, | ८ | °काकः | °कामः |
| १५६६ | २४ | प्रतोदः | प्रंतोदः |
| १५८४ | २२ | °तेहु | °तेहु° |
| १६०८ | २५ | यत्रे° | °यत्रै° |
| १६४० | २१ | वृष° | वृष° |
| १६४१ | १७ | °तायम् | °तायाम् |
| १६४८ | १३ | ६ | ७ |
| १६७३ | २६ | °शव्दे | °शब्दे |
| १६९८ | ३० | °ङ्खयाते | °ङ्खयाते |



अथ

# अथर्ववेदे (शौनकीये)

श्रीसायणाचार्यकृतभाष्यसहिते

११-१८ काण्डात्मकः

तृतीयो भागः

अथ

# एकादशं काण्डम्

श्रीगणाधिपतये नमः। निर्विघ्नम् अस्तु।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ १॥

एकादशे काण्डे पञ्चानुवाकाः। प्रथमेऽनुवाके सप्त सूक्तानि। तत्र 'अग्ने जायस्व' इत्यादिसूक्तचतुष्टयम् अर्थसूक्तम्। तेन ब्रह्मौदनसवे निरुप्तहविरभिमर्शनसंपातदातृवाचनदानानि कुर्यात्। तत्र 'अग्ने जायस्व' (१) इति प्रथमया ब्रह्मौदनादिसवयज्ञेषु मथ्यमानम् अग्निम् अनुमन्त्रयेत। 'कृणुत धूमम्' (२) इति द्वितीयया मथनसमये उत्पद्यमानधूमानुमन्त्रणं कुर्यात्। 'अग्नेऽजनिष्ठाः' (३) इति तृतीयस्यास्त्रिभिः[1] पादैर्मथ्यमानं[2] जाताग्निम् अनुमन्त्रयेत। 'अस्यै रयिम्' (३) इति चतुर्थेन पादेन पत्न्यै फलं काङ्क्षन् अग्निम् अनुमन्त्रयेत। 'समिद्धः' (४) इति चतुर्थ्या काष्ठैः प्रज्वाल्यमानम् अग्निम् अनुमन्त्रयेत। 'उत्तमं नाकम्' (४) इति चतुर्थं पादं दातारं वाचयेत्। यद् आह कौशिकः — 'अग्नीनाधास्यमानः [3]सवान् वा दास्यन् संवत्सरं[3] ब्राह्मौदनिकमग्निं दीपयति' इत्युपक्रम्य "'अग्ने जायस्व' इति मथ्यमानमनुमन्त्रयते[4]। पत्नी मन्त्रं संनमयति। यजमानश्च[5]। 'कृणुत धूमम्' इति धूमम्। 'अग्नेऽजनिष्ठाः' इति जातम्। 'समिद्धो अग्ने[6]' इति समिध्यमानम्" (कौसू ६०,१;१९;२४) इति।

ब्रह्मौदनसवयज्ञ एव देवपितृमनुष्यार्थं व्रीहिराशीन् त्रेधा विभक्तान् 'त्रेधा भागः' (५) इति ऋचस्त्रिभिः पादैः कर्ता अनुमन्त्रयेत। 'यो देवानाम्' इति चतुर्थपादेन पत्नीम् अनुमन्त्रयेत। 'अग्ने सहस्वान्' (६) इति ऋचा दातारम् अनुमन्त्र्य देवभागं कुम्भ्यां निर्वपेत्। सूत्रितं हि — "[7]आदिष्टानंशानजानत्यै[7] प्रयच्छति। तान् 'त्रेधा भागः' इति व्रीहिराशिषु निदधाति। तेषां यः पितॄणां तं श्राद्धं करोति। यो मनुष्याणां तं ब्राह्मणान् भोजयति। यो देवानां तम् 'अग्ने सहस्वान्' इति दक्षिणं जान्वाच्यापराजितामुखः प्रह्वो वा [8]मुष्टिभिः प्रसृताञ्जलिभिः[8] कुम्भ्यां निर्वपति" (कौसू ६१,७-११) इति।

---

१. तृतीययात्रि° S′. २. °दैमथ्य° S′. ३. सवांदास्यन् सांवत्सरं S′. ४. मन्थन्तावनु° Bl. ५. यजमानं च S′, Bl. ६. अग्निः शंपा. ७. °ष्टानां सानजानत्यै Bl. ८. मुष्टिप्रसृता° Bl.

तत्रैव कर्मणि 'साकं सजातैः' (७) इति ऋचा निरुप्तान् व्रीहीन् उलूखले आवपेत् । सूत्रितं हि— "'साकं सजातैः' इति व्रीहीनुलूखल आवपति" (कौसू ६१,२०) इति । अत्र "'साकम्' इत्यर्धर्चेन उलूखले व्रीहीन् आवपेत् । 'ऊर्ध्वो नाकस्य' इत्यर्धर्चेन पच्यमानस्य ओदनस्योपरि गर्तं[1] कुर्यात्" इति भाष्यकारः ।

तत्रैव कर्मणि ब्राह्मौदनिकस्याग्नेः पश्चाद्भागे औक्षं[2] वा आनडुहं वा चर्म प्रस्तृणन्तं यजमानम् 'इयं मही' (८) इति ऋचा वाचयेत् । "'इयं मही' इति चर्मा-स्तृणाति प्राग्ग्रीवमुत्तरलोम" (कौसू ६०,३०) इति सूत्रात् ।

'एतौ ग्रावाणौ' (९) इति ऋचः[3] प्रथमपादेन उलूखलमुसलं चर्मणि स्थापयेत् । 'निर्भिन्ध्यंशून्' इति पादत्रयेण व्रीहीन् अवहन्यात् । 'गृहाण ग्रावाणौ' (१०) इत्यर्धर्चेन उलूखलमुसलम् अवहननार्थं[4] पत्नीं ग्राहयेत् । 'त्रयो वराः' इत्यर्धर्चेन निर्वापानन्तरं वरं [5]वृणन्तावनुमन्त्रयते । सूत्रितं हि— "'एतौ[5] ग्रावाणौ' (९), 'अयं ग्रावा' (अ १२,३,१४) इत्युलूखलमुसलं [6]शूर्पं प्रक्षालितं[6] चर्मण्याधाय । 'गृहाण ग्रावाणौ' (१०) इत्युभयं गृह्णाति" (कौसू ६१,१८;१९) इति, "'निर्भिन्ध्यंशून्', 'ग्राहिं पाप्मानम्' (अ १२,३,१८) इत्यवहन्ति" (कौसू ६१,२२) इति, "'त्रयो वराः' इति त्रीन् वरान् वृणीष्व" (कौसू ६१,१५) इति च ।

**अग्ने॒ जाय॒स्वादि॑तिर्नाथि॒तेयं ब्र॑ह्मौद॒नं प॑चति पु॒त्रका॑मा ।**
**स॒प्त॒ऋ॒षयो॑[7] भूत॒कृत॒स्ते त्वा॑ मन्थन्तु प्र॒जया॑ स॒हेह ॥ १ ॥**

अग्ने॑ । जाय॑स्व । अदि॑तिः । ना॒थि॒ता । इ॒यम् । ब्र॒ह्मऽओ॒द॒नम् । प॒च॒ति॒ । पु॒त्रऽका॑मा । स॒प्त॒ऽऋ॒षय॑ः । भू॒त॒ऽकृत॑ः[8] । ते । त्वा॒ । म॒न्थ॒न्तु॒ । प्र॒ऽजया॑ । स॒ह॒ । इ॒ह ॥ १ ॥

हे अग्ने जायस्व मथनाद् उत्पद्यस्व । जनी प्रादुर्भावे । दिवादित्वात् श्यन् । 'ज्ञाजनोर्जा' (पा ७,३,७९) इति जादेशः । किमर्थं जननप्रार्थनम् इति आह— नाथिता नाथमाना याचमाना । नाथृ याच्ञायाम् । अस्मात् कर्तरि निष्ठा । इष्टफलम् आशंस-माना इयम् अदितिः अदीना देवमाता पुत्रकामा पुत्रान् कामयमाना । 'शीलिकामिभक्ष्याच-रिभ्यो णः' (पावा ३,२,१) इति कामेर्णप्रत्ययः । ब्रह्मौदनम् । ब्रह्मणे जगत्स्रष्ट्रे स्वाहाकारेण देय ओदनो ब्रह्मौदनः । यद्वा ब्रह्मौदनसवाख्ये अस्मिन् कर्मणि ब्राह्मणानां भोजनाय भागत्वेन कल्पित ओदनो ब्रह्मौदनः । तं पचति निर्वापादिक्रमेण पक्वं करोति । तदर्थम् हे अग्ने जायस्वेत्यर्थः । ब्रह्मौदनपाकेन अदितेः पुत्रोत्पत्तिस्तैत्तिरीयके समाम्नायते—'अदितिः पुत्रकामा देवेभ्यो साध्येभ्यो ब्रह्मौदनम् अपचत् । तस्या उच्छेषणम् अददुः । तत् प्राश्नात् । सा रेतोऽधत्त ।

---

१. मर्त्तं S'. २. मौंजं S'. ३. ऋचा S'. ४. एवह° S'. ५. वृणीतौ S'. ६. शूर्पप्र° S'. ७. स॒प्त॒र्षयो॑ Bh,C,K. ८. कृ॒त॒ऽकृतः P.

तस्य चत्वार आदित्या अजायन्त' ( तै ६,५,६,१ ) इति । अदितिकर्तृकस्य ब्रह्मौदनपाकस्य पूर्वम् अतिवृत्तत्वेन इदानीम् अभावात् अदितिशब्दस्य स्थाने पत्नीयजमानयोर्नामग्रहणं कर्तव्यम् । यद् आह कौशिकः—'पत्नी मन्त्रं संनमयति । यजमानश्च'[1] ( कौसू ६०,२०;२१ ) इति । सप्तऋषयः सप्तसंख्याका ऋषयः अतीन्द्रियार्थस्य द्रष्टारो मरीच्यत्रिप्रमुखाः । 'दिक्संख्ये संज्ञायाम्' ( पा २,१,५० ) इति संख्याशब्दस्य समानाधिकरणेन उत्तरपदेन समासः । भूतकृतः भूतानां कर्तारः पृथिव्यादीनां स्रष्टारः ते प्रसिद्धाः हे अग्ने त्वा त्वाम् इह अस्मिन् देवयजने प्रजया पुत्रपौत्रादिरूपया यजमानसंबन्धिन्या सह मन्थन्तु मथनेन उत्पादयन्तु । मन्थ विलोडने इति धातुः ।

> कृणुत[2] धूमं [3]वृषणः सखायोऽद्रोघाविता वाचमच्छ[3] ।
> अयमग्निः पृतनाषाट् सुवीरो येन देवा[4] असहन्त[5] दस्यून्[6] ॥ २ ॥

कृणुत । धूमम् । वृषणः । सखायः । अद्रोघऽअविता[7] । वाचम् । अच्छ ।
अयम् । अग्निः । पृतनाषाट् । सुऽवीरः । येन । देवाः । असहन्त । दस्यून् ॥ २ ॥

हे वृषणः वृषाणः कामानां वर्षितारः । 'वा षपूर्वस्य निगमे' (पा ६,४,९) इति दीर्घाभावः । सखायः समानख्यानाः सर्वजगन्मित्रभूताः सप्तऋषयः ऋत्विजो वा यूयं धूमं कृणुत मथनेन उत्पादयत । कृवि हिंसाकरणयोश्च । 'धिन्विकृण्व्योर च' ( पा ३,१,८० ) इति उप्रत्ययः । 'सतिशिष्टस्वरबलीयस्त्वम् अन्यत्र विकरणेभ्यः' (तु. पाम ६,१,१५८) इति वचनात् तिङ एव उदात्तत्वम् । पादादित्वात् निघाताभावः । अद्रोघाविता अद्रोहकारिणां [8]सुचरित्राणां यजमानानाम् अविता रक्षिता वाचम् अच्छ मथ्यमानाग्नेः स्तुत्यर्थम् अनूच्यमानाम् ऋग्रूपां वाचमभिलक्ष्य अयं जायमानःअग्निः पृतनाषाट् पृतनाः शात्रवीः सेनाः सहते अभिभवतीति पृतनाषाट् । षह अभिभवे । 'छन्दसि सहः' ( पा ३,२,६३ ) इति ण्विप्रत्ययः । 'सहेः साडः सः' ( पा ८,३,५६ ) इति षत्वम् । 'अग्ने हंसि न्यत्रिणम्' ( ऋ १०,११८,१ ) इति निगमः । सुवीरः वीरा विक्रान्ता देवाः शोभनैस्तैरुपेतः । यद्वा वीर्याज्जायन्त इति वीराः पुत्रा यजमानसंबन्धिनः । शोभनैस्तैर्युक्तः । जायत इत्यर्थः । 'वीरवीर्यौ च' ( पा ६,२,१२० ) इति उत्तरपदाद्युदात्तत्वम् । शोभनवीर्योपेतत्वम् अग्नेः समर्थयते—येन अग्निना देवाः इन्द्रादयो दस्यून् उपक्षपयितॄन् असुरान् असहन्त अभ्यभवन् । सोयम् अग्निरिति संबन्धः ।

---

१. °मानं च Bl.　　२. कृणोत ऋ ३,२९,९.　　३. वृषणं सखायोऽस्रेधन्त इतन वाजमच्छ ऋ.　　४. देवासो ऋ.　　५. असहन्त>असंहन्त Cs; असहन्त अन्ये मूको.　　६. शत्रून् पै १६,८९,२.　　७. °अविताः P,J,WM.; अविता>अविताः Cp.　　८. सचरि° S'.

अग्नेऽजनिष्ठा महते वीर्याय ब्रह्मौदनाय पक्तवे[1] जातवेदः ।
सप्तऽऋषयो[2] भूतकृतस्ते त्वाऽजीजनन्नस्यै रयिं सर्ववीरं नि यच्छ ॥ ३ ॥

अग्ने । अजनिष्ठाः । महते । वीर्याय । ब्रह्मऽओदनाय । पक्तवे । जातऽवेदः ।
सप्तऽऋषयः । भूतऽकृतः । ते । त्वा । अजीजनन् । अस्यै । रयिम् । सर्वऽवीरम् । नि । यच्छ ॥३॥

हे अग्ने अजनिष्ठाः मथनेन उत्पन्नो भवसि । जनी प्रादुर्भावे । लुङि रूपम् । महते प्रभूताय वीर्याय सामर्थ्याय । लोके दाहपाकक्षमस्याग्नेः सद्भावेऽपि मन्त्रसामर्थ्येन मयि तस्माद् अग्नेरेव वीर्याधिक्यं जायत इत्यर्थः । यस्माद् एवम् अग्नेर्वीर्यं महत् तस्माद् विशिनष्टि — हे जातवेदः जातानाम् उत्पन्नानां प्राणिनां वेदितरग्ने ब्रह्मौदनाय पक्तवे[3] । पचेस्तुमर्थे तवेन्प्रत्ययः । पक्तुं भूतकृतः भूतानां पृथिव्यादीनां कर्तारः स्रष्टारः ते प्रसिद्धाः सप्तऋषयः त्वा त्वाम् अजीजनन् मन्त्रसामर्थ्येन निरतिशयवीर्यम् उदपीपदन् । जनेर्ण्यन्तात् लुङि चङि रूपम् । अस्यै पत्न्यै सर्ववीरम् सर्वैर्वीरैः पुत्रपौत्रादिरूपैर्युक्तं रयिम् धनं नि यच्छ नियमय । यथा एनां रयिः प्राप्नोति तथा कुर्वित्यर्थः । यम उपरमे । 'इषुगमियमां छः' ( पा ७,३,७७ ) इति छत्वम् । अथवा नितरां प्रयच्छ । दाण् दाने । 'पाघ्रा' ( पा ७,३,७८ ) इत्यादिना यच्छादेशः ।

समिद्धो अग्ने समिधा समिध्यस्व[4] विद्वान्[5] देवान् यज्ञियाँ एह वक्षः ।
तेभ्यो हविः[6] श्रपयं जातवेद उत्तमं नाकमधि रोहयेमम्[7] ॥ ४ ॥

सम्ऽइद्धः । अग्ने । सम्ऽइधा । सम् । इध्यस्व[8] । विद्वान् । देवान् । यज्ञियान् । आ । इह । वक्षः ।
तेभ्यः । हविः । श्रपयन्[9] । जातऽवेदः । उत्ऽतमम् । नाकम् । अधि । रोहय । इमम् ॥ ४ ॥

हे अग्ने समिद्धः संदीप्तस्त्वं समिधा मन्त्रेण आधीयमानया पलाशादिवृक्षसंभूतया समिद्धः[10] पुनरलौकिकप्रभावेन संदीपितः स[10] तादृशस्त्वं विद्वान् जानन् यज्ञियान् यज्ञार्हान् देवान् । 'यज्ञर्त्विग्भ्यां घखञौ' ( पा ५,१,७१ ) इति घप्रत्ययः । इह अस्मिन् देवयजने यजमाने वा आ वक्षः आवह । वहेर्लेटि अडागमः । 'सिब्बहुलं लेटि' ( पा ३,१,३४ ) इति सिप् । ढत्वकत्वषत्वानि । हे जातवेदः जातानां वेदितरग्ने तेभ्यो देवेभ्यः हविः श्रपयन् ब्रह्मौदनलक्षणम् अन्नं पचन् । श्रा पाके इत्यस्मात् ण्यन्तात् लटः शत्रादेशः । आकारान्तलक्षणे पुकि कृते घटादिपाठात् 'मितां ह्रस्वः' ( पा ६,४,९२ ) इति उपधाह्रस्वत्वम् । इमं यजमानम् उत्तमम् अतिशयेन उत्कृष्टं नाकम् दुःखसंस्पर्शरहितं स्वर्गं लोकम् अधि रोहय । देहावसानानन्तरं

---

१. पक्तये पै १६,८९,३. २. सप्तर्षयो Bᵇ,C,K. ३. पक्तवे जातवेदः S'. ४. समिद्धः स S; समिध्यसे पै १६,८९,४. ५. विश्वा पै. ६. हव्यं पै. ७. स्वर्गं लोकमधिरोहयैनम् पै. ८. इधस्व P. ९. °यम् P². १०. वैतु. मंपा.

प्रापयेत्यर्थः। उत्तमम् इति। 'उत्तमशश्वत्तमौ सर्वत्र' इति उञ्छादिषु (पा ६,१,१६०) पाठाद् अन्तोदात्तत्वम्। नाकम् इति। नास्मिन् अकम् अस्तीति नाकः। 'नभ्राण्नपात्' (पा ६,३,७५) इत्यादिना नञः प्रकृतिभावः।

त्रेधा भागो निहितो 'यः पुरा वो'[1] देवानां पितॄणां मर्त्यानाम्।
अंशान्[2] जानीध्वं वि भजामि तान् वो यो देवानां स इमां[3] पारयाति ॥५॥

त्रेधा। भागः। निऽहितः। यः। पुरा। वः। देवानाम्। पितॄणाम्। मर्त्यानाम्।
अंशान्। जानीध्वम्। वि। भजामि। तान्। वः। यः। देवानाम्। सः। इमाम्। पारयाति ॥५॥

वः युष्माकं देवानाम् अग्न्यादीनां पितॄणाम् पितृपितामहप्रपितामहानां मर्त्यानाम् मनुष्याणां भोजयितव्यानां[4] ब्राह्मणानां यो भागस्त्रेधा त्रिविधः पुरा निहितः व्रीह्यवस्थायां विभज्य स्थापितः। 'एधाच्च' (पा ५,३,४६) इति त्रिशब्दाद् विधार्थे एधाच्प्रत्ययः। हे देवाद्याः अंशान् भागान् जानीध्वम् अवगच्छत। ज्ञा अवबोधने। क्र्यादित्वात् श्नाप्रत्ययः। 'ज्ञाजनोर्जा' (पा ७,३,७९) इति जादेशः। वः युष्मभ्यं तान् भागान् अहं वि भजामि पृथक्करोमि। तत्र देवार्थेन भागेन निर्वापादिकं कर्तव्यम्, पित्रर्थेन वृद्धिश्राद्धम्, मनुष्यार्थेन ब्राह्मणभोजनम् इति विभागस्य उपयोगः। तत्र देवानां यो भागः सः अग्नौ हवीरूपेण हूयमानः सन् इमां पत्नीं पारयाति इष्टफलस्य पारं गमयति। पार तीर कर्मसमाप्ताविति धातुः।

अग्ने सहस्वानभिभूरभीदसि नीचो न्युब्ज द्विषतः सपत्नान्।
इयं मात्रा मीयमाना मिता च सजातांस्ते बलिहृतः[5] कृणोतु ॥ ६ ॥

अग्ने। सहस्वान्। अभिऽभूः। अभि। इत्। असि। नीचः। नि। उब्ज। द्विषतः। सऽपत्नान्।
इयम्। मात्रा। मीयमाना। मिता। च। सऽजातान्। ते। बलिऽहृतः। कृणोतु ॥ ६ ॥

हे अग्ने त्वं सहस्वान् सहः पराभिभवनक्षमं बलं तद्वान् 'तसौ मत्वर्थे' (पा १,४,१९) इति भत्वात् पदत्वाभावाद् रुत्वाभावः। अत एव अभिभूः अभिभविता शत्रूणाम् अभ्यसि। इत् अवधारणे। अभिभवस्येव। सर्वोत्कृष्टो वर्तस इत्यर्थः। तस्माद्धेतोः द्विषतः द्वेष्टॄन् अप्रियकारिणः सपत्नान् अस्मदीयान् शत्रून्

---

१. जातवेदो पै १६,८९,५. २. अंशां A,B[h],D,K[m],Cs. ३. एवं पै.
४. भांजयि° S'. ५. बलिदंचः? पै १६,८९,६.

नीचः न्यश्चनान् नीचीनगमनान् क्षयिष्णून् न्युब्ज अधोमुखान् पातय । निपूर्वाद् अञ्चतेः 'ऋत्विग्' (पा ३,२,५९) इत्यादिना क्विन् । 'अनिदिताम्' (पा ६,४,२४) इति नलोपः । शसि भसंज्ञायाम् 'अचः' (पा ६,४,१३८) इत्यकारलोपे 'चौ' (पा ६,३,१३८) इति दीर्घत्वम् । न्युब्जेति । उब्ज आर्जवे । अत्र उपसर्गवशाद् अधोमुखीकरणम् अर्थः । यथा 'दशाभिः कलशौ[1] मृष्ट्वा न्युब्जति' (आपश्रौ १२,२९,९) इति । मात्रा निर्मात्रा मीयमाना क्रियमाणा मिता निर्मिता च इयं शाला हे यजमान ते तुभ्यं सजातान् समानजन्मनः पुरुषान् बलिहृतः । बलिः उपायनद्रव्यम् । तस्य हर्तॄन् कृणोतु करोतु ।

साकं स॒जा॒तैः पय॑सा स॒हैध्युदु॑ब्जैनां[2] म॒ह॒ते वी॒र्या॑य ।
ऊ॒र्ध्वो नाक॒स्याधि॑ रोह वि॒ष्टपं॑ स्व॒र्गो लो॒क इति॒ यं वद॑न्ति ॥ ७ ॥

सा॒क॒म् । स॒ऽजा॒तैः । पय॑सा । स॒ह । ए॒धि॒ । उत् । उ॒ब्ज॒ । ए॒ना॒म् । म॒ह॒ते । वी॒र्या॑य ।
ऊ॒र्ध्वः । नाक॑स्य । अधि॑ । रो॒ह॒ । वि॒ष्टप॑म् । स्वः॒ऽगः । लो॒कः । इति॑ । यम् । वद॑न्ति ॥७॥

हे यजमान सजातैः समानजन्मभिः पुरुषैः साकम् सार्धं पयसा पयोवत्सारभूतेन कर्मफलेन सह एधि भव । अस्तेर्लोटि 'सेर्ह्यपिच्च' (पा ३,४,८७) इति हिरादेशः । 'घ्वसोरेद्धावभ्यासलोपश्च' (पा ६,४,११९) इति एत्वम् । तस्य 'असिद्धवदत्राभात्' (पा ६,४,२२) इति असिद्धत्वात् 'हुझल्भ्यो हेर्धिः' (पा ६,४,१०१) इति धित्वं भवति । एनां पत्नीं महते अधिकाय वीर्याय यथा एषा महद् वीर्यं प्राप्नोति तथा उद् उब्ज उद्गमय उन्नतशिरस्कां कुरु । हे यजमान त्वं देहावसाने ऊर्ध्वः ऊर्ध्वदिगभिमुखः सन् नाकस्य दुःखसंस्पर्शरहितस्य लोकस्य विष्टपम् उपरिप्रदेशम् अधि रोह अधिरूढो भव । यं स्थानविशेषं स्वर्गो लोकः लोकनीयः सुकृतफलोपभोगप्रदेश इति वदन्ति अभिज्ञाः कथयन्ति ।

इ॒यं म॒ही प्रति॑ गृह्णातु॒ चर्म॑ पृथि॒वी दे॒वी सु॑मन॒स्यमा॑ना ।
अथ॑[3] गच्छेम सु॒कृत॒स्य॑[4] लो॒कम् ॥ ८ ॥

इ॒यम् । म॒ही । प्रति॑ । गृ॒ह्णा॒तु॒ । चर्म॑ । पृ॒थि॒वी । दे॒वी । सु॒ऽम॒न॒स्यमा॑ना ।
अथ॑ । ग॒च्छे॒म॒ । सु॒ऽकृ॒तस्य॑ । लो॒कम् ॥ ८ ॥

इयं पुरोवर्तिनी मही देवयजनभूमिः चर्म आनडुहं निर्वापार्थम् आस्तीर्यमाणम् अजिनं प्रति गृह्णातु स्वीकरोतु । आस्तीर्णाजिना सा पृथिवी देवी देवतारूपा सुमनस्यमाना

---

१. कलशो S'. २. सहैध्युर्बुदेनं ? पै १६,८९,७. ३. अधि पै १६,८९,८.
४. सुकृतामु पै.

**शोभनं मनः कुर्वती अनुग्रहबुद्धियुक्ता भवतु । अवहननाधिकरणत्वेन प्राप्तखेदा न भवत्वित्यर्थः ।** अथ **अवहननाधारभूतायाः पृथिव्या अनुग्रहानन्तरं** सुकृतस्य **यागादिजन्यस्य पुण्यस्य फलभूतं** लोकं **वयं** गच्छेम **प्राप्नुयाम ।**

**एतौ ग्रावाणौ सयुजा युङ्ग्धि चर्मणि निर्भिन्ध्यंशून् यजमानाय साधु ।**
**अवघ्नती नि जहि य इमां पृतन्यव ऊर्ध्वं प्रजामुद्भरन्त्युदूह[1] ॥ ९ ॥**

एतौ । ग्रावाणौ । सऽयुजा । युङ्ग्धि । चर्मणि । निः । भिन्धि । अंशून् । यजमानाय । साधु । अवऽघ्नती । नि । जहि । ये । इमाम् । पृतन्यवः । ऊर्ध्वम् । प्रऽजाम् । उत्ऽभरन्ती । उत् । ऊह ॥ ९ ॥

हे **ऋत्विक्** एतौ **पुरोवर्तिनौ** ग्रावाणौ **अश्मवद्[2] दृढतरौ उलूखलमुसलौ** सयुजा **सयुजौ एकस्मिन् अवहननकर्मणि सह युञ्जानौ व्याप्रियमाणौ मित्रभूतौ वा** चर्मणि **अवहननार्थम् आस्तीर्णे आनडुहेऽजिने युङ्ग्धि योजय स्थापय । युजिर् योगे । लोटि** 'सेर्ह्यपिच्च' ( पा ३,४,८७ ) **इति हिरादेशः । तस्य ङित्त्वात्** 'श्नसोरल्लोपः' ( पा ६,४,१११ ) **इति अकारलोपे** 'हुझल्भ्यो हेर्धिः' ( पा ६,४,१०१ ) **इति हेर्धिरादेशः ।** अंशून् । **उलूखलमुसलयोर्ग्रावत्वेन रूपणाद् व्रीहयः सोमांशुत्वेन रूप्यन्ते । सोमलताखण्डवद् यागनिर्वर्तकान् व्रीहीन्** यजमानाय **यजमानार्थं** साधु **शोभनं** निर्भिन्धि **युक्ताभ्याम् उलूखलमुसलाभ्याम् अवजहि वितुषीकुरु । भिदिर् विदारणे । पूर्ववल्लोण्मध्यमैकवचने रूपम् । हे पत्नि** अवघ्नती **अवहननं कुर्वती** नि जहि **निबाधस्व । के पुनस्ते निहन्तव्या इत्याह—**ये **इति ।** इमाम् **आत्मीयां प्रजां हन्तुं** ये **शत्रवः** पृतन्यवः **पृतनां सेनाम् आत्मन इच्छन्तः वर्तन्ते तान् । नि जहीत्यर्थः । पृतनाशब्दात्** 'सुप आत्मनः क्यच्' ( पा ३,१,८ ) । 'क्याच्छन्दसि' ( पा ३,२,१७० ) **इति उप्रत्ययः ।** 'कव्यध्वरपृतनस्यर्चि लोपः' ( पा ७,४,३९ ) **इति आकारलोपः । अपि च अवहननानन्तरम्[3]** उद्भरन्ती **मुसलम् ऊर्ध्वं हरन्ती ।** 'हृग्रहोर्भः०' ( पावा ८,२,३२ ) **इति भत्वम् ।** प्रजाम् **अस्मदीयाम्** उद् ऊह **उन्नतं स्थानम् उद्गमय । श्रैष्ठ्यं गमयेत्यर्थः ।**

**गृहाण ग्रावाणौ सकृतौ[4] वीर हस्त आ ते देवा यज्ञिया यज्ञमगुः ।**
**त्रयो वरा यतमांस्त्वं वृणीषे तास्ते समृद्धीरिह राधयामि ॥१०॥**

गृहाण । ग्रावाणौ । सऽकृतौ । वीर । हस्ते । आ । ते । देवाः । यज्ञियाः । यज्ञम् । अगुः ।

---

१. प्रजामुद्भर° पै १६,८९,९. २. अश्ववद् S'. ३. आवाक्राहारानन्तरम् S'.
४. सुकृतौ K,Km; सकृतौ > सुकृतौ Cs; सुकृतौ V; सयुजा पै १६,८९,१०.

त्रयः । वराः । यतमान् । त्वम् । वृणीषे । ताः । ते । सम्ऽऋद्धीः । इह । राधयामि ॥१०॥

हे वीर वीर्यवन् अध्वर्यो हस्ते स्वकीये पाणौ सुकृतौ[1] शोभनकर्माणौ ग्रावाणौ उलूखलमुसलौ गृहाण स्वीकुरु । ग्रह उपादाने । 'हलः श्नः शानज्झौ' (पा ३,१,८३) इति शानजादेशः । ते[1] प्रसिद्धाः यज्ञियाः यज्ञार्हा देवास्त्वदीयं यज्ञम् आ अगुः आगमन् । इण् गतौ । 'इणो गा लुङि' (पा २,४,४५) इति गादेशः । त्रयः त्रिसंख्याका वराः यजमानेन वरयितव्याः प्रार्थनीयाः पदार्थाः । कर्मसमृद्धिः तत्फलभूता ऐहिकी समृद्धिः आमुष्मिकी समृद्धिरिति । हे यजमान त्वं यतमान् यादृग्विधान् वरान् वृणीषे प्रार्थयसे ते तव ताः प्राग् उदीरिता वरयितव्याः समृद्धीः इह अस्मिन् यज्ञे राधयामि संसाधयामि । राध साध संसिद्धौ ।

इति एकादशे काण्डे प्रथमं सूक्तम् ।

'इयं ते धीतिः' इति सूक्तस्य ब्रह्मौदनसवे पूर्वसूक्तेन सह उक्तो विनियोगः । तत्र 'इयं ते धीतिः' इति प्रथमाया ऋचः पूर्वार्धर्चेन परापवनार्थं शूर्पं गृह्णीयात् । 'परा पुनीहि' इति उत्तरार्धर्चेन तुषान् उदूहेत् । सूत्रितं हि—" 'इयं ते धीतिः ( ११ ), 'वर्षवृद्धम्' ( अ १२,३,१९ ) इति शूर्पं गृह्णाति । 'ऊर्ध्वं प्रजाम्' ( ९ ), 'विश्वव्यचाः' ( अ १२,३,१९ ) इत्युदूहति[2] । परा पुनीहि ( ११ ) तुषम्" ( अ १२,३,१९ ) इति ( कौसू ६१,२३-२५ ) ।

'उपश्वसे' ( १२ ) इति तुषेभ्यस्तण्डुलान् पृथक् कुर्यात् । 'उपश्वसे' इत्यपवेवेक्ति' ( कौसू ६१,२९ ) इति हि सूत्रम् ।

'परेहि नारि' ( १३ ) इति ऋचा उदकम् आहरन्तीं पत्नीं संप्रेषयेत् । 'एमा अगुः' ( १४ ) इति ऋचः प्रथमपादेन आगच्छन्तीं पत्नीम् अनुमन्त्रयते । 'उत्तिष्ठ नारि' इति पादद्वयेन पत्नीम् आह्वयेत् । 'आ त्वागन् यज्ञः' इति पादैकदेशेन जलकुम्भदात्री पत्नी कर्तारं प्रेषयेत् । 'प्रति कुम्भं गृभाय' इति अर्धपादेन पत्नी जलकुम्भं ग्राहयेत् कर्तारम् । तत्रैव कर्मणि 'ऊर्जो भागः' ( १५ ) इति ऋचः प्रथमपादेन जलकुम्भं भूमौ निदध्यात् । 'ऋषिप्रशिष्टापः' इति पादत्रयेण उदपात्रम् आस्तीर्णचर्मणि निदध्यात् । सूत्रितं हि— " 'परेहि नारि' इत्युदहृतं [3]संप्रेष्यति अप उपगताम्[3] अलंकृताम् । 'एमा अगुः' इत्यायतीम् अनुमन्त्रयते । 'उत्तिष्ठ नारि' इति पत्नीं संप्रेष्यति । 'प्रति कुम्भं गृभाय' इति प्रतिगृह्णाति । 'ऊर्जो भागः' इति निदधाति" इति " 'ऋषिप्रशिष्टा' ( १५ ) इत्युदपात्रं चर्मणि निदधाति" ( कौसू ६०,२५-२९;३४, इति च ।

पैतृमेधिके चयनाख्ये कर्मणि 'ऊर्जो भागः' इति ऋचा अस्थीनि अश्मभिः इष्टकाभिर्वा आच्छादयेत् ।

---

१. वैतु. मंपा. २. °हन्तीम् Bl. ३. °ष्यत्यनुगुप्ताम् Bl.

'अग्ने चरुः' ( १६ ) इति ऋचा चरुस्थालीम् अग्नावधिश्रयेत् । "'अग्ने चरुः' इत्यधिश्रयति" ( कौसू ६१,३१ ) इति सूत्रात् ।

तथा दर्शपूर्णमासयोश्चर्वधिश्रयणेऽपि एषा विनियुक्ता । सूत्रितं हि— "फलीकृतांस्त्रिः[1] प्रक्षाल्य तण्डुलान् 'अग्ने चरुर्यज्ञियस्त्वाध्यरुक्षद्' इति चरुम् अधिनिदधाति"[2] (कौसू २,७) इति ।

ब्रह्मौदनसव एव 'शुद्धाः पूताः' इति ऋचा अधिश्रिते चरुपात्रे उदकम् आसिञ्चेत् । 'ब्रह्मणा शुद्धाः' इति ऋचा आसिक्तासु अप्सु तण्डुलान् आवपेत् । सूत्रितं हि— " 'शुद्धाः पूताः' ( १७ ), 'पूताः पवित्रैः' ( अ १२,३,२५ ) इति पवित्रे अन्तर्धाय । उदकम् आसिञ्चति । 'ब्रह्मणा शुद्धाः' (१८), 'संख्याता स्तोकाः' (अ १२,३,२८) [3]इत्यासिक्तान्निरुप्तांस्तण्डुलान् आवपेत्[3]" ( कौसू ६१,३४-३६ ) इति ।

तथा दर्शपूर्णमासयोश्चरुस्थाल्याम् उदकासेचने तण्डुलावापे च 'शुद्धाः पूताः' 'ब्रह्मणा शुद्धाः' इत्येते ऋचौ विनियुक्ते । सूत्रितं हि— " 'शुद्धाः पूताः' इत्युदकम् आसिञ्चति । 'ब्रह्मणा शुद्धाः' इति तण्डुलान्" ( कौसू २,८;९ ) इति ।

'उरुः प्रथस्व' इति ऋचा चरुं श्रपयेत् । " 'उरुः प्रथस्व' (१९), 'उद्योधन्ति' ( अ १२, ३,२९ ) इति श्रपयति" ( कौसू ६१,३७) इति सूत्रात् ।

तथा तत्रैव कर्मणि 'उरुः प्रथस्व' इत्येषा दातृवाचने विनियुक्ता । " 'उरुः प्रथस्व महता महिम्ना' (१९), 'इदं मे ज्योतिः' (२८), 'सत्याय च' (अ १२,३,४६-४८) इति तिस्रः" ( कौसू ६८,२७ ) इति सूत्रात् ।

इ॒यं ते॑ धी॒तिरि॒दमु॑ ते ज॒नित्रं॑ गृ॒ह्णातु॒ त्वामदि॑ति॒ः शूर॑पुत्रा ।
परा॑ पुनीहि॒ य इ॒मां पृ॑त॒न्यवो॒ऽस्यै र॒यिं सर्व॑वीरं॒ नि य॑च्छ ॥११॥

इ॒यम् । ते॒ । धी॒तिः । इ॒दम् । ऊं॒ इति॑ । ते॒ । ज॒नित्र॑म् । गृ॒ह्णातु॑ । त्वाम् । अदि॑तिः । शूर॑ऽपुत्रा । परा॑ । पु॒नी॒हि॒ । ये । इ॒माम् । पृ॒त॒न्यवः॑ । अ॒स्यै । र॒यिम् । सर्व॑ऽवीरम् । नि । य॒च्छ॒ ॥ ११ ॥

हे शूर्प ते तव यत् परापवनं तण्डुलेभ्यस्तुषविवेचनम् इयम् एव धीतिः पानम् । धेट् पाने । अस्माद् भावे क्तिन्[4] । 'घुमास्था°' ( पा ६,४,६६ ) इति ईत्वम् । इदमु इदमेव परापवनकर्म ते तव जनित्रम् जनननिमित्तं कारणम् । एवंविधं त्वां शूरपुत्रा शूराः शौर्योपेता मित्रवरुणधातृप्रभृतयः पुत्रा यस्याः सा अदितिः अदीना देवमाता गृह्णातु परापवनार्थं हस्ते धारयतु । ये शत्रवः इमां पत्नीं हिंसितुं पृतन्यवः पृतनां सेनाम् आत्मन इच्छवो भवन्ति तान् निरसितुं परा पुनीहि अवहतेभ्यो[5] व्रीहिभ्यस्तुषान् पृथक् कुरु । पूञ् पवने । 'प्वादीनां ह्रस्वः' ( पा ७,३,८० ) इति ह्रस्वत्वम् । अस्यै पत्न्यै सर्ववीरम् सर्वैर्वीरैः पुत्रपौत्रादिभिरुपेतं रयिम् धनं नि यच्छ नितरां प्रयच्छ ।

---

१. सुफलीकृतान् कृत्वा त्रिः Bl. २. अधिद° Bl. ३. इत्यापस्तासु निक्त्वा तण्डुलानावपति Bl. ४. एवं स्वरो न सिध्यति. ५. अवहितेभ्यो S'.

उपश्वसे द्रुवये[1] सीदता यूयं वि विंच्यध्वं यज्ञियासस्तुषैः ।
श्रिया समानानति सर्वान्त्स्यामाधस्पदं द्विषतस्पादयामि[2] ॥१२॥

उपऽश्वसे । द्रुवये । सीदत । यूयम् । वि । विच्यध्वम् । यज्ञियासः । तुषैः ।
श्रिया । समानान् । अति । सर्वान् । स्याम । अधःऽपदम् । द्विषतः । पादयामि ॥ १२ ॥

ध्रुवये[3] **ध्रुवाय स्थिराय सत्यफलाय कर्मणे हे तण्डुलाः युष्मान्** उपश्वसे **उप समीपे आश्वासयामि**[4] **प्रभूतान् करोमि। यागे विनियोक्ष्य इत्यर्थः। श्वस प्राणने इति धातुः। ध्रु गतिस्थैर्ययोः इत्यस्माद् औणादिकः क्विप्रत्ययः। अतो** यूयं सीदत **शूर्पे उपविशत।** यज्ञियासः[3] **यज्ञिया यज्ञार्हा यूयं** तुषैर्वि विच्यध्वम् **विविक्ताः पृथक्कृता भवत। विचिर् पृथग्भावे**[5] **इति धातुः। वयमपि युष्मज्जनितया** श्रिया **संपदा** सर्वान् समानान् **समानजन्मनः पुरुषान्** अति स्याम **अतिक्रान्ता भवेम।** द्विषतः **द्वेष्टॄन् शत्रून्** अधस्पदम् **पादयोरधस्तात्** पादयामि **क्षिपामि।** 'अधःशिरसी पदे' ( पा ८,३,४७ ) **इति विसर्जनीयस्य सत्वम्।**

परेहि नारि पुनरेहि क्षिप्रमपां त्वा 'गोष्ठोध्यरुक्षद्[6] भराय ।
तासां गृह्णीताद् यतमा यज्ञिया असन्[7] विभाज्य धीरीतरा जहीतात् ॥१३॥

परा । इहि । नारि । पुनः । आ । इहि । क्षिप्रम् । अपाम् । त्वा । गोऽस्थः । अधि । अरुक्षत् । भराय ।
तासाम् । गृह्णीतात् । यतमाः । यज्ञियाः । असन् । विऽभाज्य । धीरी[8] । इतराः । जहीतात् ॥१३॥

**उदकाहर्त्री प्रेष्यते। हे** नारि परा इहि **परागच्छ उदकाहरणार्थं पराङ्मुखी जलाशयं गच्छ। तत्र जलं गृहीत्वा** क्षिप्रम् **शीघ्रं** पुनरेहि **पुनरागच्छ। तस्मिन् समये** त्वा **त्वाम्** अपाम् **उदकानां** गोष्ठः। **गावस्तिष्ठन्ति पानार्थम् अस्मिन्निति गोष्ठो जलराशिः।** 'घञर्थे कविधानम्' ( पावा ३,३,५८ ) **इति अधिकरणे कप्रत्ययः।** 'अम्बाम्बगोभूमि°' ( पा ८,३,९७ ) **इति षत्वम्।** भराय **भरणार्थम्** अध्यरुक्षत् **अधिरोहतु। शिरसि आरोहतु। रुह बीजजन्मनि प्रादुर्भावे च।** 'शल इगुपधादनिटः क्सः' ( पा ३,१,४५ ) **इति क्सप्रत्ययः।** तासां **प्रातानाम् अपां मध्ये** यतमाः **यादृश्य आपो** यज्ञियाः **यज्ञार्हा** आसन्[3] **अभवन् ता** गृह्णीतात् **घटादिना गृहाण। ग्रह उपादाने।** 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' ( पा ७,१,३५ ) **इति हेस्तातङ् आदेशः। यद्वा इदानीं बहुवद् उच्यते— हे उदकाहर्त्र्यो नार्यः गृह्णीताद् गृह्णीत**

---

१. ध्रुवये A,B,D,K,K^m,S,E,V,Cs,P³,M,W,O,R²,T. २. पादयेम पै १६,९०,१. ३. वैतु. मंपा. ४. एवं स्वरो न सिध्यति. ५. भागे S'. ६. गोष्ठो अध्य° E,B^h,C, पै १६,९०,३. ७. आसन् A,R,K,V,S'. ८. वैप १,१७२७ g द्र.

**घटादिपात्रेषु उदकं पूरयत ।** 'तस्य तात्' ( पा ७,१,४४ ) **इति तशब्दस्य तात् आदेशः । यतमा इति ।** 'वा बहूनां जातिपरिप्रश्ने डतमच्' ( पा ५,३,९३ ) **इति यच्छब्दात् डतमच्प्रत्ययः ।** इतरा **अयज्ञिया अपः** धीरी **धीमती त्वं** विभाज्य **यज्ञियाभ्यो विविच्य** जहीतात् **जहीहि परित्यज । ओहाक् त्यागे । तातङि** 'जहातेश्च'[1] ( पा ६,४,११६) **इति ईत्वविकल्पः ।**

**एमा अगुर्योषितः शुम्भमाना उत्तिष्ठ नारि तवसं रभस्व ।**
**सुपत्नी पत्या प्रजया प्रजावत्या त्वागन् यज्ञः प्रति कुम्भं गृभाय ॥१४॥**

आ । इमाः । अगुः । योषितः । शुम्भमानाः । उत् । तिष्ठ । नारि । तवसम् । रभस्व ।
सुऽपत्नी । पत्या । प्रऽजया । प्रजाऽवती । आ । त्वा । अगन् । यज्ञः । प्रति । कुम्भम् । गृभाय ॥

शुम्भमानाः **शोभनालंकारयुक्ता** इमा योषितः **उदकाहर्त्र्यः स्त्रियः** आ अगुः **आगमन् ।** हे नारि **पत्नि** उत्तिष्ठ **आसनाद् उत्थिता भव ।** '°अनूर्ध्वकर्मणि' (पा १,३,२४) **इति पर्युदासाद् आत्मनेपदाभावः ।** तव[2] **त्वाम् उपगतास्ताः** सं[2] रभस्व **संग्रहीतुम् उद्युक्ता भव । रभ राभस्ये । राभस्यं कार्योपक्रम इति तद्व्याख्या ।** पत्या **शोभनपतिना** सुपत्नी **पत्नीनां श्रेष्ठतमा । यद्वा पत्या गुणाधिकेन पुरुषेण शोभनपतिका ।** 'विभाषा सपूर्वस्य' ( पा ४,१,३४ ) **इति ङीब्नकारौ ।** प्रजया **पुत्रादिरूपया** प्रजावती **शोभनपुत्रयुक्ता । भवेत्यर्थः । ईदृशीं**[3] त्वा **त्वां** यज्ञः आ अगन् **उदकरूपेण प्रापत् । गमेर्लुङि** 'मन्त्रे घस°' ( पा २,४,८० ) **इति च्लेर्लुक् ।** 'हल्ङ्या' ( पा ६,१,६८ ) **इत्यादिलोपे** 'मो नो धातोः' ( पा ८,२,६४ ) **इति नत्वम् ।** कुम्भम् **उदकपूर्णघटं** प्रति गृभाय **प्रतिगृहाण आदत्स्व । ग्रहेर्लोण्मध्यमैकवचने** 'छन्दसि शायजपि' ( पा ३,१,८४ ) **इति श्नाप्रत्ययस्य शायजादेशः ।** 'हृग्रहोर्भः°' ( पावा ८,२,३२ ) **इति भत्वम् ।**

**ऊर्जो भागो निहितो यः पुरा व [4]ऋषिप्रशिष्टाप आ भरैताः[4] ।**
**अयं यज्ञो गातुविन्नाथवित् प्रजाविदुग्रः पशुविद् वीरविद् वो अस्तु[5] ॥१५॥**

ऊर्जः । भागः । निऽहितः[6] । यः । पुरा । वः । ऋषिऽप्रशिष्टा । अपः । आ । भर । एताः ।
अयम् । यज्ञः । गातुऽवित् । नाथऽवित् । प्रजाऽवित् । उग्रः । पशुऽवित् । वीरऽवित् । वः । अस्तु ।

**हे आपः** वः **युष्माकम्** ऊर्जः **बलकरस्य सारभूतस्य जलराशेः** यः भागः **अंशः** पुरा **पूर्वं** निहितः **ब्रह्मणा परिकल्पितः । स एव अत्राहृत्य निधीयत इति**

---

१. 'घुमास्था°' शंपा.　　२. वैतु. मंपा.　　३. ईदृशी S'.　　४. ऋषिप्रभृताप आ हरैताः पै १६,९०,५.　　५. ऽस्तु पै.　　६. निऽहिताः P.

शेषः । हे पत्नि एताः आहृताः सारभूता अपः ऋषिप्रशिष्टा ऋषिणा मन्त्रेण अतीन्द्रियार्थदर्शिना ब्रह्मणा वा प्रशिष्टा अनुशिष्टा अनुज्ञाता त्वम् आ भर आस्तीर्णे चर्मणि आहर । स्थापयेत्यर्थः । ऋषिप्रशिष्टेति । शासु अनुशिष्टौ । अस्मात् कर्मणि निष्ठा । 'शास इदङ्हलोः ( पा ६,४,३४ ) इति इत्त्वम् । अयं क्रियमाणः ब्रह्मौदनसवाख्यो यज्ञः गातुवित् गातोः स्वर्गमार्गस्य लम्भकः । नाथवित् नाथ्यमानस्य[1] आशंसनीयस्य स्वर्गादिफलस्य लम्भयिता । यद्वा नाथः स्वामी तस्य लम्भकः । प्रजावित् प्रजायन्त इति प्रजाः पुत्रपौत्रादिरूपाः तासां लम्भकः । उग्रः उद्गूर्णबलः । परैरनभिभवनीय इत्यर्थः । पशुवित् पशूनां गवाश्वादीनां लम्भयिता । वीरवित् विविधम्[2] ईर्यन्ते तत्तत्कर्मणि[3] प्रेष्यन्त इति वीराः कर्मकरास्तेषां लम्भयिता हे यजमानपत्न्यादयः वः युष्मभ्यम् एवंविधफलप्रदः अस्तु भवतु ।

अग्ने चरुर्यज्ञियस्त्वाध्यरुक्षच्छुचिस्तपिष्ठस्तपसा तपैनम् ।
आर्षेया दैवा अभिसंगत्य[4] भागमिमं[5] तपिष्ठा ऋतुभिस्तपन्तु ॥ १६ ॥

अग्ने । चरुः । यज्ञियः । त्वा । अधि । अरुक्षत् । शुचिः । तपिष्ठः । तपसा । तप । एनम् । आर्षेयाः । दैवाः । अभिऽसंगत्य । भागम् । इमम् । तपिष्ठाः । ऋतुऽभिः । तपन्तु ॥ १६ ॥

हे अग्ने त्वा त्वां यज्ञियः यज्ञार्हः चरुः हविःश्रपणार्था स्थाली अध्यरुक्षत् अधिरोहतु उपरि तिष्ठतु । शुचिः शुद्धो निर्मलः तपिष्ठः तप्तृतमः । तप्तृशब्दात् 'तुश्छन्दसि' (पा ५,३,५९ ) इति इष्ठनि 'तुरिष्ठेमेयस्सु' ( पा ६,४,१५४ ) इति तृलोपः । तपसा संतापकेन आत्मीयेन तेजसा एनं चरुं तप ततं कुरु । आर्षेयाः । गोत्रप्रवर्तकान् ऋषीन् ये विदुस्ते आर्षेया ब्राह्मणाः । दैवाः । देवाः होतव्या इन्द्रादयः तत्संबन्धिजना दैवाः । ते उभये स्वंस्वं भागम् अंशम् अभिसंगत्य अभिप्राप्य इमं चरुं तपिष्ठाः तप्तृतमाः सन्तः ऋतुभिः वसन्तादिभिः कालविशेषैः तपन्तु ततं कुर्वन्तु ।

शुद्धाः पूता[6] योषितो यज्ञिया इमा आपश्चरुमव सर्पन्तु शुभ्राः ।
अदुः[7] प्रजां बहुलान्[8] पशून् नः[9] पक्त्वौदनस्य सुकृतामेतु[10] लोकम् ॥१७॥

शुद्धाः । पूताः । योषितः । यज्ञियाः । इमाः । आपः । चरुम् । अव । सर्पन्तु । शुभ्राः । अदुः । प्रऽजाम् । बहुलान् । पशून् । नः । पक्त्वा । ओदनस्य । सुऽकृताम् । एतु । लोकम् ॥

शुद्धाः निर्मलाः पूताः पवित्राभ्याम् उत्पूता उत्पवनाख्यसंस्कारेण पवित्रीकृताः योषितः योषिद्रूपा मिश्रयित्र्यो वा यज्ञियाः यज्ञार्हाः शुभ्राः शुक्लवर्णा इमाः आहृता आपश्चरुम्

---

१. नाथमानस्य S'. २. धम S'. ३. तत्कर्म S'. ४. °संहत्य पै १६, ९०,६. ५. °मिमे प. ६. आपो पै १६,९०,७. ७. ददन् पै. ८. बंहुलं A,Bh,C,D,K.Km,RW.; बंहुलान् O. ९. मे पै. १०. °मेति पै.

अव सर्पन्तु स्थालीं प्रविशन्तु । ता आपो नः अस्मभ्यं प्रजाम् पुत्रादिरूपां बहुलान् अनेकविधान् गोमहिषाद्यांश्च पशून् अदुः ददतु प्रयच्छन्तु । ओदनस्य ब्रह्मौदनाख्यस्य पक्ता[1] पाचको यजमानः । पचेः 'अन्येभ्योऽपि दृश्यन्ते' (पा ३,२,७५) इति क्वनिप् । सुकृताम् पुण्यकृतां लोकम् सुखोपभोगस्थानं स्वर्गादिकम् एतु गच्छतु ।

ब्रह्मणा शुद्धा उत पूता घृतेन सोमस्यांशवस्तण्डुला यज्ञिया इमे ।
अपः[2] प्र विंशत[3] प्रति गृह्णातु वश्चरुरिमं पक्त्वा सुकृतामेत[4] लोकम् ॥१८॥

ब्रह्मणा । शुद्धाः । उत । पूताः । घृतेन । सोमस्य । अंशवः । तण्डुलाः[5] । यज्ञियाः । इमे ।
अपः । प्र । विशत । प्रति । गृह्णातु । वः । चरुः । इमम् । पक्त्वा । सुऽकृताम् । एत[6] । लोकम् ॥

ब्रह्मणा मन्त्रेण शुद्धाः निर्दोषाः उत अपि च घृतेन क्षरणशीलेन उदकेन पूताः प्रक्षालिताः । यद्वा श्रपणानन्तरभाविना अभिघारणेनाज्येन पूताः पवित्रीकृताः सोमस्य अमृतमयस्य अंशवः लताखण्डाः । तदात्मका इत्यर्थः । 'निर्भिन्ध्यंशून्' इति हि प्राग् (९) उक्तम् । अत एव यज्ञियाः यज्ञार्हा इमे तण्डुलाः यूयम् अपः स्थालीगतानि उदकानि प्र विशत । चरुः स्थाली च वः युष्मान् प्रति गृह्णातु स्वीकरोतु । इमम् ओदनं पक्त्वा । ओदनपाकेन ब्रह्मौदनसवाख्यं कर्म लक्ष्यते । एतत् कर्म कृत्वेत्यर्थः । व्याख्यातम् अन्यत् ।

उरुः प्रथस्व महता महिम्ना सहस्रपृष्ठः सुकृतस्य लोके ।
पितामहाः पितरः प्रजोपजाऽहं पक्ता[7] पञ्चदशस्ते अस्मि[8] ॥१९॥

उरुः । प्रथस्व । महता । महिम्ना । सहस्रऽपृष्ठः । सुऽकृतस्य । लोके ।
पितामहाः । पितरः । प्रऽजा । उपऽजा । अहम् । पक्ता[7] । पञ्चऽदशः । ते । अस्मि ॥ १९ ॥

हे ओदन सुकृतस्य पुण्यस्य फलभूते लोके स्वर्गादौ महता अधिकेन महिम्ना माहात्म्येन उरुः विस्तीर्णः सहस्रपृष्ठः सहस्रावयवः सन् प्रथस्व विस्तीर्णो भव । अस्मदीयाः[9] पितरः पितामहाः । उपलक्षणम् एतत् । पितृपितामहाद्याः सप्तपुरुषाः हे ओदन त्वया तृप्यन्ते । तथा प्रजा पुत्रदुहितृरूपा उपजा तत्पुत्रादिरूपा । एतदपि उपलक्षणम् । अनन्तराः पुत्राद्याः सप्तपुरुषास्त्वया प्रीयन्ते । एतदुभयापेक्षया पक्ता[1] ब्रह्मौदनस्य पक्ता अहं ते तव पञ्चदशः पञ्चदशसंख्यापूरकः अस्मि भवामि । मदनुष्ठितेन अनेन यज्ञेन एते सर्वे प्रीयन्त इत्यर्थः ।

---

१. वैतु. मंपा. २. आपः B. ३. विंशतु B. ४. °मेतु O,K,V,Cs; °मेति पै १६,९०,८. ५. तंदुलाः P. ६. एतु K. ७. पुक्त्वा Bh,C,Km,Cp,WM., पै १६,९०,१०. ८. ऽस्मि पै. ९. °दीयान S'.

सहस्रपृष्ठः शतधारो अक्षितो ब्रह्मौदनो देवयानः स्वर्गः ।
अमूंस्त आ दधामि प्रजया रेषयैनान्[1] बलिहाराय मृडतान्मह्यमेव ॥२०॥

सहस्रऽपृष्ठः । शतऽधारः । अक्षितः । ब्रह्मऽओदनः । देवऽयानः । स्वःऽगः । अमून् ।
ते । आ । दधामि । प्रऽजया । रेषय । एनान् । बलिऽहाराय । मृडतात् । मह्यम् । एव ॥२०

सहस्रपृष्ठः **सहस्रशरीरः** शतधारः **शतसंख्याकाभिर्धाराभिरमृतमयीभिर्युक्तः** अक्षितः **अक्षीयमाणः। भुज्यमानोऽपि क्षयम् अप्राप्नुवन्नित्यर्थः ।** देवयानः **देवान् इन्द्रादीन् यान्ति गच्छन्ति पुण्यकृतः अनेनेति देवयानः । देवत्वप्राप्तिसाधनभूत इत्यर्थः। तथा** स्वर्गः **फलभूतं स्वर्गं प्रति अन्तरङ्गसाधनत्वात् तदात्मकोऽयम् इत्यर्थः। हे यजमान त्वया क्रियमाणोऽयं** ब्रह्मौदनः **एतत्संज्ञकः सवयज्ञः। उक्तगुणविशिष्टो भवतीत्यर्थः। अपि च** ते **तव** बलिहाराय **बलिः उपायनद्रव्यं तद्धरणार्थम्** अमून् **प्रसिद्धान् सजातान्** आ दधामि **अभिमुखं स्थापयामि ।** एनान् प्रजया **पुत्रभृत्यादिरूपया** रेशय[2] **लेशय अल्पीकुरु। उपक्षीणान् कुर्वित्यर्थः। लिश अल्पीभावे। रलयोः एकत्वस्मरणाद् रेफः।** मह्यमेव **मामेव प्राग् उदीरितः सवयज्ञः** मृळतात्[2] **मृडयतु सुखयतु सर्वोत्कृष्टं करोतु। मृड सुखने।** 'क्रियाग्रहणं कर्तव्यम्' ( पावा १,४,३२ ) **इति कर्मणः संप्रदानत्वाद् अस्मदश्चतुर्थी।**

इति एकादशे काण्डे द्वितीयं सूक्तम्।

'उदेहि वेदिम्' **इति सूक्तस्य ब्रह्मौदनसवे** 'अग्ने जायस्व' ( अ ११,१ ) **इत्यनेन सह उक्तो विनियोगः । तत्र** 'उदेहि वेदिम्' **इति प्रथमया चरोरुद्वासनं कुर्यात्।** 'अभ्यावर्तस्व' **इत्यनया चरुस्थालीं प्रदक्षिणम् आवर्तयेत्। सूत्रितं हि —** " 'उदेहि वेदिम्' ( २१ ), 'धर्ता ध्रियस्व' ( अ १२,३,३५ ) इत्युद्वासयति । 'अभ्यावर्तस्व' (२२) इति कुम्भीं प्रदक्षिणम् आवर्तयेत्[3]" ( कौसू ६१,४१;४२ ) **इति।**

'अदितेर्हस्तम्[2]' **इति ऋचा स्रुचं वेद्यां सादयेत्।** " 'अदितेर्हस्ताम्[4]' (२४), 'सर्वान्त्समागाः[5]' ( अ १२,३,३६ ) इति मन्त्रोक्तम्" ( कौसू ६२,१ ) **इति सूत्रात्।**

'शृतं त्वा हव्यम्' ( २५ ) **इति ऋचा चतुर आर्षेयान् आसने उपवेशयेत्। सूत्रितं हि—** " 'शृतं त्वा हव्यम्' इति चतुर आर्षेयान् भृग्वङ्गिरोविद उपसादयति" ( कौसू ६३,३ ) **इति।**

---

१. रेशयै° V,K. २. वैतु. मंपा. ३. आवर्त्तयति Bl. ४. °र्हस्तम् शंपा. ५. सर्वं समागाद् S'.

'सोम राजन्' (२६) इति ऋचा चतुर आर्षेयान् ऋत्विजो यजमान आह्वयेत्। 'शुद्धाः पूताः' (२७) इति ऋचा तेषाम् ऋत्विजां हस्तप्रक्षालनार्थम् उदकं दद्यात्। "'शुद्धाः पूताः' इति मन्त्रोक्तम्" (कौसू ६३,४) इति सूत्रात्।

'इदं मे ज्योतिः' इति ऋचा ओदने हिरण्यं निदध्यात्। सूत्रितं हि— "'इदं मे ज्योतिः' (२८), 'समग्नयः' (अ १२,३,५०) इति हिरण्यमधिनिदधाति"[1] (कौसू ६२,२२) इति।

अत्र "'इदं मे ज्योतिः' इति प्रथमपादं दातारं वाचयन् हिरण्यम् अधिनिदध्यात्। 'कृण्वे पन्थाम्' इति चरमपादं च दातारं वाचयेत्" इति हि भाष्यकारः।

"'पक्कं क्षेत्रात्' इति मध्यमेन पादद्वयेन बर्हिष्यासादितम् ओदनम् ईषत् कर्षयेत्। "'पक्कं क्षेत्रात्' (२८), 'वर्षं वनुष्व' (अ १२,३,५३) इत्युपकर्षयति"[2] (कौसू ६३,५) इति हि सूत्रम्।

'इदं मे ज्योतिः' इति समस्ता ऋक् दातृवाचने विनियुक्ता। "'इदं मे ज्योतिः' (२८), 'सत्याय' (अ १२,३,४६-४८) इति तिस्रः" (कौसू ६८,२७) इति हि सूत्रम्।

'अग्नौ तुषान्' (२९) इति ऋचः प्रथमपादेन अग्नौ तुषान् जुहुयात्। "'अग्नौ तुषान्' इति तुषान् आवपति" (कौसू ६३,६) इति सूत्रात्।

'परः कम्बूकान्' इति शेषेण पादत्रयेण फलीकरणान् उदूहयेत्। "'परः कम्बूकान्' इति सव्येन पादेन फलीकरणान् अपोहयति"[3] (कौसू ६३,७) इति सूत्रम्।

'श्राम्यतः' (३०) इत्यादिका ऋचः ओदनसंपाते विकल्पेन विनियुक्ताः। सूत्रितं हि— "'सूक्तेन पूर्वं संपातवन्तं करोति। 'श्राम्यतः' इतिप्रभृतिभिर्वा" (कौसू ६३,१९;२०) इति।

उदेहि वेदिं प्रजया वर्धयैनां नुदस्व रक्षः प्रतरं धेह्येनाम्।
श्रिया समानानति सर्वान्त्स्यामाधस्पदं द्विषतस्पादयामि[4] ॥ २१ ॥

उत्ऽएहि। वेदिम्। प्रऽजया। वर्धय। एनाम्। नुदस्व। रक्षः। प्रऽतरम्। धेहि। एनाम्। श्रिया। समानान्। अति। सर्वान्। स्याम। अधःऽपदम्। द्विषतः। पादयामि ॥ २१ ॥

हे पक्कौदन वेदिम् हविरासादनाय प्रोक्षणादिबर्हिस्तरणादिसंस्कारसंस्कृतां भूमिं प्रति उदेहि उदागच्छ। अग्नेः सकाशाद् उत्थाय वेद्याम् आसीदेत्यर्थः। एनां पत्नीं प्रजया पुत्रादिरूपया वर्धय समृद्धां कुरु। रक्षः यज्ञविघातकं राक्षसं

---

१. °मभिनि° S'. °धिदधाति Bl. २. इत्यपकर्षति Bl. ३. °हति Bl.
४. पादयेम पै १६,९१,२.

नुदस्व **अस्मात् स्थानात् प्रेरय प्रच्यावय । नुद प्रेरणे । तथा** एनां **पत्नीं** प्रतरम् **प्रकृष्टतरं**[1] **यथा भवति तथा** धेहि **धारय पोषय वा । डुधाञ् धारणपोषणयोः ।** 'घ्वसोरेद्धावभ्यासलोपश्च' ( पा ६,४,११९ ) **इति एत्वाभ्यासलोपौ ।** श्रिया समानान् **इति उत्तरोऽर्धर्चो व्याख्यातः** (१२) ।

**अभ्यावर्तस्व पशुभिः[2] सहैनां प्रत्यङेनां[3] देवताभिः सहैधि ।**
**मा त्वा प्रापच्छपथो माऽभिचारः स्वे क्षेत्रे अनमीवा वि राज ॥ २२ ॥**

अभिऽआवर्तस्व । पशुऽभिः । सह । एनाम् । प्रत्यङ् । एनाम् । देवताभिः । सह । एधि ।
मा । त्वा । प्र । आपत् । शपथः । मा । अभिऽचारः । स्वे । क्षेत्रे । अनमीवा[4] । वि । राज ॥

**हे ब्रह्मौदन** एनान्[5] **पत्नीयजमानादीन्** पशुभिः **लब्धव्यैर्गोमहिषाद्यैः** सह अभ्यावर्तस्व **अभिलक्ष्य आवृत्तो भव । तथा** एनान्[5] **यष्टव्याभिः** देवताभिः सह प्रत्यङ् **प्रत्यञ्चन् आभिमुख्येन गच्छन्** एधि **भव । हे यजमान यद्वा हे पत्नि** शपथः **परकृत आक्रोशः** त्वा **त्वां** मा प्रापत् **मा प्राप्नोतु । आप्लृ व्याप्तौ । माङि लुङि लृदित्वात् च्लेः अङ् आदेशः । तथा परकृतः** अभिचारः **मारणकर्म** मा **प्राप्नोतु । तथा** स्वे **स्वकीये** क्षेत्रे **स्थाने** अनमीवा **अमीवा रोगस्तद्रहिता सती** वि राज **विशेषेण राजमाना भव । राजतिः ऐश्वर्यकर्मा** ( तु निघ २,२१ ) ।

**ऋतेन तष्टा मनसा[6] हितैषा[6] ब्रह्मौदनस्य विहिता[7] वेदिरग्रे ।**
**अंसद्रीं[8] शुद्धामुप[9] धेहि नारि तत्रौदनं सादय दैवानाम्[10] ॥ २३ ॥**

ऋतेन । तष्टा । मनसा । हिता । एषा । ब्रह्मऽओदनस्य । विऽहिता । वेदिः । अग्रे ।
अंसद्रीम् । शुद्धाम् । उप । धेहि । नारि । तत्र । ओदनम् । सादय । दैवानाम् ॥ २३ ॥

ऋतेन **सत्येन ब्रह्मणा** तष्टा **तनूकृता सम्यङ्निर्मिता । तक्षू त्वक्षू तनूकरणे । कर्मणि निष्ठा ।** 'यस्य विभाषा' ( पा ७,२,१५ ) **इति इट्प्रतिषेधः ।** 'स्कोः संयोगाद्योः°' ( पा ८,२,२९ ) **इति कलोपः ।** मनसा **प्रथमसृष्टेन हैरण्यगर्भेण** हिता **धारिता ।** 'दधातेर्हिः' ( पा ७,४,४२ ) **इति निष्ठायां हिरादेशः ।** एषा **एवंगुणविशिष्टा** वेदिः ब्रह्मौदनस्य **सादनाय** अग्रे **पुरा** विहिता **महर्षिभिः**[11] **कल्पिता । हे** नारि **पत्नि** अंशध्रीम्[5] **अंशान् भागान् देवमनुष्यपितृसंबन्धिनो धारयतीति अंशध्री तां** शुद्धाम् **अनुपहतां**

---

१. °तरं धनं S'. २. प्रजया पै १६,९०,९. ३. प्रत्यगें° A; प्रत्यङ्डें° Bh; प्रत्यङ्डें° > प्रत्यङें° Cs. ४. अनमीवाः P,P२,Cp,WM.; अनमीवा > अनमीवाः J. ५. वैतु. मंपा. ६. मनसो हितेयं पै १९,९१,३. ७. निहिता पै. ८. अंसध्रीं Bh,C,K; अंशध्रीं V, सा. पै. ९. शुद्धामव पै. १०. देवानाम् V,K, सा. ११. मह ऋषिभिः S'.

**वेदिम्** उप धेहि **उप समीपे धारय** । तत्र **वेद्यां पक्वम्** इमं देवानां[1] **स्वभूतम्** ओदनं सादय **प्रापय । आसादयेत्यर्थः** ।

**अदि॑ते॒र्हस्तां॒[2] स्रुच॑मे॒तां द्वि॒तीयां॑ सप्तऋ॒षयो॑[3] भूत॒कृतो॒ याम॑कृण्वन् ।**
**सा गात्रा॑णि वि॒दुष्यो॑द॒नस्य॒ दर्वि॒र्वेद्या॒मध्ये॑नं चिनोतु ॥ २४ ॥**

अदि॑तेः । ह॒स्ता॑म् । स्रुच॑म् । ए॒ताम् । द्वि॒तीया॑म् । स॒प्त॒ऽऋ॒षय॑ः । भू॒त॒ऽकृत॑ः । याम् । अकृ॑ण्वन् ।
सा । गात्रा॑णि । वि॒दुषी॑ । ओ॒द॒नस्य॑ । दर्वि॑ः । वेद्या॑म् । अधि॑ । ए॒न॒म् । चि॒नो॒तु ॥ २४ ॥

अदितेः **देवमातुः** द्वितीयम्[1] **द्वित्वसंख्यापूरकं** हस्तम्[1] एतां **होमसाधनभूतां** यां स्रुचं भूतकृतः **भूतानां प्राणिनां स्रष्टारः** सप्तऋषयः अकृण्वन् **अकुर्वन्** सा **एषा** दर्विः **होमसाधनभूता स्रुक्** ओदनस्य **पक्वस्य** गात्राणि **शरीराणि तत्परूंषि च** विदुषी **जानती** वेद्याम् अधि **उपरि** एनं **ब्रह्मौदनं** चिनोतु **स्थापयतु** ।

**शृ॒तं त्वा॑ ह॒व्यमुप॑[4] सीदन्तु [5]दैवा॑ नि॒ःसृप्या॒ग्नेः॑[5] पुन॑रेना॒न् प्र सी॑द[6] ।**
**सोमे॑न पू॒तो ज॒ठरे॑ सीद ब्र॒ह्मणा॑मार्षे॒यास्ते॒ मा रि॑षन् प्राशि॒तार॑ः ॥ २५ ॥**

शृ॒तम् । त्वा॒ । ह॒व्यम् । उप॑ । सी॒द॒न्तु॒ । दै॒वाः । नि॒ःऽसृप्य॑ । अ॒ग्नेः । पुन॑ः । ए॒ना॒न् । प्र । सी॒द॒ ।
सोमे॑न । पू॒तः । ज॒ठरे॑ । सी॒द॒ । ब्र॒ह्मणा॑म् । आ॒र्षे॒याः । ते॒ । मा । रि॒ष॒न् । प्र॒ऽअ॒शि॒तार॑ः ॥ २५ ॥

**हे ओदन** श्रृतम् **पक्वम् अत एव** हव्यम् **हवनयोग्यं** त्वा **त्वां** देवा[1] उप सीदन्तु **यष्टव्या देवा उपसन्ना भवन्तु** । 'श्रृतं पाके' (पा ६,१,२७) **इति निपात्यते । श्रृतस्यैव हविषो देवार्हता तैत्तिरीये स्पष्टम् आम्नायते**— 'यो विदग्धः स नैर्ऋतो योऽश्रृतः स रौद्रो यः श्रृतः स सदेवः'' ( तै २,६,३,४ ) **इति । हे तादृशौदन त्वम्** अग्नेः **सकाशात्** निःसृप्य **निर्गत्य** पुनरेनान् प्रसीद **प्राप्नुहि** । सोमेन **अमृतमयेन सोमरसेन क्षीरदध्यादि-रूपेण । श्रूयते हि सोमात्मकत्वं दधिपयसोः** । 'सोमः खलु वै सांनाय्यम् ( तैब्रा ३,२, ३,११ ) इति । **तेन** पूतः **शुद्धः सन्** ब्रह्मणाम् **ब्राह्मणानां** जठरे **उदरे** सीद **उपविश** । आर्षेयाः **स्वस्वगोत्रप्रवराभिज्ञा भृग्वङ्गिरोविदः** ते[1] **ब्राह्मणा ओदनस्य** प्राशितारः **भोक्तारः** मा रिषन् **मा विनश्यन्तु । तेषाम् उदरे प्रविष्टस्त्वं हिंसां मा कृथा इत्यर्थः** ।

**सोम॑ राजन्त्सं॒ज्ञान॒मा [7]व॑पैभ्य॒ः सुब्रा॑ह्मणा[7] यत॒मे त्वो॑प॒सीदा॑न् ।**
**ऋषी॑नार्षे॒यांस्तप॒सोऽधि॑ जा॒तान्[8] ब्र॑ह्मौद॒ने सु॒हवा॑ जोहवीमि ॥ २६ ॥**

---

१. वैतु. मंपा. २. °र्हस्तं K,V, सा. ३. सप्तर्षयो E,B^h,S^m,R,C,K^m. ४. हविरुप पै १६,९१,५. ५. देवा अनुसृ° पै. ६. सर्प पै. ७. °भ्योऽब्राह्मणा पै १६,९१,६. ८. जाता सा. पै [मूको.].

सोम । राजन् । सम्ऽज्ञानम् । आ । वप । एभ्यः । सुऽब्राह्मणाः । यतमे । त्वा । उपऽसीदान् । ऋषीन् । आर्षेयान् । तपसः । अधि । जातान् । ब्रह्मऽओदने । सुऽहवा । जोहवीमि ॥ २६ ॥

हे राजन् **राजमान** सोम **तदात्मक ब्रह्मौदन** एभ्यः **भोक्तृभ्यो ब्राह्मणेभ्यः । तादर्थ्ये चतुर्थी ।** संज्ञानम् **सम्यग् ज्ञानम्** आ वप **निधेहि । मोहं मा कृथा इत्यर्थः ।** यतमे **यज्जातीयाः** सुब्राह्मणाः **शोभना ब्राह्मणा भृग्वङ्गिरोविदः** त्वा **त्वाम्** उपसीदान् **उपसन्ना भवन्ति । सीदतेर्लेटि आडागमः । यतमे इति ।** 'वा बहूनां जातिपरिप्रश्ने डतमच्' ( पा ५,३,९३ ) **इति डतमच्प्रत्ययः । तस्य सर्वनामगणे पाठात् तदन्तस्य सर्वनामसंज्ञायां जसः शीभावः । एभ्य इति पूर्वत्र सम्बन्धः । अपिच** तपसोधि जाता[1] **दीक्षारूपात् तपस उत्पन्ना ।** 'ब्रह्मणो वा एष जायते यो दीक्षते' ( आपश्रौ १०,११,६ ) **इति हि ब्राह्मणम् । एवंभूता** सुहवा **शोभनाह्वाना पत्नी** आर्षेयान् **प्रागुक्तलक्षणान्** ऋषीन् ब्रह्मौदने **विषये** जोहवीमि **पुनःपुनराह्वयामि । ह्वयतेर्यङ्लुगन्ताद् लटि उत्तमैकवचने** 'ह्वः सम्प्रसारणम्', 'अभ्यस्तस्य च' ( पा ६,१,३२;३३ ) **इति संप्रसारणम् ।** 'गुणो यङ्लुकोः' ( पा ७,४,८२ ) **इति अभ्यासस्य गुणः ।**

शुद्धाः पूता योषितो यज्ञिया इमा ब्रह्मणां हस्तेषु प्रपृथक् सादयामि ।
यत्काम इदमभिषिञ्चामि वोहमिन्द्रो मरुत्वान्त्स ददादिदं मे ॥ २७॥

शुद्धाः । पूताः । योषितः । यज्ञियाः । इमाः । ब्रह्मणाम् । हस्तेषु । प्रऽपृथक् । सादयामि । यत्ऽकामः । इदम् । अभिऽसिञ्चामि । वः । अहम् । इन्द्रः । मरुत्वान् । सः । ददात् । इदम् । मे ॥

शुद्धाः **निर्मलाः पापरहिताः** पूताः **स्वसंसर्गेण अन्यस्यापि पावयित्र्यः** योषितः **स्त्रीरूपा मिश्रणशीला वा** यज्ञियाः **यज्ञार्हा** इमाः **एवंगुणविशिष्टा अपः** ब्रह्मणां **प्रागुदीरितलक्षणानां ब्राह्मणानां** हस्तेषु **पाणिषु । अत्र** प्र[1] **इत्युपसर्गः उपसृष्टां क्रियाम् आह । प्रक्षालनक्रियाव्याजेनेत्यर्थः । प्रकर्षेण वा** पृथक्[1] सादयामि । **सांकर्यं यथा न भवति तथा विक्षिपामीत्यर्थः । हे उदीरितलक्षणा आपः** वः **युष्मान्** अहं यत्कामः **यत् फलं कामयमानः** इदम् **इदानीम्** अभिषिञ्चामि **अभितः क्षारयामि** इदं **काम्यमानं फलं** सः **प्रसिद्धो** मरुत्वान् **मरुद्गणैर्युक्त** इन्द्रो मे **मह्यं** ददात् **ददातु ।**

इदं मे ज्योतिरमृतं हिरण्यं पक्वं क्षेत्रात् कामदुघा म एषा ।
इदं धनं नि दधे ब्राह्मणेषु कृण्वे पन्थां पितृषु यः[2] स्वर्गः ॥ २८ ॥

---

१. वैतु. मंपा. २. य B.

इदम् । मे । ज्योतिः । अमृतम् । हिरण्यम् । पक्कम् । क्षेत्रात् । कामऽदुघा । मे । एषा ।
इदम् । धनम् । नि । दधे । ब्राह्मणेषु । कृण्वे । पन्थाम् । पितृषु । यः । स्वःऽगः ॥ २८ ॥

इदं **निधीयमानं** हिरण्यम् अमृतम् **अविनश्वरं** मे **मम** ज्योतिः **प्रकाशः । स्वर्गमार्गस्य प्रकाशको दीप इत्यर्थः ।** पक्कम् **पाकेन संस्कृतम् एतद् अन्नम्** क्षेत्राद् **व्रीहियवादिसस्याढ्याद् भूप्रदेशाद् उत्पन्ना** एषा मे कामदुघा **कामानां दोग्ध्री धेनुः ।** 'दुहः कब्घश्च' ( पा ३,२,७० ) **इति कब्घत्वे ।** इदं धनं **दक्षिणात्वेन दीयमानं** ब्राह्मणेषु नि दधे **निक्षिपामि यथा मम तत् स्वर्गे लोके कोटिगुणितं स्यात् । तथा** पितृषु **अस्मदीयेषु पितृपितामहादिषु विषये** यः **प्रसिद्धस्तैरभिलषितः** स्वर्गः **पुण्यलोकः तस्य** पन्थाम् **पन्थानं** कृण्वे **करोमि ।**

अग्नौ तुषाना वप जातवेदसि परः कम्बूकाँ[1] अप 'मृड्ढि दूरम् ।
एतं शुश्रुम गृहराजस्य भागमथो विद्म निर्ऋतेर्भागधेयम्[2] ॥ २९ ॥

अग्नौ । तुषान् । आ । वप । जातऽवेदसि । परः । कम्बूकान् । अप । मृड्ढि । दूरम् ।
एतम् । शुश्रुम । गृहऽराजस्य । भागम् । अथो इति । विद्म । निःऋतेः । भागऽधेयम् ॥२९॥

**हे ऋत्विक्** जातवेदसि **जातानां वेदितरि** अग्नौ तुषान् **ब्रह्मौदनार्थतण्डुलेभ्यः पृथक्कृतान्** आ वप **प्रक्षिप । तेषाम् अग्नौ प्रक्षेपः प्रतिपत्तिरित्यर्थः । तथा[3]** कम्बूकान् **फलीकरणान्** परः **परस्ताद्** दूरम् अप मृड्ढि **पादेन अपमार्जनं कुरु ।** गृहराजस्य **गृहाणाम् अधिपतेर्वास्तुनाथस्य ।** 'राजाहःसखिभ्यः°' ( पा ५,४,९१ ) **इति टच् ।** एतं **कम्बूकाख्यं[4]** भागं शुश्रुम **अभिज्ञेभ्यो वयं श्रुतवन्तः ।** अथो **अपिच** निर्ऋतेः **पापदेवताया** भागधेयम् **हविर्भागम् एतं** विद्म **जानीमः ।** 'विदो लटो वा' ( पा ३, ४,८३ ) **इति मसो मादेशः । भागशब्दात् स्वार्थे धेयप्रत्ययः ।**

श्राम्यतः पचतो[5] विद्धि सुन्वतः पन्थां स्वर्गमधि[6] रोहयैनम् ।
येन रोहात् परमापद्य यद् वय उत्तमं नाकं परमं व्योम ॥ ३० ॥

श्राम्यतः । पचतः । विद्धि । सुन्वतः । पन्थाम् । स्वःऽगम् । अधि । रोहय । एनम् ।
येन । रोहात् । परम् । आऽपद्य । यत् । वयः । उत्ऽतमम् । नाकम् । परमम् । विऽओम ॥३०॥

श्राम्यतः **दीक्षारूपं तपस्तप्यमानान् । श्रमु तपसि खेदे च । अस्मात् लटः शत्रादेशः ।** 'शमामष्टानां दीर्घः श्यनि' ( पा ७,३,७४ ) **इति दीर्घः । दीक्षाजनित-**

---

१. मृड्ढ्येतान् पै १६,९१,९. २. निर्ऋतेभाग° B. ३. यथा S'. ५. कंबु° S'. ५. पचत एति पै १६,९१,१०. ६. स्वर्गं लोकमधि पै.

श्रमानन्तरं पचतः उक्तरीत्या ब्रह्मौदनपाकं कुर्वतः सुन्वतः सोमाभिषवं कुर्वतः। सवयज्ञ एव सोमयागत्वेन रूप्यते। सवयज्ञानुष्ठातॄन् यजमानान् हे ब्रह्मौदन त्वं विद्धि जानीहि। एनान्[1] यजमानान् स्वर्गम् स्वर्गप्रापकं पन्थाम् पन्थानं मार्गम् अधि रोहय उपरि आरोहय। उत्तमम् उत्कृष्टतमं नाकम् दुःखसंस्पर्शरहितं परमम् सर्वस्य परस्ताद् उपरि प्रदेशे वर्तमानं स्वर्गाख्यं यद् व्योम अस्ति तद् येन पथा अयं यजमानो रोहात् रोहेत् आरूढो भवेत्। कथं भूत्वेत्याह। परम् उत्कृष्टं वयः पक्षिरूपं श्येनात्मकं 'यद् अस्ति तद् आपद्य[2] आस्थाय। श्रूयते हि तैत्तिरीयके। 'श्येनो वै वयसां पतिष्ठः। श्येन एव भूत्वा सुवर्गं लोकं पतति' ( तै ५,४ ११,१ ) इति। तं पन्थानम् आरोहयेति पूर्वत्रान्वयः।

इति तृतीयं सूक्तम्।

'बभ्रेरध्वर्यो' इति सूक्तस्य ब्रह्मौदनसवे 'अग्ने जायस्व' इत्यनेन सह उक्तो विनियोगः। तत्र 'बभ्रेरध्वर्यो' इति ऋचा ओदनस्योपरि गर्तं कुर्यात्। सूत्रितं हि—" 'बभ्रेरध्वर्यो' ( ३१ ), 'इदं प्रापम्' ( अ १२,३,४५ ) इत्युपर्यापानं[3] करोति" ( कौसू ६२,१५ ) इति।

'घृतेन गात्रा' इति पादेन घृतेन ओदनं विष्यन्दयेत्[4]। " 'घृतेन गात्रा' ( ३१ ), 'आ सिञ्च सर्पिः' ( अ १२,३,४५ ) इति सर्पिषा विष्यन्दयति" ( कौसू ६२,१७ ) इति सूत्रात्।

'कृण्वे पन्थाम्' इति चरमपादं दातारं वाचयेत्। 'बभ्रे रक्षः' इत्यादिभिर्ऋग्भिः ओदनम् अनुमन्त्रयेत।

'समाचिनुष्व' इत्यनया आज्यं जुहुयात्। " 'अग्ने प्रेहि' ( अ ४,१४,५ ), 'समाचिनुष्व' ( ३६ ) इत्याज्यं जुहुयात्" ( कौसू ६३,९) इति हि सूत्रम्[5]।

**ब॒भ्रेर॑ध्वर्यो॒ मुख॑मे॒तद् वि मृ॑ड्ढ्याज्या॑य लो॒कं कृ॑णुहि[6] प्रवि॒द्वान्[7]।**
**घृ॒तेन॒ गात्रानु॒ सर्वा॒ वि मृ॑ड्ढि कृ॒ण्वे पन्थां॑ पि॒तृषु॒ यः स्व॒र्गः ॥ ३१ ॥**

ब॒भ्रेः। अ॒ध्व॒र्यो॒ इति॑। मुख॑म्। ए॒तत्। वि। मृ॒ड्ढि॒। आ॒ज्या॑य। लो॒कम्। कृ॒णु॒हि॒। प्र॒ऽवि॒द्वान्। घृ॒तेन॑। गात्रा॑। अनु॑। सर्वा॑। वि। मृ॒ड्ढि॒। कृ॒ण्वे। पन्था॑म्। पि॒तृषु॑। यः। स्व॒ःऽगः ॥ ३१ ॥

हे अध्वर्यो अध्वरस्य नेतर्ऋत्विक् बभ्रेः भरणशीलस्य पोषकस्य पक्वस्य ओदनस्य। डुभृञ् धारणपोषणयोः। 'आदृगमहनजनः किकिनौ लिट् च' ( पा ३,२,१७१ ) इति किप्रत्ययः। तथाविधस्य ओदनस्य एतन्मुखम् उपरिप्रदेशं वि मृड्ढि

१. वैतु. मंपा. २. यदिस्तदापद्य S'. ३. इत्यपर्या° S'. ४. निष्यन्द° S'. ५. सूत्रात् S'. ६. कृणोहि B. ७. प्रजानन् पै १६,९२,१.

विशेषेण मार्जय शोधय। मृजू शुद्धौ। अस्मात् लोटि सेर्हिरादेशः। 'हुझल्भ्यः°' (पा ६,४,१०१) इति हेर्धित्वम्। अदादित्वात् शपो लुक्। 'व्रश्च' (पा ८,२,३६) इत्यादिषत्वे जश्त्वम्। मुखविमार्जनानन्तरं हे अध्वर्यो प्रविद्वान् जानन् आज्याय। षष्ठ्यर्थे चतुर्थी। आज्यस्य धारणार्थं लोकम् स्थानं गर्तरूपं कृणुहि कुरु ओदनमध्ये कल्पय। कृवि हिंसाकरणयोश्च। 'धिन्विकृण्व्योर च' (पा ३,१,८०) इति उप्रत्ययः। 'उतश्च प्रत्ययाच्छन्दसि वा वचनम्' (पावा ६,४,१०६) इति हेर्लुगभावः। तथा सर्वा सर्वाणि गात्रा गात्राणि स्थालीगतस्य ओदनस्य अङ्गानि घृतेन क्षरणशीलेन आज्येन अनु वि मृड्ढि आनुपूर्व्येण विमार्जय। स्वभ्यक्तानि कुर्वित्यर्थः। अनेन ओदनेन पन्थाम् पन्थानं मार्गं कृण्वे कुर्वे। कीदृशः स पन्था इत्याह पितृष्विति। पितृषु पितृपितामहादिषु पूर्वपुरुषेषु विषयभूतेषु यः पन्थाः स्वर्गः स्वर्लोकं प्रति ऋजुत्वेन गच्छति तथाविधः। स्वर्शब्दोपपदाद् गमेः 'डोऽन्यत्रापि दृश्यते' (पावा ३,२,४८) इति डप्रत्ययः। स्वर्गप्राप्तिसाधनभूतो मार्ग इत्यर्थः।

बभ्रे रक्षः समदमा[1] वपैभ्योऽब्राह्मणा[2] यतमे त्वोपसीदान्।
पुरीषिणः प्रथमानाः पुरस्तादार्षेयास्ते मा रिषन् प्राशितारः॥ ३२॥

बभ्रे[3]। रक्षः। सऽमदम्। आ। वप। एभ्यः। अब्राह्मणाः। यतमे। त्वा। उपऽसीदान्। पुरीषिणः। प्रथमानाः। पुरस्तात्। आर्षेयाः। ते। मा। रिषन्। प्रऽअशितारः॥ ३२॥

हे बभ्रे भरणशील ब्रह्मौदन अब्राह्मणाः ब्राह्मणव्यतिरिक्ताः क्षत्रियाद्या यतमे ये त्वा त्वाम् उपसीदान् उपसीदेयुः प्राशनार्थम् उपसन्ना भवेयुः। 'वा बहूनां जातिपरिप्रश्ने' (पा ५,३,९३) इति यच्छब्दात् डतमच्। तदन्तस्य सर्वनामसंज्ञायां जसः शीभावः। एभ्यः ब्राह्मणव्यतिरिक्तेभ्यः रक्षःसमदम्[4] रक्षोजात्या सह मदनम्। यद्वा समानं माद्यन्ति अस्मिन्निति समत् संग्रामः राक्षसैः कलहम् आ वप प्रक्षिप। राक्षसकृतां पीडां प्रापयेत्यर्थः। ये तु पुरस्ताद् उक्ता आर्षेयाः ऋषिगोत्रप्रवराभिज्ञाः पुरीषिणः पृणाति पूरयतीति वा पुरीषं प्रजापश्वादिकम्। श्रूयते हि—'प्रजा वै पशवः पुरीषम्। प्रजयैवैनं पशुभिः पुरीषवन्तं करोति' (तै २,६,४,३) इति। यास्कस्तु पुरीषशब्दं निरवोचत्—'पुरीषं पृणातेः पूरयतेर्वा' (नि २,२२) इति। तद् एषाम् अस्तीति पुरीषिणः। अत एव प्रथमानाः लोके पुत्रपौत्रादिसमृद्ध्या विस्तीर्यमाणाः ते भृग्वङ्गिरोविदो ब्राह्मणाः हे ओदन तव प्राशितारः भोक्तारः मा रिषन् हिंसां मा प्राप्नुवन्तु। रिष हिंसायाम्। समृद्धा भवन्तु इत्यर्थः।

---

१. सुमतिमा पै १६,९२,२. २. °भ्यः सुब्रा° पै. ३. बभ्रे P; बभ्रे>बभ्रे Cp, ४. वैतु. मंपा.

आर्षेयेषु नि दध ओदन त्वा नानार्षेयाणामप्यस्त्यत्र[1] ।
अग्निर्मे गोप्ता[2] मरुतश्च सर्वे विश्वे देवा अभि [3]रक्षन्तु पक्कम्[3] ॥ ३३ ॥

आर्षेयेषु । नि । दधे । ओदन । त्वा । न । अनार्षेयाणाम् । अपि । अस्ति । अत्र ।
अग्निः । मे । गोप्ता । मरुतः । च । सर्वे । विश्वे । देवाः । अभि । रक्षन्तु । पक्कम् ॥ ३३ ॥

हे ओदन त्वा **त्वाम्** आर्षेयेषु **प्रागुक्तलक्षणेषु ब्राह्मणेषु** नि दधे **नितरां स्थापयामि** । अत्र **अस्मिन् ब्रह्मौदने** अनार्षेयाणाम् **ऋषिगोत्रप्रवरानभिज्ञानां पुरुषाणाम्** । अपिः **संभावनार्थः** । **संभावनापि** न अस्ति **विद्यते** । मे अग्निः **अग्रणीर्देवो** गोप्ता **गोपायिता रक्षिता** । **गुपू रक्षणे** । **तृचि** । 'आयादय आर्धधातुके वा' ( पा ३,१,३१ ) **इति आयप्रत्ययाभावः** । **तथा** सर्वे **सप्तगणात्मका** मरुतः **मरुत्संज्ञा देवाश्च** । **मम गोप्तार इति विपरिणामेन संबन्धः** । **अपिच** विश्वे **सर्वे** देवा **मित्रवरुणार्यमादयः** पक्कम् **पाकेन संस्कृतम् इमं ब्रह्मौदनम्** अभि रक्षन्तु **अभितः पालयन्तु** । **पक्कम् इति पचेः कर्मणि निष्ठा** । 'पचो वः' ( पा ८,२,५२ ) **इति निष्ठातकारस्य वकारः** ।

यज्ञं दुहानं सदमित् प्रपीनं पुमांसं धेनुं सदनं रयीणाम् ।
प्रजामृतत्वमुत दीर्घमायू रायश्च पोषैरुप त्वा सदेम ॥ ३४ ॥

यज्ञम् । दुहानम् । सदम् । इत् । प्रऽपीनम् । पुमांसम् । धेनुम् । सदनम् । रयीणाम् ।
प्रजाऽअमृतत्वम् । उत । दीर्घम् । आयुः । रायः । च । पोषैः । उप । त्वा । सदेम ॥ ३४ ॥

यज्ञम् **अग्निहोत्रदर्शपूर्णमासाद्यात्मकं** दुहानम् **उत्पादयन्तम्** । **ब्रह्मौदनपाकानन्तरमेव हि आधानादिवैतानक्रियास्वधिकार इति ब्रह्मौदनस्य कारणत्वोपन्यासः** । सदम् इत् **सदैव** प्रपीनम् **प्रवृद्धोधस्कम्** । **प्यायी वृद्धौ** । **अस्मात् प्रपूर्वात् निष्ठायां** 'प्यायः पी' (पा ६,१,२८) **इति पी आदेशः** । पुमांसं धेनुम् । **उक्तलक्षणो ब्रह्मौदनः पुंरूपा धेनुरित्यर्थः** । **तथा** रयीणाम् **धनानां** सदनम् **उपवेशनस्थानम्** । 'अन्नाद् भूतानि जायन्ते' ( तैआ ८,२,१ ) **इत्यादिश्रुतेः** । **हे ओदन एवंभूतं** त्वा **त्वां भुञ्जाना वयं** प्रजामृतत्वम् **प्रकर्षेण जायत इति प्रजा पुत्रपौत्रादिरूपा तया यत् अमृतत्वम् अमरणधर्मता** । **सांतत्येन वृत्तिरित्यर्थः** । **श्रूयते हि**—'प्रजाम् अनु प्रजायसे । तदु[4] ते मर्त्यामृतम्' ( तैब्रा १,५,५,६ ) **इति**, 'प्रजाभिरग्ने अमृतत्वमश्याम्' ( **ऋ ५,४,१०** ) **इति च** । **ताम्** उत **अपि च** दीर्घम् **शतसंवत्सरपरिमितम्** आयुः **जीवनम्** ।

---

१. °प्यस्त्वत्र पै १६,९२,३.   २. गुप्त्वा पै.   ३. °न्तु पक्तम् पै.   ४. तदू S'.

तथा रायः धनस्य पोषैः समृद्धिभिश्च सह प्रजाऽमृतत्वादिकं सर्वं फलम् उप सदेम उपगम्यास्म । यद्वा प्रजाऽमृतत्वादिरूपं त्वाम् इति सामानाधिकरण्येन संबन्धः । सदेः आशीर्लिङि 'लिङ्याशिष्यङ्' (पा ३,१,८६) इति अङ्प्रत्ययः ।

वृषभोऽसि स्वर्ग ऋषीनार्षेयान् गच्छ ।
सुकृतां लोके सीद तत्र[1] नौ संस्कृतम् ॥ ३५ ॥

वृषभः । असि । स्वःऽगः । ऋषीन् । आर्षेयान् । गच्छ ।
सुऽकृताम् । लोके । सीद । तत्र । नौ । संस्कृतम् ॥ ३५ ॥

हे ब्रह्मौदन त्वं वृषभः कामानां वर्षिता असि भवसि । तथा स्वर्गः स्वर्लोकस्य गन्ता गमयिता वा भवसि । अतः ऋषीन् मन्त्रद्रष्टॄन् आर्षेयान् उदीरितलक्षणान् ब्राह्मणान् गच्छ अस्माभिर्दीयमानः प्राप्नुहि । तैरुपभुक्तः सन् पश्चाद् अदृष्टरूपेण सुकृताम् पुण्यकृताम् फलभूते लोके नाकपृष्ठाख्ये सीद उपविश । ततः परं नौ आवयोः तत्र खलु सुकृतफलभूते लोके संस्कृतम् संस्कारो भोक्तृभोक्तव्यात्मकः । संपत्स्यत इत्यर्थः ।

समाचिनुष्वानुसंप्रयाह्यग्ने[2] पथः कल्पय देवयानान् ।
एतैः[3] सुकृतैरनु गच्छेम[4] यज्ञं नाके तिष्ठन्तमधि सप्तरश्मौ ॥ ३६ ॥

सम्ऽआचिनुष्व । अनुऽसंप्रयाहि । अग्ने[5] । पथः । कल्पय । देवऽयानान् । एतैः । सुऽकृतैः । अनु । गच्छेम । यज्ञम् । नाके । तिष्ठन्तम् । अधि । सप्तऽरश्मौ ॥ ३६ ॥

हे ओदन त्वं समाचिनुष्व समाचयनम् सर्वेषाम् अङ्गानां समूहीभवनम् कुरु । अनु[6] पश्चात् संप्रयाहि[6] गन्तव्यान् प्रति गच्छ । हे अग्ने त्वमपि अस्य ओदनस्य गमनाय देवयानान् पथः देवा एव यैर्यान्ति गच्छन्ति तादृशान् मार्गान् कल्पय विरचय । वयमपि एतैः एव देवयानैः पथिभिः सुकृतैः पुण्यफलभूतैः नाके दुःखासंस्पृष्टे स्वर्गे लोके अधि सप्तरश्मौ आदित्यमण्डलस्योपरि तिष्ठन्तं यज्ञम् अनु गच्छेम अनुप्राप्नुयाम । स्मर्यते हि—'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' ( मस्मृ ३,७६ ) इति ।

येन देवा ज्योतिषा द्यामुदायन् ब्रह्मौदनं पक्त्वा सुकृतस्य लोकम् ।

---

१. तन् पै १६,९२,५. २. समातनु° पै १६,९२,६; तु. RW.; वैतु. शंपा. °यांह्यग्ने, B याह्यग्ने. ३. एभिः पै. ४. प्र गेष्म पै. ५. तु. संपा.; वैतु. शंपा. अग्ने; अग्ने> अग्ने (=? अग्ने) Cp. ६. वैतु. संपा.

तेन[1] गेष्म सुकृतस्य लोकं[1] स्वरारोहन्तो[2] अभि[3] नाकमुत्तमम् ॥ ३७ ॥

येन । देवाः । ज्योतिषा । द्याम् । उत्ऽआयन् । ब्रह्मऽओदनम् । पक्त्वा । सुऽकृतस्य । लोकम् ।
तेन । गेष्म । सुऽकृतस्य । लोकम् । स्वः । आऽरोहन्तः । अभि । नाकम् । उत्ऽतमम् ॥३७॥

देवा इन्द्रादयो येन ज्योतिषा सूर्यरश्मिलक्षणेन तेजसा । 'अग्निर्ज्योतिरहः शुक्लः' ( भगी ८,२४ ) इत्युदीरितलक्षणस्य देवयानमार्गस्य उपलक्षणम् एतत् । येन[4] पथा द्याम् द्युलोकं स्वर्गम् उदायन् उदगच्छन् । किं कृत्वेत्याह — ब्रह्मौदनं पक्त्वा । एतद् ब्रह्मौदनसवाख्यं कर्म अनुष्ठायेत्यर्थः । द्यां विशिनष्टि — सुकृतस्य पुण्यकर्मणः फलभूतं लोकम् । यतो देवा अनेन पथा उदायन् ततो हेतोः अस्य मार्गस्य देवयानसंज्ञा निष्पन्नेति भावः । तेन देवयानेन पथा वयमपि सुकृतस्य सुकर्मणः सवयज्ञात्मकस्य फलभूतं लोकं जेष्म[5] जयेम प्राप्नुयाम । उक्त एवार्थो विव्रियते — उत्तमम् उत्कृष्टतमं नाकम् नाकपृष्ठाख्यं स्थानविशेषम् अभि अभिलक्ष्य स्वः आरोहन्तः । तदुपायत्वेन स्वर्गाख्यं स्थानं प्रथमम् अधिरोहन्त इत्यर्थः । यद्वा 'लक्षणहेत्वोः क्रियायाः' ( पा ३,२,१२६ ) इति हेतौ शतृप्रत्ययः । स्वर्गारोहणाद्धेतोः सुकृतफलं प्रथमं जयेमेति पूर्वत्र सम्बन्धः ।

एवम् 'अग्ने जायस्व' इत्यादिसूक्तचतुष्टयं ब्रह्मौदनाख्यस्य साङ्गस्य[6] कर्मणः प्रतिपादकत्वेन अर्थत एकत्वाद् अर्थसूक्तम् इति मन्त्रद्रष्टृभिः परिभाष्यते । एवं सर्वेष्वर्थसूक्तेषु द्रष्टव्यम् ।

इति एकादशे काण्डे प्रथमेऽनुवाके चतुर्थं सूक्तम् ।

ऋ· अथर्वा, दे· भवाशर्वौ मन्त्रोक्ताः

'भवाशर्वौ मृडतम्' इत्यादिसूक्तत्रयम् अर्थसूक्तम् । तेन अर्थसूक्तेन स्वस्त्ययनकामः आज्यसमित्पुरोडाशादिशष्कुल्यन्तानां त्रयोदशद्रव्याणाम् अन्यतमं जुहुयात् । सर्वाणि वा त्रयोदश द्रव्याणि जुहुयात् । सूत्रितं हि — " 'विश्वजित्' ( अ ६,१०७ ), 'शकधूमम्' ( अ ६,१२८ ), 'भवाशर्वौ' इत्युपदधीत" ( कौसू ५०,१३ ) इति ।

तथा रुद्रभूतप्रेतराक्षसलोकपालादिनिमित्ताभिघाते स्वस्त्ययनार्थं सरूपवत्साया गोर्दुग्धे पक्वं चरुं त्रिधा विभज्य समस्तेन अर्थसूक्तेन रुद्रदेवतायै तिस्र आहुतीर्जुहुयात् । सूत्रितं हि — " 'विश्वजित्', 'शकधूमम्', 'भवाशर्वौ' इत्युपदधीत । उत्तमेन सारूपवत्सस्य रुद्राय त्रिर्जुहोति" ( कौसू ५०,१३;१४ ) इति ।

तथा मांसमुखाग्रपतनलक्षणादद्भुतशान्त्यर्थम् अनेनार्थसूक्तेन रुद्राय आज्यं जुहुयात् । 'अथ यत्रैतन्मांसमुखो निपतति तत्र जुहुयात्' इति प्रक्रम्य कौशिकेन सूत्रितम् —

---

१. वयं गमेम ब्रध्नस्य विष्टपं मा १८,५१. २. स्वो रुहाणा मा. ३. अधि मा.
४. तेन S'. ५. वैतु. मंपा. ६. सांगकस्य S'.

"'रुद्राय स्वाहा' इति हुत्वा 'भवाशर्वौ मृडतं माभि यातम्' इत्येतेन सूक्तेन जुहुयात्। सा तत्र प्रायश्चित्तिः" (कौसू १२९,२-४) इति।

तथा अग्निचयने रौद्रीरिष्टका[1] अनेनार्थसूक्तेन अनुमन्त्रयेत। तदुक्तं वैताने— "'भवाशर्वौ मृडतम्' (अ ११,२), 'यस्ते सर्पः' (१२,१,४६) इति रौद्रान्"[2] (वैता २९,१०)।

तथा सर्वकामप्राप्त्यर्थं शान्त्यर्थं वा क्रियमाणे लक्षहोमे एतद् अर्थसूक्तम्। तथा च आथर्वणपरिशिष्टेऽभिहितम्— "'व्रजश्च मे क्षत्रं च मे', 'ये अग्नयः' (अ ३,२१), 'नमो देववधेभ्यः' (अ ६,१३), 'भवाशर्वौ', 'प्राणाय नमः' (अ ११,६) इति हुत्वा" इति।

**भवा॑शर्वौ मृ॒डतं॒ माभि या॑तं॒ भूत॑पती॒ पशु॑पती॒ नमो॑ वाम्।**
**प्रति॑हिता॒माय॑तां॒ मा वि स्रा॑ष्टं॒ मा नो॑ हिंसिष्टं द्वि॒पदो॒ मा चतु॑ष्पदः ॥१॥**

भवा॑शर्वौ। मृ॒डत॑म्। मा। अ॒भि। या॒त॒म्। भूत॑पती॒ इति॒ भूत॑ऽपती। पशु॑पती॒ इति॒ पशु॑ऽपती। नम॑ः। वा॒म्। प्रति॑ऽहिताम्। आऽय॑ताम्। मा। वि। स्रा॒ष्ट॒म्। मा। न॒ः। हिं॒सि॒ष्ट॒म्। द्वि॒ऽपद॑ः। मा। चतु॑ःऽपदः ॥ १ ॥

एतदादिसूक्तत्रयेण भौमान्तरिक्षाद्युत्पातदोषनिवृत्तये अष्टमूर्तिर्महादेवः प्रार्थ्यते। ताश्च पारमेश्वर्यो मूर्तय आगमिकैरेवम् अनुक्रान्ताः—

'शर्वं पशुपतिं चोग्रं रुद्रं भवमथेश्वरम्। महादेवं च भीमं च।' इति।

तासाम् उत्पत्तिः शतपथब्राह्मणे षष्ठकाण्डे 'असद् वा इदम् अग्र आसीत्' (शब्रा ६,१,१,१) इत्यादिना प्रपञ्चिता। तत्र सृष्ट्यादौ भवति यस्मात् सर्वं जगत् इति भवः। शृणाति सर्वं जगद्धिनस्ति संहृतिसमये इति शर्वः। स्थितिकालवर्तिनीनाम् अन्यासां मूर्तीनाम् उपसंग्रहाय सृष्टिसंहृतिकारिण्यौ आद्यन्तवर्तिन्यौ परमेश्वरस्य मूर्ती निर्दिश्येते। भवश्च शर्वश्च भवाशर्वौ। 'देवताद्वन्द्वे च' (पा ६,३,२६) इति पूर्वपदस्य आनङ् आदेशः। हे भवाशर्वौ एतत्संज्ञौ देवौ मृळतम्[2] अस्मान् सुखयतम्। मृड सुखने। तथा मा[2] माम् अभियातम् रक्षणार्थम् आभिमुख्येन गच्छतम्। यद्वा हिंसार्थम् अभिगमनं मा कार्ष्टम्। हे भूतपती भूतानां प्राणिनां स्वामिनौ हे पशुपती पशूनां गोमहिषादीनां पालयितारौ वाम् युवाभ्यां नमः। करोमीति शेषः। अस्मदीयेन नमस्कारेण संतुष्टौ युवां प्रतिहिताम् आत्मीये धनुषि प्रतिसंहिताम् आयताम् ज्यया सह आकृष्टाम् [3]आत्मीयाम् इषुं[3] मा विस्राष्टम् अस्मदाभिमुख्येन मा विसृजतम्। याम् इषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे' (तै ४,५,१,२) इति हि निगमः। सृज विसर्गे इत्यस्माद्धातोर्माङि लुङि मध्यमद्विवचने 'सृजिदृशोर्झल्यमकिति' (पा ६,१,५८) इति अम् आगमः। 'वदव्रजहलन्तस्याचः[4]' (पा ७,२,३) इति वृद्धिः। 'झलो झलि' (पा ८,२,२६) इति सलोपः। 'व्रश्च॰' (पा ८,२,३६) इत्यादिषत्वे ष्टुत्वम्। तथा[5]

---

१. रौद्रीः शंपा.　२. वैतु. मंपा.　३. ॰म् इषुं नास्ति S'.　४. 'सिचि वृद्धिः परस्मैपदेषु' शंपा.　५. तथा च S'.

नः अस्माकं द्विपदः पादद्वयोपेतान् पुत्रभृत्यादिरूपान् मनुष्यान् मा हिंसिष्टम्। ज्वरादिरोगेण पीडितान् मा कार्ष्टम् इत्यर्थः। तथा चतुष्पदः पादचतुष्टयोपेतान् गोमहिषाश्वादीन् अस्मदीयान् मा हिंसिष्टम्। द्वौ पादावस्य चत्वारः पादा अस्येति विगृह्य समासे 'संख्यासुपूर्वस्य' (पा ५,४,१४०) इति पादशब्दस्य अन्त्यलोपः। शसि भसंज्ञायां 'पादः पत्' (पा ५,४,१३० ) इति पद्भावः। द्विपद इत्यत्र 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' (पा ६,२,१९७) इति उत्तरपदान्तोदात्तत्वम्। चतुष्पद इत्यत्र तु 'बहुव्रीहौ प्रकृत्या°' ( पा ६,२,१ ) इति पूर्वपदप्रकृतिस्वरत्वम्।

शुने॑ क्रो॒ष्ट्रे मा शरी॑राणि॒ कर्त॑म॒लिक्ल॑वेभ्यो॒[1] गृध्रे॑भ्यो॒ ये च॑ कृ॒ष्णा अ॑वि॒ष्यवः॑।
मक्षि॑कास्ते पशुपते॒ वयां॑सि ते विघ॒से मा वि॑दन्त ॥ २ ॥

शुने॑। क्रो॒ष्ट्रे। मा। शरी॑राणि। कर्त॑म्। अ॒लिक्ल॑वेभ्यः। गृध्रे॑भ्यः। ये। च॒। कृ॒ष्णाः। अ॒वि॒ष्यवः॑। मक्षि॑काः। ते॒। प॒शु॒ऽप॒ते॒। वयां॑सि। ते॒। वि॒ऽघ॒से। मा। वि॒द॒न्त॒[2] ॥ २ ॥

हे भवाशर्वौ शरीराणि अस्मत्संबन्धीनि शुने सारमेयाय। 'श्वयुवमघोनामतद्धिते' (पा ६,४,१३३) इति संप्रसारणम्। क्रोष्ट्रे सृगालाय। 'विभाषा तृतीयादिष्वचि' (पा ७,१,९७) इति क्रोष्टुशब्दस्य तृज्वद्भावः। उभयत्र तादर्थ्ये चतुर्थी। श्वसृगालभक्षणार्थं कर्तुं[3] मा। प्रभवतम् इत्यर्थः। तथा अविक्लबेभ्यः[3] विक्लवा अधृष्टाः कातरास्तद्विपरीतेभ्यः। वर्णविकारश्छान्दसः। गृध्रेभ्यः मांसमुखेभ्यः पक्षिभ्यः। ये च कृष्णाः कृष्णवर्णा वायसा अविष्यवः आमिषम् इच्छन्तः अन्तरिक्षे संचरन्ति तेभ्यश्च। गृध्रकाकादिपक्षिणां भक्षणार्थमपि अस्मच्छरीराणि मा कुरुतम् इत्यर्थः। हे पशुपते पशूनाम् अधिपते रुद्र ते त्वदीया मक्षिकाः तथा ते त्वदीयानि वयांसि पक्षिणश्च विघसे विशेषेण अद्यत इति विघसः अन्नम्। 'उपसर्गेऽदः' ( पा ३,३,५९ ) इति अप्। 'घञपोश्च' ( पा २,४,३८ ) इति घस्लृ आदेशः। तस्मिन् विघसे अन्ने निमित्तभूते सति मा विदन्त अस्मच्छरीराणि न लभन्ताम्। मा भक्षयन्तु इत्यर्थः। विद्लृ लाभे। माङि लुङि लृदित्त्वात् च्लेः अङ् आदेशः।

क्रन्दा॑य ते प्रा॒णाय॒ याश्च॑ ते भव॒ रोप॑यः।
नम॑स्ते रुद्र कृण्मः सहस्रा॒क्षाया॑मर्त्य[4] ॥ ३ ॥

क्रन्दा॑य। ते॒। प्रा॒णाय॑। याः। च॒। ते॒। भ॒व॒। रोप॑यः।
नम॑ः। ते॒। रु॒द्र॒। कृ॒ण्म॒ः। स॒ह॒स्र॒ऽअ॒क्षाय॑। अ॒म॒र्त्य॒ ॥ ३ ॥

---

१. कर्त॑म् इति रूपं स्वरश्च?; कर्तु॑म्° V,K,S, सा.; °मरिक्ल° पै १६,१०४,२; °क्लबेभ्यो॒° V, सा.
२. तु.सा.वैतु. P,P², J,Cp अ॒वि॒द॒न्त.   ३. वैतु. मंपा.   ४. °क्षामर्त्य पै १६,१०४,३.

हे भव ते तव क्रन्दाय क्रन्दनाय शब्दाय प्राणाय प्राणवायवे नमस्कुर्मः । यद्वा क्रन्दयति[1] रोदयति सर्वम् अन्तकाले इति क्रन्दः । कदि क्रदि क्लदि आह्वाने रोदने च । तथा प्राणाय प्राणयित्रे प्राणनव्यापारेण चेष्टयित्रे जगत्प्राणभूताय वा ते तुभ्यं नमस्कुर्मः । तथा हे भव ते तव याश्च रोपयः रोपयित्र्यो मोहयित्र्यस्तन्वः सन्ति ताभ्यश्च नमस्कुर्म इत्यर्थः । रुप लुप विमोहने । अस्माद् औणादिक इकारप्रत्ययः[1] । हे रुद्र । रोदयति सर्वम् अन्तकाल इति रुद्रः । 'रोदेर्णिलुक् च (पाउ २,२२) इति रक्प्रत्ययः । णिचो लुका लुप्तत्वात् प्रत्ययलक्षणाभावात् लघूपधगुणाभावः । यद्वा रुद् दुःखं दुःखहेतुर्वा तस्य द्रावको देवो रुद्रः परमेश्वरः । हे देव सहस्राक्षाय सहस्रं अक्षीणि दर्शनशक्तयो यस्य स तथोक्तः । सर्वजगत्साक्षिणे । निरावरणज्ञानरूपायेत्यर्थः । 'बहुव्रीहौ सक्थ्यक्ष्णोः°' ( पा ५,४,११३ ) इति षच्समासान्तः । अमर्त्यः[2] । 'सुपां सुलुक्°' (पा ७,१,३९) इति चतुर्थ्येकवचनस्य सु आदेशः । अमर्त्याय अमरणधर्मणे सांसारिकदुःखासंस्पृष्टायेत्यर्थः । एवंभूताय ते तुभ्यं नमः नमस्कारं कृण्मः कुर्मः ।

पुरस्ता॑त् ते॒ नम॑ः कृण्म उत्त॒राद॑ध॒राद॒त ।
अ॒भी॒व॒र्गाद् दि॒वस्पर्य॒न्तरि॑क्षाय ते॒ नम॑ः ॥ ४ ॥

पुरस्ता॑त् । ते॒ । नम॑ः । कृ॒ण्म॒ः । उ॒त्त॒रात् । अ॒ध॒रात् । उ॒त ।
अ॒भि॒ऽव॒र्गात् । दि॒वः । परि॑ । अ॒न्तरि॑क्षाय । ते॒ । नम॑ः ॥ ४ ॥

हे रुद्र ते तुभ्यं पुरस्तात् पूर्वस्यां दिशि नमः कृण्मः नमस्कारं कुर्मः । तथा उत्तरात् उत्तरस्यां दिशि । अधरात् । अधरशब्दो दक्षिणादिग्वचनः । 'पश्चात् पुरस्तादधराद् उदक्तात्' (ऋ १०,८७,२१) इत्यादिनिगमेषु तथा दर्शनात् । अधरस्यां दक्षिणस्यां दिशि । 'उत्तराधरदक्षिणादातिः' ( पा ५,३,३४ ) इति सप्तम्यर्थे आतिप्रत्ययः । उतशब्दः अप्यर्थे । दक्षिणोत्तरदिशोरवस्थिताय ते तुभ्यं नमः । कृण्म इत्यनुषङ्गः । अभीवर्गात् अभितो वृज्यते गृहादिरूपेण परिच्छिद्यते इति अभीवर्गः अवकाशात्मक आकाशः । वृजी वर्जने । कर्मणि घञ् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (पा ६,३,१२२) इति दीर्घः । तादृशात् दिवः द्योतमानात् आकाशात् परि उपरिभागे । 'पञ्चम्यपाङ्परिभिः' ( पा २,३,१० ) इति पञ्चमी । 'पञ्चम्याः परावध्यर्थे' ( पा ८,३,५१ ) इति विसर्जनीयस्य सत्वम् । आकाशमण्डलस्य मध्ये अन्तरिक्षाय अन्तरा क्षान्ताय नियन्तृत्वेन अवस्थिताय ते तुभ्यं नमः कुर्मः । 'अस्मिन् महत्यर्णवेऽन्तरिक्षे भवा अधि' ( तै ४,५,११,१ ) इति हि निगमान्तरम् ।

मुखा॑य ते पशुपते॒ यानि॒ चक्षूं॑षि ते भव ।
त्व॒चे रू॒पाय॑ सं॒दृशे॑ प्रती॒चीना॑य ते॒ नम॑ः ॥ ५ ॥

---

१. एवं स्वरो न सिध्यति.  २. वैतु. मंपा.

मुखाय । ते । पशुऽपते । यानि । चक्षूंषि । ते । भव ।
त्वचे । रूपाय । सम्ऽदृशे । प्रतीचीनाय । ते । नमः ॥ ५ ॥

हे पशुपते **पशूनां पालयितर्देव** ते **त्वदीयाय** मुखाय **आस्याय नमोऽस्तु । हे** भव **एतत्संज्ञक देव** ते **तव** यानि चक्षूंषि **दर्शनसाधनानि इन्द्रियाणि सन्ति तेभ्यो नमोऽस्तु । तथा** त्वचे **त्वच्छरीरसंबन्धिने चर्मणे** रूपाय **नीलपीतादिवर्णाय** संदृशे **सम्यग्दर्शनाय । यद्वा सम्यग् अर्थान् पश्यतीति संदृक् संद्रष्टा तद्रूपाय ।** प्रतीचीनाय **प्रत्यगात्मरूपिणे** ते **तुभ्यं** नमः **अस्तु । प्रतिपूर्वाद् अञ्चतेः** 'ऋत्विग्' ( पा ३,२,५९ ) **इत्यादिना क्विन् ।** 'अनिदिताम्°' ( पा ६,४,२४ ) **इति नलोपः ।** 'विभाषाञ्चेरदिक्स्त्रियाम्' ( पा ५,४,८ ) **इति स्वार्थिकः खप्रत्ययः ।**

अङ्गेभ्यस्त उदराय जिह्वाया आस्याय ते । दद्भ्यो गन्धाय ते नमः ॥६॥

अङ्गेभ्यः । ते । उदराय । जिह्वायै । आस्याय[1] । ते । दत्ऽभ्यः । गन्धाय । ते । नमः ॥

हे **पशुपते** ते **तव संम्बन्धिभ्यः** अङ्गेभ्यः **हस्तपादादिभ्यो नमोऽस्तु । सामान्योक्तमेव प्राधान्यख्यापनाय विशेषतो निर्दिशति—**ते **तव लीलाविग्रहधारिणः संबन्धिने** उदराय जिह्वायै **रसनायै** आस्याय **आस्याख्यकुहराय** दद्भ्यः **दन्तेभ्यः** गन्धाय **गन्धग्राहकेन्द्रियाय घ्राणाय** ते **त्वत्संबन्धिने** नमः । **दद्भ्यः इति ।** 'पद्दन्' ( पा ६,१,६३ ) **इत्यादिना दन्तशब्दस्य दद्भावः ।**

अस्त्रा नीलशिखण्डेन सहस्राक्षेण वाजिना ।
रुद्रेणार्धकघातिना[2] तेन मा समरामहि[3] ॥ ७ ॥

अस्त्रा । नीलऽशिखण्डेन । सहस्रऽअक्षेण । वाजिना ।
रुद्रेण । अर्धकऽघातिना । तेन । मा[4] । सम् । अरामहि ॥ ७ ॥

अस्त्रा **क्षेप्त्रा** नीलशिखण्डेन **नीलवर्णकेशसंनिवेशविशेषयुक्तेन** सहस्राक्षेण **सहस्रसंख्याकचक्षुरिन्द्रिययुक्तेन** वाजिना **वेगवता** अर्धकघातिना **सेनाया अर्धं हन्तुं शीलम् अस्य ।** 'सुप्यजातौ णिनिस्ताच्छील्ये' ( पा ३,२,७८ ) **इति हन्तेर्णिनिप्रत्ययः ।** 'हनस्तोऽचिण्णलोः' ( पा ७,३,३२ ) **इति तत्वम् ।** 'हो हन्तेर्ञ्णिन्नेषु' ( पा ७,३,५४ ) **इति घत्वम् । एवंगुणविशिष्टेन** तेन **प्रसिद्धेन** रुद्रेण मा सम् अरामहि **मा संगच्छामहै । आर्ता मा भूमेत्यर्थः । ऋ गतौ । अस्मात् माङि लुङि** 'समो गम्यृच्छि°' ( पा १,३,२९ ) **इति आत्मनेपदम् ।** 'सर्तिशास्त्यर्तिभ्यश्च' ( पा ३,१,५६ ) **इति च्लेः अङ् आदेशः ।**

---

१. आस्यांय P. २. °णाध्वगघा° पै १६,१०४,७. ३. °मसि पै. ४. मा P;

स नो भवः परि वृणक्तु विश्वत आप इवाग्निः परि वृणक्तु नो भवः।
मा नोऽभि[1] मांस्त[2] नमो अस्त्वस्मै ॥ ८ ॥

सः। नः। भवः। परि। वृणक्तु। विश्वतः। आपःऽइव। अग्निः। परि। वृणक्तु। नः। भवः।
मा। नः। अभि। मांस्त। नमः। अस्तु। अस्मै ॥ ८ ॥

सः उदीरितप्रभावो भवः नः अस्मान् विश्वतः विश्वस्मात् सर्वस्मात् उपद्रवजातात् परि वृणक्तु परितो वर्जयतु। अयमेवार्थो दृष्टान्तेन दृढीक्रियते आप इवाग्निरिति। यथा दहन्नग्निः आपः। शसि छान्दसी वृद्धिः। अपः उदकानि परिवर्जयति परित्यजति एवं नः अस्मान् भवः परि वृणक्तु परित्यजतु। नः अस्मान् माभि मंस्त[3] मा अभिमन्यताम्। मा बाधताम् इत्यर्थः। अभिपूर्वो मन्यतिर्हिंसने वर्तते। अस्मान्माङि लुङि 'एकाच उपदेशेनुदात्तात्' (पा ७,२.१०) इति सिच इट्प्रतिषेधः। 'न माङ्योगे' (पा ६,४,६४) इति अडभावः। अस्मै भवाय नमोस्तु नमस्कारो भवतु।

चतुर्नमो अष्टकृत्वो भवाय[4]दश कृत्वः[4] पशुपते नमस्ते।
तवेमे पञ्च पशवो विभक्ता गावो अश्वाः पुरुषा अजावयः ॥ ९ ॥

चतुः। नमः। अष्टऽकृत्वः[5]। भवाय। दश। कृत्वः। पशुपते। नमः। ते।
तव। इमे। पञ्च। पशवः। विऽभक्ताः। गावः। अश्वाः। पुरुषाः। अजऽअवयः[6] ॥ ९ ॥

अष्टकृत्वो भवायेति विशेषणात् चतुर्नम इत्यत्र शर्वायेति अर्थात् संबध्यते। चतुः चतुर्वारं शर्वाय नमः अस्तु। 'द्वित्रिचतुर्भ्यः सुच्' (पा ५,४,१८) इति क्रियाभ्यावृत्तिगणने सुच्प्रत्ययः। तथा भवाय देवाय अष्टकृत्वः अष्टवारं नमोस्तु। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (पा ५.४,१७) इति कृत्वसुच्प्रत्ययः[7]। हे पशुपते ते तुभ्यं दशकृत्वः[3] दशवारं नमोस्तु। कस्माद् एवं प्रार्थ्यस इत्युच्यते— इमे वक्ष्यमाणा विभक्ताः जातितो भिन्नाः हे पशुपते तव स्वभूताः गावः गोत्वजातीयाः सास्नादिमद्व्यक्तयः अश्वाः अश्वजात्याक्रान्ता एकखुराः पशवः पुरुषाः मनुष्यजातीयाः अजाश्च अवयश्च अजावयः। अजत्वावित्वे द्वे जाती विभिन्नव्यक्तिके प्रसिद्धे। यस्मात् इमे पञ्च पञ्चधा भिन्नाः पशवस्तव स्वभूतास्तस्मात् तान् रक्षेति प्रार्थ्यस इत्यर्थः।

तव चतस्रः प्रदिशस्तव द्यौस्तव पृथिवी तवेदमुग्रोर्वऽन्तरिक्षम्।

---

१. नो अभि पै १६,१०४,८.　२. माँस्त B; मंस्त S.　३. वैतु. संपा.　४. दशकृत्वः सा., पै १६,१०४,९; वैप १,११५९ g द्र.　५. कृत्वा P².　६. पृ ९६५, टि ३ द्र. ७. स्वरो न सिध्यति.

तवेदं सर्वमात्मन्वद् 'यत् प्राणत् पृथिवीमनु'[1] ॥ १० ॥

तव । चतस्रः । प्रऽदिशः । तव । द्यौः । तव । पृथिवी । तव । इदम् । उग्र । उरु । अन्तरिक्षम् । तव । इदम् । सर्वम् । आत्मन्ऽवत् । यत् । प्राणत् । पृथिवीम् । अनु ॥ १० ॥

हे उग्र उद्गूर्णबल रुद्र चतस्रः चतुःसंख्याकाः प्रदिशः प्रधानभूताः प्राच्याद्या महादिशः तव स्वभूताः । तथा द्यौः स्वर्गलोकोपि तव वशे वर्तते । पृथिवी भूलोकश्च तव स्वभूता । इदं परिदृश्यमानम् उरु विस्तीर्णम् अन्तरिक्षं च तवाधीनम् । इत्थं दिग्वलयं लोकत्रयं च व्याप्य अवस्थितस्य तव इदं परिदृश्यमानं सर्वम् आत्मन्वत् आत्मना भोक्तृरूपेण अधिष्ठितं शरीरजातं स्वभूतम् । आत्मा अस्यास्तीति आत्मन्वत् । मतुपि पदसंज्ञायां नलोपे 'मादुपधायाः°' ( पा ८,२,९ ) इति वत्वम् । 'अनो नुट्' ( पा ८,२,१६ ) इति नुडागमः । तथा पृथिवीम् अनु । लक्षणे अनोः कर्मप्रवचनीयत्वम् । पृथिवीं लक्षीकृत्य । पृथिव्याम् इत्यर्थः । यत् प्राणत् प्राणनव्यापारं कुर्वद् वर्तते तत् सर्वं तव । प्रशासने वर्तते इत्यर्थः । तस्मात् सर्वेषाम् अनुग्रहाय त्वमेव नमस्कार्यो भवसीति भावः ।

इति पञ्चमं सूक्तम् ।

'उरुः कोशः' इत्यस्य सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।

उरुः कोशो वसुधानस्तवायं यस्मिन्निमा विश्वा भुवनान्यन्तः ।
स नो मृड पशुपते नमस्ते परः क्रोष्टारो अभिभाः श्वानः परो यन्त्वघरुदो विकेश्यः[2] ॥ ११ ॥

उरुः । कोशः । वसुऽधानः । तव । अयम् । यस्मिन् । इमा । विश्वा । भुवनानि । अन्तः । सः । नः । मृड । पशुऽपते । नमः । ते । परः । क्रोष्टारः । अभिऽभाः । श्वानः । परः । यन्तु । अघऽरुदः । विऽकेश्यः ॥ ११ ॥

हे पशुपते पशूनां पालयितर्महादेव उरुः विस्तीर्णो वसुधानः वसूनि वासहेतुभूतानि पुण्यपापरूपाणि कर्माणि धीयन्ते अस्मिन्निति वसुधानः । दधातेः अधिकरणे ल्युट् । एवंभूतः कोशः अण्डकटाहात्मकः तवायम् । तव स्वभूतोऽयम् इत्यर्थः । कोशं विशिनष्टि— यस्मिन् अण्डकटाहात्मके महति कोशे अन्तः मध्ये इमा इमानि परिदृश्यमानानि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि

---

१. यदेजदधि भूम्याम् पै १६,१०४,१०. २. अकेश्यः पै १६,१०५,१.

वर्तन्ते । स कोशस्तव स्वभूत इति संबन्धः । स तथाविधस्त्वं नः अस्मान् मृड सुखय । ते तुभ्यं नमः अस्तु । त्वत्प्रसादात् अभिभाः अभिभवितारः क्रोष्टारः क्रोशनशीलाः सृगाला मांसभक्षकाः श्वानः च परः परस्तात् अस्मत्तो दूरदेशे यन्तु गच्छन्तु । तथा अघरुदः अघम् अमङ्गलं यथा भवति तथा रुदत्यः रोदनं कुर्वत्यः विकेश्यः विकीर्णकेशाः पिशाच्यश्च परो यन्तु परस्ताद् दूरं गच्छन्तु ।

धनुर्बिभर्षि हरितं हिरण्ययं सहस्रघ्नि[1] शतवधं शिखण्डिन्[2] ।
रुद्रस्येषुश्चरति देवहेतिस्तस्यै नमो यतमस्यां दिशी३तः[3] ॥ १२ ॥

धनुः । बिभर्षि । हरितम् । हिरण्ययम् । सहस्रऽघ्नि[4] । शतऽवधम् । शिखण्डिन् ।
रुद्रस्य । इषुः । चरति । देवऽहेतिः । तस्यै । नमः । यतमस्याम् । दिशि । इतः ॥१२॥

हे रुद्र त्वं संहृतिसमये विश्वसंहरणार्थं धनुः बिभर्षि धारयसि । डुभृञ् धारणपोषणयोः । जुहोत्यादित्वात् शपः श्लुः । 'भृञामित्' (पा ७,४,७६) इति अभ्यासस्य इत्वम् । कीदृशं तद्धनुरिति विशिनष्टि—हरितम् हरिद्वर्णं हिरण्ययम् हिरण्यविकारम् । स्वर्णमयम् इत्यर्थः । 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' (पा ६,४,१७५) इति हिरण्यशब्दात् मतुपि वर्णलोपो निपात्यते । सहस्रघ्न्यम्[5] सहस्रसंख्याकान् एकयत्नेन हन्ति हिनस्तीति सहस्रघ्न्यम्[6] । वर्णोपजनश्छान्दसः । 'स्तम्बे क च' (पा ३,२,८३) इति विहितः कप्रत्ययो बहुलवचनाद् अत्रापि द्रष्टव्यः । यद्वा सहस्रं हन्यन्ते आताड्यन्ते अनेनेति सहस्रघ्न्यम् । 'घञर्थे कविधानम्' (पावा ३,३,५८) इति करणे कप्रत्ययः । शतवधम् शतसंख्याकस्य[7] प्राणिजातस्य मारकम्[7] । यद्वा शतं सहस्रम् इति अपरिमितनाम । अपरिमितस्य विश्वस्य संहारकम् इत्यर्थः । शिखण्डि[5] मयूरपिच्छादिनिर्मिताः शिखण्डास्तद्युक्तम् । तस्मै त्वदीयाय धनुषे नमोऽस्तु । इदानीम् इषुं नमस्करोति—रुद्रस्य रोदयितुर्देवस्य इषुः बाणः चरति सर्वत्र अप्रतिहतगतिर्वर्तते । देवहेतिः देवस्य संबन्धिनी हननसाधनभूता शक्तिरेव सेत्यर्थः । तस्यै इष्वै नमः अस्तु नमस्कारो भवतु । इतः अस्मात् अस्मदीयात् स्थानाद् यतमस्याम् यस्यां दिशि वर्तते तस्यां दिशि अवस्थितायै तस्यै नमोऽस्त्विति संबन्धः ।

यो३भियातो[8] निलयते त्वां रुद्र[9] निचिकीर्षति ।
पश्चादनुप्रयुङ्क्षे तं विद्धस्य पदनीरिव ॥ १३ ॥

---

१. सहस्रघ्निं Bh,C,R,Km; सहस्रघ्न्यं V,K,P3,M,W, सा. २. शिखण्डिनम् B, सात. ३. दिशी१तः K. ४. सहस्रऽघ्निं Cp. ५. वैतु. मंपा. ६. सहस्रघ्नं S'. ७. एवं स्वरो न सिध्यति. ८. यो१भि° K,D,Sm,Cs. ९. उग्र पै १६,१०५,३.

यः । अभिऽयातः । निऽलयते । त्वाम् । रुद्र । निऽचिकीर्षति ।
पश्चात् । अनुऽप्रयुङ्क्षे । तम् । विद्धस्य । पदनीःऽइव ॥ १३ ॥

हे रुद्र यः पुरुषस्त्वया अभियातः अभिगतो निलयते पुरतः स्थातुम् अशक्तः पलायते । यद्वा तत्रैव निलीनो भवति । न च केवलं निलीनो भवति प्रत्युत त्वां निचिकीर्षति निकर्तुं हिंसितुम् इच्छति । निपूर्वः करोतिर्हिंसने वर्तते । कृञ् हिंसायाम् इति प्रकृत्यन्तरं वा । हे देव तम् अपकृतवन्तं जनं पश्चात् अनन्तरमेव त्वम् अनुप्रयुङ्क्षे तत्कृतस्य अपकारस्य अनुप्रयोगं करोषि । यथाऽपराधं दण्डयसीत्यर्थः । तत्र दृष्टान्तः — विद्धस्य शस्त्रहतस्य पुरुषस्य पदनीरिव तदीयानि पदानि भूमौ निक्षिप्तानि नयन्[1] । यत्र शत्रुर्निवसति तावत्पर्यन्तं गमयन् पुरुषः निलीनं शत्रुम् उपलभ्य प्रतिविध्यति तद्वद् इत्यर्थः ।

भवारुद्रौ सयुजा संविदानावुभावुग्रौ चरतो वीर्याय ।
ताभ्यां नमो यतमस्यां दिशीतः[2] ॥ १४ ॥

भवारुद्रौ । सऽयुजा । सम्ऽविदानौ । उभौ । उग्रौ । चरतः । वीर्याय ।
ताभ्याम् । नमः । यतमस्याम् । दिशि[3] । इतः ॥ १४ ॥

भवश्च रुद्रश्च भवारुद्रौ । 'देवताद्वन्द्वे च' ( पा ६,३,२६ ) इति पूर्वपदस्य आनङ् आदेशः । सयुजा सयुजौ समानं युञ्जानौ मित्रभूतौ संविदानौ समानं जानानौ ऐकमत्यं गतावित्यर्थः । विद ज्ञाने । अस्मात् संपूर्वात् 'समो गमादिषु विदिप्रच्छि°' ( पावा १,३,२९ ) इति आत्मनेपदम् । तौ उभौ उग्रौ उद्गूर्णबलौ परैरप्रधृष्यौ सन्तौ वीर्याय । 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थी । वीर्यम् वीरकर्म चरतः अनुतिष्ठतः। यद्वा उग्रौ दुष्प्रधर्षौ चरतः सर्वत्र वर्तेते । किमर्थम् । वीर्याय तादर्थ्ये चतुर्थी । स्ववीर्यप्रकटनार्थम् । ताभ्यां भवारुद्राभ्यां नमः अस्तु । दूरस्थयोरेव तयोर्नमस्कारः कर्तव्यः न संनिधानम् अपेक्षणीयम् । तस्यार्तिकरत्वात्[4] इत्यभिप्रेत्याह — यतमस्याम् इति । इतः अस्मात् अस्मदावासस्थानाद् यतमस्यां दिशि यस्यां कस्यांचिद् दिशि तौ वर्तेते तत्रस्थयोरेव तयोर्नमस्कारः । नमस्कारार्थमपि संनिहितौ मा भूताम् इत्यर्थः ।

नमस्तेऽस्त्वायते[5] नमो अस्तु परायते ।
नमस्ते रुद्र[6] तिष्ठत आसीनायोत ते नमः ॥ १५ ॥

---

१. नयत् S'. २. दिशी१तः V,K. ३. दिशि P. ४. तस्याति° S'.
५. °ते अस्त्वा° A,B^h,C,K^m,R. ६. प्राण पै १६,१०५,५.

नमः । ते । अस्तु । आऽयते । नमः । अस्तु । पराऽयते ।
नमः । ते । रुद्र । तिष्ठते । आसीनाय । उत । ते । नमः ॥ १५ ॥

हे रुद्र आयते **अस्मदाभिमुख्येन गच्छते** ते **तुभ्यं** नमोऽस्तु। **तथा** परायते **पराङ्मुखं गच्छते तुभ्यं** नमोऽस्तु । **आङ्पूर्वात्परापूर्वाच्च**[1] **इण् गतौ इत्यस्मात् लटः शत्रादेशः** । 'इणो यण्' ( पा ६,४,८१ ) **इति यणादेशः** । 'शतुरनुमः०' ( पा ६,१,१७३ ) **इति विभक्तेरुदात्तत्वम्। आगमनं परागमनं च विहाय यत्र क्वापि** तिष्ठते ते **तुभ्यं** नमः **अस्तु** । उत **अपि च** आसीनाय **स्वस्थाने उपविष्टाय** ते **तुभ्यं** नमः ।

**नमः सायं नमः प्रातर्नमो रात्र्या नमो दिवा ।**
**भवाय च शर्वाय चोभाभ्यामकरं नमः ॥ १६ ॥**

नमः । सायम् । नमः । प्रातः । नमः । रात्र्या । नमः । दिवा ।
भवाय । च । शर्वाय । च । उभाभ्याम् । अकरम् । नमः ॥ १६ ॥

हे **रुद्र** सायम् **सायंकाले तुभ्यं** नमः **अस्तु** प्रातः **प्रातःकाले प्रभातसमये च तुभ्यं** नमः **अस्तु । तथा** रात्र्या **रात्रिसमये तुभ्यं** नमः **अस्तु** दिवा **दिवससमये**[2] **अपि तुभ्यं** नम **अस्तु। एतेन नमस्कारस्य सार्वकालिकत्वम् उक्तम्** । 'भवाशर्वौ मृडतम्' (१) **इति यौ देवौ प्राक् सह निर्दिष्टौ तत्र** भवाय च **नमः** शर्वाय च **नमः**। उभाभ्यां **परस्परानुरागेण संयुक्ताभ्यां च** नमः अकरम् **अहं नमस्करोमि। करोतेश्छान्दसो लुङ्।** 'कृमृदृरुहिभ्यश्छन्दसि' ( पा ३,१,५९ ) **इति च्लेः अङ् आदेशः** । 'ऋदृशोऽङि गुणः' ( पा ७,४,१६ ) **इति गुणः** ।

**सहस्राक्षमतिपश्यं पुरस्ताद् रुद्रमस्यन्तं बहुधा विपश्चितम् ।**
**मोपाराम जिह्वयेयमानम् ॥ १७ ॥**

सहस्रऽअक्षम् । अतिऽपश्यम् । पुरस्तात् । रुद्रम् । अस्यन्तम् । बहुऽधा । विपःऽचितम् ।
मा । उप । अराम । जिह्वया । ईयमानम् ॥ १७ ॥

सहस्राक्षम् **सहस्रसंख्याकैः अक्षिभिर्युक्तं** पुरस्तात् **पुरोभागे** अतिपश्यम् **अतिशयेन अतिक्रम्य वा पश्यतीति अतिपश्यः। दृशिर् प्रेक्षणे इत्यस्मात्** 'पाघ्राध्माधेट्दृशः शः' ( पा ३,१,१३७ ) **इति शप्रत्ययः** । 'पाघ्राध्मास्था' ( पा ७,३,७८ ) **इत्यादिना पश्यादेशः। यद्वा पुरस्तात् इति उत्तरत्र संबध्यते । पुरस्तात् पूर्वस्यां**

---

१. °त्परापूर्वा° नास्ति S'.	२. नास्ति S'.

दिशि बहुधा बहुप्रकारम् अस्यन्तम् शरजालं क्षिपन्तं विपश्चितम् मेधाविनं सूक्ष्मदर्शिनं जिह्वया ईयमानम् जिह्वाग्रेण कृत्स्नं जगद् व्याप्नुवन्तम् । भक्षणार्थं लिहन्तम् इत्यर्थः । एवंभूतं रुद्रं मा उपाराम मा उपगच्छाम । अर्तेर्माङि लुङि 'सर्तिशास्त्यर्तिभ्यश्च' ( पा ३,१,५६ ) इति च्लेः अङ् आदेशः ।

श्यावाश्वं[1] कृष्णमसितं मृणन्तं भीमं रथं केशिनः पादयन्तम्[2] ।
पूर्वे प्रतीमो नमो अस्त्वस्मै ॥ १८ ॥

श्यावऽअश्वम् । कृष्णम् । असितम् । मृणन्तम् । भीमम् । रथम् । केशिनः । पादयन्तम् । पूर्वे । प्रति । इमः । नमः । अस्तु । अस्मै ॥ १८ ॥

श्यावाश्वम् । श्यावाः कपिशवर्णा अश्वा यस्य स तथोक्तः । तम् कृष्णम् कृष्णवर्णम् असितम् सितेतरपरिच्छदम् मृणन्तम् हिंसन्तम् । मृ हिंसायाम् । प्वादित्वात् ह्रस्वः । भीमम् । बिभेति अस्माद् इति भीमो भयंकरः । 'भीमादयोऽपादाने' ( पा ३,४,७५ ) इत्यपादाने 'भियः षुग्वा' ( पाउ १,१४८ ) इति मक्प्रत्ययः । एतत्संज्ञकं रुद्रं केशिनः । केशी नाम असुरः । तस्य रथं पादयन्तम् भङ्क्त्वा भूमौ क्षिपन्तम् एवंभूतं देवं *[पूर्वे] अन्येभ्यः स्तोतृभ्यः प्रथमभाविनः सन्तो वयं प्रतीमः जानीमः । रक्षकत्वेन अवगच्छाम इत्यर्थः । अस्मै रुद्राय नमोऽस्तु ।

मा नोऽभि स्रा मत्यं[3] देवहेतिं[4] मा नः क्रुधः पशुपते नमस्ते ।
अन्यत्रास्मद् दिव्यां शाखां वि धूनु ॥ १९ ॥

मा । नः । अभि । स्राः । मत्यम्[5] । देवऽहेतिम् । मा । नः । क्रुधः । पशुऽपते । नमः । ते । अन्यत्र । अस्मत् । दिव्याम् । शाखाम् । वि । धूनु ॥ १९ ॥

हे रुद्र देवहेतिम् देवसंबन्धि आयुधं वज्रात्मकम् आत्मीयां इषुं वा नः अस्माकं मर्त्यम्[6] मरणधर्माणं जनम् अभि अभिलक्ष्य मा स्राः मा विसृज । सृजतेः 'माङि लुङ्' ( पा ३,३,१७५ ) । मध्यमैकवचने च्लेः सिच् । 'सृजिदृशोर्झल्यमकिति' ( पा ६,१,५८ ) इति अमागमः । वृद्धौ 'झलो झलि' ( पा ८,२,२६ ) इति सिचो लोपः । 'बहुलं छन्दसि' (पा ७,३,९७ ) इति ईडभावः । 'हल्ङ्याब्भ्यः०' ( पा ६,१,६८ ) इति सिलोपः । छान्दसो जकारलोपः । हे पशुपते नः अस्मभ्यं मा क्रुधः क्रुद्धो मा भूः । क्रुध क्रोधे । माङि लुङि पुषादित्वात् च्लेः अङादेशः । ते तुभ्यं नमः

---

१. श्यावास्यं पै १६,१०५,८[मूको.]. २. पारयन्तम् पै [मूको.]. ३. मर्त्यं B, सा. ४. °हुतं > °हितं B. ५. मृत्यम् P; मर्त्यम् > मत्यम् Cp. ६. वैतु. मपा.

अस्तु । देवहेतिविसर्जनस्य अवकाशम् आह — अन्यत्र इति । अस्मत् अस्मत्तः अन्यत्र देशे दिव्याम् दिवि भवां शाखाम् शाखावत् प्रसृतां देवहेतिं वि धूनु विसृज । धूञ् कम्पने । स्वादित्वात् श्नुप्रत्ययः । 'उतश्च प्रत्ययात्°' ( पा ६,४,१०६ ) इति हेर्लुक् ।

**मा नो॑ हिंसी॒रधि॑[1] नो ब्रूहि॒ परि॑ णो वृङ्ग्धि॒ मा क्रु॑धः । मा त्वया॒ सम॑रामहि[2] ॥२०॥**

मा । नः॒ । हिं॒सीः॒ । अधि॑ । नः॒ । ब्रू॒हि॒ । परि॑ । नः॒ । वृ॒ङ्ग्धि॒ । मा । क्रु॒धः॒ । मा । त्वया॑ । सम् । अ॒रा॒म॒हि॒ ॥ २०॥

हे रुद्र नः अस्मान् मा हिंसीः अस्मद्विषये हिंसां मा कृथाः । नः अस्मान् अधि हि आधिक्येन कथय । अनुग्राह्यत्वेन पक्षपातवचनम् अधिवचनम् । नः अस्मान् परि वृङ्ग्धि तवायुधविषयात् परिहर । अस्मान् परिहृत्य अन्यत्र त्वद्धेतिः प्रवर्तताम् इत्यर्थः । मा क्रुधः अस्मद्विषये क्रुद्धो मा भूः । एवंभूतेन त्वया वयं मा समरामहि संगच्छामहै । उक्तार्थम् एतत् ।

इति एकादशे काण्डे प्रथमेऽनुवाके षष्ठं सूक्तम् ।

'मा नो गोषु' इति सूक्तस्य स्वस्त्ययनादिकर्मसु विनियोगः पूर्वमेव उक्तः ।

**मा नो॒ गोषु॒ पुरु॑षेषु॒ मा गृ॑धो नो अ॒जावि॑षु ।**
**अ॒न्यत्रो॑ग्र॒ वि व॑र्तय॒ पिया॑रूणां[3] प्र॒जां ज॑हि ॥ २१ ॥**

मा । नः॒ । गोषु॑ । पुरु॑षेषु । मा । गृ॒धः॒ । नः॒ । अ॒ज॒ऽअ॒वि॑षु ।
अ॒न्यत्र॑ । उ॒ग्र॒ । वि । व॒र्त॒य॒ । पिया॑रूणाम् । प्र॒ऽजाम् । ज॒हि॒ ॥ २१ ॥

हे रुद्र नः अस्माकं संबन्धिषु गोषु पुरुषेषु पुत्रभृत्यादिषु च मा गृधः हिंसितुम् अभिकाङ्क्षां मा कृथाः । तथा नः अस्माकम् अजाविषु अजेषु अविषु च मा गृधः । गृधु अभिकाङ्क्षायाम् । माङि लुङि पुषादित्वात् च्लेः अङ् आदेशः । हे उग्र उद्गूर्णबल तव हेतिम् अन्यत्र अस्मत्तः अन्यस्मिन् स्थाने पियारूणां प्रजायां वि वर्तय गमय क्षिप । तथा कृत्वा च पियारूणाम् देवहिंसकानां प्रजां जहि । जहीति । 'हन्तेर्जः' ( पा ६,४,३६ ) इति जादेशे तस्य 'असिद्धवदत्राभात्' ( पा ६,४,२२ ) इति असिद्धत्वात् 'अतो हेः' ( पा ६,४,१०५ ) इति लुगभावः ।

**यस्य॑ त॒क्मा कासि॑का हे॒तिरेक॒मश्व॑स्येव॒ वृष॑णः॒ क्रन्द॒ एति॑ ।**

---

१. हिंसी॒° > हासी॒° B.   २. °मसि पै १६,१०५,१०.   ३. पिया॑रु॒णां B.

अभिपूर्वं निर्णयते नमो अस्त्वस्मै ॥ २२ ॥

यस्य । तक्मा । कासिका । हेतिः । एकम् । अश्वस्यऽइव । वृषणः । क्रन्दः । एति ।
अभिऽपूर्वम् । निःऽनयते । नमः । अस्तु । अस्मै ॥ २२ ॥

तक्मा **कृच्छ्रेण जीवनप्रापिका । तकि कृच्छ्रजीवने । अस्माद्** 'अन्येभ्योऽपि दृश्यन्ते' ( पा ३,२,७५ ) **इति मनिन्।** कासिका। **कासृ शब्दकुत्सायाम् । कुत्सित-शब्दकारिणी आर्तस्वरकरी ज्वरादिपीडा** यस्य **रुद्रस्य** हेतिः **हननसाधनम् आयुधम्** एकम् **अपकारिणं पुरुषं** वृषणः **सेचनसमर्थस्य** अश्वस्य क्रन्दः **हेषाशब्द** इव एति **प्राप्नोति । सा हेतिस्तत्र** अभिपूर्वम् **पूर्वंपूर्वम् अभिलक्ष्य तत्र योयः प्रथम-भावी तंतं** निर्णयते **निःशेषेण गमयति नाशं प्रापयति**[1] । अस्मै **ज्वराद्युपद्रवकारिणे रुद्राय** नमोऽस्तु ।

योऽन्तरिक्षे[2] तिष्ठति विष्टभितोऽयज्वनः प्रमृणन् देवपीयून् ।
तस्मै नमो दशभिः शक्वरीभिः ॥ २३ ॥

यः । अन्तरिक्षे । तिष्ठति । विऽस्तभितः । अयज्वनः । प्रऽमृणन् । देवऽपीयून् ।
तस्मै । नमः । दशऽभिः । शक्वरीभिः ॥ २३ ॥

यो **रुद्रः** अन्तरिक्षे **आकाशे निराधारप्रदेशे** विष्टभितः **विशेषेण स्तभितः निरुद्धगतिः** तिष्ठति । **किं कुर्वन् ।** अयज्वनः **दर्शपूर्णमासादियागेन इष्टवन्तो जना यज्वानः तद्विपरीता अयज्वानः तान्** देवपीयून् **देवानां हिंसकान् जनान्** प्रमृणन् **प्रकर्षेण हिंसन्** तस्मै **रुद्राय** दशभिः शक्वरीभिः । **शक्वर्य इति अङ्गुलिनाम । कर्मसु शक्ताभिः[3] अङ्गुलिभिः** नमः **अस्तु । अञ्जलिबन्धनेन प्रणामं कुर्म इत्यर्थः ।**

तुभ्यमारण्याः पशवो मृगा वने हिता हंसाः सुपर्णाः शकुना वयांसि ।
तव यक्षं पशुपते अप्स्वन्तस्तुभ्यं[4] क्षरन्ति दिव्या आपो वृधे॥ २४ ॥

तुभ्यम् । आरण्याः । पशवः । मृगाः । वने । हिताः । हंसाः । सुऽपर्णाः । शकुनाः । वयांसि ।
तव । यक्षम् । पशुऽपते । अप्ऽसु । अन्तः । तुभ्यम् । क्षरन्ति । दिव्याः । आपः । वृधे ॥२४॥

**हे** पशुपते **पशूनां पालयितर्महादेव** तुभ्यं **त्वदर्थं** आरण्याः **अरण्ये भवाः** पशवः । **तानेव यथेच्छं स्वीकुरु । ग्राम्यान् पशून् मा बाधिष्ठा इत्यर्थः । आरण्यानेव**

---

१. एवं स्वरो न सिध्यति तस्मात् शत्रन्तं न्याय्यम्. २. योऽन्त° B,V,K; कम्पाभावः Bh,D,Sm,Cs. ३. सक्ताभिः S'. ४. अप्स्वन्त° A,B,C,E,R; कम्पाभावः Bh.

पशून् निर्दिशति—वने अरण्ये हिताः विधात्रा स्थापिता मृगाः हरिणशार्दूलसिंहाद्याः। हंसाः एतत्संज्ञाः पक्षिणः। सुपर्णाः शोभनपतनाः श्येनाः। शकुनाः अन्ये च शकुनयो वनचराः पक्षिणः। एवमात्मकानि वयांसि पक्षिजातानि हे रुद्र त्वदर्थं भागत्वेन कल्पितानि। तव त्वदीयं यक्षम् पूज्यं स्वरूपम् अप्सु अन्तः उदकेषु मध्ये वर्तते अतः तुभ्यं त्वदर्थं मृधे[1] उन्दनाय। शृधु मृधु उन्दने। अस्मात् संपदादिलक्षणो भावे क्विप्। अभिषेकाय दिव्याः दिवि भवा आपः क्षरन्ति प्रवहन्ति। अस्मदुपभोग्यम् उदकमपि मा स्पृक्ष इत्यर्थः।

शिंशुमारा अजगराः[2] पुरीकया जषा[3] मत्स्या रजसा येभ्यो अस्यसि।
न ते दूरं न परिष्ठास्ति ते भव सद्यः सर्वान्[4] परि
पश्यसि भूमिं पूर्वस्माद्धंस्युत्तरस्मिन्[5] समुद्रे ॥ २५ ॥

शिंशुमाराः। अजगराः। पुरीकयाः[6]। जषाः[7]। मत्स्याः। रजसाः। येभ्यः। अस्यसि। न। ते। दूरम्। न। परिऽस्था। अस्ति[8]। ते। भव। सद्यः। सर्वान्[9]। परि। पश्यसि। भूमिम्। पूर्वस्मात्। हंसि। उत्तरस्मिन्। समुद्रे ॥ २५ ॥

आरण्यपशुवज्जलचरप्राणिनामपि रुद्रभागत्वम् उच्यते—शिंशुमाराः नक्रविशेषाः। अजगराः सर्पविशेषाः। पुलीकयाद्या[1] जलचराः प्राणिविशेषाः। हे रुद्र त्वदर्थम् एते सर्वे जलचराः प्राणिन इत्यर्थः। रजसा[10] आत्मीयेन तेजसा येभ्यः जलचरप्राणिभ्यः अस्यसि आयुधं क्षिपसि। हे भव ते तव सर्वगतस्य दूरम् विप्रकृष्टं न नैव अस्ति। ते परिष्ठा परिहृत्य स्थिता प्रजापि न विद्यते। यतस्त्वं सर्वाम्[1] कृत्स्नां भूमिं सद्यः क्षणादेव परि पश्यसि परितः अवलोकयसि। तथा पूर्वस्मात् पुरोवर्तिनः समुद्रात् उत्तरस्मिन् उत्तरदिग्वर्तिनि समुद्रे जलधौ हंसि क्षणादेव गच्छसि। हन्तिरत्र गत्यर्थः। अतः सर्वगतस्य तव विप्रकृष्टं नैवास्ति तथा च शिंशुमारादयस्तव नित्यसंनिहिता इत्यर्थः।

मा नो रुद्र तक्मना मा विषेण मा नः सं स्रा दिव्येनाग्निना।
अन्यत्रास्मद् विद्युतं पातयैताम्[11] ॥ २६ ॥

मा। नः। रुद्र। तक्मना। मा। विषेण। मा। नः। सम्। स्राः। दिव्येन। अग्निना। अन्यत्र। अस्मत्। विऽद्युतम्। पातय। एताम् ॥ २६ ॥

---

१. वैतु. मंपा. २. °गरा B,K,K$^m$,B$^h$. ३. झषा V; जखा B$^h$,C,E,P$^3$,M,W; जघा I,R. ४. सर्वां A,S$^m$,B$^2$, सा. ५. °स्माद्वंस्यु° B. ६. पुलीकयाः Cp. ७. जखाः Bp$^2$; जखाः > जषाः P,J. ८. अस्ति P,J,Cp. ९. सर्वाम् P,P$^2$,D$^2$,(Kp?). १०. वैतु. पपा. स्वरश्च. ११. पातयैतम् B.

हे रुद्र तक्मना कृच्छ्रजीवनकारिणा ज्वरादिरोगेण त्वदीयेन आयुधेन नः अस्मान् मा सं स्राः मा संसृज । तथा विषेण स्थावरजङ्गमोद्भवेन प्राणापहारिणा मा संसृज । तथा दिव्येन दिवि भवेन अग्निना वैद्युतरूपेण तेजसा नः अस्मान् मा संसृज । अस्मत् अस्मत्तः अन्यत्र आरण्यपश्वादिषु एतां विद्युतम् त्वदायुधभूतां विद्योतमानाम् अशनिं पातय प्रक्षिप ।

भवो दिवो भव ईशे पृथिव्या भव आ पप्र उर्व१न्तरिक्षम् ।
तस्मै[1] नमो यतमस्यां दिशी३तः ॥ २७ ॥

भवः । दिवः । भवः । ईशे । पृथिव्याः । भवः । आ । पप्रे । उरु । अन्तरिक्षम् ।
तस्मै[2] । नमः । यतमस्याम् । दिशि[3] । इतः ॥ २७ ॥

भवः एतत्संज्ञो देवो दिवः द्युलोकस्य ईशे ईष्टे । द्युलोकम् ईशितव्यत्वेन अधितिष्ठतीत्यर्थः । ईश ऐश्वर्ये । 'लोपस्त आत्मनेपदेषु' ( पा ७,१,४१ ) इति तलोपः । 'अधीगर्थदयेशाम्'' ( पा २,३,५२ ) इति कर्मणि षष्ठी । तथा स एव भवः पृथिव्याः भूलोकस्यापि ईशे ईष्टे । तथा उरु विस्तीर्णम् अन्तरिक्षम् द्यावापृथिव्योर्मध्ये वर्तमानं लोकं स एव भवः आ पप्रे स्वतेजसा आपूरयति । प्रा पूरणे । अस्मात् छान्दसो लिट् । 'आतो लोप इटि च' ( पा ६,४,६४ ) इति आल्लोपः । तस्मै त्रैलोक्यव्यापिने । अन्यत् उक्तार्थम् ।

भव राजन् यजमानाय मृड पशूनां हि पशुपतिर्बभूथ ।
यः श्रद्धाति सन्ति देवा इति चतुष्पदे द्विपदेऽस्य मृड ॥ २८ ॥

भव । राजन् । यजमानाय । मृड । पशूनाम् । हि । पशुऽपतिः । बभूथ ।
यः । श्रत्ऽदधाति । सन्ति । देवाः । इति । चतुःऽपदे । द्विऽपदे । अस्य । मृड ॥ २८ ॥

हे राजन् सर्वस्याधिपते हे भव यजमानाय त्वदर्थं यागं कुर्वते जनाय मृळ[4] सुखय । त्वं खलु पशूनां पशुपतिर्बभूथ । 'तवेमे पञ्च पशवो विभक्ताः'(९) इति प्रागुदीरितानां गवाश्वादीनां पशूनां पतिः पालयिता भवसि । पशूनां पशुपतिरिति वृत्त्यवृत्तिभ्यां बहुत्वं स्वामित्वं च प्रतिपाद्यते । 'बभूथाततन्थजगृभ्मववर्थेति निगमे' ( पा ७,२,६४ ) इति भवतेस्थलि इडभावो निपात्यते । हि यस्मात् एवं तस्मात् यजमानाय मृडेति संबन्धः । यः आस्तिकः पुरुषो देवाः इन्द्रादयो रक्षकाः सन्तीति श्रद्दधाति आद्रियते । विश्वसितीत्यर्थः । अस्य श्रद्दधानस्य पुरुषस्य संबन्धिने चतुष्पदे गवाश्वादये द्विपदे पुत्रभृत्यादिरूपाय च मृळ[4] सुखय ।

---

१. तस्यै B,Bʰ,C,D,E,K,Kᵐ,R,Sᵐ,Cs,WM.,RW. २. तस्यै P²,J,Cp.
३. दिशि P,Cp. ४. वैदु. संपा.

**मा नो॑ म॒हान्त॑मु॒त मा नो॑ अर्भ॒कं मा न॒ो वह॑न्तमु॒त[1] मा नो॑ वक्ष्य॒तः[2] ।**
**मा नो॑ हिंसीः[3] पि॒तरं॑ मा॒तरं॑ च॒ [4]स्वां त॒न्वं॑[4] रुद्र॒ मा रीरिषो नः ॥२९॥**

मा । न॒ः । म॒हान्त॑म् । उ॒त । मा । न॒ः । अ॒र्भ॒कम् । मा । न॒ः । वह॑न्तम् । उ॒त । मा । न॒ः । व॒क्ष्य॒तः ।
मा । न॒ः । हिं॒सीः । पि॒तर॑म् । मा॒तर॑म् । च॒ । स्वाम् । त॒न्व॑म् । रु॒द्र॒ । मा । रि॒रि॒षः । न॒ः ॥

हे रुद्र नः **अस्माकं संबन्धिनं** महान्तम् **प्रवयसं वृद्धं** मा हिंसीः । उत **अपिच** नः **अस्माकं** अर्भकम् **शिशुं** मा **हिंसीः** । नः **अस्माकं संबन्धिनं** वहन्तम् **भारवहनक्षमं मध्यवयस्कं पुरुषं** मा **हिंसीः** । उत **अपिच** वक्षतः[5] **कृतवहनव्यापारान् पुरुषान्** नः **अस्मदीयान्** मा **हिंसीः** । **तथा** नः **अस्मदीयं** पितरं मातरं च मा **हिंसीः** । **तथा** नः **अस्माकं** स्वाम् **स्वकीयां** तन्वम् **शरीरं** मा रीरिषः **मा हिंसीः** । **रिष रुष हिंसायाम्** । **ण्यन्तात् लुङि चङि रूपम्** । 'न माङ्योगे' ( पा ६,४,७४ ) **इति अडभावः** ।

**रु॒द्रस्यै॑लबका॒रेभ्यो॑ऽसंसूक्तगि॒लेभ्यः॑[6] ।**
**इ॒दं म॒हास्ये॑भ्य॒ः श्वभ्यो॑[7] अक॒रं नमः॑ ॥ ३० ॥**

रु॒द्रस्य॑ । ऐ॒ल॒ब॒ऽका॒रेभ्यः॑ । अ॒सं॒सू॒क्त॒ऽगि॒लेभ्यः॑ ।
इ॒दम् । म॒हा॒ऽआ॒स्येभ्यः । श्वऽभ्यः॑ । अ॒क॒रम् । नमः॑ ॥ ३० ॥

**अतः परं महादेवस्य [8]परिवारा नमस्कारेण[8] प्रार्थ्यन्ते** । रुद्रस्य **महादेवस्य संबन्धिभ्यः** एलवकारेभ्यः[5] । **इल प्रेरणे । अस्माद् भावे घञ् । ततो मत्वर्थीयो वकारः । एलवानि प्रेरणयुक्तानि कर्माणि कुर्वन्तीति एलवकाराः कर्मकराः प्रमथगणाः । तेभ्यः अहं नमस्करोमि । तथा** असंसूक्तगिलेभ्यः । **सम्यक् सूक्तं शोभनं भाषितं संसूक्तम् । तद्विपरीतम् असंसूक्तम् असमीचीनम् अशोभनवचनं गृणन्ति भाषन्त इति असंसूक्तगिलाः । गॄ[9] शब्दे इत्यस्माद् औणादिक इलच्प्रत्ययष्टिलोपश्च । यद्वा तादृग् भाषणं यथा भवति तथा गिरन्ति भक्षयन्तीति असंसूक्तगिलाः । गॄ निगरणे इत्यस्माद् पचाद्यच् । गुणं बाधित्वा** 'ऋत इद्धातोः' ( पा ७,१,१०० ) **इति व्यत्ययेन इत्वम्** । 'अचि विभाषा ( पा ८,२,२१ ) **इति लत्वम् । यद्वा गल अदने इत्यस्माद् वा अच्प्रत्ययः । छान्दसम् इत्वम् । एवंभूतेभ्यो रुद्रगणेभ्यो नमस्करोमि** । महास्येभ्यः **महत् प्रभूतम् आस्यं मुखविवरम् एषाम् अस्तीति महास्याः** 'आन्महतः' (पा ६,३,४६) **इति आत्वम्** ।

---

१. उक्षन्त° ऋ १,११४,७ मा १६,१५ तै ४,५,१०,२ पै १६,१०६,९ तैआ १०,५२,१.
२. उक्षितम् ऋ. मा. तै. तैआ.; उक्षतः पै.; वक्षतः S.
३. वधीः ऋ. मा. तै. तैआ.
४. प्रियास्तन्वो ऋ. मा. तै. तैआ.
५. वैतु. मंपा.
६. °गिरेभ्यः पै १६,१०६,१०.
७. श्वेभ्यो B.
८. °वारनम° S'.
९. गॄ S'.

मृगयाविहारार्थं किरातवेषधारिणो देवस्य संबन्धिभ्यः श्वभ्यः सारमेयेभ्यः इदं नमः अकरम् करोमि । करोतेश्छान्दसो लुङ् । 'कृमृदृरुहिभ्यश्छन्दसि' (पा ३,१,५९) इति च्लेः अङ् आदेशः ।

नम॑स्ते घो॒षिणी॑भ्यो नम॑स्ते के॒शिनी॑भ्यः ।
नमो॒ नम॑स्कृताभ्यो॒ नमः॑ संभु॒ञ्ज॒तीभ्यः॑ ।
नम॑स्ते देव॒ सेना॑भ्यः स्व॒स्ति नो॒ अभ॑यं च नः[1] ॥ ३१ ॥

नमः॑ । ते॒ । घो॒षिणी॑भ्यः । नमः॑ । ते॒ । के॒शिनी॑भ्यः । नमः॑ । नमः॑ऽकृताभ्यः । नमः॑ । स॒म्ऽभु॒ञ्ज॒तीभ्यः॑ । नमः॑ । ते॒ । दे॒व॒ । सेना॑भ्यः । स्व॒स्ति । नः॒ । अभ॑यम् । च॒ । नः॒ ॥ ३१ ॥

हे रुद्र ते त्वदीयाभ्यो घोषिणीभ्यः प्रभूतघोषयुक्ताभ्यः सेनाभ्यः नमः अस्तु । तथा ते त्वदीयाभ्यः केशिनीभ्यः विपरीताकृतिकेशयुक्ताभ्यो विकीर्णकेशयुक्ताभ्यो वा सेनाभ्यो नमः अस्तु । याश्च त्वदीयाः सेना नमस्कृताः चण्डेश्वरप्रभृतयः ताभ्यश्च नमः अस्तु । संभुञ्जतीभ्यः सहभोजनं कुर्वतीभ्यः सेनाभ्यो नमः अस्तु । हे देव रुद्र ते त्वदीयाभ्यः उक्तव्यतिरिक्ताभ्यः सेनाभ्यः नमः अस्तु । हे देव त्वत्प्रसादात् नः अस्मभ्यं स्वस्ति क्षेमम् अभयं चन[2] भयराहित्यमपि भवतु । स्वस्तिशब्दयोगात् स्वस्त्ययनकर्मणि विनियोगः । भयराहित्यप्रार्थनाच्च अद्भुतशान्तावपि । इति लिङ्गानुसारेण सर्वत्र विनियोगो द्रष्टव्यः ।

इति सप्तमं सूक्तम् ।

ऋ॰ अथर्वा, दे॰ बार्हस्पत्यौदन

इति सायणाचार्यविरचिते अथर्वसंहिताभाष्ये एकादशे काण्डे प्रथमोऽनुवाकः ।

द्वितीयेऽनुवाके षट् सूक्तानि । तत्र 'तस्यौदनस्य' इत्यादिसूक्तत्रयम् अर्थसूक्तम् । तेन बृहस्पतिसवाख्ये सवयज्ञे हविरभिमर्शनसंपातदातृवाचनदानादीनि कर्माणि कुर्यात् ।

तथा अभिचारकर्मणि सवविधानेन ओदनं पक्त्वा पृषातकेन उपसिच्य अनेन अर्थसूक्तेन अभिमृश्य संपात्य अभिमन्त्र्य द्वेष्याय प्रयच्छेत् । द्वेष्यं वा अनेन अर्थसूक्तेन अभिमृशेद् हुताज्यशेषेण संपातयेद् वा ।

विपक्षे बाधपुरस्सरम् ओदनस्य प्राशितृत्वं प्राशितव्यत्वं च अग्रे वक्ष्यते । तत्र प्राशितुरोदनस्य शिरःप्रभृतीनि अङ्गानि कल्पयति —

तस्यौ॑द॒नस्य॒ बृह॒स्पति॒ः शिरो॒ ब्रह्म॒ मुख॑म् ॥ १ ॥

---

१. चन S. २. वैतु. संपा.

तस्य । ओदनस्य । बृहस्पतिः । शिरः । ब्रह्म । मुखम् ॥ १ ॥

द्यावापृथिवी[1] श्रोत्रे सूर्याचन्द्रमसावक्षिणी[2] सप्तऋषयः प्राणापानाः ॥२॥

द्यावापृथिवी इति । श्रोत्रे इति । सूर्याचन्द्रमसौ । अक्षिणी इति । सप्तऽऋषयः । प्राणापानाः ॥

तस्य प्रसिद्धस्य विराडात्मना भावनीयस्य ओदनस्य बृहस्पतिः देवः शिरः मूर्धा । तस्यापि कारणभूतं यद् ब्रह्म तद् ओदनस्य मुखम् आस्यम् [१] । द्यावापृथिवी द्यौश्च पृथिवी च द्यावापृथिव्यौ । 'दिवसश्च पृथिव्याम्' ( पा ६,३,३० ) इति द्यावादेशः । ते उभे अस्य ओदनस्य विराडात्मनः श्रोत्रे । श्रवणेन्द्रियस्य एकत्वेऽपि तद्गोलकापेक्षया द्वित्वम् । सूर्याचन्द्रमसौ सूर्यः सर्वस्य प्रेरक आदित्यः । 'राजसूयसूर्य०' ( पा ३,१,११४ ) इति निपात्यते । चन्द्रम् आह्लादकरम् अमृतं मिमीते सर्वस्य जगतो निर्मिमीत इति चन्द्रमाः । 'चन्द्रे मो डित्' ( पाउ ४,२२८ ) इति औणादिकः असिप्रत्ययः । सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ । 'देवताद्वन्द्वे च' ( पा ६,३,२६ ) इति पूर्वपदस्य आनङ् आदेशः । तौ अस्य विराडात्मन ओदनस्य अक्षिणी चक्षुषी । ये सप्तऋषयः मरीच्यत्रिप्रभृतयस्ते[3] प्राणापानाः । मुखनासिकाभ्यां बहिर्निःसरन् वायुः प्राणः । अन्तः प्रविशन् वायुः अपानः । प्राणश्च अपानश्च प्राणापानौ । ये सप्तऋषयस्तेऽस्य प्राणापानात्मना भावनीया इत्यर्थः । प्राणापानयोर्द्वित्वेऽपि उद्देश्यसंख्यापेक्षया [4]तयोर्वृत्त्यपेक्षया[4] वा बहुवचननिर्देशः [२] ।

इत्थम् ओदनस्य देवतारूपाणि अङ्गानि परिकल्प्य तत्साधनेष्वपि देवतारूपत्वं संपादयति—

चक्षुर्मुसलं काम उलूखलम् ॥ ३ ॥

चक्षुः । मुसलम् । कामः । उलूखलम् ॥ ३ ॥

दितिः शूर्पमदितिः शूर्पग्राही वातोऽपाविनक् ॥४॥

दितिः । शूर्पम्[5] । अदितिः । शूर्पऽग्राही । वातः । अप । अविनक् ॥ ४ ॥

अस्य उक्तमहिमोपेतस्य ओदनस्य उपादानभूतव्रीह्यवहननार्थं यद् मुसलं तत् चक्षुः चक्षुरिन्द्रियम् । यद् उलूखलं स कामः अभिलाषः । मुसलोलूखले हविरवहननार्थे चक्षुरादिरूपेण भावनीये इत्यर्थः [३] । दितिः असुरमाता सैव परापवनार्थं शूर्पम् । अदितिः देवमाता सा शूर्पग्राही तस्य शूर्पस्य ग्रहीत्री । या शूर्पेण

१. बृहद्रथन्तरे पै १६,५३,२. २. °सावक्ष्यौ पै. ३. °त्रि° नास्ति S'.
४. वृत्तितदपेक्षया S'. ५. सूर्पम् P.

परापुनाति सा अदित्यात्मना भावनीयेत्यर्थः। वातः वायुः अपाविनक्[1] व्रीहिभ्यस्तण्डुलानां विवेचयिता अभवत्। विवेचयितरि वायुबुद्धिः कार्येत्यर्थः। अत एव तैत्तिरीयके — 'वायुर्वो विविनक्तु' (तै १,१,५,२) इति मन्त्रवर्णः। विचिर् पृथग्भावे। अस्मात् लङि रुधादित्वात् श्नम्। 'हल्ङ्याब्भ्यः°' (पा ६,१,६८) इति तिलोपः। 'चोः कुः' (पा ८,२,३०) इति कुत्वम् [४]।

ओदनस्य विराडात्मना उपासनम् अभिधित्सुस्तत्सम्बन्धिनां कणादीनां तत्तद्वस्त्वात्मकत्वेन तस्य ओदनस्य सार्वात्म्यं प्रतिपादयति —

**अश्वाः कणा गावस्तण्डुला मशकास्तुषाः ॥ ५ ॥**

अश्वाः। कणाः[2]। गावः। तण्डुलाः। मशकाः। तुषाः॥ ५ ॥

**कब्रु फलीकरणाः शरोऽभ्रम्[3] ॥ ६ ॥**

कब्रु। फलीऽकरणाः। शरः। अभ्रम्॥ ६ ॥

**श्याममयोऽस्य मांसानि लोहितमस्य लोहितम् ॥ ७ ॥**

श्यामम्। अयः। अस्य। मांसानि। लोहितम्। अस्य। लोहितम्॥ ७ ॥

ये ओदनसंबन्धिनः कणाः ते अश्वाः। अश्वात्मना भावनीया इत्यर्थः। ओदनस्य उपादानभूता ये तण्डुलाः ते गावः। परापूताः तुषा मशकाः क्षुद्रजन्तवः [५]। ये फलीकरणाः तत् कभ्रु[4]। कं शिर एव भ्रुवौ[5] यस्य प्राणिजातस्य तत् कभ्रु। शिरसो भ्रुवोश्च भेदो न दृश्यत इत्यर्थः। तथाविधप्राण्यात्मना फलीकरणा भावनीया इत्यर्थः। यद् अभ्रम् अन्तरिक्षे संचरन् मेघस्तद् अस्य शिरः[4]। 'बृहस्पतिना शीर्ष्णा' (अ ११,४,१) इति प्राशने वक्ष्यमाणत्वात् तदुपयोगिदेवतात्मकं शिरः प्राग् उक्तम्। चेतनाचेतनात्मकस्य सर्वस्य जगतः ओदने भावनीयत्वप्रतिपादनप्रसङ्गायातम् एतच्छिर इति न पौनरुक्त्यम् [६]। श्यामम् श्यामवर्णं यद् अयः खनित्राद्युपादानं तद् अस्य विराडात्मन ओदनस्य मांसानि। यद् लोहितम् लोहितवर्णम् अयः ताम्रात्मकं लोके दृश्यते तत् सर्वम् अस्य ओदनस्य लोहितम् असृग् धातुः [७]।

पुनरन्यान्यपि वस्तूनि ओदने संपादयति —

**त्रपु भस्म हरितं वर्णः पुष्करमस्य[6] गन्धः ॥ ८ ॥**

त्रपु। भस्म। हरितम्। वर्णः। पुष्करम्। अस्य। गन्धः॥ ८ ॥

---

१. अपविनक् S'. २. कर्णः P. ३. शिरो° B,K,B²,E²,O; शरो°, शिरो° V; शीरो° > शरो° A. ४. वैद्र. मंपा. ५. भ्रुवोS '. ६. पुष्कलं पै १६,५३,१३.

खलः पात्रं स्फ्यावंसावीषे अनूक्ये ॥९॥

खलः । पात्रम् । स्फ्यौ । अंसौ । ईषे इति । अनूक्ये इति ॥ ९ ॥

आन्त्राणि जत्रवो गुदा वरत्राः ॥ १० ॥

आन्त्राणि । जत्रवः । गुदाः । वरत्राः ॥ १० ॥

ओदनपाकानन्तरभावि यद् भस्म तत् त्रपु सीसम् । तदात्मना भस्म भावनीयम् इत्यर्थः । यत् हरितम् हेम तद् अस्य ओदनस्य वर्णः । यत् पुष्करम् कमलं तद् अस्य ओदनस्य गन्धः [८] । यः खलः व्रीह्यादिधान्यस्य पलालेभ्यो विवेचनस्थानं तद् अस्य पात्रम् धारणार्थम् आवपनम् । स्फौ[६] प्रवृद्धौ धान्याधारस्य शकटस्यावयवौ[७] । तावस्य ओदनस्य अंसौ । स्फायी वृद्धौ इत्यस्माद् औणादिको डप्रत्ययः । ये शकटसंबन्धिन्यौ ईषे ते अस्य ओदनस्य अनूक्ये अंसयोर्मध्यदेहस्य च संधी । अनु उच्यते समवेयते संधीयत इति अनूक्या । कर्मणि ण्यत् । 'चजोः कु घिण्ण्यतोः' ( पा ७,३,५२ ) इति कुत्वम् [९] । लोके सर्वप्राणिसंबन्धीनि आन्त्राणि यानि सन्ति तानि जत्रवः अनडुद्ग्रीवाणां शकटयोजनार्था रज्जवः । अशितपीतान्नरससंचारणार्थाः सर्वप्राणिशरीरेषु या गुदाः ता अस्य वरत्राः ओदनसंबन्धिशकटलाङ्गलयोजनार्थाश्चर्मविकारा रज्जवः [१०] ।

इत्थं सर्वात्मकस्य ओदनस्य स्थाल्यपिधानयोर्द्यावापृथिव्यात्मकताम् आह—

इयमेव पृथिवी कुम्भी भवति राध्यमानस्यौदनस्य द्यौरपिधानम् ॥११॥

इयम् । एव । पृथिवी । कुम्भी । भवति । राध्यमानस्य । ओदनस्य । द्यौः । अपिऽधानम् ॥

इयं परिदृश्यमाना पृथिवी प्रथिता विस्तीर्णा भूमिः एव राध्यमानस्य पच्यमानस्य ओदनस्य उदीरितरीत्या सर्ववस्त्वात्मकस्य कुम्भी पाकार्था स्थाली भवति । द्यौः द्युलोकः अपिधानम् कुम्भीमुखस्य च्छादकं पात्रम् । द्यावापृथिव्योरन्तरालं सर्वम् अयम् ओदनो व्याप्य वर्तत इत्यर्थः ।

पुनरन्यदपि अवयवजातम् अस्मिन् संपादयति—

सीताः पर्शवः सिकता ऊबध्यम् ॥ १२ ॥

सीताः । पर्शवः । सिकताः । ऊबध्यम् ॥ १२ ॥

सीताः कर्षणोत्पन्ना बीजावापार्था लाङ्गलपद्धतयः । ता अस्य ओदनस्य पर्शवः पार्श्वास्थीनि । नद्यादिषु याः सिकताः ता अस्य ऊवध्यम्[४] । अर्धजीर्णतृणात्मकम् उदरगतं

---

१. वंसाविषे K,Bh; °ईषा पै १६,५३,१६. २. अनूक्यं पै. ३. स्फौ P; स्फ्यै P². ४. ईषे P; ईशे Bp². ५. युगानि पै. ६. वैठु. मंपा. ७. 'स्यवायवौ S'.

शकृत् ऊवध्यम् इति उच्यते।

पुनरन्यां संपत्तिम् आह—

ऋतं हस्तावनेजनं[1] कुल्योपसेचनम्[2] ॥ १३ ॥

ऋतम्। हस्तऽअवनेजनम्। कुल्या। उपऽसेचनम् ॥ १३ ॥

ऋतम् इति उदकनाम। लोके विद्यमानं कृत्स्नम् उदकं हस्तावनेजनम् अस्य ओदनस्य हस्तप्रक्षालनार्थम्। कुल्या अल्पा सरित्। तत्रत्यं समस्तम् उदकम् अस्य ओदनस्य उपसेचनम् मिश्रणसाधनम्।

उदीरितमहिमोपेतस्य पाकार्था कुम्भी पृथिव्येवेत्युक्तम्। तस्या अग्नौ स्थापनप्रकारम् आह—

ऋचा[3] कुम्भ्यधिहितार्त्विज्येन प्रेषिता[3] ॥ १४ ॥

ऋचा। कुम्भी। अधिऽहिता। आर्त्विज्येन। प्रऽइषिता ॥ १४ ॥

ब्रह्मणा परिगृहीता[4] साम्ना पर्यूढा ॥ १५ ॥

ब्रह्मणा। परिऽगृहीता। साम्ना। परिऽऊढा ॥ १५ ॥

उदीरितलक्षणा ओदनपाकार्था कुम्भी स्थाली ऋचा ऋग्वेदेन अधिहिता अग्नावुपरि आहिता स्थापिता। आर्त्विज्येन ऋत्विजः अध्वर्यवः। तत्संबन्धिकर्मप्रतिपादकेन यजुर्वेदेन प्रेषिता अग्निं प्रगमिता [१४]। ब्रह्मणा ब्रह्मवेदेन आथर्वणेन[5] परिगृहीता परितो धारिता। साम्ना सामवेदेन पर्यूव्हा[6] पर्यूढा अङ्गारैः परिवेष्टिता [१५]।

इत्थम् अधिश्रितायां स्थाल्याम् ओदनपाकस्य अनुगुणं साधनम् आह—

बृहदायवनं रथन्तरं दर्विः[7] ॥ १६ ॥

बृहत्। आऽयवनम्। रथम्ऽतरम्। दर्विः ॥ १६ ॥

बृहत् साम आयवनम् उदके प्रक्षिप्तानां तण्डुलानां मिश्रणसाधनं काष्ठम्। तथा रथन्तरं साम दर्विः ओदनोद्धरणसाधनम्।

ईदृग्विधस्य ओदनस्य पक्तॄन् दर्शयति—

ऋतवः पक्तार आर्तवाः समिन्धते ॥ १७ ॥

ऋतवः। पक्तारः[8]। आर्तवाः। सम्। इन्धते ॥ १७ ॥

---

१. °स्तावाभिषेचनं पै १६,५३,१७. २. कुल्योप° K, V, PW.W.; °पश्यचनम् B.
३. °धिनीयते सार्त्विज्येन प्रेष्यते पै १६,५४,८. ४. प्रतिगृह्यते पै. ५. आथर्वेण S'.
६. वैतु. मंपा. ७. दर्वी पै १६,५४,३. ८. रक्तारः P².

ऋतवः वसन्ताद्याः षट् अस्य ओदनस्य पक्तारः पचिक्रियायाः[1] कर्तारः। सर्वजगदात्मकौदनपाकस्य कालाधीनत्वात्। नान्यः पक्तुं शक्नोतीत्यर्थः। आर्तवाः ऋतुसंबन्धिनः अहोरात्राः तत्तदृतौ जायमानाः प्राणिविशेषा वा समिन्धते संदीपयन्ति। यथा ओदनः पच्यते तथा अग्निं ज्वलयन्तीत्यर्थः। ञिइन्धी दीप्तौ।

साक्षात्पक्तृत्वम् आदित्यस्यैवेति दर्शयति—

चरुं पञ्चबिलमुखं घर्मो३ऽभीन्धे[2] ॥ १८ ॥

चरुम्। पञ्चऽबिलम्। उखम्। घर्मः। अभि। इन्धे ॥ १८ ॥

चरुशब्दः ओदनवचनः। तस्य पाकार्था स्थाल्यपि चरुरित्युच्यते। तं चरुं पञ्चबिलम् 'गावो अश्वाः पुरुषा अजावयः' (अ ११,२,९) इति प्रागुदीरितपञ्चपशूत्पत्तिहेतुत्वेन पञ्चधाविभिन्नमुखम्। यद्वा अन्तः पञ्चधा गृहकैः[3] प्रविभक्तावकाशश्चरुः पञ्चबिलः। यद् आह आपस्तम्बः—'पञ्चबिलस्य चरोर्विज्ञायते आज्य आग्नेयः पूर्वस्मिन् बिले। दधन्यैन्द्रो दक्षिणे। श्वृते[4] प्रतिदुहि नीतमिश्रे वा वैश्वदेवः पश्चिमे। अप्सु मैत्रावरुण उत्तरे। पयसि बार्हस्पत्यो मध्यमे' (आपश्रौ २०,२५,२) इति। एवंभूतम् उखम्। चरुशब्दापेक्षया पुंलिङ्गता। उखां स्थालीं घर्मः प्रवर्ग्यात्मकस्तीक्ष्ण आदित्यः अभीन्धे अभितपति।

अस्यौदनस्य सर्वलोकप्राप्तिसाधनताम् आह—

ओदनेन यज्ञवचः सर्वे लोकाः समाप्याः ॥ १९ ॥

ओदनेन। यज्ञऽवचः[5]। सर्वे। लोकाः। सम्ऽआप्याः ॥ १९ ॥

इत्थं महाप्रभावेण पक्वेन ओदनेन यज्ञवचः यज्ञैः अग्निष्टोमादिभिः प्राप्तव्यत्वेन उच्यमानाः। वचेः कर्मणि विच् [?][6]। सर्वे लोकाः भूम्यन्तरिक्षस्वर्गाद्याः समाप्याः सम्यग् आप्तुम् अर्हाः। सर्वलोकावाप्तिः अस्यौदनस्य फलम् इत्यर्थः।

पुनरपि अस्य महिमानम् आह—

यस्मिन्त्समुद्रो[7] द्यौर्भूमिस्त्रयोऽवरपरं श्रिताः ॥ २० ॥

यस्मिन्। समुद्रः। द्यौः। भूमिः। त्रयः। अवरऽपरम्। श्रिताः ॥ २० ॥

यस्मिन् ओदने समुद्रः उदधिः द्यौः आकाशः द्युलोको वा भूमिः पृथिवी एते त्रयः अवरपरं श्रिताः। एकः अवरः अधस्ताद् भवति अन्यः परस्ताद् यथा भवति तत् अवरपरम्। उत्तराधरभावेन स्थिता इत्यर्थः।

---

१. क्रियायां S'. २. °भीयंधे A,B. ३. ग्रहकैः S'. ४. श्वणे S'.
५. यज्ञऽवचः P. ६. तु. वैप १,३५५३ f. ७. अस्मिन् समु° पै १६,५४,१३.

सर्वजगत्कल्पनास्पदत्वलक्षणं माहात्म्यम् अस्य दर्शयति—

यस्य देवा अकल्पन्तोच्छिष्टे षडशीतयः ॥ २१ ॥

यस्य । देवाः । अकल्पन्त । उत्ऽशिष्टे । षट् । अशीतयः ॥ २१ ॥

यस्य **ओदनस्य** उच्छिष्टे **यागावशिष्टे अंशे** षडशीतयः **षड्गुणिताशीतिसंख्याका** देवा अकल्पन्त **समर्था वीर्यवन्तः अभवन् । अथवा क्लृपिरन्तर्णीतण्यर्थः । सर्वं जगद् अकल्पयन् । तथा च अग्रे समाम्नास्यते**—'उच्छिष्टे नाम रूपं चोच्छिष्टे लोक आहितः' **( अ ११,९,१ ) इत्यादिना । तेन ओदनेन सर्वे लोकाः समाप्या इति संबन्धः ।**

**उक्तं माहात्म्यं गुरुमुखात् ज्ञातव्यम् इत्यभिप्रेत्य शिष्यप्रश्नम् उद्भावयति—**

तं त्वौदनस्य पृच्छामि यो अस्य महिमा महान् ॥ २२ ॥

तम् । त्वा । ओदनस्य । पृच्छामि । यः । अस्य । महिमा । महान् ॥ २२ ॥

**हे गुरो** त्वा **त्वाम्** ओदनस्य तं **महिमानं** पृच्छामि । अस्य **ओदनस्य** यो महिमा महान् **अधिकतरः ।**

**तत्र प्रतिवचने वर्जनीयं दर्शयति—**

स य ओदनस्य महिमानं विद्यात् ॥ २३ ॥

सः । यः । ओदनस्य । महिमानम् । विद्यात्[1] ॥ २३ ॥

नाल्प इति ब्रूयान्नानुपसेचन इति नेदं च किं चेति ॥ २४ ॥

न । अल्पः । इति । ब्रूयात् । न । अनुपऽसेचनः । इति । न । इदम् । च । किम् । च । इति ॥२४॥

स **प्रसिद्धो** यो **गुरुः उदीरितलक्षणस्य** ओदनस्य महिमानं **माहात्म्यं** विद्यात् **जानीयात् [२३] [2]असौ उपदेशसमये[2]** अल्प इति न ब्रूयात् **महिम्नोऽल्पत्वं नोपदिशेत् ।** अनुपसेचनः **उपसिच्यते अनेनेति उपसेचनं क्षीराज्यदध्यादि तद्रहित** इति [3]**च** न[3] **ब्रूयात् ।** न च इदम् **इति पुरोवर्तित्वेन निर्दिश्य ब्रूयात् ।** किम् इति **अनिर्दिष्टरूपेण** च **न ब्रूयात् । प्रागुक्तप्रकारेणैव सार्वात्म्यं ब्रूयाद् इत्यर्थः [२४] ।**

**आधिक्यवचनमपि अस्य विषये[4] न युक्तम् इत्याह—**

यावद् दाताऽभिमनस्येत तन्नाति वदेत् ॥ २५ ॥

---

१. विद्यात् P. २. असा....दश S′. ३. वचन S. ४. विषयविशेषे S′.

यावत् । दाता । अभिऽमनस्येत । तत् । न । अति । वदेत् ॥ २५ ॥

दाता **सवयज्ञानुष्ठाता** यावत् **फलम्** अभिमनस्येत **'मनसा अभिप्राप्तुम्'**[1] **इच्छेत्** तत् नाति वदेत् । **तत् फलम् अतिक्रम्य अधिकं न ब्रूयाद् इत्यर्थः ।**

**अथ वक्ष्यमाणैः पर्यायैस्तस्यौदनस्य प्राशने भावनाविशेषं वक्तुं ब्रह्मवादिनां प्रश्नद्वयम् अवतारयति—**

**ब्रह्मवादिनो वदन्ति पराञ्चमोदनं प्राशी३ः[2] प्रत्यञ्चा३मिति[3] ॥ २६ ॥**

ब्रह्मऽवादिनः । वदन्ति । पराञ्चम् । ओदनम् । प्र । आशी३ः[4] । प्रत्यञ्चा३म्[5] । इति ॥ २६ ॥

**त्वमोदनं 'प्राशी३स्त्वामोदना३'[6] इति ॥ २७ ॥**

त्वम् । ओदनम् । प्र । आशी३ः[7] । त्वाम् । ओदना३ः[8] । इति ॥ २७ ॥

**ब्रह्म वेदः तद् वदितुं शीलम् एषाम् इति** ब्रह्मवादिनो **ब्रह्मविचारका महर्षयः । ते संभूय** वदन्ति **परस्परं भाषन्ते—हे देवदत्त त्वम् इमम्** ओदनं पराञ्चम् **पराङ्मुखं स्थितं** प्राशीः **प्राशितवान् असि उत** प्रत्यञ्चम् [9]**आत्माभिमुखं स्थितं प्राशितवान् असि**[9] **। प्राशितुस्तव प्राशितव्यः स ओदनः किं पराङ्मुखः उत अभिमुख इति प्रश्नः ।** 'विचार्यमाणानाम्' ( पा ८,२,९७ ) **इति प्लुतः [२६] । तथा हे देवदत्त** त्वम् ओदनं प्राशीः **भक्षितवान् असि अथवा स एव** ओदनस्त्वां **प्राशीत्** इति **प्रश्नान्तरम् । अत्रापि पूर्ववत् प्लुतः [२७] ।**

**अत्र आद्ये प्रश्ने प्रथमकल्पे दोषम् आह—**

**पराञ्चं चैनं प्राशीः प्राणास्त्वा हास्यन्तीत्येनमाह ॥ २८ ॥**

पराञ्चम् । च । एनम्[10] । प्रऽआशीः । प्राणाः । त्वा । हास्यन्ति । इति । एनम् । आह ॥२८॥

चशब्दश्चेदर्थे । पराञ्चम् **पराङ्मुखत्वेन स्थितम्** एनम् **ओदनं** प्राशीः **चेत्** प्राणाः **प्राणवायवः** त्वा **त्वां** हास्यन्ति **त्यक्ष्यन्ति** इत्येनं **प्राशितारम्** आह **विद्वान् ब्रवीतु । बहिर्मुखः प्राणो बहिर्मुखौदनप्राशनाय शरीराद् विनिर्गतो भवेद् इत्यर्थः ।**

**द्वितीयकल्पम् अनूद्य दूषयति—**

---

१. **मनस्यभि°, मनसाभि°** इत्यनयोरेकतरस्य न निश्चयः S′. २. **प्राशीः३** O,$R^2$ ($E^2$?); **प्राशीं३ः** A,B,C,R,RW.; **प्राशीः** $S^m$,D; **प्राशीं**ः Cs; **प्राशीः>प्राशी३ः** Dc. ३. **प्रत्यञ्चा३मिति** RW. ४. **आशीः३** $P^2$,Kp; **आशीः** P; **आशीं३ः** J; **आशीः** Cp. ५. **प्रत्यंचाम्३** P,$P^2$,J. ६. **प्राशी३स्त्वा°>प्राशी३स्त्वा°** Dc; **प्राशीस्त्वा°** $S^m$,Cs,RW.; **प्राशी३स्त्वा°** A,B,C,R,K,$K^m$,$P^3$,M. ७. **आशीः३** P,J,$Bp^2$; **आशीः३** $P^2$; **आशी३ः** शंपा.; **आशीः** Cp. ८. **ओदनाः३** P,J; **ओदनाः** $P^2$,Cp. ९. **°मुख···मस्थि···वानसि** S′. १० **एतम्** $P^2$.

**प्रत्यञ्चं चैनं प्राशीरपानास्त्वा हास्यन्तीत्येनमाह ॥ २९ ॥**

प्रत्यञ्चम् । च । एनम् । प्रऽआशीः । अपानाः । त्वा । हास्यन्ति । इति । एनम् । आह ॥२९॥

**अत्रापि** चशब्दश्चेदर्थे । *[प्रत्यञ्चं] **प्रतिमुखम् अवस्थितं चेद्** एनम् **ओदनं** प्राशीः **तर्हि** त्वा **त्वाम्** अपानाः **अपानवायुवृत्तयो** हास्यन्ति **त्यक्ष्यन्ति** इत्येनं **प्राशितारम्** आह **अभिज्ञो ब्रूयात् । अपानवायोरोदनस्य च[1] प्रत्यङ्मुखत्वेन अधोद्वारात् अपानस्य शरीराद् विनिर्गम एव स्याद् इत्यर्थः ।**

**द्वितीयप्रश्नः अनङ्गीकारपरास्त इत्याह—**

**नैवाहमोदनं न मामोदनः ॥ ३० ॥**

न । एव । अहम् । ओदनम् । न । माम् । ओदनः ॥ ३० ॥

अहम् ओदनं नैव **प्राशिषम्** । ओदनः **अपि** मां न **प्राशीत् । अतः पक्षद्वयस्यानङ्गीकारात् तत्प्रयुक्तदोषाभाव इत्यर्थः ।**

**कथं तर्हि तत्प्राशनम् इति तत्राह—**

**ओदन एवौदनं प्राशीत् ॥ ३१ ॥**

ओदनः । एव । ओदनम् । प्र । आशीत्[2] ॥ ३१ ॥

**भोक्तृभोक्तव्यप्रपञ्चात्मक ओदन[3] इति उक्तम् । अतः** ओदन एव **कर्ता** ओदनं **स्वात्मानं** प्राशीत् **प्राशितवान् । अश भोजने इत्यस्मात् लुङि रूपम् ।**

**इति प्रथमं सूक्तम् ।**

**अथ उत्तरैः पर्यायैः ओदनस्यैव भोक्तृत्वं भोज्यत्वं च विपक्षे बाधपुरःसरं समर्थ्यते । तत्र प्रथमम्** 'तस्यौदनस्य बृहस्पतिः शिरः' **इति यद् उक्तं विपक्षे बाधपुरःसरं तस्य प्रयोजनं प्रथमेन पर्यायेणाह—**

**ततश्चैनमन्येन शीर्ष्णा प्राशीर्येन चैतं[4] पूर्व[5] ऋषयः[5] प्राश्नन् ।**
**ज्येष्ठतस्ते प्रजा मरिष्यतीत्येनमाह ।**
**तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।**
**बृहस्पतिना शीर्ष्णा । तेनैनं प्राशिषं तेनैनमजीगमम् ।**

---

१. चा⋯योः S'. २. आशीत् P,P², J,Cp. ३. °नम् S'. ४. चेदम् पै १६,५६,१ एवमग्रेपि. ५. अग्रे पै. एवमग्रेपि.

**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।**
**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ १ ॥ [३२]**

ततः । च । एनम् । अन्येन । शीर्ष्णा । प्रऽआशीः । येन । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । ज्येष्ठतः । ते । प्रऽजा । मरिष्यति । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । बृहस्पतिना । शीर्ष्णा । तेन । एनम् । प्र । आशिषम् । तेन । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ १ ॥

पूर्वे **प्रथमभाविनोऽनुष्ठातार** ऋषयः येन च **शिरसा** एतम् **ओदनं** प्राश्नन् **प्राशितवन्तः । अश भोजने क्र्यादित्वात् श्नाप्रत्ययः ।** ततः **तस्माद्** अन्येन शीर्ष्णा **शिरसा ।** 'शीर्षंश्छन्दसि' (पा ६,१,६०) **इति शिरःशब्दस्य शीर्षन् आदेशः । ततश्चेति चशब्दश्चेदर्थे । अन्येन चेत् शिरसा** एनम् **उक्तप्रभावम् ओदनं** प्राशीः **हे देवदत्त प्राशितवान् असि** ते **तव** प्रजा **पुत्रादिरूपा** ज्येष्ठत **आरभ्य ज्येष्ठादि-क्रमेण** मरिष्यति इति **अनेन प्रकारेण** एनं **प्राशितारम्** आह **अभिज्ञो ब्रूयात् । इत्थम् अयथाप्राशने दोष उपन्यस्तः । एतद्दोषपरिहारेण प्राशनम् आह—**तं वा **इति ।** तं **तथाविधम् ओदनम्** अहम् अर्वाञ्चम् **अर्वाङ्मुखम् अञ्चन्तं न प्राशिषम् । तथा** पराञ्चम् **पराङ्मुखम् अञ्चन्तमपि न प्राशिषम् । तथा** प्रत्यञ्चम् **आत्माभिमुखम् अञ्चन्तमपि न प्राशिषम् । अतः पराञ्चं चैनं प्राशीः इत्यादिना उक्तदोषस्य अप्रसङ्गः । कथं तर्हि प्राशीरित्याह ।** बृहस्पतिना शीर्ष्णा **बृहस्पत्यात्मना ओदनसंबन्धिशि-रसा । ऋषयो हि पूर्वम् अनेनैव शिरसा ओदनं प्राश्नन् । अहमपि ओदनात्मकः** तेन **एव शिरसा** एनम् **ओदनं** प्राशिषम् **प्राशितवान् अस्मि । ओदन एवौदनं प्राशीत् इति ह्युक्तम् ।** तेन **एव शिरसा** एनम् **ओदनम्** अजीगमम् **गन्तव्यं देशं प्रापितवान् अस्मि । गमेर्ण्यन्तात् लुङि चङि रूपम् ।** एष वै **इत्थं खलु प्राशितोऽयम्** ओदनः सर्वाङ्गः **सर्वैरवयवैरुपेतः** सर्वपरुः **सर्वैः परुभिः पर्वभिः अवयवसंधिभिरुपेतः** सर्वतनूः **संपूर्ण-शरीरः । इत्थंवेदितुः फलम् आह—**सर्वाङ्ग एव **इति ।** यः **पुरुषः** एवम् **उक्तप्रकारेण ओदनस्य प्राशनं** वेद **जानाति सोऽपि सर्वाङ्गत्वादिफलं प्राप्तः सन्** सं भवति **पुण्यभूते स्वर्गादिलोके उत्पद्यते । एवम् उत्तरेऽपि पर्याया व्याख्येयाः ।**

'द्यावापृथिवी श्रोत्रे' **इति द्यावापृथिव्योः ओदनसंबन्धिश्रोत्रत्वेन भावनं यद् उक्तं तत्प्रयोजनमपि विपक्षे बाधपुरःसरं द्वितीयमन्त्रेण उपन्यस्यति—**

**ततश्चैनमन्याभ्यां श्रोत्राभ्यां प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन् ।**

बधिरो भविष्यसीत्येनमाह । तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।
द्यावापृथिवीभ्यां श्रोत्राभ्याम् । ताभ्यामेनं प्राशिषं ताभ्यामेनमजीगमम् ।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ २ ॥ [३३]

ततः । च । एनम् । अन्याभ्याम् । श्रोत्राभ्याम् । प्रऽआशीः । याभ्याम् । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । बधिरः । भविष्यसि । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । द्यावापृथिवीभ्याम् । श्रोत्राभ्याम् । ताभ्याम् । एनम् । प्र । आशिषम् । ताभ्याम् । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ २ ॥

**एवम् अनुषज्य वाक्यं पूरयित्वा व्याख्येयम् । अयम् अर्थः** — याभ्यां **श्रोत्राभ्यां** पूर्वे **प्रथमभाविन** ऋषयः एतम् **ओदनं** प्राश्नन् ततोऽन्याभ्यां **श्रोत्राभ्यां लौकिकाभ्यां यदि ओदनं** प्राशीः **प्राशितवान् असि तर्हि त्वं** बधिरः **नष्टश्रोत्रेन्द्रियो** भविष्यसि इत्येनं **प्राशितारम्** आह । तं वा अहम् **इत्यादि पूर्ववत् ।** द्यावापृथिवीभ्यां श्रोत्राभ्याम् **ओदनस्य श्रोत्रत्वेन भाविताभ्यां** ताभ्याम् **एव** एनम् **ओदनं** प्राशिषम् ताभ्याम् **एव** एनम् अजीगमम् **गमितवान् अस्मि न तु आत्मीयाभ्यां श्रोत्राभ्यां येन उक्तदोषः प्रसज्येत इति भावः ।** एष वा ओदन **इत्यादिवाक्यशेषः सर्वत्र समानार्थः । एवम् उत्तरेषु पर्यायेषु अनुषङ्गेण वाक्यपरिसमाप्तिर्वाक्ययोजना च कर्तव्या ।**

'सूर्याचन्द्रमसावक्षिणी' **इति यदुक्तं प्राक् तस्य प्रयोजनकथनपरस्तृतीयो मन्त्रः** —

ततश्चैनमन्याभ्यामक्षीभ्यां प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन् ।
अन्धो भविष्यसीत्येनमाह । तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।
सूर्याचन्द्रमसाभ्यामक्षीभ्याम्[1] । ताभ्यामेनं प्राशिषं ताभ्यामेनमजीगमम् ।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ ३ ॥ [३४]

---

१. °चन्द्रमसाभ्याम्° RW.; पृ ८४८ टि १ द्र.

ततः । च । एनम् । अन्याभ्याम् । अक्षीभ्याम् । प्रऽआशीः । याभ्याम् । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । अन्धः । भविष्यसि । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । सूर्याचन्द्रमसाभ्याम् । अक्षीभ्याम् । ताभ्याम् । एनम् । प्र । आशिषम् । ताभ्याम् । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ ३ ॥

याभ्यां **चक्षुर्भ्यां** पूर्वे ऋषयः एतम् **ओदनं** प्राश्नन् ततश्च **ताभ्यां चेद्** अन्याभ्याम् अक्षीभ्यां **चक्षुर्भ्याम्** एनम् **ओदनं प्राशितवान् असि तर्हि अयथाप्राशनात्** अन्धः **लुप्तचक्षुष्को** भविष्यसि इत्येनं **प्राशितारम्** आह **ब्रूयात् । अक्षीभ्याम् इति** । 'ई च द्विवचने' (पा ७,१,७७) **इति अक्षिशब्दस्य ईकारोऽन्तादेशः** । तं वा अहम् **इत्यादि पूर्ववत्** । सूर्याचन्द्रमसाभ्याम् **सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ तद्रूपाभ्याम्** अक्षीभ्याम् **ओदनसंबन्धिचक्षुर्भ्याम्** । ताभ्याम् एनं प्राशिषम् **इत्यादि पूर्ववत्** । एष वा ओदनः सर्वाङ्गः **इत्यादिवाक्यशेषः समानार्थः** ।

'ब्रह्म मुखम्' **इति यद् ओदनस्य मुखकल्पनं कृतं तस्योपयोगम् आह—**

**ततश्चैनमन्येन मुखेन प्राशीर्येन चैतं पूर्व ऋषयः प्राश्नन् ।**
**मुखतस्ते प्रजा मरिष्यतीत्येनमाह । तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।**
**ब्रह्मणा मुखेन । तेनैनं प्राशिषं तेनैनमजीगमम् ।**
**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।**
**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ ४ ॥ [३५]**

ततः । च । एनम् । अन्येन । मुखेन । प्रऽआशीः । येन । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । मुखतः । ते । प्रऽजा । मरिष्यति । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । ब्रह्मणा । मुखेन । तेन । एनम् । प्र । आशिषम् । तेन । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥

येन च **ओदनसंबन्धिना ब्रह्मात्मकेन मुखेन** पूर्वे ऋषयः प्राश्नन् ततोऽन्येन **चेद्** मुखेन **ओदनं** प्राशीः **तर्हि** मुखतः **मुखाद् आरभ्य अभिमुखप्रदेशे वा** ते **त्वदीया** प्रजा मरिष्यति

**विनङ्क्ष्यति इति अनेन प्रकारेण** एनं **प्राशितारम्** आह **कश्चित् ब्रूयात्** । तं वा अहम् **इत्यादि पूर्ववत्** । ब्रह्मणा **यत् जगत्कारणं ब्रह्म वेदात्मकं वा तदात्मकेन** मुखेन **ओदन-संबन्धिना** । तेन **प्रागुक्तेन** एनम् **ओदनं** प्राशिषम् **इत्यादि समानम्** ।

**पूर्वं** 'बृहस्पतिः शिरः' **इत्यादिना कानिचिदेव अङ्गानि उपलक्षणत्वेन ओदनस्य परिकल्पितानि । अस्मिन् प्रकरणे अनुक्तानामपि अवयवानां प्राशने करणत्वेन विनि-योगादेव तत्तदवयवजातम् ओदनस्य अर्थात्क्लृप्तं वेदितव्यम्** । **तत्र अग्नेर्जिह्वैव**[1] **प्राशि-तुर्जिह्वेति पञ्चमेन मन्त्रेण प्रतिपादयति—**

**तत॑श्चैनम॒न्यया॑ जि॒ह्वया॒ प्राशी॒र्यया॑ चै॒तं पूर्व॒ ऋष॑यः प्राश्न॑न् ।**
**जि॒ह्वा ते॑ मरिष्य॒तीत्ये॑नमाह । तं वा अ॒हं नार्वाञ्चं॒ न परा॑ञ्चं॒ न प्र॒त्यञ्च॑म् ।**
**अ॒ग्नेर्जि॒ह्वया॑ । तयै॑नं॒ प्राशि॑षं॒ तयै॑नमजीगमम् ।**
**ए॒ष वा ओ॑द॒नः सर्वा॑ङ्गः सर्व॑परुः सर्व॑तनूः ।**
**सर्वा॑ङ्ग ए॒व सर्व॑परुः सर्व॑तनूः सं भ॑वति॒ य ए॒वं वेद॑ ॥ ५ ॥ [३६]**

ततः॑ । च॒ । ए॒न॒म् । अ॒न्यया॑ । जि॒ह्वया॑ । प्र॒ऽआशीः॑ । यया॑ । च॒ । ए॒तम् । पूर्वे॑ । ऋष॑यः । प्र॒ऽआश्न॑न् । जि॒ह्वा । ते॒ । म॒रि॒ष्य॒ति॒ । इति॑ । ए॒न॒म् । आ॒ह॒ । तम् । वै । अ॒हम् । न । अ॒र्वाञ्च॑म् । न । परा॑ञ्चम् । न । प्र॒त्यञ्च॑म् । अ॒ग्नेः । जि॒ह्वया॑ । तया॑ । ए॒न॒म् । प्र । आ॒शि॒ष॒म् । तया॑ । ए॒न॒म् । अ॒जी॒ग॒म॒म् । ए॒षः । वै । ओ॒द॒नः । सर्व॑ऽअङ्गः । सर्व॑ऽपरुः । सर्व॑ऽतनूः । सर्व॑ऽअङ्गः । ए॒व । सर्व॑ऽपरुः । सर्व॑ऽतनूः । सम् । भ॒व॒ति॒ । यः । ए॒वम् । वेद॑ ॥ ५ ॥

यया **जिह्वया** पूर्वे ऋषयः एतम् **ओदनं** प्राश्नन् ततोऽन्यया **आत्मीयया** जिह्वया **चेत् हे देवदत्त त्वम् ओदनं** प्राशीः **तर्हि** ते **त्वदीया** जिह्वा मरिष्यति **प्राणांस्त्यक्ष्यति । प्राणत्यागेन शुष्का स्वकार्यक्षमा न भविष्यतीत्यर्थः । मृङ् प्राणत्यागे** । 'म्रियतेर्लुङ्लिङोश्च' (पा १,३,६१) **इति आत्मनेपदस्य नियमनात् परस्मैपदम्** । 'ऋद्धनोः स्ये' ( पा ७,२,७० ) **इति इडागमः** । तं वा अहम् **इत्यादि पूर्ववत्** । अग्नेः **अवयवभूतया** जिह्वया । **सैव प्राशितुः ओदनस्य च जिह्वेत्यर्थः** । तया **जिह्वया** एनम् **ओदनम् अहं** प्राशिषम् **इत्यादि पूर्ववत्** ।

**दन्तानामपि विपरिवृत्तिं षष्ठेन मन्त्रेण दर्शयति—**

**तत॑श्चैनम॒न्यैर्दन्तैः॒ प्राशी॒र्यैश्चै॒तं पूर्व॒ ऋष॑यः प्राश्न॑न् ।**
**दन्ता॑स्ते [2]शत्स्य॒न्तीत्ये॑नमाह । तं वा अ॒हं नार्वाञ्चं॒ न परा॑ञ्चं॒ न प्र॒त्यञ्च॑म् ।**

---

१. °व नास्ति S'. २. सत्स्यु° Bh, सा.

ऋतुभिर्दन्तैः ।
तैरेनं प्राशिषं तैरेनमजीगमम् । एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ ६ ॥ [३७]

ततः । च । एनम् । अन्यैः । दन्तैः । प्रऽआशीः । यैः । च । एतम् । पूर्व । ऋषयः । प्रऽआश्नन् । दन्ताः । ते । शत्स्यन्ति । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । ऋतुऽभिः । दन्तैः । तैः । एनम् । प्र । आशिषम् । तैः । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ ६ ॥

यैः **दन्तैः** एतम् **ओदनं** पूर्व ऋषयः प्राश्नन् ततोऽन्यैर्दन्तैश्चेत् एनम् **ओदनं** प्राशीः **प्राशितुः** ते **तव** दन्ताः सत्स्यन्ति[1] **विशीर्णाः पतिष्यन्ति** इति **अनेन प्रकारेण** एनं **प्राशितारम्** आह **अभिज्ञो ब्रूयात् । तं प्रति उत्तरं** तं वा अहम् **इत्यादि पूर्ववत् ।** ऋतुभिः **वसन्तग्रीष्मादिभिः** दन्तैः । **ऋतवः अस्य दन्ता इति अर्थाद् उक्तं भवति ।** तैः **ऋत्वात्मकैर्दन्तैः** एनम् **ओदनं** प्राशिषम् **अतो नोक्तदोषप्रसङ्गः । अन्यद् उक्तार्थम् ।**

'सप्तऋषयः प्राणापानाः' **इति यत् प्राग् उक्तं तस्य इदानीम् उपयोगम् आह सप्तमेन मन्त्रेण—**

ततश्चैनमन्यैः प्राणापानैः प्राशीर्यैश्चैतं[2] पूर्व ऋषयः प्राश्नन् ।
प्राणापानास्त्वा हास्यन्तीत्येनमाह ।
तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् । सप्तर्षिभिः[3] प्राणापानैः ।
तैरेनं प्राशिषं तैरेनमजीगमम् ।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ ७ ॥ [३८]

ततः । च । एनम् । अन्यैः । प्राणापानैः । प्रऽआशीः । यैः । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । प्राणापानाः । त्वा । हास्यन्ति । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । सप्तर्षिऽभिः[4] ।

---

१. वैतु. मंपा. २. प्राशीर्यैश्चैतं B; प्राशीयैश्चैतं Cs. ३. सप्तऋषि° > सप्तर्षि° B; सप्तऋषि° Cs; WM., सा.; सप्तऋषि° D,Km,Sm. ४. सप्तऋषिऽभिः Cp.

प्राणापानैः । तैः । एनम् । प्र । आशिषम् । तैः । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ ७ ॥

यैः **प्राणापानैः ऋष्यात्मकैः** एतम् **ओदनं** पूर्वे **अभिज्ञाः** प्राश्नन् ततोऽन्यैः **चेत्** प्राणापानैः एनम् **ओदनं** प्राशीः **तर्हि प्राशितारम्** त्वा **त्वां** प्राणापानाः **प्राणापानात्मिका मुख्यप्राणस्य वृत्तयो** हास्यन्ति **त्यक्ष्यन्ति । ओहाक् त्यागे ।** इति **अनेन प्रकारेण** एनम् **प्राशितारम्** आह **विशेषज्ञो ब्रूयात् । तस्योत्तरं** तं वा अहम् **इत्यादि ।** सप्तऋषिभिः[1] **एतदात्मकैः** प्राणापानैः । तैरेनं प्राशिषम् **इत्यादि पूर्ववत् ।**

**इत्थम् उत्तमाङ्गवर्तिनाम् अवयवानां प्राशने करणभूतानां देवतारूपत्वम् अभिधाय अन्येषाम् अवयवानां तथात्वम् अभिधित्सुः कृत्स्नशरीरव्यापिरूपस्य अन्तरिक्षरूपेण विपरिवृत्तिम् आह अष्टमेन पर्यायेण—**

**ततश्चैनमन्येन व्यचसा प्राशीर्येन चैतं पूर्व ऋषयः प्राश्नन् ।**
**राजयक्ष्मस्त्वा हनिष्यतीत्येनमाह ।**
**तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।**
**अन्तरिक्षेण व्यचसा । तेनैनं प्राशिषं तेनैनमजीगमम् ।**
**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।**
**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ ८ ॥ [३९]**

ततः । च । एनम् । अन्येन । व्यचसा । प्रऽआशीः । येन । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । राजऽयक्ष्मः । त्वा । हनिष्यति । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । अन्तरिक्षेण । व्यचसा[2] । तेन । एनम् । प्र । आशिषम् । तेन । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ ८ ॥

येन **व्यचसा व्याप्तिमता रूपेण कृत्स्नशरीरवर्तिना** एतम् **ओदनं** पूर्व ऋषयः प्राश्नन् ततोऽन्येन **चेद्** व्यचसा एनम् **ओदनं** प्राशीः **तर्हि** त्वा **त्वां प्राशितारं**

---

१. वैद्ध. मंपा. २. व्यचसा P.

राजयक्ष्मः **एतत्संज्ञः क्षयरोगो** हनिष्यति **मारयिष्यति**। 'ऋद्धनोः स्ये' (पा ७,२,७०) **इति इडागमः। यक्ष पूजायाम् इत्यस्मात्** 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' (पाउ १,१४०) **इति औणादिको मन्प्रत्ययः। राज्ञः सोमस्य संबन्धी यक्ष्मो राजयक्ष्मः। श्रूयते हि तैत्तिरीयके**—'राजानं यक्ष्म आरद् इति तद् राजयक्ष्मस्य जन्म' (तै २,५,६,५) **इति**। इति **अनेन प्रकारेण** एनं **प्राशितारम्** आह **ब्रूयात्**। तं वा अहम् **इत्यादि पूर्ववत्**।

**पृष्ठभागस्य द्युलोकरूपेण विपरिवृत्तिम् आह नवमेन मन्त्रेण—**

**ततश्चैनमन्येन पृष्ठेन प्राशीर्येन चैतं पूर्व ऋषयः प्राश्नन्।**
**विद्युत् त्वा हनिष्यतीत्येनमाह।**
**तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम्। दिवा पृष्ठेन।**
**तेनैनं प्राशिषं तेनैनमजीगमम्।**
**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः।**
**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद॥ ९॥ [४०]**

ततः। च। एनम्। अन्येन। पृष्ठेन। प्रऽआशीः। येन। च। एतम्। पूर्वे। ऋषयः। प्रऽआश्नन्। विऽद्युत्[1]। त्वा। हनिष्यति। इति। एनम्। आह। तम्। वै। अहम्। न। अर्वाञ्चम्। न। पराञ्चम्। न। प्रत्यञ्चम्। दिवा। पृष्ठेन। तेन। एनम्। प्र। आशिषम्। तेन। एनम्। अजीगमम्। एषः। वै। ओदनः। सर्वऽअङ्गः। सर्वऽपरुः। सर्वऽतनूः। सर्वऽअङ्गः। एव। सर्वऽपरुः। सर्वऽतनूः। सम्। भवति। यः। एवम्। वेद॥९॥

येन **दिवा द्युलोकात्मकेन पृष्ठेन मध्यशरीरापरभागेन** एतम् **ओदनं** पूर्वे ऋषयः प्राश्नन् ततोऽन्येन **चेत्** पृष्ठेन **आत्मीयेन शरीरापरभागेन त्वम्** एनम् **ओदनं** प्राशीः विद्युत् **विद्योतमाना अशनिः** त्वा **त्वां** हनिष्यति। इत्येनम् आह **इत्यादि पूर्ववत्**। दिवा **द्युलोकात्मकेन** पृष्ठेन **शरीरापरभागेन**। तेन **अवयवेन** एनं प्राशिषम् **इत्यादि पूर्ववत्**।

**अवयवान्तरस्यापि देवतात्मकत्वं ब्रूते दशमेन मन्त्रेण—**

**ततश्चैनमन्येनोरसा प्राशीर्येन चैतं पूर्व ऋषयः प्राश्नन्।**
**कृष्या न रात्स्यसीत्येनमाह।**

---

1. विद्युत P.

**तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।**
**पृथिव्योरसा । तेनैनं प्राशिषं तेनैनमजीगमम् ।**
**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।**
**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ १० ॥ [४१]**

ततः । च । एनम् । अन्येन । उरसा । प्रऽआशीः । येन । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । कृष्या । न । रात्स्यसि । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । पृथिव्या । उरसा । तेन । एनम् । प्र । आशिषम् । तेन । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥

येन **उरसा** पूर्वं ऋषयः **प्राशितवन्तः** ततोऽन्येन **चेद्** उरसा **स्तनमण्डलस्य उपरिवर्तिना पुरोभागस्थावयवेन त्वम् ओदनं** प्राशीः **तर्हि** कृष्या **कर्षणक्रियया** न रात्स्यसि। **व्रीहियवादिसस्यैः समृद्धो न भविष्यसीत्यर्थः । राध साध संसिद्धौ । लृटि** 'एकाच उपदेशेऽनुदात्तात्' ( पा ७,२,१० ) **इति इट्प्रतिषेधः । अन्यद् उक्तार्थम् ।** पृथिव्या उरसा **पृथिवीत्वेन भाव्यमानेन उरसा ।** तेनैनम् प्राशिषम् **इत्यादि समानम् ।**

**उदरस्यापि देवतात्मना भावनाम् आह एकादशेन मन्त्रेण—**

**ततश्चैनमन्येनोदरेण प्राशीर्येन चैतं पूर्व ऋषयः प्राश्नन् ।**
**उदरदारस्त्वा हनिष्यतीत्येनमाह ।**
**तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।**
**सत्येनोदरेण । तेनैनं प्राशिषं तेनैनमजीगमम् ।**
**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।**
**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ ११ ॥ [४२]**

ततः । च । एनम् । अन्येन । उदरेण । प्रऽआशीः । येन । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । उदरऽदारः । त्वा । हनिष्यति । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । सत्येन । उदरेण । तेन । एनम् । प्र । आशिषम् । तेन । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ ११ ॥

पूर्वं ऋषयो येन **उदरेण** प्राश्नन् ततोऽन्येन उदरेण **यदि इमम् ओदनं** प्राशीः **तर्हि** त्वा **त्वाम्** उदरदारः **उदरस्य दरणात्मकः अतीसाराख्यो रोगो** हनिष्यति **मारयिष्यति । अन्यत् पूर्ववत् ।** सत्येन । **यथार्थकथनात्मकं सत्यम् । तेन** उदरेण **तद्रूपतया भाव्यमानेन उदरेण ।** एनम् **ओदनं** प्राशिषम् **इत्यादि समानम् ।**

**अवयवान्तरस्यापि देवतारूपेण भावनम् आह द्वादशेन मन्त्रेण—**

**ततश्चैनमन्येन वस्तिना प्राशीर्येन चैतं पूर्व ऋषयः प्राश्नन् ।**
**अप्सु मरिष्यसीत्येनमाह । तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।**
**समुद्रेण वस्तिना । तेनैनं प्राशिषं तेनैनमजीगमम् ।**
**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।**
**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ १२ ॥ [४३]**

ततः । च । एनम् । अन्येन । वस्तिना । प्रऽआशीः । येन । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । अप्ऽसु । मरिष्यसि । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । समुद्रेण । वस्तिना । तेन । एनम् । प्र । आशिषम् । तेन । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥

**वसति अस्मिन् अशितपीतान्नोदकम् इति वस्तिः मूत्राशयः । इतरावयवानामिव तस्यापि प्राशने साधकतमत्वविवक्षया करणत्वम् ।** येन **वस्तिना** पूर्वे ऋषयः प्राश्नन् ततोऽन्येन **चेद्** वस्तिना **त्वम् ओदनं** प्राशीः **तर्हि त्वम्** अप्सु **उदकेषु** मरिष्यसि इति **अनेन प्रकारेण** एनं **प्राशितारम्** आह **ब्रूयात् ।** तं वा अहम् **इत्यादि उक्तार्थम् ।** समुद्रेण वस्तिना **समुद्रात्मना भावितेन आत्मीयेन वस्तिना ।** तेनैनं प्राशिषम् **इत्यादि पूर्ववत् । समुद्रस्य वस्तिरूपता तैत्तिरीयके समाम्नायते**—'तद् अभ्रमिव समहन्यत । तद् वस्तिम् अभिनत् । स समुद्रोऽभवत् । तस्मात् समुद्रस्य न पिबन्ति' (तैब्रा २,२,९,२;३) इति ।

**ऊर्वोरपि देवताभावनाम् आह त्रयोदशेन मन्त्रेण—**

**ततश्चैनमन्याभ्यामूरुभ्यां प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन् ।**
**ऊरू ते मरिष्यत इत्येनमाह । तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।**
**मित्रावरुणयोरूरुभ्याम् । ताभ्यामेनं प्राशिषं ताभ्यामेनमजीगमम् ।**
**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।**

सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ १३ ॥ [४४]

ततः । च । एनम् । अन्याभ्याम् । ऊरुऽभ्याम् । प्रऽआशीः । याभ्याम् । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । ऊरू[1] इति । ते । मरिष्यतः । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । मित्रावरुणयोः । ऊरुऽभ्याम् । ताभ्याम् । एनम् । प्र । आशिषम् । ताभ्याम् । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ १३ ॥

याभ्याम् **ऊरुभ्याम्** पूर्वे ऋषयः प्राश्नन् । **साधकतमत्वविवक्षया करणत्वम्** । ततोऽन्याभ्यां **चेद्** ऊरुभ्याम् एनम् **ओदनं** प्राशीः ते **प्राशितुस्तव** ऊरू मरिष्यतः **त्यक्तप्राणौ शुष्कौ भविष्यत** इत्येनम् आह । तं वा अहम् **इत्यादि पूर्ववत्** । मित्रावरुणयोः **मित्रश्च वरुणश्च मित्रावरुणौ** । 'देवताद्वन्द्वे च' ( पा ६,३,२६ ) **इति पूर्वपदस्य आनङ्** । 'देवताद्वन्द्वे च' ( पा ६,२,१४१ ) **इति उभयपदप्रकृतिस्वरत्वम्** । **तयोः संबन्धिभ्याम्** ऊरुभ्याम् । ताभ्याम एनं प्राशिषम् **इत्यादि पूर्ववद् योज्यम्** ।

**जानुनोरपि देवतासंबन्धित्वेन भावनम् आह चतुर्दशेन मन्त्रेण—**

ततश्चैनमन्याभ्यामष्ठीवद्भ्यां प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन् ।
स्रामो भविष्यसीत्येनमाह । तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।
त्वष्टुरष्ठीवद्भ्याम् । ताभ्यामेनं प्राशिषं ताभ्यामेनमजीगमम् ।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ १४ ॥ [४५]

ततः । च । एनम् । अन्याभ्याम् । अष्ठीवत्ऽभ्याम् । प्रऽआशीः । याभ्याम् । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । स्रामः । भविष्यसि । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । त्वष्टुः । अष्ठीवत्ऽभ्याम् । ताभ्याम् । एनम् । प्र । आशिषम् । ताभ्याम् । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ १४ ॥

---

१. ऊरु P.

**अष्ठीवन्तौ अस्थिमन्तौ ऊर्वोरधःप्रदेशवर्तिनौ अवयवौ जानुलक्षणौ ।** 'आसन्दीवदष्ठीवत्' (पा ८,२,१२) **इति मतुपि निपात्यते । ताभ्याम्** अष्ठीवद्भ्याम् अन्याभ्याम् **इत्यादि सर्वं पूर्ववद्योज्यम् ।** स्रामः **शुष्कजङ्घः । शुष्कजङ्घो** भविष्यसि इत्येनं **प्राशितारम्** आह । तं वा अहम् **इत्यादि पूर्ववत् ।** त्वष्टुः **देवस्य संबन्धिभ्याम्** अष्ठीवद्भ्याम् । **गतार्थम् अन्यत् ।**

**पादयोरपि देवतासंबन्धित्वेन भावनम् आह पञ्चदशेन मन्त्रेण—**

**ततश्चैनमन्याभ्यां पादाभ्यां[1] प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन् ।**
**बहुचारी भविष्यसीत्येनमाह । तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।**
**अश्विनोः पादाभ्याम् । ताभ्यामेनं प्राशिषं ताभ्यामेनमजीगमम् ।**
**एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।**
**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥१५॥ [४६]**

ततः । च । एनम् । अन्याभ्याम् । पादाभ्याम् । प्रऽआशीः । याभ्याम् । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । बहुऽचारी । भविष्यसि । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । अश्विनोः । पादाभ्याम् । ताभ्याम् । एनम् । प्र । आशिषम् । ताभ्याम् । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ १५ ॥

**जङ्घयोरधोवर्तिनौ पादौ ।** बहुचारी **बहु अधिकं चरितुं शीलम् अस्य स तथोक्तः ।** 'सुप्यजातौ णिनिस्ताच्छील्ये' (पा ३,२,७८) **इति णिनिः । सर्वदा प्रवासशील इत्यर्थः ।** अश्विनोः **संबन्धिभ्यां तदीयत्वेन भाविताभ्यां** पादाभ्याम् । **वाक्ययोजना पूर्ववत् ।**

**पादाग्रयोरपि देवतासंबन्धित्वेन भावनम् आह—**

**ततश्चैनमन्याभ्यां प्रपदाभ्यां प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन् ।**
**सर्पस्त्वा हनिष्यतीत्येनमाह । तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।**

---

१. पदाभ्यां B.

सवितुः[1] प्रपदाभ्याम् । ताभ्यामेनं प्राशिषं ताभ्यामेनमजीगमम् ।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ १६ ॥ [४७]

ततः । च । एनम् । अन्याभ्याम् । प्रऽपदाभ्याम् । प्रऽआशीः । याभ्याम् । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । सर्पः । त्वा । हनिष्यति । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । सवितुः । प्रऽपदाभ्याम् । ताभ्याम् । एनम् । प्र । आशिषम् । ताभ्याम् । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ १६ ॥

प्रपदाभ्यां **पादाग्राभ्याम्** । सर्पः **प्रसिद्धः** । सवितुः **सर्वस्य प्रेरकस्य देवस्य संबन्धिभ्यां** प्रपदाभ्यां **पादाग्राभ्याम्** ।

**हस्तयोरपि देवतासंबन्धित्वेन भावनम् आह—**

ततश्चैनमन्याभ्यां हस्ताभ्यां प्राशीर्याभ्यां चैतं पूर्व ऋषयः प्राश्नन् ।
ब्राह्मणं हनिष्यसीत्येनमाह । तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् ।
ऋतस्य हस्ताभ्याम् । ताभ्यामेनं प्राशिषं ताभ्यामेनमजीगमम् ।
एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।
सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ १७ ॥ [४८]

ततः । च । एनम् । अन्याभ्याम् । हस्ताभ्याम् । प्रऽआशीः । याभ्याम् । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन् । ब्राह्मणम् । हनिष्यसि । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । ऋतस्य । हस्ताभ्याम् । ताभ्याम् । एनम् । प्र । आशिषम् । ताभ्याम् । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ १७ ॥

---

१. सवितुः K, K^m, V; सवितु Cs.

ब्राह्मणं हनिष्यसीति। **ब्रह्महत्या तव भविष्यतीत्यर्थः** । ऋतस्य **ऋतं सत्यं परं ब्रह्म तस्य संबन्धिभ्यां** हस्ताभ्याम्। ताभ्याम् एनम् **इत्यादि । अन्यत् सर्वं पूर्ववत् ।**

**इत्थं प्राशितुः सर्वेष्वङ्गेषु देवताप्रतिपत्तीर्विधाय तदाधारभूतायां भूम्यामपि प्रतिपत्तिविशेषं विपक्षे बाधपुरःसरं दर्शयति—**

**ततश्चैनमन्यया प्रतिष्ठया प्राशीर्यया चैतं पूर्व ऋषयः प्राश्नन् ।**
**अप्रतिष्ठानोऽनायतनो[1] मरिष्यसीत्येनमाह ।**
**तं वा अहं नार्वाञ्चं न पराञ्चं न प्रत्यञ्चम् । सत्ये प्रतिष्ठाय[2] ।**
**तयैनं प्राशिषं तयैनमजीगमम् । एष वा ओदनः सर्वाङ्गः सर्वपरुः सर्वतनूः ।**
**सर्वाङ्ग एव सर्वपरुः सर्वतनूः सं भवति य एवं वेद ॥ १८ ॥ [४९]**

ततः । च । एनम् । अन्यया । प्रतिऽस्थया[3] । प्रऽआशीः । यया । च । एतम् । पूर्वे । ऋषयः । प्रऽआश्नन्[4] । अप्रतिऽस्थानः । अनायतनः । मरिष्यसि । इति । एनम् । आह । तम् । वै । अहम् । न । अर्वाञ्चम् । न । पराञ्चम् । न । प्रत्यञ्चम् । सत्ये । प्रतिऽस्थाय । तया । एनम् । प्र । आशिषम् । तया । एनम् । अजीगमम् । एषः । वै । ओदनः । सर्वऽअङ्गः । सर्वऽपरुः । सर्वऽतनूः । सर्वऽअङ्गः । एव । सर्वऽपरुः । सर्वऽतनूः । सम् । भवति । यः । एवम् । वेद ॥ १८ ॥

**प्रतितिष्ठति अस्याम् इति प्रतिष्ठा पादयोराधारभूता भूमिः । ष्ठा गतिनिवृत्तौ ।** 'आतश्चोपसर्गे' ( पा ३,३,१०६ ) **इति अधिकरणे अङ्प्रत्ययः** । यया च **प्रतिष्ठया सत्य-ब्रह्मात्मिकया** एतम् **ओदनं** पूर्वे **प्रथमभाविन** ऋषयः प्राश्नन् ततोऽन्यया **चेत्** प्रतिष्ठया एनम् **ओदनं** प्राशीः **प्राशितवान् असि तर्हि त्वम्** अप्रतिष्ठानः **प्रतिष्ठारहितः । तस्यैव** अर्थकथनम् अनायतन **इति । स्थानोपवेशनाय भूमिरहितो भविष्यसि** इत्येनं **प्राशि-तारम्** आह **कश्चिद् विद्वान् ब्रूयात् । इति विपक्षे बाधोपन्यासः । तस्यैतद् उत्तरम्** तं वा अहम् **इत्यादि ।** तं **खलु उक्तप्रभावम् ओदनम् अहम्** अर्वाञ्चम् **अभिमुखम् अवस्थितं अवस्थितमपि न प्राशिषम्** । न प्रत्यञ्चम् **प्रत्यङ्मुखम्** न प्राशिषम् । न पराञ्चम् **पराङ्मुखम् अवस्थितमपि न प्राशिषम्** । **किन्तु आत्मभूतम् ओदनं** सत्ये **सर्वदा आभिमुख्येन अवस्थितमपि न प्राशिषम्** । **किन्तु आत्मभूतम् ओदनं** सत्ये **सर्वदा** **इत्याद्युपनिषदेकवेद्ये सर्व-बाधविधुरे** 'विज्ञानम् आनन्दं ब्रह्म' ( बृउ ३,९,३४ )

1. °ष्ठानोनाय° A B,Bh,C,R,Cs,WM. 2. °ष्ठाया°(?°ष्ठया) B[2],P[3],M.
3. °स्थाय P. 4. प्र । आश्नन् P; प्र । आश्नंन् J; प्रऽआश्नम् P[2].

जगत्कल्पनास्पदे ब्रह्मणि प्रतिष्ठाय प्रतिष्ठितः समाश्रितो भूत्वा तेन सर्वजगत्प्रतिष्ठात्मकेन प्राशिषम् प्राशितवान् अस्मि । तेनैव सत्येन एनम् अजीगमम् उदरमध्यं गमितवान् अस्मि । यद्वा अस्य सवयज्ञस्य फलभूतं नाकपृष्ठाख्यं लोकं गमितवान् अस्मि । एष खलु उदीरितभावनया प्राशित ओदनः सर्वाङ्गः सर्वैरङ्गैः अवयवैरुपेतः सर्वपरुः सर्वैः पर्वभिः अवयवसंधिभिरुपेतः सर्वतनूः कृत्स्नशरीरो भवति । सर्वशरीराभिमानिविराडात्मको भवतीत्यर्थः । उक्तम् अर्थं वेदितुः फलम् आह— सर्वाङ्ग एवेत्यादिना ।

इत्थम् आद्यन्तयोः पर्याययोः संपूर्णाम्नानात् मध्यवर्तिषु पर्यायेषु अनुषङ्गेण वाक्यपरिसमाप्तिं कृत्वा व्याख्यातव्यम्[1] ।

इति द्वितीयेऽनुवाके द्वितीयं सूक्तम् ।

ऋ. अथर्वा, दे. मन्त्रोक्ताः

'एतद् वै ब्रध्नस्य विष्टपम्' इत्यस्य सूक्तस्य 'तस्यौदनस्य' इति सूक्तेन सह उक्तो विनियोगः ।

**एतद् वै ब्रध्नस्य विष्टपं यदोदनः ॥ १ ॥ [५०]**

एतत् । वै । ब्रध्नस्य । विष्टपम् । यत् । ओदनः ॥ १ ॥

यत् योऽयम् उक्तमहिमोपेत ओदनः एतत् खलु ब्रध्नस्य विष्टपम् बध्नाति महिम्ना सर्वं जगत् सृजतीति ब्रध्नः सूर्यमण्डलमध्यवर्ती ईश्वरः । 'बन्धेर्ब्रधिबुधी च' ( पाउ ३,५ ) इति औणादिको नक्प्रत्ययः प्रकृतेर्ब्रधादेशश्च । तस्य विष्टपम् वियति विष्टब्धं मण्डलम् । सूर्यमण्डलात्मकोऽयम् ओदन[2] इत्यर्थः ।

एतद्वेदितुः फलम् आह द्वितीयया—

**ब्रध्नलोको भवति ब्रध्नस्य विष्टपि श्रयते य एवं वेद ॥ २ ॥ [५१]**

ब्रध्नऽलोकः । भवति । ब्रध्नस्य । विष्टपि । श्रयते । यः । एवम् । वेद ॥ २ ॥

यः पुरुषः एवम् उक्तप्रकारेण । वेद ओदनस्य सूर्यमण्डलात्मकत्वं वेद । मण्डलाभिमानिसूर्यरूपेण[3] ओदनम् उपास्त इत्यर्थः । असौ ब्रध्नलोको भवति ब्रध्नस्य सूर्यस्य यो लोकस्तल्लोकवर्ती भवति । यद्वा सूर्य इव लोकनीयः दर्शनीयो भवति । ब्रध्नस्य सूर्यस्य विष्टपि विष्टब्धे मण्डलात्मके स्थाने श्रयते सेवते । सूर्यात्मको भवतीत्यर्थः । 'असौ वा आदित्यो ब्रध्नस्य विष्टपम्' ( तै ५,३,३,५ ) इति हि तैत्तिरीयकम् ।

---

१. व्याख्यातम् S'.　　२. ओदनम् S'.　　३. °भिमानि° इत्यस्य स्थाने तिपरकं त्रिवर्णस्थानं रिक्तम् S'.

**अथ सूर्यात्मकाद् ओदनात् सर्वेषां देवानां सृष्टिम् आह तृतीयया —**

**एतस्माद् वा ओदनात् त्रयस्त्रिंशतं लोकान् निरमिमीत प्रजापतिः ॥३॥ [५२]**

एतस्मात् । वै । ओदनात् । त्रयःऽत्रिंशतम् । लोकान् । निः । अमिमीत । प्रजाऽपतिः ॥

एतस्मात् **सूर्यात्मकाद्** ओदनात् **सर्वजगदुपादानभूतात्** प्रजापतिः **प्रजानां स्रष्टा देवः** त्रयस्त्रिंशतं लोकान् 'अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः प्रजापतिश्च वषट्कारश्च' ( ऐब्रा १,१० ) **इति 'ऐतरेयकादिश्रुतिप्रसिद्धा ये त्रयस्त्रिंशत्संख्याका'[1] देवास्तेषां लोकान् अधिष्ठातृसहितान्** निरमिमीत **निर्मितवान्** ।

**तल्लोकप्राप्तिसाधनत्वेन यज्ञोऽपि अस्मादेव सूर्यात्मकाद् ओदनात् सृष्ट इत्याह—**

**तेषां प्रज्ञानाय यज्ञमसृजत ॥ ४ ॥ [५३]**

तेषाम् । प्रऽज्ञानाय । यज्ञम् । असृजत ॥ ४ ॥

तेषां **देवलोकानां** प्रज्ञानाय **प्रकर्षेण ज्ञानाय तत्तल्लोकोपभोग्यसुखसाक्षात्काराय तत्साधनत्वेन इमं** यज्ञम् असृजत **सृष्टवान्** । **यज्ञसृष्ट्यभिधानादेव सर्वजगत्सृष्टिरुक्ता भवति** । 'अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत' ( तै ७,१,१,२ ) **इत्यादिश्रुतेः । स्मर्यते च —**

'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' ( मस्मृ ३,७६ ) **इति ।**

**इत्थं सर्वजगदुपादानभूतस्य ओदनस्य सूर्यमण्डलान्तर्वर्तिहिरण्यगर्भतादात्म्यं विदुषो माहात्म्यं दर्शयति —**

**स य एवं विदुष उपद्रष्टा भवति[2] प्राणं रुणद्धि ॥ ५ ॥ [५४]**

सः । यः । एवम् । विदुषः । उपऽद्रष्टा । भवति[3] । प्राणम् । रुणद्धि ॥ ५ ॥

स यः **यः कश्चन पुरुषः** एवम् **उक्तप्रकारेण** विदुषः **उपासकस्य** उपद्रष्टा भवति **उप समीपे तत्कृतस्य अकामोपनतस्य द्रष्टा साक्षात्कर्ता भवति । तस्य मनसि उपरोधं जनयतीत्यर्थः । स उपरोधकः स्वशरीरे वर्तमानं** प्राणं रुणद्धि **आवृणोति निरुद्धगतिं करोति । प्राणोपासकस्य अनिष्टाचरणाद् इत्यर्थः ।**

**न केवलम् एतावानेव दोषः सर्वफलहानिरपि तस्य स्याद् इत्याह—**

**न च प्राणं रुणद्धि सर्वज्यानिं[4] जीयते ॥ ६ ॥ [५५]**

न । च । प्राणम् । रुणद्धि । सर्वऽज्यानिम् । जीयते ॥ ६ ॥

---

१. °प्रसिद्धः यत्र···संख्याका S'. २. तु. RW.; वैतु. शंपा. भवति. ३. तु. मंपा.; वैतु. P,ξ²,J, Cp भवति. ४. अथ सर्वः सं पै १६,५८,४.

प्राणं रुणद्धि इत्येतावदेव न च, अपि तर्हि सर्वज्यानिम् प्रजापश्वादिरूपस्य सर्वस्य अभिमतस्य वस्तुनः ज्यानिर्हानिर्यथा भवति तथा जीयते हीयते निहीनो भवति। ज्या वयोहानौ। अस्मात् कर्मणि लट्। 'ग्रहिज्या' (पा ६,१,१६) इत्यादिना संप्रसारणम्। जीयत इत्येतावता वयोहानिमात्रं गम्यते। हानेः सर्ववस्तुविषयताप्रतिपत्त्यर्थविशेषणसंबन्धाय ज्यानिं जीयते इति पुनरुक्तिः।

न केवलम् एतावदेव इत्याह —

न च॑ सर्व॒ज्या॒निं जी॒य॒ते॒ पु॒रैनं॑ ज॒रसः॑ प्रा॒णो ज॑हाति ॥ ७ ॥ [५६]

न। च॒। स॒र्व॒ऽज्या॒नि॒म्। जी॒य॒ते॒। पु॒रा। ए॒न॒म्। ज॒रसः॑। प्रा॒णः। ज॒हा॒ति॒ ॥ ७ ॥

सर्वज्यानिं जीयत इति एतावदेव न च, *[अपि तर्हि] एनं निन्दकं जरसः जरावस्थायाः पुरा प्राणो जहाति परित्यजति। म्रियतेऽसावित्यर्थः। एतदुक्तं भवति — विदुषो व्यतिक्रमं दृष्ट्वा निन्दतः पुरुषस्य प्रथमं प्राणरोधो भवति ततः सर्ववस्तुहानिर्भवति ततः अकालमरणम् इति।

इति तृतीयं सूक्तम्।

ऋ. भार्गवो वैदर्भिः, दे. प्राणः

'प्राणाय नमः' इत्यादि सूक्तत्रयम् अर्थसूक्तम्। अनेन उपनयनकर्मणि माणवकस्य नाभिं संस्पृश्य आचार्यो जपेत्। उपनयनं प्रक्रम्य सूत्रितम् — "दक्षिणेन पाणिना [1]नाभिदेशं संस्तभ्य[1] जपति ××× 'आ रभस्व' (अ ८,२), 'प्राणाय नमः' (अ ११,६), 'विषासहिम्' (अ १७,१) इत्यनुमन्त्रयते"[2] (कौसू ५५,१६;१७) इति।

तथा आयुष्कामः अनेनार्थसूक्तेन दक्षिणं कर्णम् अनुमन्त्रयेत।

तथा ऋषिहस्ते आयुष्कामस्य शरीरम् अभिमन्त्रयेत। सूत्रितं हि — " 'आ रभस्व', 'प्राणाय नमः', 'विषासहिम्' इत्यनुमन्त्रयते"[2] (कौसू ५८,३) इति।

तथा अस्यार्थसूक्तस्य आयुष्यगणे पाठाद् 'विश्वकर्मभिरायुष्यैः स्वस्त्ययनैराज्यं जुहुयात्' (कौसू १३९,७) इति होमेषु विनियोगोऽनुसंधेयः।

तथा 'अमृतां दिव्यान्तरिक्षभौमेषु प्रयुञ्जीत' (शांक १७,१) इति विहितायाम् अमृताख्यायां महाशान्तौ अनेनार्थसूक्तेन व्रीहियवमयं मणिं बध्नीयात्। तद् उक्तं शान्तिकल्पे — " 'प्राणाय नमः' इति व्रीहियवम् अमृतायां बध्नीयात्" (शांक १९,१) इति।

तथा ग्रहयज्ञे अनेनार्थसूक्तेन शनैश्चराय हविराज्यहोमं समिदाधानम् उपस्थानं वा कुर्यात्। तद् उक्तं शान्तिकल्पे — " 'सहस्रबाहुः पुरुषः' (अ १९,६), 'केन पार्ष्णी' (अ १०,२), 'प्राणाय नमः' (अ ११,६) इति शनैश्चराय" (शांक १५ ?) इति।

---

१. नाभिदेशेऽभिसं° Bl. २. इत्यभिम° Bl.

**तथा शान्त्यर्थे लक्षहोमे एतद् अर्थसूक्तं होमे विनियुक्तं परिशिष्टे—**"'नमो देववधेभ्यः' (अ ६,१३), 'भवाशर्वौ' (अ ११,२), 'प्राणाय नमः' इति हुत्वा" **इति।**

**प्राणाय नमो यस्य सर्वमिदं वशे।**
**यो भूतः सर्वस्येश्वरो यस्मिन्त्सर्वं प्रतिष्ठितम्॥ १॥**

प्राणाय। नमः। यस्य। सर्वम्। इदम्। वशे।
यः। भूतः। सर्वस्य। ईश्वरः। यस्मिन्। सर्वम्। प्रतिऽस्थितम्॥ १॥

प्राणाय **प्रकर्षेण अनिति सर्वप्राणिशरीरं व्याप्य चेष्टत इति प्राणः समष्टिशरीराभिमानी प्रथमसृष्टो हिरण्यगर्भः।** 'प्राणः प्रजानामुदयत्येष सूर्यः' (प्रउ १,८) **इति,** 'स प्राणमसृजत' (प्रउ ६,४) **इति,** 'कस्मिन्न्वहम् उत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि'[1] (प्रउ ६,३) **इत्यादिश्रुतिभ्यः। तस्मै प्राणाय** नमः **नमस्कारोऽस्तु।** 'अनितेः' (पा ८,४,१९) **इति नकारस्य णत्वम्। तस्य सगुणब्रह्मात्मकत्वं दर्शयति—**यस्य **प्राणस्य** वशे सर्वम् इदं **चराचरात्मकं जगद् वर्तते। एतेन तस्य सकलजगन्नियन्तृत्वम् उक्तम्।** यः **प्राणो** भूतः **भूतकालावच्छिन्नः न तु भविष्यन्। सर्वदा लब्धसत्ताक इत्यर्थः। भू सत्तायाम् इत्यस्मात् कर्तरि निष्ठा।** सर्वस्य **प्राणिजातस्य** ईश्वरः **ईशिता कर्तुम् अकर्तुम् अन्यथा वा कर्तुं शक्तः। ईश ऐश्वर्ये।** 'स्थेशभासपिसकसो वरच्' (पा ३,२,१७५) **इति वरच्प्रत्ययः।** 'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च' (पा २,३,३९) **इति षष्ठी।** यस्मिन् **उदीरितलक्षणे प्राणे परब्रह्मात्मके** सर्वं **समस्तं जगत्** प्रतिष्ठितम्। **कारणभूते तस्मिन् समवायवृत्त्या वर्तत इत्यर्थः। तस्मै प्राणाय नम इति संबन्धः।**

**नमस्ते प्राण[2] क्रन्दाय नमस्ते स्तनयित्नवे।**
**नमस्ते प्राण[2] विद्युते नमस्ते प्राण वर्षते॥ २॥**

नमः। ते। प्राण। क्रन्दाय। नमः। ते। स्तनयित्नवे।
नमः। ते। प्राण। विऽद्युते। नमः। ते। प्राण। वर्षते॥ २॥

**हे** प्राण क्रन्दाय **क्रन्दनशीलाय ध्वनते** ते **तुभ्यं** नमः। **क्रदि आह्वाने रोदने च। इदित्त्वात् नुम्। पचाद्यच्**[3]**। तथा** स्तनयित्नवे **मेघजालं प्रविश्य स्तनितं गर्जितं कुर्वते। स्तन देवशब्दे। अस्माण्ण्यन्ताद् औणादिक इत्नुच्प्रत्ययः।** 'अयामन्ताल्वाय्येत्न्विष्णुषु' (पा ६,४,५५) **इति णेः अयादेशः। एवंभूताय** ते **तुभ्यं** नमः। **हे** प्राण विद्युते

---

१. °ष्यामि इति स प्राणमसृजत् S'. २. ऽस्तु पै १६,२१,२. ३. एवं स्वरो न सिध्यति.

**विद्युदात्मना विद्योतमानाय** ते **तुभ्यं** नमः । **तदनन्तरं** वर्षते **वृष्टिं कुर्वते** ते **तुभ्यम् हे** प्राण नमः **अस्तु** ।

**यत् प्राण [१]स्तनयित्नुनाऽभिक्रन्दत्योषधीः[१] ।**
**प्र वीयन्ते गर्भान् दधतेऽथो[२] बह्वीर्वि जायन्ते ॥ ३ ॥**

यत् । प्राणः । स्तनयित्नुना । अभिऽक्रन्दति । ओषधीः ।
प्र । वीयन्ते । गर्भान् । दधते[३] । अथो इति । बह्वीः । वि । जायन्ते ॥ ३ ॥

यत् **यदा** प्राणः **जगत्प्राणभूतः सूर्यात्मको देवः** स्तनयित्नुना **मेघध्वनिना** ओषधीः **व्रीहियवाद्या ग्राम्याः आरण्याश्च वीरुधः** अभिक्रन्दति **अभिलक्ष्य शब्दायते । यथा गोयूथ-मध्ये दृप्तो वृषभः गर्भम् आधित्सुस्ता अभिलक्ष्य शब्दं करोति तथेत्यर्थः । तदा ता ओषधयः** प्र वीयन्ते **प्राणाभिक्रन्दनमात्रादेव गर्भं गृह्णन्ति । वी गतिव्याप्तिप्रजनकान्त्यसन-खादनेषु । वर्षर्तुः सर्वासामोषधीनां गर्भग्रहणकाल इत्यर्थः । तदानीमेव** गर्भान् दधते **धारयन्ति ।** अथो **अनन्तरमेव** बह्वीः **बह्व्यो बहुप्रकारा** वि जायन्ते **विविधम् उत्पद्यन्ते ।**

**यत् प्राण [४]ऋतावागतेऽभिक्रन्दत्योषधीः[४] ।**
**सर्वं तदा प्र मोदते[५] यत् किं च भूम्यामधि ॥ ४ ॥**

यत् । प्राणः । ऋतौ । आऽगते । अभिऽक्रन्दति । ओषधीः ।
सर्वम् । तदा । प्र । मोदते[६] । यत् । किम् । च । भूम्याम् । अधि ॥ ४ ॥

प्राणो **देवः** ऋतावागते **ऋतुकाले समागते वर्षर्तौ आगते वा** यत् **यदा** ओषधीः अभिक्रन्दति तदा सर्वं प्र मोदते **प्रहृष्यति । मुद हर्षे ।** भूम्याम् अधि **उपरि** यत् किं च **यत् किमपि प्राणिजातं वर्तते । तत् सर्वम् इत्यन्वयः ।**

**यदा प्राणो [७]अभ्यवर्षीद् वर्षेण पृथिवीं महीम्[७] ।**
**पशवस्तत् प्र मोदन्ते महो वै नो भविष्यति ॥ ५ ॥**

यदा । प्राणः । अभिऽअवर्षीत् । वर्षेण । पृथिवीम् । महीम् ।
पशवः । तत् । प्र । मोदन्ते । महः । वै । नः । भविष्यति ॥ ५ ॥

यदा **यस्मिन् काले** प्राणो **देवः** महीं **महतीं** पृथिवीम् **विस्तीर्णां भूमिं** वर्षेण **वृष्टि-कर्मणा** अभ्यवर्षीत् **अभितः सिक्तां करोति** तत् [८]**तदानीं** पशवः[८] **गवाद्याः** प्र मोदन्ते **प्रहृष्य-**

---

१. ऋतावागते अभि° पै १६,२१,३. २. दधते अथो पै. ३. दुधते P,J.
४. स्तनयित्नुनाभि° पै १६,२१,४. ५. मोदते Bʰ,C, पै [मूको.]. ६. मोदते P², J.
७. अभ्यक्रन्दीद् वर्षेण स्तनयित्नुना पै १६,२१,५. ८. तदा···प° S'.

न्ति । केनाभिप्रायेणेत्याह— महो वै उत्सवः खलु नः अस्माकं भविष्यति । वृष्टेरनन्तरं पृथिव्यां भूयांसि सस्यानि उत्पद्यन्ते । तद्भक्षणेन अस्माकं पुष्टिर्भविष्यतीति प्रनृत्यन्तीत्यर्थः ।

अभिवृष्टा[1] ओषधयः प्राणेन समवादिरन् ।
आयुर्वै नः प्रातीतरः[2] सर्वा नः सुरभीरकः ॥ ६ ॥

अभिऽवृष्टाः । ओषधयः । प्राणेन । सम् । अवादिरन् ।
आयुः । वै । नः । प्र । अतीतरः । सर्वाः । नः । सुरभीः । अकः ॥ ६ ॥

प्राणेन देवेन अभिवृष्टाः अभिषिक्ता ओषधयः ग्राम्या आरण्याश्च तेनैव प्राणेन समवादिरन् समवदन्त संभाषणं कृतवत्यः । 'भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः' (पा १,३,४७) इति आत्मनेपदम् । लङि व्यत्ययेन झस्य रन् आदेशः । तस्य 'छन्दस्युभयथा' (३,४,११७) इति आर्धधातुकत्वाद् इडागमः । उपधावृद्धिश्छान्दसी । संवदनप्रकारमेव दर्शयति— आयुः इति । हे प्राण नः अस्माकम् आयुः जीवनं त्वं प्रातीतरः प्रावर्धयः । प्रपूर्वस्तरतिर्वर्धनार्थः । अस्माण्ण्यन्तात् लुङि चङि रूपम् । तथा नः अस्मान् सर्वाः । 'बहुवचनस्य वस्नसौ' ( पा ८,१,२१ ) इति द्वितीयान्तस्य अस्मदो नस् आदेशः । सुरभीः शोभनगन्धयुक्ता अकः अकार्षीः । डुकृञ् करणे । अस्माल्लुङि 'मन्त्रे घस०' ( पा २,४,८० ) इति च्लेर्लुक् । 'हल्ङ्याब्भ्यः०' ( पा ६,१,६८ ) इति तिलोपः ।

नमस्ते अस्त्वायते[3] नमो अस्तु[4] परायते ।
नमस्ते प्राण[5] तिष्ठत आसीनायोत ते नमः ॥ ७ ॥

नमः । ते । अस्तु । आऽयते । नमः । अस्तु । पराऽयते ।
नमः । ते । प्राण । तिष्ठते । आसीनाय । उत । ते । नमः ॥ ७ ॥

हे प्राण आयते आगच्छते ते तुभ्यं नमोऽस्तु । तथा परायते पराङ्मुखं गच्छते तुभ्यं नमोऽस्तु । हे प्राण तिष्ठते यत्रक्वापि अवस्थिताय ते तुभ्यं नमः अस्तु । आसीनाय उपविष्टाय ते तुभ्यं नमः अस्तु । उतशब्दः अप्यर्थे । आगमनादिक्रियाः सर्वाः प्राणव्यापारनिर्वर्त्या इति तत्तदवस्थापन्नस्य नमस्कार्यत्वम् ।

नमस्ते प्राण प्राणते नमो अस्त्वपानते ।

---

१. अभिवृष्ट्या B,S. २. प्राचीचरस् पै १६,२१,६. ३. अ नास्ति D,S^m,K, अ ११,२,१५ पै १६,२१,८. ४. अ नास्ति B, पै. ५. रुद्र अ ११,२,१५.

**प्राचीनाय ते नमः प्रतीचीनाय ते नमः सर्वस्मै त इदं नमः ॥ ८ ॥**

नमः । ते । प्राण । प्राणते । नमः । अस्तु । अपानते । पराचीनाय ।
ते । नमः । प्रतीचीनाय । ते । नमः । सर्वस्मै । ते । इदम् । नमः ॥ ८ ॥

हे प्राण देव प्राणते प्राणनव्यापारं कुर्वते ते तुभ्यं नमोस्तु । तथा अपानते अपानन-व्यापारं कुर्वते अपानवृत्त्यात्मकाय[1] तुभ्यं नमः अस्तु । तथा पराचीनाय पराञ्चनाय पराग-मनस्वभावाय देहाद् बहिरवस्थिताय ते तुभ्यं नमः अस्तु । तथा प्रतीचीनाय प्रतिमुखम् अञ्चते देहमध्ये वर्तमानाय ते तुभ्यं नमः अस्तु । 'विभाषाञ्चेरदिक्स्त्रियाम्' ( पा ५,४,८ ) इति स्वार्थिकः खः । किं बहुना सर्वस्मै सर्वव्यापारकर्त्रे सर्वप्राणिशरीरान्तर्वर्तिने ते तुभ्यं इदं नमः अयं नमस्कारो भवतु । 'सर्वस्य सुपि' (पा ६,१,१९१) इति आद्युदात्तत्वम् ।

**या ते प्राण प्रिया तनूर्यो[2] ते प्राण प्रेयसी[3] ।**
**अथो[4] यद् भेषजं तव तस्य नो धेहि जीवसे ॥ ९ ॥**

या । ते । प्राण । प्रिया । तनूः । यो इति । ते । प्राण । प्रेयसी ।
अथो इति । यत् । भेषजम् । तव । तस्य । नः । धेहि । जीवसे ॥ ९ ॥

हे प्राण ते तव या प्रिया प्रीतिविषया तनूः शरीरम् अस्ति तथा हे प्राण ते तव यौ[5] । लिङ्गव्यत्ययः । ये प्रेयसी प्रियतमरूपे प्राणापानवृत्तिद्वयात्मके अग्नीषोम-रूपे वा । अथो अपि च तव संबन्धि यद् भेषजम् अमृतत्वप्रापकम् औषधम् अस्ति तस्य सर्वस्य प्रियतनुप्रभृतिकस्य सकाशात् नः अस्माकं जीवसे जीवनाय धेहि अमृतत्वसाधनम् औषधं प्रयच्छ ।

**प्राणः प्रजा अनु वस्ते[6] पिता पुत्रमिव प्रियम् ।**
**प्राणो ह सर्वस्येश्वरो यच्च प्राणति यच्च न ॥ १० ॥**

प्राणः । प्रऽजाः । अनु । वस्ते । पिता । पुत्रम्ऽइव । प्रियम् ।
प्राणः । ह । सर्वस्य । ईश्वरः । यत् । च । प्राणति । यत् । च । न ॥ १० ॥

प्राणो देवः प्रजाः प्रजायमाना देवतिर्यङ्मनुष्याद्याः अनु वस्ते अनुक्रमेण च्छादयति । तच्छरीराणि नाडीद्वारा व्याप्य वर्तते इत्यर्थः । वस आच्छादने । अदादित्वात् शपो लुक् । तत्र दृष्टान्तः—पिता पुत्रमिव । यथा पिता प्रियम् स्निग्धं

---

१. अपानावृत्त्या° S'. २. यौ सा.; यां पै १६,२१,९. ३. प्रेयसी > प्रेयसि B; प्रेयसि Cs. ४. अथा B. ५. वैतु. मंपा. ६. अनूपास्ते पै १६,२१,१०.

पुत्रं वस्त्रेण स्वकीयेन आच्छादयति तथेत्यर्थः । यच्च जङ्गमात्मकं वस्तु प्राणति प्राणनव्यापारं करोति यच्च स्थावरात्मकं न प्राणति प्राणनव्यापारं न करोति । किं तु आत्माविनाभूतः प्राणः स्थावरेषु निरुद्धगतिरेव अन्तर्वर्तते । तस्य सर्वस्य स्थावरजङ्गमात्मनो जगतः प्राणः खलु ईश्वरः ईशिता स्वामी ।

इति चतुर्थं सूक्तम् ।

'प्राणो मृत्युः' इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।

प्राणो मृत्युः [1]प्राणस्तक्मा[1] प्राणं देवा[2] उपासते ।
प्राणो ह सत्यवादिनमुत्तमे लोक आ दधत् ॥ ११ ॥

प्राणः । मृत्युः । प्राणः । तक्मा । प्राणम् । देवाः । उप । आसते ।
प्राणः । ह । सत्यऽवादिनम् । उत्ऽतमे । लोके । आ । दधत् ॥ ११ ॥

प्राणः एव देवो मृत्युः स्वनिर्गमनेन सर्वप्राणिनां मरणस्य कर्ता । स एव प्राणस्तक्मा कृच्छ्रजीवनकरो ज्वरादिरोगः । तथा तं प्राणम् देहमध्यवर्तिनं देवाः इन्द्रियाणि उपासते । स्वस्वविषयोपभोगाय सेवन्त इत्यर्थः । यद्वा प्राणम् हिरण्यगर्भं समष्ट्यात्मकम् अग्न्यादयो देवा उपासते । स एव प्राणः सत्यवादिनम् सत्यं यथार्थं वदितुं शीलम् अस्य स तथोक्तः । सत्यवदनशीलं महानुभावम् उत्तमे उत्कृष्टतमे लोके आ दधत् आदधाति स्थापयति ।

प्राणो विराट् प्राणो देष्ट्री प्राणं सर्व उपासते ।
प्राणो ह सूर्यश्चन्द्रमाः प्राणमाहुः प्रजापतिम् ॥ १२ ॥

प्राणः । विऽराट् । प्राणः । देष्ट्री । प्राणम् । सर्वे । उप । आसते ।
प्राणः । ह । सूर्यः । चन्द्रमाः । प्राणम् । आहुः । प्रजाऽपतिम् ॥ १२ ॥

प्राणः एव देवो विराट् स्थूलप्रपञ्चाभिमानी ईश्वरः । तथा प्राणो देष्ट्री स्वस्वव्यापारेषु सर्वेषां प्रेरयित्री परदेवता । तथाविधं प्राणं सर्वे जना उपासते स्वाभिलषितफलसिद्ध्यर्थं सेवन्ते । प्राण एव सूर्यः सर्वस्य प्रेरक आदित्यः । तथा चन्द्रमाः अमृतमयः सोमोऽपि स एव । एतेन प्राणस्य अग्नीषोमात्मकत्वम् उक्तम् । तथाविधमेव प्राणं प्रजापतिम् प्रजानां स्रष्टारं देवम् आहुः अभिज्ञाः कथयन्ति । 'पत्यावैश्वर्ये' ( पा ६,२,१८ ) इति पूर्वपदप्रकृतिस्वरत्वम् ।

---

१. प्राणो अमृतं पै १६,२२,१. २. देव B.

प्राणापानौ व्रीहियवावनड्वान् प्राण उच्यते ।
[1]यवे ह[1] प्राण आहितोपानो व्रीहिरुच्यते ॥ १३ ॥

प्राणापानौ । व्रीहिऽयवौ । अनड्वान् । प्राणः । उच्यते ।
यवे । ह । प्राणः । आऽहितः । अपानः । व्रीहिः । उच्यते ॥ १३ ॥

प्राणश्च अपानश्च प्राणापानौ मुख्यस्य प्राणस्य प्रधानभूतौ वृत्तिविशेषौ। तावेव व्रीहिश्च यवश्च व्रीहियवौ। प्राणापानात्मकौ तावित्यर्थः। यो वृत्तिमान् मुख्यः प्राणः सः अनड्वान् उच्यते । व्रीहियवयोः कर्षणेन उत्पादयिता बलीवर्दो वृत्तिमत्प्राणात्मना ज्ञातव्य इत्यर्थः। उक्तमेवार्थं विवृणोति — यवे ह यवे खलु प्राणः प्राणवृत्त्यात्मको वायुः आहितः स्रष्ट्रा स्थापितः । अपानः अपानवृत्त्यात्मकस्तु वायुः व्रीहिरुच्यते। व्रीहिषु अवस्थानेन तदात्मकः कथ्यत इत्यर्थः। अत एव तौ व्रीहियवौ ओषधीषु मध्ये पुष्टिकरत्वेन सर्वप्राणिभिरुपजीव्यौ। अतो लोकरक्षणाय प्राण एव व्रीहियवानडुद्रूपेण कथ्यत इत्यर्थः।

अपानति प्राणति पुरुषो गर्भे अन्तरा ।
[2]यदा त्वं प्राण जिन्वस्यथ[†] स जायते पुनः[2] ॥ १४ ॥

अप । अनति । प्र । अनति । पुरुषः । गर्भे । अन्तरा ।
यदा । त्वम् । प्राण । जिन्वसि । अथ । सः । जायते । पुनः ॥ १४ ॥

अन्नात्मकत्वं[3] प्राणस्य उक्तम् । तद्रसपरिणामरूपशरीरधारी पुरुषो गर्भे स्त्रिया गर्भाशये अन्तरा मध्ये अपानति हे प्राण त्वत्प्रवेशेन अपानव्यापारं करोति प्राणति प्राणनव्यापारं करोति च । हे प्राण [4]शुक्रशोणितावस्थायामेव पुरुषशरीरं प्रविश्य तत्परिणामाय प्राणापानवृत्ती जनयसीत्यर्थः। हे प्राण त्वं यदा यस्मिन् काले जिन्वसि गर्भीभूतं पुरुषं मातृभुक्ताहारपरिणतान्नरसेन प्रीणयसि । पुष्यसीत्यर्थः[5] । जिवि प्रीणने। इदित्त्वात् नुम् । अथो[6] अनन्तरमेव स पुरुषः पुनर्जायते स्वार्जितपरिपक्वपुण्यपापफलोपभोगाय पुनर्भूम्याम् उत्पद्यते । प्राण एव सर्वस्योत्पादक इत्यर्थः।

प्राणमाहुर्मातरिश्वानं वातो ह प्राण उच्यते ।
प्राणे ह भूतं भव्यं च प्राणे सर्वं प्रतिष्ठितम्[7] ॥ १५ ॥

---

१. यवेन P³,M,W. २. या वा प्राण त्वं जिन्वः स दम्ब वायसे त्वत् ? पै १६,२२,४. † °स्यथो S. ३. अनात्म° S′. ४. शुक्रशो° S′. ५. पुष्यतीत्यर्थः S′. ६. वैतु. मंपा. ७. समाहितम् पै १६,२२,५.

प्राणम् । आहुः । मातरिश्वानम् । वातः । ह । प्राणः । उच्यते ।
प्राणे । ह । भूतम् । भव्यम् । च । प्राणे । सर्वम् । प्रतिऽस्थितम् ॥ १५ ॥

मातरिश्वानम् । **मातरि अन्तरिक्षे श्वसिति वर्तत इति मातरिश्वा अन्तरिक्षाधिपतिर्वायुः । तं वायुं** प्राणं **प्राणात्मकम्** आहुः । 'वायुः प्राणो भूत्वा नासिके प्राविशत्' ( ऐआ २,४,२ ) **इति श्रुतेः**[1] । **उक्त एवार्थो व्यतिहारेण दृढीक्रियते** — वातो ह प्राण उच्यते इति । 'सैषानस्तमिता देवता यद् वायुः' ( बृउ १,५,२२ ) **इति सर्वजगदाधारभूतः सूत्रात्मा यो** वातः **सदागमनशीलो वायुः स एव** प्राण उच्यते । **अतो नानयोर्भेद इत्यर्थः । तस्मिन्** प्राणे **जगदाधारभूते सूत्रात्मनि** भूतम् **भूतकालावच्छिन्नम् उत्पन्नं जगत्** भव्यम् **भविष्यत्कालावच्छिन्नम् उत्पत्स्यमानं जगत् । तद् उभयम् आश्रितं वर्तते । किं बहुना तस्मिन्** प्राणे सर्वम् **इदं जगत्** प्रतिष्ठितम् **आश्रितम्** ।

**[2]आथर्वणीराङ्गिरसीर्दैवीर्मनुष्यजा[3] उत ।**
**[4]ओषधयः प्र जायन्ते[4] यदा त्वं प्राण जिन्वसि ॥ १६ ॥**

आथर्वणीः[2] । आङ्गिरसीः । दैवीः । मनुष्यऽजाः । उत ।
ओषधयः । प्र । जायन्ते । यदा । त्वम् । प्राण । जिन्वसि ॥ १६ ॥

आथर्वणीः **अथर्वणा महर्षिणा सृष्टा** आङ्गिरसीः **अङ्गिरोभिः सृष्टाः । उभयत्र तस्येदमर्थे अण् ।** दैवीः **देवैः सृष्टाः** । 'देवाद् यञञौ' ( पावा ४,१,८५ ) **इति प्राग्दीव्यतीयः अञ्प्रत्ययः । सर्वत्र** 'टिड्ढाणञ्°' ( पा ४,१,१५ ) **इति ङीप्** । 'वा छन्दसि' ( पा ६,१,१०६ ) **इति जसि पूर्वसवर्णदीर्घः** । मनुष्यजाः **मनुष्येभ्य उत्पन्नाः** । उत**शब्दः अप्यर्थे । एवं नानाविधा** ओषधयः प्र जायन्ते **प्रकर्षेण उत्पद्यन्ते** हे प्राण त्वं यदा **यस्मिन् काले** जिन्वसि **वृष्टिप्रदानेन प्रीणयसि** ।

**यदा प्राणो अभ्यवर्षीद् वर्षेण पृथिवीं महीम् ।**
**ओषधयः प्र जायन्तेऽथो[5] याः काश्च वीरुधः ॥ १७ ॥**

यदा । प्राणः । अभिऽअवर्षीत् । वर्षेण । पृथिवीम् । महीम् ।
ओषधयः । प्र । जायन्ते । अथो इति । याः । काः । च । वीरुधः ॥ १७ ॥

**पूर्वोऽर्धर्चो व्याख्यातः** (५) । ओषधयो **व्रीहियवाद्याः वृष्ट्यनन्तरमेव** प्र जायन्ते । अथो **अपि च** याः काश्च वीरुधः **विरोहणशीला लतारूपा आरण्याः ता अपि सर्वाः प्रजायन्ते** ।

---

१. —तः S'. २. अथर्व° B,P. ३. °मनुषजा पै १६,२२,६. ४. सर्वाः प्रमोदन्त्वोषधीर् पै. ५. जायन्तेऽथो V,B,B^h,C,K,Cs,WM.; मोदन्ते अथो पै १६,२२,७.

यस्ते प्राणेदं वेद यस्मिंश्चासि प्रतिष्ठितः ।
सर्वे[1] तस्मै बलिं हरानमुष्मिंल्लोक उत्तमे ॥ १८ ॥

यः । ते । प्राण । इदम् । वेद । यस्मिन् । च । असि । प्रतिऽस्थितः ।
सर्वे । तस्मै । बलिम् । हरान् । अमुष्मिन् । लोके । उत्ऽतमे ॥ १८ ॥

हे प्राण ते त्वदीयम् इदम् उदितं माहात्म्यं यो वेद जानाति यस्मिंश्च विदुषि त्वं प्रतिष्ठितोऽसि उदीरितमहिमोपेतत्वेन भाव्यमानो भवसि तस्मै विदुषे[2] सर्वे देवाः अमुष्मिन् स्वर्गे उत्तमे उत्कृष्टतमे लोके बलिम् अमृतमयं भागं हरान् हरन्ति । हरतेर्लेटि आडागमः । इतश्च लोपः०' (पा ३,४,९७) इति इकारलोपः । संयोगान्तलोपः ।

यथा[3] प्राण बलिहृतस्तुभ्यं सर्वाः प्रजा इमाः ।
[4]एवा तस्मै[5] बलिं हरान् यस्त्वा [6]शृणवत् सुश्रवः[7] ॥ १९ ॥

यथा । प्राण । बलिऽहृतः । तुभ्यम् । सर्वाः । प्रऽजाः । इमाः ।
एव । तस्मै । बलिम् । हरान् । यः । त्वा । शृणवत् । सुऽश्रवः ॥ १९ ॥

हे प्राण सर्वा इमाः प्रजाः देवतिर्यङ्मनुष्याद्याः यथा येन प्रकारेण तुभ्यं त्वदर्थं बलिहृतः बलेर्भोक्तव्यस्य अन्नस्य हर्तारः उपहर्तारो भवन्ति एव एवं तस्मै विदुषे बलिं हरान् हरन्तु प्रयच्छन्तु । हे शुश्रुवः[6] शृण्वन् प्राण त्वा त्वां यः शृणवत् शृणुयात् तव माहात्म्यप्रतिपादकं मन्त्रजातं श्रवणेन्द्रियेण जानीयात् । तस्मै इति संबन्धः । शृणवत् इति । श्रु श्रवणे । अस्मात् लेटि अडागमः । 'श्रुवः शृ च' (पा ३,१,७४) इति श्नुप्रत्ययः शृभावश्च । शुश्रुव इति । तस्मादेव धातोर्लिटः क्वसुः ।

अन्तर्गर्भश्चरति देवतास्वाभूतो भूतः स उ जायते पुनः ।
स भूतो[7] भव्यं भविष्यत् पिता पुत्रं प्र विवेशा[8] शचीभिः ॥ २० ॥

अन्तः । गर्भः । चरति । देवतासु । आऽभूतः । भूतः । सः । ऊं इति । जायते । पुनः ।
सः । भूतः । भव्यम् । भविष्यत् । पिता । पुत्रम् । प्र । विवेश । शचीभिः ॥ २० ॥

देवतासु देवेषु अन्तः मध्ये गर्भः सन् प्राणः चरति । न केवलं मनुष्यादिष्वित्यर्थः । आभूतः आ समन्ताद् व्याप्तो भूतः नित्यः सन् स उ स एव प्राणः पुनर्जायते । तत्तच्छरीरेण सह पुनरुत्पद्यत इवेत्यर्थः । भूतः नित्यवर्तमानः स प्राणः

---

१. एवा पै १६,२२,८. २. सर्वविदुषे S'. ३. यदा पै १६,२२,९. ४. सर्वे अस्मै पै. ५. शुश्राव सुश्रवाः पै. ६. वैतु. मंपा. ७. भूतं पै १६,२२,१०. ८. विवेश Km,K,V,MW.

भूतम्[1] भूतकालावच्छिन्नं वस्तु भविष्यत् भाविकालावच्छिन्नम् उत्पत्स्यमानं च वस्तु शचीभिः आत्मीयाभिः शक्तिभिः प्र विवेश । पिता पुत्रम् । लुप्तोपमम् एतत् । यथा पिता स्वकीयं पुत्रं स्वावयवैरनुप्रविशति तथेत्यर्थः । अथवा प्राण एव हि सर्वस्य लोकस्य पिता जनकः । सोऽयं पुत्रम् स्वस्माद् उत्पन्नं पुत्रभूतं सर्वं जगत् सात्मकं कर्तुं प्रविवेशेत्यर्थः ।

इति पञ्चमं सूक्तम् ।

एकं पादम्' इति सूक्तस्यापि पूर्ववद् विनियोगः ।

एकं॒ पादं॒ नोत्खि॑दति सलि॒लाद्धं॒स उ॒च्चर॑न्[2] ।
यद॒ङ्ग[3] स त॒मु॑त्खि॒दे॒न्नै॒वाद्य न श्वः स्या॒न्न रात्री॒ नाहः॑[4] स्या॒न्न [5]व्यु॒च्छे॒त् क॒दा च॒न[5] ॥२१

एक॑म् । पाद॑म् । न । उत् । खि॒द॒ति॒ । स॒लि॒लात् । हं॒सः । उ॒त्ऽचर॑न्[6] । यत् । अ॒ङ्ग । सः ।
तम् । उ॒त्ऽखि॒देत् । न । ए॒व । अ॒द्य । न । श्वः । स्या॒त् । न । रात्री॑ । न । अह॑ः । स्या॒त् ।
न । वि । उ॒च्छे॒त् । क॒दा । च॒न ॥ २१ ॥

हन्ति गच्छतीति हंसः जगत्प्राणभूतः सूर्यः । स सलिलाद् उच्चरन् उद्गच्छन् । उद्यन्नित्यर्थः । एकं पादं नोत्खिदति नोद्धरति । एकं पादं निश्चलं स्थापयित्वा एकेनैव पादेन परिभ्रमतीत्यर्थः । तथा च मन्त्रवर्णः — 'तं सूर्यं देवम् अजम् एकपादम्' ( तैब्रा ३,१,२,८ ) इति । अङ्ग हे देवदत्त स उच्चरन् सूर्यः यत् यदि तं निहितं पादम् उत्खिदेत् क्षिपेत् तर्हि असौ द्वाभ्यां पादाभ्याम् अस्मदादिवद् यत्रकापि गच्छेत् निषीदेद् वा । तथा च कालपरिच्छेदकस्य [7]सूर्यस्य परिस्पन्दाभावात्[7] अद्य श्वः रात्री अहः इत्येवं विभिन्नव्यवहारो न स्यात् । 'रात्रेश्चाजसौ' ( पा ४,१,३१ ) इति रात्रिशब्दात् ङीप् । कदा चन कदाचिदपि न व्युच्छेत् । व्युच्छनम् उषसः प्रादुर्भावः । सूर्यस्योदयेऽसंभाव्यमाने तत्पुरोभाविनी उषा [8]अपि नोदियात्[8] । तथा च जगदान्ध्यमेव स्याद् इत्यर्थः ।

अथवा हन्ति गच्छति कृत्स्नशरीरं व्याप्य वर्तत इति हंसः प्राणः । सलिलात् सलिलोपलक्षितात् पाञ्चभौतिकाद् देहाद् उच्चरन् प्राणवृत्त्यात्मना ऊर्ध्वं गच्छन् एकं पादम् अपानवृत्त्यात्मकं नोत्खिदति नोत्क्षिपति । यदि स प्राणस्तमपि अपानात्मकं पादम् उत्खिदेत् शरीराद् उत्क्षिपेत् तदा प्राणस्य [9]कार्त्स्न्येन शरीरतो[9]

---

१. वैतु. मंपा. २. उत्पतन् पै १६,२३,१. ३. यदि पै. ४. नाहं A,B, D,E,K,K^m,R,S^m,V,Cs. ५. प्रज्ञातं तु किं चन पै. ६. °रंत् P. ७. सूर्यपरि° S'. ८. अप्युदियात् S'. ९. न शरीरतो नास्ति S'.

निर्गतत्वात् मृतशरीरस्य तस्य अद्य श्वः रात्रिः अहः इत्येवमात्मकः कालविभागो न स्यात् । कदाचिदपि न व्युच्छेत् तमसो निवृत्तिर्न स्यात् । अतः जगत् सजीवं कर्तुम् एकं पादं नोत्खिदतीत्यर्थः ।

अ॒ष्टाच॑क्रं[1] वर्तत॒ एक॑नेमि स॒हस्रा॑क्षरं॒ प्र पु॒रो नि प॒श्चा[2] ।
अ॒र्धेन॒ विश्वं॒ भुव॑नं ज॒जान॒ यद॑स्या॒र्धं [3]कत॒मः स के॒तुः[3] ॥ २२ ॥

अ॒ष्टाऽच॑क्रम् । व॒र्त॒ते॒ । एक॑ऽनेमि । स॒हस्र॑ऽअक्षरम् । प्र । पु॒रः । नि । प॒श्चा[4] ।
अ॒र्धेन॑ । विश्व॑म् । भुव॑नम् । ज॒जान॑ । यत् । अ॒स्य॒ । अ॒र्धम् । क॒त॒मः । सः । के॒तुः ॥२२॥

अष्टाचक्रम् त्वगसृगाद्याः सप्त धातवः ओजो नाम अष्टमो धातुः । तेऽत्र रथात्मना वर्णनीयस्य शरीरस्य चक्रत्वेन रूप्यन्ते । अष्टौ चक्राणि यस्य तद् अष्टाचक्रं शरीरम् । 'छन्दसि च' ( पा ६,३,१२६ ) इति अष्टनो दीर्घः । तादृक् शरीरम् एकनेमि एकेनैव प्राणेन नेमिनेव वेष्टितम् । लोके हि रथचक्रं नेमिवेष्टितमेव प्रवर्तते । अत्र तु चक्राष्टकमपि एक एव प्राणात्मको नेमिः आवेष्ट्य वर्तयतीत्यर्थः । सहस्राक्षरम् बहुभिरक्षैरुपेतम् । रो मत्वर्थीयः । यद्वा प्राणपरिस्पन्दवशेन सहस्रं बहुविधानि अक्षराणि वर्णावर्णात्मकानि शब्दरूपाणि यस्य तत् तथोक्तम् । यद्वा । अश्नोतेः औणादिकः सरप्रत्ययः । बहुविधव्याप्तिकम् इत्यर्थः । एवं रथात्मकं शरीरं पुरः पुरस्तात् पूर्वस्मिन् भागे प्र वर्तते पश्चात्[5] अपरभागे नि वर्तते । इत्थं महानुभावः प्राणः प्राणिशरीरं प्रविश्य तत्र प्रवृत्तिनिवृत्ती जनयतीत्यर्थः । शरीरस्य रथत्वेन रूपणम् अन्यत्रापि आम्नातम्— 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' ( कउ १,३,३ ) इत्यादिना । स प्राणः सूत्रात्मभावेन स्थितः अर्धेन स्वात्मनोंऽशेन एकेन विश्वम् सर्वं भुवनम् भूतजातं जजान प्राणवाय्वात्मना प्रविश्य जनयामास । अस्य सूत्रात्मनः प्राणस्य यद् अन्यद् अर्धम् प्राणरूपेणावस्थिताद् अपरो भागः तस्यापरिच्छिन्नस्य केतुः कतमः कीदृशः । परब्रह्मात्मकस्य प्राणस्य एकदेश एव कृत्स्नं जगद् वर्तते । अवशिष्टं स्वरूपम् आनन्त्याद् इदम् ईदृग् इति निर्धारयितुम् अशक्यम् इत्यर्थः । श्रूयते हि—'पादोऽस्य विश्वा भूतानि त्रिपाद् अस्यामृतं दिवि' ( ऋ १०,९०,३ ) इति । स्मृतिश्च भवति —'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' ( भगी १०,४२ ) इति ।

यो अ॒स्य वि॒श्वज॑न्मन॒ ईशे॒ विश्व॑स्य॒ चेष्ट॑तः ।
अन्ये॑षु क्षि॒प्रध॑न्वने॒ तस्मै॑ प्राण॒ नमो॑ऽस्तु ते ॥ २३ ॥

---

१. एकचक्रं अ १०,८,७. तद् बभूव अ.; किमु तस्य केतुः पै.
२. प॒श्चात् O,V,K, सा. पै १६,२३,२.
३. क॑ं१
४. प॒श्चात् P; प॒श्चात् > प॒श्चा Cp.
५. वैतु. संपा.

यः । अस्य । विश्वऽजन्मनः । ईशे । विश्वस्य । चेष्टतः ।
अन्येषु । क्षिप्रऽधन्वने । तस्मै । प्राण । नमः । अस्तु । ते ॥ २३ ॥

यः **प्राणो** विश्वजन्मनः **विश्वानि सर्वाणि नानारूपाणि जन्मानि यस्य तत् तथोक्तम् तस्य** चेष्टतः **व्याप्रियमाणस्य** अस्य विश्वस्य **सर्वस्य जगतः** ईशे **ईष्टे। ईश ऐश्वर्ये।** 'लोपस्त आत्मनेपदेषु' ( पा ७,१,४१ ) **इति तलोपः।** अन्येषु **प्राणिशरीरेषु** क्षिप्रधन्वने **क्षिप्रं गच्छते व्याप्नुवते। धविर्गत्यर्थः। इदित्त्वात् नुम्।** 'कनिन् युवृषितक्षिराजिधन्वि' (पाउ १,१५४) **इत्यादिना कनिन्प्रत्ययः। हे** प्राण तस्मै **तथाविधाय** ते **तुभ्यं** नमोऽस्तु।

**यो अस्य सर्वजन्मन ईशे सर्वस्य चेष्टतः ।**
**अतन्द्रो ब्रह्मणा धीरः प्राणो 'मानु तिष्ठतु' ॥ २४ ॥**

यः । अस्य । सर्वऽजन्मनः । ईशे । सर्वस्य । चेष्टतः ।
अतन्द्रः । ब्रह्मणा । धीरः । प्राणः । मा । अनु । तिष्ठतु ॥ २४ ॥

**पूर्वोऽर्धर्चो व्याख्यातः** (२३)**। विश्वशब्दस्य स्थाने सर्वशब्द एव विशेषः। स जगदीश्वरः** प्राणः अतन्द्रः **आलस्यरहितः सर्वदा सर्वत्र** [2]**संचरिष्णुः** धीरः[2] **धिया ज्ञानशक्त्या युक्तः** ब्रह्मणा **सर्वगतब्रह्मात्मकेन अनवच्छिन्नेन रूपेण** मा **माम्** अनु तिष्ठतु **अनुवर्तताम्।**

**ऊर्ध्वः सुप्तेषु[3] जागार[4] ननु तिर्यङ् नि पद्यते ।**
**न सुप्तमस्य सुप्तेष्वनु शुश्राव[5] कश्चन ॥ २५ ॥**

ऊर्ध्वः । सुप्तेषु । जागार । ननु । तिर्यङ् । नि । पद्यते ।
न । सुप्तम् । अस्य । सुप्तेषु । अनु । शुश्राव[6] । कः । चन ॥ २५ ॥

**हे प्राण त्वम्** ऊर्ध्वः **उत्थितः सन्** सुप्तेषु **निद्रापरवशेषु प्राणिषु** जागर[7] **जागृहि तद्रक्षणार्थं निद्रारहितो वर्तस्व। जागृ निद्राक्षये। लोटि** 'बहुलं छन्दसि' ( पा २,४,७३ ) **इति शपो लुगभावः। जागरणे कारणम् आह—**ननु **इति।** सुप्तः **प्राणी** तिर्यङ् **तिर्यगवस्थितः** नि पद्यते **निद्रापरवशः शेते।** ननु **इति प्रश्ने। अतस्त्वं जागृहीत्यर्थः। प्राणस्यापि सुप्तिः किं न स्याद् इति तत्राह—**न सुप्तम् **इति। प्राणिषु** सुप्तेषु **निद्रापरवशेषु सत्सु तच्छरीरमध्यवर्तिनः** अस्य **प्राणस्य** सुप्तम्

---

१. मामभि रक्षतु पै १६,२३,४. २. सं S'. ३. स्वप्नेषु पै १६,२३,५. ४. जागर V,K,S, सा. पै. ५. सुश्राव D,S^m,Cs. ६. सुश्राव P,P^2,J; ७. वैतु. संपा.

स्वापं कश्चन कोऽपि पुरुषः न अनु शुश्राव अनु पारंपर्यक्रमेण श्रुतवान् । प्राणस्वपनस्य वक्ता श्रोता च दुर्लभ इत्यर्थः ।

प्राण मा मत्[1] पर्यावृतो न मदन्यो[1] भविष्यसि ।
अपां गर्भमिव जीवसे प्राण बध्नामि त्वा मयि ॥ २६ ॥

प्राण । मा । मत्[2] । परिऽआवृतः । न । मत्[3] । अन्यः । भविष्यसि ।
अपाम् । गर्भम्ऽइव । जीवसे । प्राण । बध्नामि । त्वा । मयि ॥ २६ ॥

हे प्राण मत् मत्सकाशात् मा पर्यावृतः पराङ्मुखो मा भूः । वृतु वर्तने । अस्मात् माङि लुङि 'द्युद्भ्यो लुङि' (पा १,३,९१) इति परस्मैपदम् । 'पुषादिद्युताद्यॢदितः' (पा ३,१,५५) इति च्लेः अङ् आदेशः । पर्यावृत्त्यसंभवम् आह—हे प्राण त्वं मत् मत्सकाशाद् अन्यो न भविष्यसि मया सह तादात्म्यापन्न एव वर्तसे । अतः पर्यावृत्तिशङ्काऽपि न संभवतीत्यर्थः । अतो हे प्राण त्वा त्वां मयि मच्छरीरे जीवसे जीवनाय बध्नामि आसजामि । अपां गर्भमिव *[यथा] अपाम् उदकानां गर्भभूतं वैश्वानराग्निं जीवनार्थं देहमध्ये धारयन्ति तथेत्यर्थः । अग्नेः अब्गर्भत्वं मन्त्रवर्णाद् अवगम्यते—'अपां गर्भं दर्शतमोषधीनाम्' (ऋ १,१६४,५२) इति, 'गर्भो[4] विश्वस्य भूतस्याग्ने गर्भो अपामसि' (तै ४,२,३,३) इति च ।

इति षष्ठं सूक्तम् ।

इति सायणाचार्यविरचिते अथर्वसंहिताभाष्ये एकादशे काण्डे द्वितीयोऽनुवाकः ।

ऋ: ब्रह्मा, दे: ब्रह्मचारी

तृतीयेऽनुवाके पञ्च सूक्तानि । तत्र 'ब्रह्मचारीष्णंश्चरति' इत्यादिभिस्त्रिभिः सूक्तैर्ब्रह्मचारिणो माहात्म्यम् उच्यते । तस्य ब्रह्मयज्ञजपे[5] विनियोगः ।

ब्रह्मचारीष्णंश्चरति रोदसी उभे तस्मिन्[6] देवाः संमनसो[7] भवन्ति ।
स दाधार पृथिवीं [8]दिवं च[8] स आचार्यं[9] तपसा पिपर्ति[10] ॥ १ ॥

ब्रह्मचारी । इष्णन् । चरति । रोदसी इति । उभे इति । तस्मिन् । देवाः । समऽमनसः ।
भवन्ति । सः । दाधार । पृथिवीम् । दिवम् । च । सः । आऽचार्यम् । तपसा । पिपर्ति ॥ १ ॥

---

१. मं° A,Bh,C,D,E,Km,R,Sm,O. २. मत् P,J; मत् > मत् Cp. ३. मत् J; मत् > मत् Cp. ४. अग्ने S'. ५. °जप S'. ६. अस्मिन् पै १६,१५३,१; यस्मिन् पै [मूको.]. ७. सुमनसो पै. ८. द्यामुतामूं पै. ९. आचार्यं३ A,B,Bh, C,D,E,Km,R,Sm,Cs. १०. बिभर्त्ति पै.

ब्रह्मचारी ब्रह्मणि वेदात्मके अध्येतव्ये चरितुं[1] शीलम् अस्य स तथोक्तः उभे रोदसी द्यावापृथिव्यौ इष्णन् आत्मीयेन तपसा अभीक्ष्णं व्याप्नुवन् चरति स्वनियमे प्रवर्तते । इष आभीक्ष्ण्ये । अस्मात् लटः शत्रादेशः । क्र्यादित्वात् श्नाप्रत्ययः । तस्मिन् ब्रह्मचारिणि सर्वे इन्द्रादयो देवाः संमनसः समानमनस्का भवन्ति । अनुग्रहबुद्धियुक्ता भवन्तीत्यर्थः । स ब्रह्मचारी आत्मीयेन तपसा पृथिवीम् भूमिं दिवम् द्युलोकं च दाधार । तुजादित्वाद् अभ्यासदीर्घत्वम् । धारयति पोषयति । तथा आचार्यम् स्वं गुरुं तेनैव तपसा पिपर्ति पालयति । सन्मार्गवृत्त्या आचार्यं परिपालयतीत्यर्थः । 'शिष्यपापं गुरोरपि' इति शिष्यकृतेन पापेन गुरोरपि पातित्यस्मरणाद् एवम् उक्तम् । 'चरेराङि[2] चागुरौ' ( पावा ३,१,१०० ) इति गुरावभिधेये आङ्पूर्वाच्चरतेः 'ऋहलोर्ण्यत्' ( पा ३,१,१२४ ) इति ण्यदेव प्रत्ययो भवति । 'तित् स्वरितम्' ( पा ६,१,१८५ ) इति स्वरितत्वम् । पिपर्तीति । पृ पालनपूरणयोः । जुहोत्यादित्वात् शपः श्लुः । 'अर्तिपिपर्त्योश्च' ( पा ७,४,७७ ) इति अभ्यासस्य इत्त्वम् ।

**ब्रह्मचारिणं पितरो देवजनाः पृथग् देवा अनुसंयन्ति[3] सर्वे ।**
**गन्धर्वा एनमन्वायन् त्रयस्त्रिंशत् त्रिशताः षट्सहस्राः[4] सर्वान्त्स देवांस्तपसा पिपर्ति[5] ॥२**

ब्रह्मऽचारिणम् । पितरः । देवऽजनाः । पृथक् । देवाः । अनुऽसंयन्ति । सर्वे । गन्धर्वाः । एनम् । अनु । आयन् । त्रयःऽत्रिंशत् । त्रिऽशताः । षट्ऽसहस्राः । सर्वान् । सः । देवान् । तपसा । पिपर्ति ॥ २ ॥

ब्रह्मचारिणम् ब्रह्मचर्यम् आचरन्तं पुरुषं पितरः पितृगणा देवजनाः एतत्संज्ञा देवगणा अन्ये च सर्वे देवा इन्द्रादयः पृथग् अनुसंयन्ति । तस्य रक्षणार्थं पृथक् पृथक् तम् अनुगच्छन्तीत्यर्थः । तथा गन्धर्वाः अन्तरिक्षसंचारिणो विश्वावसुप्रभृतयः एनं ब्रह्मचारिणम् अन्वायन् अनुगच्छन्ति । ये च त्रयस्त्रिंशद् देवाः 'अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः प्रजापतिश्च वषट्कारश्च' ( ऐब्रा १,१० ) इत्येवं प्राग् उदाहृताः ये च त्रिशताः । त्रय इति अत्रापि संबध्यते । त्र्युत्तरत्रिशतसंख्याकास्तद्विभूतिरूपा देवाः । तथा षट्सहस्राः ये च तद्विभूतिरूपाः षट्सहस्रसंख्याका देवाः । एवमेव वैश्वदेवनिविदि देवानां संख्या उत्तरोत्तरं भूयसी तन्माहात्म्यप्रतिपादनाय समाम्नायते—'ये स्थ त्रय एकादशास्त्रयश्च त्रिंशच्च त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा' इति प्रक्रम्य 'अतो वा देवा भूयांसः स्थ' ( खि ५,५,७ ) इति तत्र प्रकृतसंख्यातो भूयस्त्वश्रवणाद् अत्र षट्सहस्रा इति अधिकसंख्योक्तिः । तान् सर्वान् देवान् स ब्रह्मचारी तपसा आत्मीयेन ब्रह्मचर्यनियमेन पिपर्ति पालयति । देवमनुष्यादिरूपं सर्वं जगद् ब्रह्मचर्येण भ्रियत इत्यर्थः ।

---

१. चरितुं···वेति S'. २. आङि S'. ३. °यन्तु पै १६,१५३,३. ४. °स्रा B. ५. बिभर्त्ति पै.

आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः ।
तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति[1] देवाः ॥३॥

आऽचार्यः । उपऽनयमानः । ब्रह्मऽचारिणम् । कृणुते । गर्भम् । अन्तः ।
तम् । रात्रीः । तिस्रः । उदरे । बिभर्ति । तम् । जातम् । द्रष्टुम् । अभिऽसंयन्ति । देवाः ॥ ३ ॥

ब्रह्मचारिणम् **माणवकम्** उपनयमानः **स्वसमीपम् उपगमयन्** आचार्यः अन्तः **विद्याशरीरस्य मध्ये** गर्भं कृणुते **करोति । उपनयमान इति ।** 'सम्माननोत्सञ्जनाचार्यकरण' ( पा १,३,३६ ) **इति आत्मनेपदम् ।** तं **गर्भीभूतं ब्रह्मचारिणं** तिस्रो रात्रीः । **अत्यन्तसंयोगे द्वितीया । तावत्कालपर्यन्तं त्रिरात्रम्** उदरे **आत्मीये** बिभर्ति **धारयति । चतुर्थे दिवसे** जातम् **विद्यामयशरीराद् उत्पन्नं** तं **ब्रह्मचारिणं** द्रष्टुम् **अवलोकयितुं** देवा अभिसंयन्ति **अभिमुखं संभूय गच्छन्ति । उपनयनसंस्कारेण माणवकस्य आचार्यसकाशाद् उत्पत्तिं भगवान् आपस्तम्बोऽपि आह स्म**—'स हि विद्यातस्तं जनयति। तच्छ्रेष्ठं जन्म। शरीरमेव मातापितरौ जनयतः' ( आपध १,१,१५-१७ ) **इति।**

इयं समित् पृथिवी द्यौर्द्वितीयोतान्तरिक्षं समिधा पृणाति ।
ब्रह्मचारी समिधा मेखलया[2] श्रमेण लोकांस्तपसा पिपर्ति[3] ॥ ४ ॥

इयम्[4] । सम्ऽइत् । पृथिवी । द्यौः । द्वितीया । उत । अन्तरिक्षम् । सम्ऽइधा । पृणाति ।
ब्रह्मऽचारी । सम्ऽइधा । मेखलया । श्रमेण । लोकान् । तपसा । पिपर्ति ॥ ४ ॥

**पूर्वं ब्रह्मचारिणो माहात्म्यकथनपुरःसरं तदुत्पत्तिरभिहिता । अधुना स्तुतिव्याजेन तन्नियमा उपदिश्यन्ते**—इयं **परिदृश्यमाना** पृथिवी **ब्रह्मचारिणः प्रथमा** समित् । द्यौः **द्युलोकात्मिका** द्वितीया **समित्** । उत **अपिच** अन्तरिक्षं[5] **द्यावापृथिव्योर्मध्ये** समिधा **अग्नावाधीयमानया** पृणाति **पूरयति । पृ पालनपूरणयोः ।** 'प्वादीनां ह्रस्वः' ( पा ७,३,८० ) **इति ह्रस्वत्वम् । इत्थं** ब्रह्मचारी समिधा [6]**आधीयमानया** मेखलया[6] **धार्यमाणया मौञ्ज्या** श्रमेण **इन्द्रियनिग्रहोद्भूतखेदेन** तपसा **अन्येनापि देहसन्तापकेन नियमजातेन** लोकान् **प्रागुक्तान् पृथिव्यादीन्** पिपर्ति **पूरयति पालयति वा। अतः समिदाधानादिकम् अवश्यम् अस्य कर्तव्यम् इत्यर्थः ।**

पूर्वो जातो ब्रह्मणो ब्रह्मचारी घर्मं वसानस्तपसोदतिष्ठत् ।
तस्माज्जातं ब्राह्मणं ब्रह्म ज्येष्ठं देवाश्च सर्वे अमृतेन साकम् ॥ ५ ॥

---

१. °यन्तु पै १६,१५२,२. २. मेखलावी पै १६,१५३,४. ३. बिभर्त्ति पै.
४. इदम् P. ५. वैतु. संपा. ६. °मानाया मेखलाया S'.

पूर्वः । जातः । ब्रह्मणः । ब्रह्मऽचारी । घर्मम् । वसानः । तपसा । उत् । अतिष्ठत् ।
तस्मात् । जातम् । ब्राह्मणम् । ब्रह्म । ज्येष्ठम् । देवाः । च । सर्वे । अमृतेन । साकम् ॥

यत् सर्वजगत्कारणं ब्रह्म सत्यज्ञानादिलक्षणं तस्माद् ब्रह्मणः सकाशाद् ब्रह्मचारी पूर्वो जातः प्रथमम् उत्पन्नः । स च उत्पन्नो घर्मम् दीप्तं रूपं वसानः आच्छादयन् तपसा समिदाधानादिरूपेण सह उदतिष्ठत् उत्थितवान् । तस्मात् ब्रह्मचार्यात्मना तपस्तप्यमानाद् ब्रह्मणः सकाशाद् ब्राह्मणम् ब्राह्मणानां स्वभूतं ज्येष्ठम् प्रशस्यतमं वृद्धतमं वा ब्रह्म वेदात्मकं जातम् प्रादुर्भूतम् । तत्प्रतिपाद्याः सर्वे अग्न्यादयो देवाश्च अमृतेन अमृतत्वप्रापकेण स्वोपभोग्येन साकं सह । जाता इत्यर्थः । प्रथमजननाद् ब्रह्मचारी सर्वश्रेष्ठ इत्यर्थः ।

**ब्रह्मचार्येति समिधा समिद्धः कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः[1] ।**
**स सद्य एति [2]पूर्वस्मादुत्तरं[2] समुद्रं लोकान्त्संगृभ्य[3] मुहुराचरिक्रत् ॥ ६ ॥**

ब्रह्मऽचारी । एति । सम्ऽइधा । सम्ऽइद्धः । कार्ष्णम्[4] । वसानः । दीक्षितः । दीर्घऽश्मश्रुः । सः । सद्यः । एति । पूर्वस्मात् । उत्तरम् । समुद्रम् । लोकान् । सम्ऽगृभ्य । मुहुः । आऽचरिक्रत्[5] ॥ ६ ॥

समिधा सायंप्रातरग्नावाधीयमानया तज्जनितेन तेजसा समिद्धः संदीपितः कार्ष्णम् कृष्णमृगसंबन्धि अजिनं वसानः धारयन् दीक्षितः भिक्षाचरणादिभिर्नियमविशेषैर्नियन्त्रितः दीर्घश्मश्रुः दीर्घैरायतैः[6] श्मश्रुभिर्युक्तः सन् ब्रह्मचारी ब्रह्मचर्यधर्मेण युक्तः एति वर्तते । स उदीरितलक्षणो ब्रह्मचारी सद्यः शीघ्रं पूर्वस्मात् समुद्रात् उत्तरम् उत्तरदिगवस्थितं समुद्रम् एति गच्छति । तपसो महिम्ना व्याप्नोतीत्यर्थः । तथा लोकान् पृथिव्यन्तरिक्षादीन् संगृह्य[7] हस्ते धृत्वा मुहुः अत्यर्थम् आचरिक्रत् आभिमुख्येन करोति । सर्वे लोका अस्य वशे भवन्तीत्यर्थः । आचरिक्रत् इति करोतेर्यङ्लुगन्तात् लङि[8] रूपम् ।

**ब्रह्मचारी जनयन् ब्रह्मापो लोकं प्रजापतिं परमेष्ठिनं विराजम् ।**
**गर्भो भूत्वाऽमृतस्य[9] योनाविन्द्रो ह भूत्वाऽसुरांस्ततर्ह ॥ ७ ॥**

ब्रह्मऽचारी । जनयन् । ब्रह्म । अपः । लोकम्[10] । प्रजाऽपतिम् । परमेऽस्थिनम् । विऽराजम् । गर्भः । भूत्वा । अमृतस्य । योनौ । इन्द्रः । ह । भूत्वा । असुरान् । ततर्ह ॥ ७ ॥

---

१. दीर्घः श्मश्रुः B. २. पूर्वादपरं पै १६,१५३,६. ३. संगृह्य S, सा.; संसद्य पै. ४. कर्ष्णम् P. ५. °चरिक्रत P. ६. दीर्घैरा इत्यस्य स्थाने षड्वर्णानां स्थानं रिक्तम् S'. ७. वैतु. मंत्रा. ८. क्रियापदे स्वरः? तस्मात् शत्रन्तं न्याय्यम्. ९. भूत्वा अमृत° B,D,R,S$^m$,K,K$^m$,Cs. १०. लोकाम् P.

उक्तलक्षणो ब्रह्मचारी ब्रह्मचर्यमहिम्ना ब्रह्म ब्राह्मणजातिम् अपः स्नानपानार्था गङ्गाद्या नदीः इमम् आत्मनः फलभूतं लोकं स्वर्गादिलोकं प्रजापतिम् प्रजानां स्रष्टारम् अवान्तरसृष्टिकरं परमेष्ठिनम् परमे उत्कृष्टे सत्यलोके तिष्ठतीति परमेष्ठी तम् आदि-ब्रह्माणं विराजम् स्थूलप्रपञ्चशरीराभिमानिनम् ईश्वरं च जनयन् उत्पादयन् वर्तते । स्वस्वकारणाद् उत्पद्यमानानाम्[1] एषां ब्रह्मचर्यं निमित्तकारणम् इति तदाश्रयभूतो ब्रह्म-चार्येव जनयन्निति उपचर्यते । अमृतस्य अमरणशीलस्य ब्रह्मणः संबन्धिन्यां योनौ सत्वरजस्तमोगुणात्मिकायां प्रकृतौ प्रथमं ब्रह्मचारी गर्भो भूत्वा उदीरितं सर्वं जन-यति । पश्चात् इन्द्रो ह भूत्वा तपोबलाद् इन्द्रत्वं प्राप्य असुरान् सुरविरोधिनो दैत्यान् ततर्ह जघान । तृह हिंसि हिंसायाम् । इत्थं सर्वजगत्कर्तृत्वेन ब्रह्मचारिणः स्तुतिः ।

आचार्यस्ततक्ष नभसी उभे इमे उर्वी गम्भीरे[2] पृथिवीं दिवं च ।
ते[3] रक्षति[4] तपसा ब्रह्मचारी [5]तस्मिन् देवाः संमनसो भवन्ति[6] ॥ ८ ॥

आऽचार्यः । ततक्ष । नभसी इति । उभे इति । इमे इति । उर्वी इति । गम्भीरे इति । पृथिवीम् । दिवम् । च । ते इति । रक्षति । तपसा । ब्रह्मऽचारी । तस्मिन् । देवाः । सम्ऽमनसः । भवन्ति ॥

इमे परिदृश्यमाने उभे नभसी नभः अन्तरिक्षम् । तत्साहचर्याद् द्विवचनेन पृथिव्युपलक्ष्यते । द्यावापृथिव्यौ आचार्यस्ततक्ष तक्षणेन जनयामास । तक्षू त्वक्षू तनू-करणे । अस्मात् लिट् । नभसी विशेष्येते—उर्वी विस्तीर्णे गम्भीरे गाम्भीर्ययुक्ते । परिच्छे-त्तुम् अशक्ये इत्यर्थः । ते एव व्यस्तं निर्दिशति—पृथिवीं दिवं च इति । तं[6] द्यावा-पृथिव्योरुत्पादकम् आचार्यं ब्रह्मचारी आत्मीयेन तपसा ब्रह्मचर्यनियमेन रक्षति पालयति । तस्मिन् तथाविधे ब्रह्मचारिणि सर्वे देवाः संमनसः समानमनस्काः प्रीता भवन्ति ।

इमां भूमिं पृथिवीं ब्रह्मचारी भिक्षामा जभार प्रथमो दिवं च ।
ते कृत्वा[7] समिधावुपास्ते तयोरार्पिता भुवनानि विश्वा ॥ ९ ॥

इमाम् । भूमिम् । पृथिवीम् । ब्रह्मऽचारी । भिक्षाम् । आ । जभार । प्रथमः । दिवम् । च । ते इति । कृत्वा । सम्ऽइधौ । उप । आस्ते । तयोः । आर्पिता । भुवनानि । विश्वा ॥ ९ ॥

इमां परिदृश्यमानां पृथिवीम् प्रथितां विस्तीर्णां भूमिं ब्रह्मचारी प्रथमः प्रथमभावी सन् भिक्षाम् आ जभार भिक्षात्वेन आहृतवान् । अनन्तरं दिवम् द्युलोकं च द्वितीयां भिक्षाम् आजहार । 'हृग्रहोर्भः°' ( पावा ८,२,३२ ) इति भत्वम् । ते द्यावापृथिव्यौ भिक्षणेन लब्धे समिधौ कृत्वा उपास्ते अग्निं परिचरति । समिन्धनसाधनयोः तयोः द्यावापृथिव्योः विश्वा

---

१. उत्पाद्य° S'. २. गभीरे पै १६,१५३,९. ३. तं K,V, सा. ४. रक्षन्तु Bb; अभि रक्षतु पै. ५. तयोर्देवास्सदमादं मदन्ति पै. ६. वैतु. मंपा. ७. ब्रह्म कृत्वा पै १६,१५३,८.

**विश्वानि सर्वाणि** भुवनानि **भूतजातानि** आर्पिता **अर्पितानि स्थापितानि । आश्रित्य वर्तन्त इत्यर्थः ।**

**अर्वागन्यः परो अन्यो दिवस्पृष्ठाद् गुहा निधी निहितौ ब्राह्मणस्य ।**
**तौ रक्षति[1] तपसा ब्रह्मचारी तत् केवलं कृणुते ब्रह्म विद्वान् ॥ १० ॥**

अर्वाक् । अन्यः । परः । अन्यः । दिवः । पृष्ठात् । गुहा । निधी इति निऽधी । निऽहितौ । ब्राह्मणस्य । तौ । रक्षति । तपसा । ब्रह्मऽचारी । तत् । केवलम् । कृणुते । ब्रह्म । विद्वान् ॥१०॥

दिवः **द्युलोकस्य** पृष्ठात् **उपरिभागाद्** अर्वाक् **अधः भूलोके** अन्यः **एको निधिर्वेदात्मकः** गुहा **गुहायाम् आचार्यहृदयरूपायां निक्षिप्तः ।** अन्यः **अपरो निधिस्तत्प्रतिपाद्यदेवतारूपः** परः **परस्ताद् उपरि देशे गुहायां ज्ञातुम् अशक्ये स्थाने निक्षिप्तः ।** ब्राह्मणस्य **अधीतवेदस्य संबन्धिनौ** तौ निहितौ **निक्षिप्तौ** निधी ब्रह्मचारी तपसा **ब्रह्मचर्यनियमेन** रक्षति **पालयति ।** विद्वान् **वेदार्थरहस्याभिज्ञः** तत् **शब्दतदर्थात्मकं निधिद्वयं** केवलम् **निष्प्रपञ्चं** ब्रह्म कृणुते **कुरुते । स्वात्मभूते परब्रह्मणि वेदराशेस्तदर्थस्य च अध्यस्तत्वेन अधिष्ठानभूतं ब्रह्मैव ताद्रूप्येण साक्षात्करोतीत्यर्थः ।**

**इति तृतीयेऽनुवाके प्रथमं सूक्तम् ।**

**अर्वागन्य इतो अन्यः पृथिव्या अग्नी समेतो नभसी अन्तरेमे ।**
**तयोः श्रयन्ते रश्मयोधि[2] दृढास्ताना तिष्ठति[3] तपसा ब्रह्मचारी ॥ ११ ॥**

अर्वाक् । अन्यः । इतः । अन्यः । पृथिव्याः । अग्नी इति । सम्ऽएतः । नभसी इति । अन्तरा । इमे इति । तयोः । श्रयन्ते । रश्मयः । अधि । दृढाः । तान् । आ । तिष्ठति । तपसा । ब्रह्मऽचारी ॥११॥

इतः **अस्याः पृथिव्या** अर्वाक् **अधःप्रदेशे** अन्यः **एकोऽग्निः अनुद्यत्सूर्यात्मको वर्तते ।** अन्यः **अपरः पार्थिवोऽग्निः** पृथिव्या **उपरि वर्तते । ततः सूर्ये उदिते सति** इमे नभसी अन्तरा **अनयोर्द्यावापृथिव्योर्मध्ये तौ** अग्नी समेतः **परस्परं संगतौ भवतः । '**अन्तरान्तरेणयुक्ते' ( पा २,३,४ ) **इति द्वितीया ।** तयोः **सूर्याग्न्योः संबन्धिनो** रश्मयः **परस्परसंमेलनेन** अतिदृढाः[4] श्रयन्ते **द्यावापृथिव्यौ आश्रयन्ति ।** 'वैश्वानरो यतते सूर्येण' ( ऋ १,९८,१ ) **इति हि निगमः । इत्थम् अग्निद्वयोपेतां** तां[4] **भूमिं** ब्रह्मचारी तपसा **तपोमहिम्ना** आ तिष्ठति **अधितिष्ठति । अग्निरूपेण तस्या अधिदेवता भवतीत्यर्थः ।**

---

१. अभि रक्षतु पै १६,१५३,१०.　　२. °यो अधि पै १६,१५४,१.　　३. तिष्ठतु पै.
४. वैतु. मंपा.

अभिक्रन्दन्[1] स्तनयन्नरुणः[2] शितिङ्गो[3] बृहच्छेपोनु[4] भूमौ जभार ।
ब्रह्मचारी सिञ्चति[5] सानौ रेतः पृथिव्यां तेन जीवन्ति प्रदिशश्चतस्रः ॥१२॥

अभिऽक्रन्दन् । स्तनयन् । अरुणः । शितिङ्गः[3] । बृहत् । शेपः । अनु । भूमौ । जभार ।
ब्रह्मऽचारी । सिञ्चति । सानौ । रेतः । पृथिव्याम् । तेन । जीवन्ति[6] । प्रऽदिशः । चतस्रः ॥

अभिक्रन्दन् अभितः शब्दं कुर्वन् । एतदेव विव्रियते — स्तनयन् मेघेषु स्तनितं गर्जितं कुर्वन् श्यतिङ्गः[7] श्येतवर्णं जलपूर्णं मेघं प्राप्तः एवंभूतो वरुणः[7] बृहत् प्रभूतं शेपः आत्मीयं प्रजननं भूमौ पृथिव्याम् अनु जभार जहार । तेन वरुणसंबन्धिना शेपसा ब्रह्मचारी स्वतपोमहिम्ना सर्वजगदुत्पादकम् उदकलक्षणं वरुणसंबन्धि रेतः पृथिव्यां सानौ उन्नतप्रदेशे सिञ्चति वर्षति । एतेन सर्वजगदुत्पादनार्थम् ऊर्ध्वरेतस्कत्वं ब्रह्मचारिणः सूचितं भवति । वारुणमेव रेतः सिञ्चति न स्वकीयम् इत्यर्थस्य अवगमात् । तेन वृष्टेन उदकलक्षणेन रेतसा प्रदिशश्चतस्रः प्राच्याद्या महादिशो जीवन्ति प्राणान् धारयन्ति । तत्रत्याः प्राणिनः समृद्धा भवन्तीत्यर्थः । यस्मिन् राष्ट्रे ब्रह्मचारी निवसति तत्र कालवृष्टिर्भवतीति तात्पर्यार्थः ।

अग्नौ सूर्ये चन्द्रमसि मातरिश्वन् ब्रह्मचार्य१प्सु[8] समिधमा दधाति ।
[9]तासामर्चींषि पृथगभ्रे चरन्ति[10] [11]तासामाज्यं पुरुषो वर्षमापः[11] ॥१३॥

अग्नौ । सूर्ये । चन्द्रमसि । मातरिश्वन् । ब्रह्मऽचारी । अप्ऽसु । सम्ऽइधम् । आ । दधाति ।
तासाम् । अर्चींषि । पृथक् । अभ्रे । चरन्ति[12] । तासाम् । आज्यम् । पुरुषः । वर्षम् । आपः ॥

ब्रह्मचारी ब्रह्मचर्यनियमवान् पुरुषः अग्नौ पृथिव्यामवस्थिते अन्तरिक्षगते सूर्ये चन्द्रमसि मातरिश्वन् मातरिश्वनि वायौ अप्सु च समिधम् आ दधाति प्रक्षिपति । अत्र अग्न्यादीनां पूर्वपूर्वस्याभावे उत्तरोत्तरस्मिन् समिदाधानं कर्तव्यं सर्वथा लोपो न कर्तव्यः तत्र सूर्यादिषु संस्मृत्य तद्रश्मियुक्तप्रदेशे समिदाधानम् । अपां संनिधानात् तदपेक्षया तासाम् इति स्त्रीलिङ्गेन प्रतिनिर्देशः । तासां तेषाम् अग्न्यादीनाम् अर्चींषि दीप्तयः अभ्रे अन्तरिक्षे पृथक् चरन्ति असंकीर्णं वर्तन्ते । यद्वा अभ्रे उदकपूर्णे मेघे धनुराकारेण पृथक् पृथग् वर्तन्ते । तासाम् । पूर्ववत् स्त्रीलिङ्गनिर्देशः । तेषाम् अग्न्यादीनां ब्रह्मचारिणा समिध्यमानानाम् आज्यादिकं कार्यम् । अग्न्यादयो ब्रह्मचारिसमिन्धनेन आज्यादिकम् उत्पादयन्तीत्यर्थः ।

---

१. °क्रन्दं K,K^m,B^h,A,C,V. २. °यन्नरुणः Cs, सा. ३. श्यंतिगो इति सायणसंहितापाठस्य श्यन्भागेन सह अन्यहस्तलेखानां तिङ्गो इति भागं संयोज्य K,V श्यन्तिङ्गो इति पठतः. ४. °पो अनु पै १६,१५४,२. ५. सिञ्चतु पै. ६. जीवन्ती P. ७. वेतु. मंपा. ८. °र्य१प्सु A,B,B^h,C,D,E,S^m. ९. तेषाम्° पै १६,१५४,४. १०. अन्तस् पै. ११. वर्षमश्वः पै. १२. चरन्ति P².

आज्यम् इत्यनेन गोसमृद्धिरुक्ता । पुरुष इत्यनेन पुत्रादिसमृद्धिः । वर्षम् इति काले वृष्टिप्रादुर्भावः । आप इति वापीकूपतटाकादिसमृद्धिः ।

आचार्यो॑ मृत्युर्वरु॑णः सोम॒ ओष॑धयः॒ पयः॑ ।
जीमूता॑ आसन्त्सत्वा॑नस्तैरि॒दं स्व१॒राभृ॑तम्[2] ॥ १४ ॥

आऽचार्यः॑ । मृत्युः । वरु॑णः । सोमः॑ । ओष॑धयः । पयः॑ ।
जीमूताः॑ । आसन् । सत्वा॑नः । तैः । इ॒दम् । स्वः॑ । आऽभृ॑तम् ॥ १४ ॥

आचार्य एव मृत्युः मारयिता देवः । अपराधाचरणाद् रुष्टस्तस्य जीवनम् अपहरतीत्यर्थः । तथा स एव आचार्यो वरुणः दुरितस्य वारयिता देवः । [3]परिचर्यापरं ब्रह्मचारिणं[3] पापान्निवारयतीत्यर्थः । तथा आचार्य एव सोमः चन्द्रमाः तद्वद् आह्लादकरत्वात् । ओषधयः व्रीहियवाद्याः । पयः क्षीरम् । तत् सर्वम् आचार्यात्मकमेव तत्प्रसादलभ्यत्वात् । यद्वा यो मृत्युर्यमः स नचिकेतसे ब्रह्मविद्याम् उपदिश्य आचार्यः संपन्नः । वरुणोऽपि भृगवे ताम् उपदिश्य आचार्योऽभवत् । एवं सोमोऽपीति । सर्वदेवतात्मक आचार्य इत्यर्थः । तत्र आचार्यरूपस्य वरुणस्य ये सत्वानः सदनशीला अनुचरास्ते जीमूता आसन् जीवनम् उदकं तस्य मूतवद् भर्तारः जलपूर्णा मेघा अभवन् । तैः जीमूतैः इदं स्वः सुष्ठु अरणशीलम् उदकम् आभृतम् आहृतम् । वृष्ट्यर्थम् आत्मनि धारितम् इत्यर्थः । यद्वा इदं स्वः सुप्रापं सर्वं जगत् आभृतम् । वृष्ट्या समन्तात् पोषितम् इत्यर्थः ।

अ॒मा घृ॒तं कृ॑णुते॒ केव॑लमाचा॒र्यो॑ भू॒त्वा वरु॑णो[4] यद्यदैच्छ॑त् प्र॒जाप॑तौ ।
तद् ब्र॑ह्मचा॒री प्राय॑च्छ॒त्[5] स्वान् मि॒त्रो अध्या॒त्मनः॑ ॥ १५ ॥

अ॒मा । घृ॒तम् । कृ॒णु॒ते । केव॑लम् । आ॒ऽचा॒र्यः॑ । भू॒त्वा । वरु॑णः । यत्ऽय॑त् । ऐच्छ॑त् ।
प्र॒जाऽप॑तौ । तत् । ब्र॒ह्म॒ऽचा॒री । प्र । अ॒य॒च्छ॒त् । स्वान्[6] । मि॒त्रः । अधि॑ । आ॒त्मनः॑ ॥१५॥

वरुणो देवः आचार्यो भूत्वा घृतम् क्षरणशीलम् उदकं केवलम् अमा सह कृणुते कुरुते । उदकमेव अनन्यसाधारणं स्वम् आत्मना सहितं करोतीत्यर्थः । स वरुणः प्रजापतौ स्वजनके ब्रह्मणि यद्यत् फलम् ऐच्छत् मित्रो देवो ब्रह्मचारी भूत्वा स्वकीयब्रह्मचर्यमाहात्म्येन स्वात्[7] स्वकीयात् आत्मनः शरीरात् । अधिः पञ्चम्यर्थानुवादी । ल्यब्लोपे च इयं पञ्चमी । स्वशरीरम् अनपेक्ष्येत्यर्थः । तत् अपेक्षितं सर्वम् आचार्यभूताय वरुणाय प्रायच्छत् दत्तवान् । ततश्च शिष्येण सता ब्रह्म-

---

१. पर्जन्यो पै १६,१५४,३. २. स्व॒३॒रा॑° A,B,B[b],C,D,E,R,Cs; °राभरम् पै.
३. °परब्रह्म° S'. ४. इह विरमति न प्र॒जाप॑तौ इत्यत्र RW. ५. °छ॒न् B,B[b].
६. स्वात् सा. W. ७. वैतु. पपा.

चारिणा विद्योपदेष्टुर्गुरोः प्रीतिकरम् अपेक्षितं धनं संपाद्य प्रदातव्यम् इत्ययमपि एको नियमो ब्रह्मचारिण उक्तो वेदितव्यः ।

आचार्यो ब्रह्मचारी ब्रह्मचारी प्रजापतिः ।
प्रजापतिर्वि राजति विराडिन्द्रोऽभवद् वशी ॥ १६ ॥

आऽचार्यः । ब्रह्मऽचारी । ब्रह्मऽचारी । प्रजाऽपतिः ।
प्रजाऽपतिः । वि । राजति । विऽराट् । इन्द्रः । अभवत् । वशी ॥ १६ ॥

आचार्यः प्रथमं विद्याम् उपदिश्य ब्रह्मचारी ब्रह्मचार्यात्मना जातः । स च ब्रह्मचारी तपसा ब्रह्मचर्येण अधिकं महिमानं प्राप्य प्रजापतिः जगत्स्रष्टा अभवत् । स च प्रजापतिः वि राजति विराड् भवति । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' ( श्वेउ ६,१८ ) इति श्रुत्युक्तः स्थूलप्रपञ्चशरीराभिमानी ईश्वरो विराट् । स च वशी स्वतन्त्रः इन्द्रः परमैश्वर्ययुक्तः सर्वजगत्स्रष्टा परमात्मा अभवत् । ततः आचार्यः परंपरया सर्वदेवतात्मक इति तस्य माहात्म्यं केन वर्णयितुं शक्यम् इति भावः ।

ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति ।
आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥ १७ ॥

ब्रह्मऽचर्येण । तपसा । राजा । राष्ट्रम् । वि । रक्षति ।
आऽचार्यः । ब्रह्मऽचर्येण । ब्रह्मऽचारिणम् । इच्छते ॥ १७ ॥

ब्रह्म वेदः तदध्ययनार्थम् आचर्यम्[1] आचरणीयं समिदाधानभैक्षचर्योर्ध्वरेतस्कत्वादिकं ब्रह्मचारिभिरनुष्ठीयमानं कर्म ब्रह्मचर्यम् । तेन ब्रह्मचर्येण तपसा तत्कृतेन उपवासादिव्रतनियमेन च राजा राष्ट्रं स्वकीयं वि रक्षति विशेषेण पालयति । यस्य राज्ञो जनपदे ब्रह्मचर्येण युक्ताः पुरुषास्तपश्चरन्ति तदीयं राष्ट्रम् अभिवर्धत इत्यर्थः । यद्वा राज्ञः कर्तव्यत्वेन कालविशेषेषु श्रुतिस्मृत्युदितं ब्रह्मचर्यं तपोऽनुतिष्ठन् राजा तेनैव ब्रह्मचर्येण तपसा राष्ट्रं पालयतीत्यर्थः । आचार्यः अपि ब्रह्मचर्येण नियमेन ब्रह्मचारिणम् शिष्यम् इच्छते आत्मनोऽभिलष्यति । ब्रह्मचर्यनियमस्थमेव आचार्यं शिष्या उपगच्छन्तीत्यर्थः । इषु इच्छायाम् । व्यत्ययेन आत्मनेपदम् । 'इषुगमियमां छः' ( पा ७,३,७७ ) इति छत्वम् ।

ब्रह्मचर्येण कन्या३ युवानं विन्दते पतिम् ।

---

1. आचार्यं S'.

अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीर्षति[1] ॥ १८ ॥

ब्रह्मऽचर्येण । कन्या । युवानम् । विन्दते । पतिम् ।
अनड्वान् । ब्रह्मऽचर्येण । अश्वः । घासम् । जिगीर्षति[2] ॥ १८ ॥

अत्रापि ब्रह्मचर्यं प्रशस्यते – कन्या अकृतविवाहा स्त्री ब्रह्मचर्यं चरन्ती तेन ब्रह्मचर्येण युवानम् युवत्वगुणोपेतम् उत्कृष्टं पतिं विन्दते लभते । किं बहुना पशुजातिरपि ब्रह्मचर्येण स्वाभिलषितं फलं लभत इत्याह — अनड्वान् इति । अनड्वान् अनो वहन् पुंगवः ब्रह्मचर्येण ऊर्ध्वरेतस्कत्वादिना धर्मेण अनोवहनादिकं स्वकार्यं निर्वर्तयन् उत्कृष्टं पतिं लभते । तथा अश्वः ब्रह्मचर्येण घासम् भक्षणीयं तृणादिकं जिगीर्षति भक्षितुम् इच्छति ।

ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत[3] ।
इन्द्रो ह [4]ब्रह्मचर्येण देवेभ्यः[4] स्व१राभरत्[5] ॥ १९ ॥

ब्रह्मऽचर्येण । तपसा । देवाः । मृत्युम् । अप । अघ्नत ।
इन्द्रः । ह । ब्रह्मऽचर्येण । देवेभ्यः । स्वः । आ । अभरत् ॥ १९ ॥

ब्रह्मचर्येण ब्रह्मचर्यरूपेण तपसा देवाः अग्न्यादयो मृत्युम् मरणम् अपाघ्नत अपहतवन्तः । अमर्त्याः संपन्ना इत्यर्थः । इन्द्रो ह इन्द्रोऽपि ब्रह्मचर्येण एव साधनेन देवेभ्यः देवानाम् अर्थे स्वः स्वर्गम् आभरत् आहरत् ।

ओषधयो भूतभव्यमहोरात्रे वनस्पतिः[6] ।
संवत्सरः सहर्तुभिस्ते[7] जाता ब्रह्मचारिणः ॥ २० ॥

ओषधयः । भूतऽभव्यम् । अहोरात्रे इति । वनस्पतिः ।
सम्ऽवत्सरः । सह । ऋतुऽभिः । ते । जाताः । ब्रह्मऽचारिणः ॥ २० ॥

ओषः पाकः आसु धीयत इति ओषधयो व्रीहियवाद्याः अरण्यजा वीरुधश्च । भूतभव्यम् भूतम् उत्पन्नं चराचरात्मकं भव्यम् उत्पत्स्यमानम् । अहोरात्रे अहश्च रात्रिश्च । 'हेमन्तशिशिरावहोरात्रे च च्छन्दसि' ( पा २,४,२८ ) इति नपुंसकलिङ्गता निपात्यते । वनस्पतिः वनानां पालयिता देवः । 'पारस्करप्रभृतीनि च संज्ञायाम्' ( पा ६,१,१५७ ) इति सुट् । 'उभे वनस्पत्यादिषु युगपत्' ( पा ६,२,१४० ) इति उभयपदप्रकृतिस्वरत्वम् । संवसन्ति अस्मि-

---

१. तु. J, सा; वैतु. B जिगीषति; V,A,$B^h$,C,D,E,$K^m$,RW. जिगीषति; जिहीर्षति पै १६,१५४,८. २. जिगीषति P,$P^2$; जिगीषति J,Cp. ३. मृत्युमुपाजयन् पै १६, १५४,९. ४. °चर्येणामृतं पै. ५. स्वर्रा° B,$B^h$,C,D,E,$S^m$. ६. °पतयः पै १६,१५४,१०. ७. सह ऋतुभि° RW. पै.

न्निति संवत्सरः द्वादशमासात्मकः कालः ऋतुभिः वसन्ताद्यैः षड्भिः सह । ते ओषध्यादयः अनुक्रान्ताः सर्वे ब्रह्मचारिणः तपोमाहात्म्यात् जाताः उत्पन्नाः ।

इति तृतीयेऽनुवाके द्वितीयं सूक्तम् ।

पार्थिवा दि॒व्याः प॒शव॑ आर॒ण्या ग्रा॒म्याश्च॒ ये ।
अ॒प॒क्षाः[1] प॒क्षिण॑श्च॒ ये ते जा॒ता ब्र॑ह्म॒चा॒रिण॑ः ॥ २१ ॥

पार्थिवाः । दि॒व्याः । प॒शवः॑ । आ॒र॒ण्याः । ग्रा॒म्याः । च॒ । ये ।
अ॒प॒क्षाः । प॒क्षिण॑ः । च॒ । ये । ते । जा॒ताः । ब्र॒ह्म॒ऽचा॒रिण॑ः ॥ २१ ॥

पार्थिवाः पृथिव्याः संबन्धिनो जनाः । 'पृथिव्या ञाञौ' (पावा ४,१,८५) इति तस्येदमर्थे अञ्प्रत्ययः । तथा दिव्याः दिवि भवाः । 'द्युप्रागपागुदक्प्रतीचो यत्' (पा ४,२,१०१) इति शैषिको यत्प्रत्ययः[2] । आरण्याः अरण्ये भवाः पशवः सिंहशार्दूलहरिणाद्याः । ग्राम्याः गवाश्वमहिषाद्याः । एवंभूता ये पशवः सन्ति तथा अपक्षाः पक्षरहिताः प्राणिनो ये सन्ति पक्षिणः पक्षवन्तः च ये सन्ति ते सर्वे ब्रह्मचारिणो जाताः ब्रह्मचर्यप्रभावाद् उत्पन्ना इत्यर्थः ।

पृथ॒क् सर्वे॑ प्राजाप॒त्याः प्रा॒णाना॒त्मसु॑ बिभ्रति ।
तान्त्सर्वा॒न् ब्रह्म॑ रक्षति ब्रह्मचा॒रिण्याभृ॑तम् ॥ २२ ॥

पृथ॑क् । सर्वे॑ । प्रा॒जा॒ऽप॒त्याः । प्रा॒णान् । आ॒त्मऽसु॑ । बि॒भ्र॒ति॒[3] ।
तान् । सर्वा॑न् । ब्रह्म॑ । र॒क्ष॒ति॒ । ब्र॒ह्म॒ऽचा॒रिणि॑ । आऽभृ॑तम् ॥ २२ ॥

प्राजापत्याः प्रजापतिना सृष्टा देवमनुष्याद्याः सर्वे आत्मसु शरीरेषु प्राणान् पृथक् नाना स्वस्वसंबन्धिन एव बिभ्रति धारयन्ति पोषयन्ति वा । डुभृञ् धारणपोषणयोः । जुहोत्यादित्वात् शपः श्लुः । 'अदभ्यस्तात्' (पा ७,१,४) इति झस्य अदादेशः । 'भृञामित्' (पा ७,४,७६) इति अभ्यासस्य इत्त्वम् तान् सर्वान् प्राणान् ब्रह्मचारिणि आचार्यमुखाद् आभृतम् आहृतम् अध्ययनेन संपादितं ब्रह्म वेदात्मकं रक्षति पालयति । ब्रह्मचार्यधीतं ब्रह्म सर्वप्राणिरक्षणक्षमम् इत्यर्थः ।

दे॒वाना॑मे॒तत् प॑रिषू॒तमन॑भ्यारूढं[4] चरति॒ रोच॑मानम् ।
तस्मा॑ज्जा॒तं ब्राह्म॑णं ब्रह्म॑ ज्ये॒ष्ठं दे॒वाश्च॒ सर्वे॑ अ॒मृते॑न सा॒कम् ॥ २३ ॥

---

१. आ॒प॒क्षाः B; अप॑क्षाः Km. २. यति प्रत्यये स्वरो न सिध्यति. ३. बिभ्रन्ति P. ४. पुरुहूतम॰ पै १६,१५५,४.

देवानाम् । एतत् । परिऽसूतम् । अनभिऽआरूढम् । चरति । रोचमानम् ।
तस्मात् । जातम् । ब्राह्मणम् । ब्रह्म । ज्येष्ठम् । देवाः । च । सर्वे । अमृतेन । साकम् ॥२३॥

एतत् सर्वापरोक्षं परब्रह्म देवानां परिसूतम् परिगृहीतम् । आत्मतया साक्षात्कृतम् इत्यर्थः । रोचमानम् । स्वप्रकाशचिद्रूपतया दीप्यमानम् अनभ्यारूढम् अन्यैरनाक्रान्तं सर्वोत्कर्षेण चरति वर्तते । तस्मात् सकाशात् ब्राह्मणम् ब्रह्मणः संबन्धि ब्राह्मणस्य वा असाधारणं स्वं ज्येष्ठम् प्रवृद्धतमं प्रशस्यतमं वा ब्रह्म वेदात्मकं जातम् प्रादुर्भूतम् । 'अस्य महतो भूतस्य निश्वसितम् एतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः' ( बृउ २,४,१० ) इति श्रुतेः । देवाः तत्प्रतिपाद्या अग्न्यादयः च सर्वे अमृतेन स्वोपभोग्येन अमृतत्वप्रापकेण सुधारसेन साकम् सह जाता इत्यर्थः ।

ब्रह्मचारी ब्रह्म भ्राज॑द् [1]बिभर्ति तस्मि॑न्[1] देवा अधि॒ विश्वे॑ समोताः ।
प्राणापानौ जनयन्नाद् व्यानं [2]वाचं मनो हृदयं[2] ब्रह्म मेधाम् ॥ २४ ॥

ब्रह्मऽचारी । ब्रह्म । भ्राजत् । बिभर्ति । तस्मिन् । देवाः । अधि । विश्वे । सम्ऽओताः ।
प्राणापानौ । जनयन् । आत् । विऽआनम् । वाचम् । मनः । हृदयम् । ब्रह्म । मेधाम् ॥२४॥

ब्रह्मचारी ब्रह्मचर्यवान् पुरुषो भ्राजत् दीप्यमानं ब्रह्म वेदात्मकं बिभर्ति धारयति । तस्मिन् अधि उपरि विश्वे सर्वे देवा समोताः संबद्धाः । 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति' ( तैआ २,१५,१ ) इति श्रुतेः । स च सर्वेषां देवानां निवासभूतो ब्रह्मचारी प्राणापानौ सर्वप्राणिसंबन्धिनौ जनयन् उत्पादयन् वर्तते । आत् अनन्तरं व्यानम् । 'अथ यः प्राणापानयोः संधिः स व्यानः' ( छाउ १,३,३ ) इति श्रुत्यन्तरप्रसिद्धं व्यानाख्यं वायुम् वाचम् वागिन्द्रियं परापश्यन्त्यादिरूपां वा शब्दात्मिकां वाचम् मनः सर्वेन्द्रियानुग्राहकम् अन्तःकरणम् हृदयम् तदावासस्थानभूतं हृदयकमलम् ब्रह्म वेदात्मकम् मेधाम् आशुविद्याग्रहणकुशलां बुद्धिम् एतत् सर्वं ब्रह्मचारी जनयन् वर्तते ।

[3]चक्षुः श्रोत्रं यशो॑ अस्मासु॑ धेह्यन्नं॑[3] रेतो॒ लोहि॑तमु॒दर॑म् ॥ २५ ॥

चक्षुः । श्रोत्रम् । यशः । अस्मासु । धेहि । अन्नम् । रेतः । लोहितम् । उदरम् ॥ २५ ॥

तानि॒ कल्प॑द्[4] ब्रह्मचारी स॑लि॒लस्य॑ पृ॒ष्ठे तपो॑ऽतिष्ठत् त॒प्यमा॑नः समु॒द्रे ।
स स्ना॒तो ब॒भ्रुः पि॑ङ्ग॒लः पृ॑थि॒व्यां ब॒हु रो॑चते[5] ॥ २६ ॥

---

१. बिभर्त्यस्मिन् पै १६,१५५,३. २. चक्षुश्श्रोत्रं जनयन् पै १६,१५५,४. ३. वाचं श्रेष्ठां यशोऽस्मासु धेह्यथो पै १६,१५५,५. ४. वैप. १,११७१ f द्र. ५. रोचत B.

तानि । कल्पत् । ब्रह्मऽचारी । सलिलस्य । पृष्ठे । तपः । आतिष्ठत् । तप्यमानः[1] ।
समुद्रे । सः । स्नातः । बभ्रुः । पिङ्गलः । पृथिव्याम् । बहु । रोचते ॥ २६ ॥

हे ब्रह्मन् ब्रह्मचार्यात्मक अस्मासु स्तोतृषु चक्षुः रूपग्राहकम् इन्द्रियं श्रोत्रम् शब्दग्राहकम् । प्राधान्याद् उपलक्षणत्वेन एतद् इन्द्रियद्वयम् उक्तम् । चक्षुःश्रोत्रादीनि सर्वाणि इन्द्रियाणि यशः कीर्तिं च अस्मासु धेहि धारय । आन्ध्यबाधिर्यादिकं कदाचिदपि अस्माकं मा भूद् इत्यर्थः । तथा भोज्यम् अन्नम् पुत्रादिकारणं रेतः लोहितम् शरीरगतम् असृक् उदरम् उदरोपलक्षितं समस्तशरीरम् [२५] । तानि एतानि अन्नादीनि ब्रह्मचारी कल्पत् कल्पयन् सलिलस्य पृष्ठे उदकस्य मध्ये तपस्तप्यमानः समुद्रे अतिष्ठत् । वर्तत इत्यर्थः । स तपस्वी ब्रह्मचारी अनिशं स्नातः स्नानेन पवित्रीकृतः बभ्रुः बभ्रुवर्णः । एतदेव विव्रियते — पिङ्गल इति । पिङ्गलवर्णः सन् पृथिव्याम् भूम्यां बहु अधिकं रोचते दीप्यते ।

इति तृतीयेऽनुवाके तृतीयं सूक्तम् ।

ऋ. शन्तातिः, दे. अग्न्यादयो मन्त्रोक्ताः

'अग्निं ब्रूमः' इत्यादि सूक्तद्वयम् अर्थसूक्तम् । तस्य बृहद्गणे लघुगणे च पाठात् शान्त्युदकाभिमन्त्रणादौ विनियोगः ।

अस्यार्थसूक्तस्य 'मुञ्चन्तु मा' ( अ ११,८,७ ), 'भवाशर्वाविदम्' ( अ ११,८,९ ), 'या देवीः पञ्च' ( अ ११,८,२२ ), 'यन्मातली रथक्रीतम्' ( अ ११,८,२३ ) इत्येताश्चतस्र ऋचो वर्जयित्वा सप्तप्रतीके अंहोलिङ्गगणे पाठात् 'अनुक्तान्यप्रतिषिद्धानि भैषज्यानाम् । अंहोलिङ्गाभिः' ( कौसू ३२,२६;२७ ) इत्यादिषु सर्वभैषज्यादिकर्मसु गणप्रयुक्तो विनियोगोऽनुसंधेयः ।

तथा 'हस्तिरथदानानुक्रमं[2] वक्ष्ये' इति प्रक्रम्य उक्तं परिशिष्टे —

"तस्मात् सर्वेषु दानेष्वनुक्तविधिकेषु[3] च ।
'अग्निं ब्रूमः' इति सूक्तेनाज्यतन्त्रेण[4] होमयेत्" (अप १४,१,९) इति ।

अग्निं ब्रूमो वनस्पतीनोषधीरुत वीरुधः ।
इन्द्रं बृहस्पतिं सूर्यं ते नो मुञ्चन्त्वंहसः ॥ १ ॥

अग्निम् । ब्रूमः । वनस्पतीन् । ओषधीः । उत । वीरुधः ।
इन्द्रम् । बृहस्पतिम् । सूर्यम् । ते । नः । मुञ्चन्तु । अंहसः ॥ १ ॥

अग्निः अग्रणीः सर्वेषां देवानाम् आदिभूतो देवः । 'अग्निरग्रे प्रथमो देवतानाम्' ( तैब्रा २,४,३,३ ) इति श्रुतेः । तादृशम् अग्निं ब्रूमः स्तुमः । यद्वा इष्टफलं याचामहे

---

१. तपमानः P. २. °दानानामनु° BN. ३. दानेषु विध्युक्त° S'.
४. सूक्तमाज्य° BN.

**तथा** वनस्पतीन् **पृथिव्यधिदैवतेन तेनाग्निना संवर्धितान् महावृक्षान्** ओषधीः **व्रीहियवाद्याः** उत **अपि च** वीरुधः **आरण्या लतारूपाः ताः सर्वा ब्रूमः स्तुमः । तथा** इन्द्रम् **द्युलोकाधिपतिं** बृहस्पतिम् **बृहतां देवानां पतिं** सूर्यम् **सर्वस्य प्रेरकम् आदित्यं च ब्रूमः स्तुमः ।** ते **सर्वे** नः **अस्मान्** अंहसः **पापात्** मुञ्चन्तु ।

**ब्रूमो राजानं वरुणं मित्रं विष्णुमथो भगम् ।**
**अंशं विवस्वन्तं ब्रूमस्ते नो मुञ्चन्त्वंहसः ॥ २ ॥**

ब्रूमः । राजानम् । वरुणम् । मित्रम् । विष्णुम् । अथो इति । भगम् ।
अंशम् । विवस्वन्तम् । ब्रूमः । ते । नः । मुञ्चन्तु । अंहसः ॥ २ ॥

**अत्र वरुणादयः सूर्यमूर्तयः स्तूयन्ते**— राजानम् **राजमानम् ईशितारं वा** वरुणं **देवं** ब्रूमः **स्तुमः** । मित्रम् **सर्वस्य मित्रभूतं देवं** विष्णुम् **व्यापनशीलं देवम्** अथो **अपि च** भगम् **भजनीयं देवम्** अंशम् **एतत्संज्ञं देवं** विवस्वन्तम् **विवस्वत्संज्ञं देवं** ब्रूमः **स्तुमः** । ते नो मुञ्चन्त्वंहसः **इति समानम् । एते च आदित्यास्तैत्तिरीयेऽनुक्रम्यन्ते**— 'मित्रश्च वरुणश्च । धाता चार्यमा च । अंशश्च भगश्च । इन्द्रश्च विवस्वांश्चेत्येते' ( तैआ १,१३,३ ) । **आचार्यैस्तु द्वादशादित्याः परिगणिताः**—

'धात्रर्यममित्राख्या वरुणांशभगा विवस्वदिन्द्रयुताः ।
पूषाह्वयपर्जन्यौ त्वष्टा विष्णुश्च भानवः प्रोक्ताः ॥' **इति ।**

**ब्रूमो देवं सवितारं धातारमुत पूषणम् ।**
**त्वष्टारमग्रियं[1] ब्रूमस्ते नो मुञ्चन्त्वंहसः ॥ ३ ॥**

ब्रूमः । देवम् । सवितारम् । धातारम् । उत । पूषणम् ।
त्वष्टारम् । अग्रियम् । ब्रूमः । ते । नः । मुञ्चन्तु । अंहसः ॥ ३ ॥

देवम्[2] **दानादिगुणयुक्तं** सवितारम् **सर्वस्य प्रेरकं**[3] ब्रूमः **स्तुमः । तथा** धातारम् । उतशब्दः **अप्यर्थे** । पूषणम् **अपि स्तुमः** । अग्रियम् **अग्रे भवः अग्रियः । प्रथमगण्य इत्यर्थः** । 'अग्राद्यत्', 'घच्छौ च' ( पा ४,४,११६,११७ ) **इति घच्प्रत्ययः । चित्त्वाद् अन्तोदात्तत्वम् । तादृशं** त्वष्टारं ब्रूमः **स्तुमः । गतम् अन्यत् ।**

**गन्धर्वाप्सरसो ब्रूमो अश्विना ब्रह्मणस्पतिम् ।**
**अर्यमा नाम यो देवस्ते नो मुञ्चन्त्वंहसः ॥ ४ ॥**

---

१. °रमग्रीयं मै २,७,१३. २. एवं S'. ३. प्रेरकं देवं S'.

गन्धर्वऽअप्सरसः । ब्रूमः । अश्विना । ब्रह्मणः । पतिम् ।
अर्यमा । नाम । यः । देवः । ते । नः । मुञ्चन्तु । अंहसः ॥ ४ ॥

गन्धर्वाप्सरसः । **गन्धर्वाश्च अप्सरसश्च तान्** 'अग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसः' (तै ३,४,७,१) **इत्यादिमन्त्रवर्णप्रसिद्धान् गन्धर्वाप्सरोरूपान् देवगणान्** ब्रूमः **स्तुमः । तथा** अश्विना **अश्विनौ स्तुमः ।** ब्रह्मणो **वेदराशेः** पतिं **स्वामिनम् तथा** अर्यमा नाम **अर्यमेति प्रसिद्धो** यो देवः **अस्ति तमपि स्तुमः ।** ते **सर्वे** नः **अस्मान्** अंहसः मुञ्चन्तु **इति शेषं समानम् ।**

**अहोरात्रे इदं ब्रूमः सूर्याचन्द्रमसावुभा[1] ।**
**विश्वानादित्यान्[2] ब्रूमस्ते नो मुञ्चन्त्वंहसः ॥ ५ ॥**

अहोरात्रे इति । इदम् । ब्रूमः । सूर्याचन्द्रमसौ । उभा ।
विश्वान् । आदित्यान् । ब्रूमः । ते । नः । मुञ्चन्तु । अंहसः ॥ ५ ॥

अहोरात्रे **अहश्च रात्रिश्च अहोरात्रे ते उद्दिश्य** इदं **स्तुतिवाक्यं** ब्रूमः । सूर्याचन्द्रमसौ **सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ अहोरात्रयोरधिष्ठातृदेवौ** उभा **उभौ स्तुमः** । विश्वान् **सर्वान्** आदित्यान् **अदितेः पुत्रान्** ब्रूमः **स्तुमः । गतम् अन्यत् ।**

**वातं ब्रूमः पर्जन्यमन्तरिक्षमथो दिशः ।**
**आशाश्च सर्वा ब्रूमस्ते नो मुञ्चन्त्वंहसः ॥ ६ ॥**

वातम् । ब्रूमः । पर्जन्यम् । अन्तरिक्षम् । अथो इति । दिशः ।
आशाः । च । सर्वाः । ब्रूमः । ते । नः । मुञ्चन्तु । अंहसः ॥ ६ ॥

वातम् **वायुं** ब्रूमः **स्तुमः** । पर्जन्यम् **वृष्टिप्रदं देवम्** अन्तरिक्षम् **आकाशम्** अथो **अपि च** दिशः **दिग्देवता** आशाः **विदिशश्च** सर्वास्ता ब्रूमः **स्तुमः । गतमन्यत् ।**

**मुञ्चन्तु मा शपथ्यादहोरात्रे अथो उषाः ।**
**सोमो [3]मा देवो[3] मुञ्चतु यमाहुश्चन्द्रमा इति ॥ ७ ॥**

मुञ्चन्तु । मा । शपथ्यात् । अहोरात्रे इति । अथो इति । उषाः ।
सोमः । मा । देवः । मुञ्चतु । यम् । आहुः । चन्द्रमाः । इति ॥ ७ ॥

शपथ्यात् **शपथप्रभवात् पापात्** मा **मां** मुञ्चन्तु अहोरात्रे **अहरभिमानिदेवता**

---

१. °सा उभा पै १५,१३.५. २. आदित्यान् सर्वान् पै. ३. मादित्यो पै १५,१३,६.

रात्र्यभिमानिदेवता च । अथो अपि च उषाः अहोरात्रयोः संधौ वर्तमाना उषःकालाभिमानिनी देवता । तासां बहुत्वात् मुञ्चन्तु इति बहुवचनम् । तथा सोमो देवः मा मां तस्मात् पापात् मुञ्चतु । तं विशिनष्टि— यं सोमं चन्द्रमा इति आहुः अभिज्ञाः कथयन्ति । स सोमोऽत्र मोचक इत्यर्थः ।

पार्थिवा दिव्याः पशव आरण्या उत ये मृगाः ।
शकुन्तान् पक्षिणो ब्रूमस्ते नो मुञ्चन्त्वंहसः ॥ ८ ॥

पार्थिवाः । दिव्याः । पशवः । आरण्याः । उत । ये । मृगाः ।
शकुन्तान् । पक्षिणः । ब्रूमः । ते । नः । मुञ्चन्तु । अंहसः ॥ ८ ॥

पार्थिवाः इत्यादि[1] व्याख्यातम् ( अ ११,७,२१ ) । हरिणशार्दूलसिंहाद्या मृगाः । तान् पार्थिवादीन् स्तुम इति शेषः । शकुन्तान् शकुनभूतान् पक्षिणः पिङ्गलादीन् ब्रूमः स्तुमः । गतमन्यत् ।

भवाशर्वाविदं[2] ब्रूमो रुद्रं[3] पशुपतिश्च यः ।
इषूर्या एषां संविद्म[4] ता नः सन्तु सदा शिवाः ॥ ९ ॥

भवाशर्वौ । इदम् । ब्रूमः । रुद्रम् । पशुऽपतिः । च । यः ।
इषूः । याः । एषाम् । सम्ऽविद्म । ताः । नः । सन्तु । सदा । शिवाः ॥ ९ ॥

भवाशर्वौ भवश्च शर्वश्च भवाशर्वौ । तावुद्दिश्य इदं स्तुतिवाक्यं ब्रूमः वदामः । तथा रुद्रं स्तुमः । यश्च पशुपतिः देवस्तमपि स्तुमः । एते च देवाः 'भवाशर्वौ मृडतम्' ( अ ११,२ ) इत्यस्मिन् सूक्ते प्रपञ्चिताः । एषां देवानां या इषूः शरान् संविद्मः[5] संजानीमः ता नः अस्माकं सदा सर्वदा शिवाः सुखहेतवः सन्तु भवन्तु[6] ।

दिवं ब्रूमो नक्षत्राणि भूमिं[7] यक्षाणि पर्वतान् ।
[8]समुद्रा नद्यो वेशन्तास्ते[8] नो मुञ्चन्त्वंहसः ॥१०॥

दिवम् । ब्रूमः । नक्षत्राणि । भूमिम् । यक्षाणि[9] । पर्वतान् ।
समुद्राः । नद्यः । वेशन्ताः । ते । नः । मुञ्चन्तु । अंहसः ॥ १० ॥

दिवम् द्योतमानां द्यां ब्रूमः स्तुमः । तत्राश्रितानि नक्षत्राणि पुण्यकृतां धामानि । 'सुकृतां वा एतानि[10] ज्योतींषि यन्नक्षत्राणि' ( तै ५,४,१,३ ) इति श्रुतेः । तानि स्तुमः । तथा भूमिं स्तुमः । यक्षाणि पूज्यानि तत्रत्यानि पुण्यक्षेत्राणि स्तुमः । तथा पर्वतान्

---

१. दि S'. २. °वौ इदं पै १५,१३,९. ३. उग्रः पै. ४. विद्मः पै. ५. वैतु. मंपा. ६. भवन्ति S'. ७. भौमं पै १५,१४,३. ८. °समुद्रान् नद्यो वेशन्तां° स्तै मै २,७,१३. ९. यक्षाणि P,J. १०. एषां तानि S'.

हिमवत्प्रमुखान् महागिरीन् स्तुमः । समुद्राः सप्तसंख्याका भूम्याश्रिताः प्रसिद्धाः । नद्यः च गङ्गाद्याः । वेशन्ताः तदपेक्षया अल्पानि अन्यानि सरांसि । तान् सर्वान् स्तुमः ।

इति तृतीयेऽनुवाके चतुर्थं सूक्तम् ।

'सप्तऋषीन्[1] वा इदं ब्रूमः' इति सूक्तस्य पूर्ववद् विनियोगः । श्रौतदर्शपूर्णमासयोः प्राशित्रभक्षणानन्तरम् 'यन्मातली रथक्रीतम्' (अ ११,८,२३) इत्यनया ब्रह्मा अद्भिर्मार्जयेत् । तद् उक्तं वैताने —'प्राशित्रं यवमात्रम् अधस्ताद् उपरिष्टाद् वाऽभिघारितम्' इत्युपक्रम्य '[2]मातल्याद्भिर्मार्जयित्वा प्राणान् संस्पृशते' ( वैताश्रौ ३,७;१३ ) इति ।

सप्तर्षीन्[3] वा इदं ब्रूमोऽपो देवीः प्रजापतिम् ।
पितॄन् यमश्रेष्ठान् ब्रूमस्ते नो मुञ्चन्त्वंहसः ॥ ११ ॥

सप्तऽऋषीन्[4] । वै । इदम् । ब्रूमः । अपः । देवीः । प्रजाऽपतिम् ।
पितॄन् । यमऽश्रेष्ठान् । ब्रूमः । ते । नः । मुञ्चन्तु । अंहसः ॥ ११ ॥

सप्तऋषीन् उद्दिश्य खलु इदं स्तुतिवचनं ब्रूमः । अथवा तान् इदं फलं याचामहे । तथा अपो देवीः अब्देवताः प्रथमसृष्टाः स्तुमः । प्रजापतिम् तासां स्रष्टारं स्तुमः । तथा यमश्रेष्ठान् यमः श्रेष्ठो मुख्योऽधिपतिर्येषां तान् पितॄन् बर्हिषदग्निष्वात्तादीन् ब्रूमः स्तुमः । गतमन्यत् ।

ये देवा दिविषदो[5] अन्तरिक्षसदश्च ये ।
पृथिव्यां शक्रा ये श्रितास्ते नो मुञ्चन्त्वंहसः ॥ १२ ॥

ये । देवाः । दिविऽसदः । अन्तरिक्षऽसदः । च । ये ।
पृथिव्याम् । शक्राः[6] । ये । श्रिताः । ते । नः । मुञ्चन्तु । अंहसः ॥ १२ ॥

ये दिविसदः द्युलोके सीदन्तः उपविशन्तो देवाः । षद्लृ विशरणगत्यवसादनेषु । 'सत्सूद्विष' ( पा ३,२,६१ ) इत्यादिना क्विप् । तथा ये च अन्तरिक्षसदः अन्तरिक्षे उपविष्टाः तथा पृथिव्याम् भूमौ शक्राः शक्ता देवा ये श्रिताः आश्रिताः । अन्यद् गतम् ।

आदित्या रुद्रा वसवो "दिवि देवा" अथर्वाणः ।
अङ्गिरसो मनीषिणस्ते नो मुञ्चन्त्वंहसः ॥ १३ ॥

---

१. वैतु. मंपा. २. पात्राण्यद्भि° RG. ३. सप्तऋषीन् Bh,K,Km,D,Sm,V,S, सा. RW; पै १५,१४,४; सप्तषी > सप्तऋषीन् Dc; सप्तर्षीन् Cs. ४. सप्त°ऽर्षीन् P,P²,J. ५. दिविसदो S. ६. शक्रः P. ७. देवा दैवा पै १५,१४,६.

आदित्याः । रुद्राः । वसवः । दिवि । देवाः । अथर्वाणः ।
अङ्गिरसः । मनीषिणः । ते । नः । मुञ्चन्तु । अंहसः ॥ १३ ॥

आदित्याः अदितेः पुत्रा द्वादशसंख्याकाः । रुद्राः एकादश । वसवः अष्टौ । एते च दिवि वर्तमाना गणत्रयात्मका देवाः । विंशतिकाण्डात्मकस्यास्य वेदस्य द्रष्टारो महर्षयः अथर्वाणः तेऽपि तत्संख्याकाः । अङ्गिरसः अपि अस्य वेदस्य द्रष्टारस्तावन्तः । मनीषिणः मनस ईषिणः सर्वज्ञाः ते सर्वे अस्माभिः स्तुताः नः अस्मान् अंहसः [1]पापात् मुञ्चन्तु[1] ।

यज्ञं ब्रूमो यजमानमृचः सामानि भेषजा ।
यजूंषि होत्रा ब्रूमस्ते नो मुञ्चन्त्वंहसः ॥ १४ ॥

यज्ञम् । ब्रूमः । यजमानम् । ऋचः । सामानि । भेषजा ।
यजूंषि । होत्राः । ब्रूमः । ते । नः । मुञ्चन्तु । अंहसः ॥ १४ ॥

यज्ञम् अग्निष्टोमादिकं ब्रूमः स्तुमः । तथा यजमानम् तत्फलभाजं स्तुमः । ऋचः तस्मिन् यज्ञे याज्यादिरूपेण[2] विनियुक्ताः पादबद्धा मन्त्राः । तथा सामानि फलवद्यज्ञसाधनस्तोत्रनिर्वर्तकानि प्रगीतमन्त्रात्मकानि रथन्तरबृहद्वैरूपादीनि । भेषजा यानि च भेषजानि शान्तिकराणि वामदेव्यादीनि । यजूंषि तस्मिन् यज्ञे आध्वर्यवकर्मसु करणतया विनियुक्तानि क्रियमाणानुवादीनि वा प्रश्लिष्टपठितानि । होत्राः । होता मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टा अच्छावाक आग्नीध्र इति तस्मिन् सोमयागे सप्त वषट्कर्तारः तेषां क्रिया होत्राः । एतान् ऋक्सामादीन् यज्ञावयवान् ब्रूमः स्तुमः । गतमन्यत् ।

[3]पञ्च राज्यानि[3] वीरुधां सोमश्रेष्ठानि ब्रूमः[4] ।
दर्भो भङ्गो यवः सहस्ते नो मुञ्चन्त्वंहसः ॥ १५ ॥

पञ्च । राज्यानि । वीरुधाम् । सोमऽश्रेष्ठानि । ब्रूमः ।
दर्भः । भङ्गः । यवः । सहः । ते । नः । मुञ्चन्तु । अंहसः ॥ १५ ॥

वीरुधाम् विरोहणशीलानाम् ओषधीनां पञ्च पञ्चसंख्याकानि राज्यानि राज्ञा भिषजा विनियुज्यमानानि पत्रकाण्डपुष्पफलमूलात्मकानि सोमश्रेष्ठानि सोमो ह्यासां राजा। अतः स एव श्रेष्ठः प्रशस्यतमो येषां तथाविधानि वीरुधां राज्यानि ब्रूमः स्तुमः। तथा दर्भः कुशमयः प्रसिद्धः । भङ्गः शणः । यवः ओषधिविशेषः प्रसिद्धः । सहः कश्चिद्

---

१. ञ्चन्तु S'. २. या इत्यस्य स्थाने पञ्चवर्णानां स्थानं रिक्तम् S'. ३. पञ्च राज्यानि K,K^m,V,O; पञ्च राज्यानि > पञ्च राज्यानि Dc. ४. ब्रूमसि पै १५,१३,७.

ओषधिविशेषः। एतेऽपि अस्माभिः स्तुताः पापाद् मुञ्चन्तु। यद्वा वीरुधाम् ओषधीनां मध्ये पञ्चसंख्याकानि [1]राज्यानि राज्ञः[1] सोमस्य कर्माणि क्रियाविशेषनिष्पन्नानि। भेषजानीत्यर्थः। तानि च सोमश्रेष्ठानि सोमो लतारूपेण उत्पन्नः श्रेष्ठः प्रशस्यतमः येषां तानि। एतेन सोमलतात्मकम् एकं राज्यम् इत्युक्तं भवति। दर्भादीनि च चत्वारि[2]। एवं पञ्च राज्यानि स्तुम इति।

अरायान् ब्रूमो रक्षांसि सर्पान् पुण्यजनान् पितॄन्[3]।
मृत्यूनेकशतं ब्रूमस्ते नो मुञ्चन्त्वंहसः ॥ १६ ॥

अरायान्। ब्रूमः। रक्षांसि। सर्पान्। पुण्यऽजनान्। पितॄन्।
मृत्यून्। एकऽशतम्। ब्रूमः। ते। नः। मुञ्चन्तु। अंहसः ॥ १६ ॥

अरायान्[4] दानप्रतिबन्धकान् हिंसकान् ब्रूमः स्तुमः। यद्वा अरायाः आर्तिकरा रक्षोवद् बाधकाः पिशाचविशेषाः। तान् ब्रूमः स्तुमः। तथा रक्षांसि। 'रक्षो रक्षितव्यम् अस्मात्' (नि ४,१८) इति यास्कः। राक्षसान्। सर्पान् पन्नगान्। पुण्यजनान् यातुधानान्। पितॄन् पूर्वपुरुषान् पितृलोकं गतान्। मृत्यून् मारयितॄन् देवान् एकशतम् एकोत्तरशतसंख्याकान्। 'शतायुर्वै पुरुषः शतवीर्यः। आत्मैकशतः[5]' (तैब्रा १,७,६,४) इति श्रुतेर्मर्त्यः पुरुषः एकशतप्रकारः। ततो मारयितुर्मृत्योरपि तावत्प्रकारत्वं युज्यत एव। तथा च अन्यत्रापि मन्त्रवर्णो दृश्यते— 'अपास्य योऽसिनात्[6] पाशान् मृत्यून् एकशतं च' (तु. काठ ३८,१३ आपश्रौ १६,१६,१) इति। तान् सर्वान् ब्रूमः स्तुमः।

ऋतून् ब्रूम ऋतुपतीनार्तवानुत हायनान्।
समाः संवत्सरान् मासांस्ते नो मुञ्चन्त्वंहसः ॥ १७ ॥

ऋतून्। ब्रूमः। ऋतुऽपतीन्। आर्तवान्। उत। हायनान्।
समाः। सम्ऽवत्सरान्। मासान्। ते। नः। मुञ्चन्तु। अंहसः ॥ १७ ॥

ऋतून् वसन्ताद्यान् ब्रूमः स्तुमः। तथा ऋतुपतीन् तेषाम् ऋतूनाम् अधिपतीन्। तत्र वसन्तस्य वसवोऽधिपतयः। 'वसन्तेनर्तुना देवा वसवस्त्रिवृता स्तुतम्' (तैब्रा २,६,१९,१) इति[7] श्रुतेः। ग्रीष्मस्य रुद्रा अधिपतयः। 'ग्रीष्मेण देवा ऋतुना रुद्राः पञ्चदशे स्तुतम्' (तैब्रा २,६,१९,१) इति आम्नानात्। वर्षर्तोरादित्या अधिपतयः। 'वर्षाभिर्ऋतुनादित्याः' (तैब्रा २,६,१९,१) इति श्रूयमाणत्वात्। [8]शरदृतोर्ऋभवोऽधिपतयः[8]। 'शारदेनर्तुना देवा एकविंश ऋभवः स्तुतम्' (तैब्रा २,६,१९,२) इति श्रुतेः। 'हेमन्तशि-

---

१. राज्यानि रा नास्ति S'. २. त्वारि नास्ति S'. ३. उत पै १५,१४,९. ४. अरा इति स्थाने द्वित्रवर्णस्थानं रिक्तम्. ५. °शतम् S'. ६. येसिनात् S'. ७. इव S'. ८. शरदृताऋताधिपतयः S'.

शिरयोः समासेन' ( ऐब्रा १,१ ) इति एकत्वश्रवणात् समासेन तयोर्मरुतोऽधिपतयः। श्रूयते हि—'हेमन्तेनर्तुना देवा मरुतस्त्रिणवे[1] स्तुतम्' ( तैब्रा २,६,१९,२ ) इति । इत्थं वसुरुद्रादीन् ऋतुपतीन् ब्रूमः स्तुमः । आर्तवान् तत्तदृतुविशेषसंबन्धिनः पदार्थान् । उतशब्दः अप्यर्थे । हायनान् समाः संवत्सरान् इति पर्यायशब्दाश्चान्द्रसौरसावनभेदेन त्रिविधसंवत्सराभिप्रायाः । मासान् चैत्राद्यान् । एतान् सर्वान् ब्रूमः स्तुमः ।

एतं देवा दक्षिणतः पश्चात् प्राञ्चं उदेत[2] ।
[3]पुरस्तादुत्तराच्छक्रा[3] विश्वे देवाः समेत्य ते नो मुञ्चन्त्वंहसः ॥ १८ ॥

आ । इत । देवाः । दक्षिणतः । पश्चात् । प्राञ्चः[4] । उत्ऽएत । पुरस्तात् ।
उत्तरात् । शक्राः । विश्वे । देवाः । सम्ऽएत्य । ते । नः । मुञ्चन्तु । अंहसः ॥ १८ ॥

हे देवाः दक्षिणतः दक्षिणस्यां दिशि स्थिता यूयम् एत आगच्छत । एवं चतसृषु दिक्षु अवस्थिताः विश्वे सर्वे देवाः समेत्य समागत्य ते यूयम् अस्मान् अंहसः पापात् । मुञ्चतेति शेषः ।

विश्वान् देवानिदं ब्रूमः सत्यसंधानृतावृधः ।
विश्वाभिः पत्नीभिः सह[5] ते नो मुञ्चन्त्वंहसः ॥ १९ ॥

विश्वान् । देवान् । इदम् । ब्रूमः । सत्यऽसंधान् । ऋतऽवृधः ।
विश्वाभिः । पत्नीभिः । सह । ते । नः । मुञ्चन्तु । अंहसः ॥ १९ ॥

विश्वे देवा नाम देवगणाः । तान् विश्वान् देवान् उद्दिश्य इदं स्तुतिवचनं ब्रूमः वदामः । यद्वा इदं फलं याचामहे । कीदृशान् । सत्यसंधान् सत्यप्रतिज्ञान् । ऋतावृधः ऋतम् इति सत्यस्य यज्ञस्य वा नामधेयम् तस्य वर्धयितॄन् । विश्वाभिः पत्नीभिः विश्वाख्याभिर्देवीभिः सह । तान् ब्रूम इत्यर्थः । ते नः इत्यादि समानम् ।

सर्वान् देवानिदं ब्रूमः सत्यसंधानृतावृधः ।
सर्वाभिः पत्नीभिः सह ते नो मुञ्चन्त्वंहसः ॥ २० ॥

सर्वान् । देवान् । इदम् । ब्रूमः । सत्यऽसंधान् । ऋतऽवृधः ।
सर्वाभिः । पत्नीभिः । सह । ते । नः । मुञ्चन्तु । अंहसः ॥ २० ॥

---

१. °तस्तृणवे S'. २. उदेत नः पै १५,१४,८. ३. पुरश्शक्रा उत्तराद् पै.
४. पाञ्चः P. ५. साकं पै १५,१४,५.

विश्वशब्दस्य स्थाने सर्वशब्द एव विशेषः । उक्तान् अनुक्तांश्च सर्वान् देवान् । अन्यत् पूर्ववद् योज्यम् ।

भूतं ब्रूमो भूतपतिं भूतानामुत 'यो वशी'[1] ।
भूतानि सर्वा संगत्य[2] ते नो मुञ्चन्त्वंहसः ॥ २१ ॥

भूतम् । ब्रूमः । भूतऽपतिम् । भूतानाम् । उत । । यः । वशी ।
भूतानि । सर्वा । सम्ऽगत्य । ते । नः । मुञ्चन्तु । अंहसः ॥ २१ ॥

भूतम् लब्धसत्ताकं वस्तुमात्रं ब्रूमः स्तुमः । भूतपतिम् तस्य भूतस्य अधिपतिम् ईश्वरम् । उत अपि च तेषां सर्वेषां भूतानां यो वशी वशयिता नियन्ता तमपि स्तुमः । सर्वा सर्वाणि तानि भूतानि संगत्य संभूयागत्य । गतम् अन्यत् ।

या देवीः पञ्च प्रदिशो ये देवा द्वादशर्तवः[3] ।
संवत्सरस्य ये[4] दंष्ट्रास्ते नः सन्तु सदा शिवाः २२ ॥

याः । देवीः । पञ्च । प्रऽदिशः । ये । देवाः । द्वादश । ऋतवः ।
सम्ऽवत्सरस्य । ये । दंष्ट्राः । ते । नः । सन्तु । सदा । शिवाः ॥ २२ ॥

याः प्रसिद्धाः पञ्च पञ्चसंख्याकाः प्रदिशः प्रधानदिशः देवीः देव्यो दानादिगुणयुक्ता देवतारूपा वा सन्ति, ये देवाः दानादिगुणयुक्ता द्वादश द्वादशसंख्याकाः ऋतवः 'मधुश्च माधवश्च' (तै १,४,१४,१) इत्येवम् अनुक्रान्ता मासाः, तथा संवत्सरस्य द्वादशमासात्मकस्य प्रजापतेः ये दंष्ट्राः दशन्ति खादन्ति एभिरिति दंष्ट्रा दन्तविशेषाः । 'दाम्नीशस' ( पा ३,२,१८२) इत्यादिना करणे ष्ट्रन्प्रत्ययः । ते चात्र संवत्सरसंबन्धिनो विष्टयादिदुष्टकालात्मकाः । ते सर्वे नः अस्माकं सदा सर्वदा शिवाः कल्याणहेतवः सन्तु ।

यन्मातली रथक्रीतममृतं वेद भेषजम् ।
तदिन्द्रो अप्सु प्रावेशयत् तदापो[5] दत्त भेषजम् ॥ २३ ॥

यत् । मातली । रथऽक्रीतम् । अमृतम् । वेद । भेषजम् ।
तत् । इन्द्रः । अप्ऽसु । प्र । अवेशयत् । तत् । आपः[6] । दत्त । भेषजम् ॥२३॥

मातली इन्द्रस्य सारथिः रथक्रीतम् रथस्य क्रयेण लब्धम् अमृतम् अमरणसाधनं यद् भेषजं वेद जानाति तत् भेषजम् इन्द्रः तस्य रथस्य अधिपतिर्देवः अप्सु उदकेषु प्रावेशयत्

१. यः पतिः पै १५,१४,११. २. ब्रूमस् पै. ३. द्वादश ऋतवः RW. पै १५,१४,१०. ४. ते पै. ५. तु. W.; वैतु. शंपा. तदापो. ६. तु. संपा.; वैतु. शंपा. आपः.

प्राक्षिपत् । हे आपः यूयं तत् मातलिना क्रीतम् इन्द्रेण क्षिप्तं भेषजम् औषधं दत्त अस्मभ्यं प्रयच्छत ।

इति पञ्चमं सूक्तम् ।

इति सायणाचार्यविरचिते अथर्वसंहिताभाष्ये एकादशे काण्डे तृतीयोऽनुवाकः ।

ऋ. अथर्वा, दे. उच्छिष्टः, अध्यात्मम्

चतुर्थेऽनुवाके षट् सूक्तानि । तत्र आद्यैस्त्रिभिः सूक्तैर्ब्रह्मौदनाख्ये सवयज्ञे हुतशिष्टस्य ओदनस्य सर्वजगत्कारणभूतब्रह्माभेदेन स्तुतिः क्रियते । तत्रैव एषां विनियोगो द्रष्टव्यः ।

उच्छिष्टे नाम रूपं चोच्छिष्टे लोक आहितः ।
उच्छिष्ट इन्द्रश्चाग्निश्च विश्वमन्तः समाहितम् ॥ १ ॥

उत्ऽशिष्टे । नाम । रूपम् । च । उत्ऽशिष्टे । लोकः । आऽहितः ।
उत्ऽशिष्टे । इन्द्रः । च । अग्निः । च । विश्वम् । अन्तः । समऽआहितम् ॥ १ ॥

उच्छिष्टे । होमाद् ऊर्ध्वं शिष्यते अवशिष्यत इति हुतावशिष्टः[1] प्राशनार्थ ओदनः उच्छिष्टः । तस्य देवसृष्टिहेतुत्वं तावच्छ्रूयते हि—'अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनम् अपचत् । तस्या उच्छेषणम् अददुः । तत् प्राश्नात् सा रेतोऽधत्त । तस्यै धाता चार्यमा चाजायेताम्' ( तैब्रा १,१,९,१ ) इत्यादि । तथा अस्मिन्नेव[2] वेदे मुण्डकोपनिषदि अन्नस्य सर्वजगद्धेतुता समाम्नास्यते—

'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।
अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्' ॥ ( मुउ १,१,८) इति ।

तस्मिन् उच्छिष्टे हुतशिष्टे अन्ने नाम नामधेयात्मकः शब्दप्रपञ्चः रूपम् तेन निरूपणीयः अर्थप्रपञ्चश्च तद् उभयम् आहितम् आस्थितम । नामरूपात्मकः प्रपञ्चस्तस्मिन् कारणभूते समाश्रित्य लब्धसत्ताकोऽवतिष्ठत इत्यर्थः । यद्वा 'अथात आदेशो नेति नेति' ( बृउ २,३,६ ), 'नेह नानास्ति किंचन' ( बृउ ४,४,१९ ) इत्येवं दृश्यप्रपञ्चनिषेधाद् ऊर्ध्वं तदवधित्वेन शिष्यते अवशिष्यत इत्युच्छिष्टं बाधावधित्वेन शिष्यमाणं परं ब्रह्म । तस्मिन् शुक्त्यादौ रजतादिवत् नाम रूपं चेति द्विधाभूतं समस्तं जगत् आहितम् आरोपितम् । वर्तत इत्यर्थः । इत्थं सामान्येन सर्वजगदाधारत्वम् अभिधाय विशेषतो निर्दिशति—उच्छिष्टे लोकः आहितः इत्यादिना । उच्छिष्टे उच्छिष्यमाणे[3] ब्रह्माभिन्ने कारणभूते तस्मिन्नोदने लोकः पृथिव्यादिरूपः सर्वो लोकः आहितः आस्थितः । तस्मिन्नेव उच्छिष्टे द्युलोकाधिपतिः इन्द्रश्च पृथिव्यधिपतिः अग्निश्च उभौ

१. °शिष्टे S'. २. तस्मिन्नेव S'. ३. °माण S'.

आहितौ। किं बहुना एतदुपलक्षितं विश्वम् सर्वं जगत् अन्तः मध्ये समाहितम् सम्यग् ईश्वरेण स्थापितम्।

उच्छिष्टे द्यावापृथिवी विश्वं भूतं समाहितम्।
आपः समुद्र उच्छिष्टे चन्द्रमा वात आहितः ॥२॥

उत्ऽशिष्टे। द्यावापृथिवी इति। विश्वम्। भूतम्। सम्ऽआहितम्।
आपः। समुद्रः। उत्ऽशिष्टे। चन्द्रमाः। वातः। आऽहितः॥ २॥

प्रथमयर्चा संग्रहेण उक्त एवार्थः एतदादिभिर्मन्त्रैर्बहुधा प्रपञ्च्यते — द्यावापृथिवी द्यावापृथिव्यौ उच्छिष्टे उच्छिष्यमाणे ब्रह्मणि तदात्मके हुतशिष्टौदने वा समाहिते। आश्रित्य वर्तेते इत्यर्थः। भूतम् तत्रत्यं यद् भूतजातं विश्वम् सर्वं तद् उच्छिष्टे समाहितम् सम्यग् निहितम्। तदाधारवशात् प्रचलतीत्यर्थः। तथा आपः व्यापनशीलाः प्रथमसृष्टा जगत्कारणभूताः तासां समुदायात्मकः समुद्रः च तस्मिन् उच्छिष्टे समाहिताः। चन्द्रमाः तस्मात् समुद्रात् मथ्यमानाद् उत्पन्नः, वातः वायुः अन्तरिक्षाधिपतिर्देवः आहितः आश्रितः।

सन्नुच्छिष्टे असंश्चोभौ मृत्युर्वाजः प्रजापतिः।
लौक्या उच्छिष्ट आयत्ता[1] व्रश्च द्रश्चापि श्रीर्मयि॥ ३॥

सन्। उत्ऽशिष्टे। असन्। च। उभौ। मृत्युः। वाजः। प्रजाऽपतिः।
लौक्याः। उत्ऽशिष्टे। आऽयत्ताः[2]। व्रः। च। द्रः। च। अपि। श्रीः। मयि॥ ३॥

सन् सत्तया क्रोडीकृतो भावरूपः प्रपञ्चः असन् अभावात्मकः च उभौ सदसतौ उच्छिष्टे तस्मिन् उदीरितलक्षणे। कार्यत्वेन वर्तेते इत्यर्थः। तथा तस्य सदसदात्मकस्य प्रपञ्चस्य मारको[3] मृत्युः वाजः तदीयं बलं तस्य सर्वस्य स्रष्टा प्रजापतिः च तत्रैव आहिताः। तथा लौक्याः लोकसंबन्धिन्यः प्रजाः तस्मिन् उच्छिष्टे आहिताः[4] स्थापिताः। तथा व्रः वारको वरुणः द्रः द्रावकः अमृतमयः सोमः। परस्परसमुच्चयार्थौ चकारौ। तौ अपि अस्मिन् आहितौ। तत्प्रसादात् श्रीः संपत् मयि विदुषि आहिता आस्थिता भवतु।

दृढो दृंहस्थिरो[5] न्यो ब्रह्म विश्वसृजो[6] दश।
नाभिमिव सर्वतश्चक्रमुच्छिष्टे देवताः श्रिताः[7]॥ ४॥

---

१. आयता K; आयता>आयत्ता Dc. २. आऽयताः P². ३. अस्य स्थानं रिक्तम् S'. ४. वेतु. मंपा. ५. दृंह स्थिरो RW., वैप १,१६६४ b द्र. ६. विश्वदृशो पै १६,८२,४. ७. आहिताः पै.

दृढः । दृंहऽस्थिरः[1] । न्यः । ब्रह्म । विश्वऽसृजः । दश ।
नाभिम्ऽइव । सर्वतः । चक्रम् । उत्ऽशिष्टे । देवताः । श्रिताः ॥ ४ ॥

दृढः दृढाङ्गः । प्रवृद्धशरीरो देव इत्यर्थः । दृह दृहि वृद्धौ । 'दृढः स्थूल-बलयोः' (पा ७,२,२०) इति निष्ठायां निपात्यते । दृंहस्थिरः दृंहणेन स्थिरीकृतो लोकः । न्यः नेतारस्तत्रत्याः प्राणिनः । ब्रह्म परिवृढं जगत्कारणम् अव्यक्तात्मकम् । विश्वसृजः विश्वस्य स्रष्टारो नव ब्रह्माणः तत्स्रष्टा दशमः एवं दश दशसंख्याकाः । यद्वा नव प्राणाः मुख्यः प्राण एकः । एते हि प्रथमसृष्टा विश्वस्य स्रष्टारः । एते सर्वे उच्छिष्टे समाहिताः । अपि च देवताः इन्द्राद्याः सर्वे देवा नाभिमिव चक्रम् यथा रथचक्रं मध्यस्थं नाभिं सर्वतः आवेष्ट्य वर्तते एवम् उच्छिष्टे श्रिताः आश्रिताः । कारणभूतं ब्रह्म आवेष्ट्य वर्तन्ते इत्यर्थः ।

ऋक् साम यजुरुच्छिष्ट उद्गीथः प्रस्तुतं स्तुतम् ।
हिङ्कार उच्छिष्टे स्वरः[2] साम्नो मेडिश्च[3] तन्मयि ॥ ५ ॥

ऋक् । साम । यजुः । उत्ऽशिष्टे । उत्ऽगीथः । प्रऽस्तुतम् । स्तुतम् ।
हिङ्ऽकारः[4] । उत्ऽशिष्टे । स्वरः । साम्नः । मेडिः । च । तत् । मयि ॥ ५ ॥

अनयोत्तरया च यज्ञाङ्गानां तदाश्रितत्वं प्रतिपाद्यते—ऋक् साम यजुः इति । सर्वत्र जातावेकवचनम् । ऋचः पादबद्धा मन्त्रा यज्ञे याज्यानुवाक्यादिरूपेण विनियुक्ताः । सामानि प्रगीतमन्त्राः 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' इत्येवं स्तोत्रसा-धनत्वेन विनियुक्ताः । यजूंषि प्रश्लिष्टपठिता अनुष्ठेयार्थप्रकाशका मन्त्राः । तेषां लक्षणं जैमिनिराचार्योऽसूत्रयत्—'तेषाम् ऋग् यत्रार्थवशेन पादव्यवस्था', 'गीतिषु सामाख्या', 'शेषे यजुःशब्दः' (मीसू २,१,३५-३७) इति । एवं त्रिविधा मन्त्रा उच्छिष्टे उच्छिष्यमाणे ब्रह्मणि समाश्रिताः । तत्र आज्यादिस्तोत्रनिर्वर्तकानां साम्नां पञ्च भक्तयः हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनाख्याः प्रयोगशास्त्रेण कल्पिताः । तत्र च उद्गात्रा गीयमानो भाग उद्गीथः । प्रस्तुतम् प्रस्तोत्रा गीयमानः प्रस्तावाख्यो भागः । प्रस्तूयते स्तुतेः प्रारम्भः क्रियते अनेनेति प्रस्तु-तम् । प्रपूर्वात् स्तौतेः करणे निष्ठा । स्तुतम् स्तोत्रं स्तवनकर्म । हिङ्कारः सर्वैरुद्गा-तृभिः आदौ प्रयुज्यमानो हिं इति शब्दः । स्वरः कृत्स्नसामाश्रितः क्रुष्टप्रथमद्वि-तीयतृतीयचतुर्थमन्द्रातिमन्द्रात्मकः सप्तविधः स्वरः । अथवा कानिचित् सामानि आ इ ई इत्येवमात्मकैः स्वरैः परिसमाप्यन्ते । तानि च सामानि स्वरनिधनानि इत्युच्यन्ते । स आकारोऽत्र स्वरशब्देन विवक्षितः । स च साम्नः संबन्धी ।

---

१. दृंह । स्थिरः P,P²,J; दृंहः । स्थिरः Cp. २. मदस् पै १६,८२,५. ३. मी· डिश्च V. ४. हिग्° P.

तथा मेडिः मेलयिता ऋगक्षराणां गानविशेषस्य च संसर्जकः स्तोभविशेषः । अथवा मेलिरिति[1] वाङ्नाम ( तु. निघ १,११ ) । साम्नः संबन्धिनी वाक् । कानिचित् सामानि वाङ्निधनानि गीयन्ते । तदभिप्रायम् एतत् । तद् एतद् उद्गीथादिकं सर्वम् उच्छिष्टे समाश्रितम् । तत् सर्वं मयि । यज्ञसमृद्ध्यर्थं भवत्वित्यर्थः ।

ऐन्द्राग्नं पावमानं महानाम्नीर्महाव्रतम् ।
उच्छिष्टे यज्ञस्याङ्गान्यन्तर्गर्भ इव मातरि ॥ ६ ॥

ऐन्द्राग्नम् । पावमानम् । महाऽनाम्नीः । महाऽव्रतम् ।
उत्ऽशिष्टे । यज्ञस्य । अङ्गानि । अन्तः । गर्भःऽइव । मातरि ॥ ६ ॥

ऐन्द्राग्नम् इन्द्राग्न्योः स्तावकम् 'इन्द्राग्नी आ गतं सुतम्' ( ऋ ३,१२,१ ) इति तृचे गीयमानं साम ऐन्द्राग्नं प्रातःसवने प्रयुज्यमानम् । पावमानम् त्रिष्वपि सवनेषु सवनादौ गीयमानं पवमानसोमदेवताकं साम । उभयत्र 'साऽस्य देवता' ( पा ४,२,२४ ) इति अण्प्रत्ययः । महानाम्नीः महानाम्न्यः । 'विदा मघवन् विदा गातुम् अनुशंसिषो दिशः' ( कौ ४,१ ) इत्याम्नाता ऋचः । तत्र गीयमानं शाक्करं सामापि महानाम्नीशब्देनोच्यते[2] । ताश्च द्वादशाहमध्यवर्तिनि दशरात्रे पञ्चमेऽहनि पृष्ठसामत्वेन विनियुक्ताः । महाव्रतम् राजनगायत्रबृहद्रथन्तरभद्राख्यैः पञ्चभिः सामभिः क्रियमाणं स्तोत्रम् । तच्च गवामयनस्योपान्त्येऽहनि[3] प्रथमं पृष्ठस्तोत्रम् । एकाहोऽपि सोमयागस्तद्वान् महाव्रतम्[4] इति आख्यायते । एवम् ऐन्द्राग्नादीनि यज्ञस्य अङ्गानि उच्छिष्टे अन्तः मध्ये मातरि गर्भ इव वर्तन्ते । यथा मातुरुदरमध्ये आश्रितो गर्भः पुष्यन् अभिवर्धते एवम् एतान्यपि कारणभूते ब्रह्मणि आश्रितत्वेन भाव्यमानानि अङ्गिनं यज्ञं फलसमृद्धं कुर्वन्तीत्यर्थः ।

राजसूयं वाजपेयमग्निष्टोमस्तदध्वरः[5] ।
अर्काश्वमेधावुच्छिष्टे जीवबर्हिर्मदिन्तमः ॥ ७ ॥

राजऽसूयम् । वाजऽपेयम् । अग्निऽस्तोमः । तत् । अध्वरः ।
अर्कऽअश्वमेधौ । उत्ऽशिष्टे । जीवऽबर्हिः । मदिन्ऽतमः ॥ ७ ॥

अङ्गवद् अङ्गिनामपि तदाश्रयत्वम् इतः परं प्रतिपाद्यते । राजा सूयते प्रेर्यते यस्मिन् कर्मणि तद् राजसूयम् इष्टिपशुसोमदर्विहोमात्मकं शस्त्रप्रधानम्[7] । 'राजसूयसूर्य' ( पा ३,१,११४ ) इत्यादिना क्यपि निपात्यते । 'गतिकारकोपपदात् कृत्' ( पा ६,२,१३९ ) इति कृदुत्तरपदप्रकृतिस्वरत्वम् । वाजपेयम् वाजः अन्नं द्रवीकृत्य पेयं यस्मिन् कर्मणि

---

१. मेलेरिति S′. २. नोच्यन्ते S′. ३. म नास्ति S′. ४. °व्रत S′.
५. °ततोऽध्वरः पै १६,८२,७. ६. आर्का° B. ७. शतप्रधानम् S′.

**तत् तथोक्तम्।** 'राजा स्वर्गकामो राजसूयेन यजेत' (आश्रौ ९,९,१९) **इति क्षत्रिय एव राजसूये कर्मणि अधिकारी। वाजपेये तु ब्राह्मणक्षत्रियौ उभावपि अधिक्रियेते। श्रूयते हि**—'स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः तं वा एतं वाजपेय[1] इत्याहुः' (तैब्रा १,३,२,३) **इति। तथा** अग्निष्टोमः **चरमस्तोत्रे यज्ञायज्ञीये अग्निः स्तूयत इति अग्निष्टोमः द्वादशस्तोत्र[2]-शस्त्रसहितः सर्वसोमानां प्रकृतिभूतः सोमयागः** । तत् । **लिङ्गव्यत्ययः। सः** अध्वरः **हिंसाप्रत्यवायरहितः।** [3]'अग्नीषोमीयं पशुम्[3]आलभेत' (तु. तै ६,१,११,६) **इति आलभ्यपशु-हिंसाया विहितत्वेन** 'न हिंस्यात् सर्वभूतानि' **इति निषेधशास्त्रस्य तत्रानुप्रवेशाभावात्।** अर्काश्वमेधौ **अर्कश्चित्योऽग्निः । अश्वो मेधः पशुर्यस्मिन् त्रिरात्रात्मके अहीने सोमे सोऽश्वमेधः । तौ अर्काश्वमेधौ । अथवा विराडात्मना उपास्यमानश्चित्योऽग्निः अर्कः। तस्य च तथात्वेन उपासनम् ऐतरेयकोपनिषदि समाम्नायते**—'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते । एतमग्नावध्वर्यवः । एतं महाव्रते छन्दोगाः' (ऐआ ३,२,३) **इति। अश्वमेधशब्देन च** 'उषा वा अश्वस्य मेध्यस्य शिरः' (बृउ १,१,१) **इत्याद्युप-निषदा अश्वमेधाङ्गस्य अश्वस्य विराडात्मना यद् उपासनम् उक्तं तद् विवक्षितम्।** 'तावितावर्काश्वमेधौ' (बृउ १,२,७) **इति तदुपासनप्रकरणे समाम्नानात् । एतदेवाभिप्रेत्य तैत्तिरीयैरपि आम्नायते**—'अर्को वा एष यद् अग्निः । असावादित्योऽश्वमेधः' (तै ५,७,५,२) **इति। एते राजसूयादयः सर्वे** उच्छिष्टे **उच्छिष्यमाणे निष्प्रपञ्चे ब्रह्मणि तदात्मना भाव्यमाने ओदने वा समाश्रिताः। तथा** जीवबर्हिः **जीवावस्थान्येव बर्हींषि यस्य याग-विशेषस्य स तथोक्तः ।** मदिन्तमः **मादयितृतमः देवानां तृप्तिविशेषकरः अन्योऽपि सोमयागः। स सर्वोऽपि उच्छिष्टे समाश्रित इत्यर्थः।** 'नाद्घस्य' (पा ८,२,१७) **इति तमपो नुडागमः।**

**अ॒ग्न्या॒धेय॒मथो॑ दी॒क्षा का॑म॒प्रश्छन्द॑सा[4] स॒ह।**
**उत्स॑न्ना[†] य॒ज्ञाः[5] स॒त्राण्यु॒च्छि॒ष्टेऽधि॑ स॒माहि॑ताः ॥ ८ ॥**

अ॒ग्नि॒ऽआ॒धेय॑म् । अथो॒ इति॑ । दी॒क्षा । का॒म॒ऽप्रः[6] । छन्द॑सा । स॒ह ।
उत्ऽस॑न्नाः । य॒ज्ञाः । स॒त्राणि॑[7] । उत्ऽशि॑ष्टे । अधि॑ । स॒म्ऽआहि॑ताः ॥ ८ ॥

अग्न्याधेयम् **अग्नयो गार्हपत्यादयो यस्मिन् कर्मणि आधीयन्ते तद् अग्न्या-धेयम् ।** अथो **अग्न्याधानानन्तरमेव सोमयागस्य या** दीक्षा **दीक्षणीयेष्ट्यादिरूपा** कामप्रच्छन्दसा[8] **कामान् अभिलषितान् फलविशेषान् प्राति यजमानस्य पूरयतीति कामप्रम् । प्रा पूरणे ।** 'आतोऽनुपसर्गे कः' (पा ३,२,३) **इति कप्रत्ययः । तादृशेन छन्दसा गायत्रीत्रिष्टुबादिना सवननिष्पादकेन** सह । उत्सन्नयज्ञाः[8] **इदानीं दुरधिगमतया**

---

१. °पेयम् S'.　२. स्तोत्रे S'.　३. °मीयपशुं S'.　४. का॑म॒ः प्रः छंद॑सा E; का॑म॒प्रछन्द॑सा A,C,K,K^m,V,Dc; का॑म॒पृछंद॑सा B^h; का॑म॒प्रःछंद॑सा D,R,B,Cs,I,K[2]; का॑म॒ः प्र छंद॑सा S^m.　५. उत्सन्नयज्ञाः S, सा.　† उच्छिन्ना पै १६,८२,८.　६. क॒म॒° P.　७. स॒र्वा॑णि P[2].　८. वैतु. मंपा.

अनुष्ठानाभावात् लुप्तप्राया यज्ञा उत्सन्नयज्ञा इत्युच्यन्ते । तानेव निर्दिशति— सत्राणि इति । सीदन्ति एषु बहवो यजमानाः कर्तृत्वेनेति बहुकर्तृकाः सोमयागाः सत्राणि उच्यन्ते । श्रूयते हि— 'चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्' (तु. आपश्रौ २३,१,१) इति । तानि च त्रयोदशरात्रप्रभृतीनि विश्वसृजाम् अयनान्तानि । न खल्विदानीन्तनानाम् अल्पमतीनाम् अल्पायुषां तदनुष्ठानं संभवतीति तेषाम् उत्सन्नयज्ञत्वम् । एवम् अनुक्रान्ता अग्न्याधेयादयः सर्वे यागा उच्छिष्टे ब्रह्मणि अधि समाहिताः समाश्रिताः ।

अग्निहोत्रं च श्रद्धा च वषट्कारो व्रतं तपः ।
दक्षिणेष्टं पूर्तं चोच्छिष्टेऽधि समाहिताः ॥ ९ ॥

अग्निऽहोत्रम् । च । श्रद्धा । च । वषट्ऽकारः । व्रतम् । तपः ।
दक्षिणा । इष्टम् । पूर्तम् । च । उत्ऽशिष्टे । अधि । सम्ऽआहिताः ॥ ९ ॥

अग्नये होत्रं होमः अस्मिन् कर्मणि इति अग्निहोत्रम् । 'सायंप्रातरग्निहोत्रं जुहुयात्' ( आपश्रौ ६,१५,१४ ) इति विहितम् । श्रद्धा श्रद्धानं तदनुष्ठानविषया आस्तिक्यबुद्धिः । 'श्रदन्तरोरुपसर्गवद् वृत्तिरिष्यते' (पाका ३,३,१०६) इति वचनात् 'आतश्चोपसर्गे' (पा ३,३,१०६) इति अङ् । परस्परसमुच्चयार्थौ चकारौ । वषट्कारः याज्यान्ते हविःप्रदानाय प्रयुज्यमानो वौषट् इति शब्दः । व्रतम् । 'नानृतं वदेत् । नास्य ब्राह्मणोऽनाश्वान् गृहे वसेत्' ( तैब्रा १,१,४,२ ) इत्यादिशास्त्रविहितम् आहिताग्नेः प्रातिस्विकम् अनृतवदनवर्जनादिरूपं कर्म ।

'अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।'

इत्येवमादिरूपं वर्ज्यसाधारणं च व्रतशब्देन विवक्षितम् । तपः शरीरसंतापकरं कृच्छ्रचान्द्रायणादिकम् । यद्वा 'पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्य आमिक्षा वैश्यस्य' ( तैआ २,८,१ ) इति दीक्षादिवसेषु देहयात्रार्थं विहितं पयःपानादिकं व्रतम् । तपो ब्रह्मचर्यं चित्तैकाग्र्यं वा ।

'मनसश्चेन्द्रियाणां चैकाग्र्यं तप उच्यते ।'

इति स्मरणात् । दक्षिणा 'तस्य द्वादशशतं दक्षिणा' ( आपश्रौ २२,१२,१२ ) इत्यादिशास्त्रेण विहिता ऋत्विगानतये देयद्रव्यस्य क्लृप्तिः[1] । तथा[2] इष्टम् श्रुतिविहितं यागहोमादिकर्म । पूर्तम् स्मृतिपुराणाभिहितं वापीकूपतटाकदेवायतनारामादिनिर्माणम् । एते च अग्निहोत्रादयः सर्वे उच्छिष्टे उच्छिष्यमाणे प्रपञ्चासंस्पृष्टे ब्रह्मणि । अधिः सप्तम्यर्थानुवादी । समाहिताः समाश्रिताः ।

---

१. कृप्तिः S'. २. त S'.

एकरात्रो द्विरात्रः[1] सद्यःक्रीः प्रक्रीरुक्थ्यः ।
ओतं निहितमुच्छिष्टे यज्ञस्याणूनि विद्यया ॥ १० ॥

एकऽरात्रः । द्विऽरात्रः । सद्यःऽक्रीः । प्रऽक्रीः । उक्थ्यः ।
आऽउतम् । निऽहितम् । उत्ऽशिष्टे । यज्ञस्य । अणूनि । विद्यया ॥ १० ॥

एकां रात्रिं व्याप्य वर्तमानः सोमयाग एकरात्रः । तथा द्वे रात्री व्याप्य वर्तमानः सोमयागो द्विरात्रः । द्विरात्रप्रभृतयः सोमयागा अहीना इत्युच्यन्ते । 'द्विरात्रप्रभृतयः उपरिष्टाद्अतिरात्रा अहीना ऐकादशरात्रात्' (आपश्रौ २२,१४,१) इति सूत्रितत्वात् । अतो नैषां सत्रेष्वन्तर्भाव इति पृथगुपादानम् । 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' (पा ५,४,८७) इति समासान्तः अच्प्रत्ययः । सद्यस्क्रीः[2] प्रक्रीः[3] इत्युभौ एकाहौ सोमयागविशेषौ । सद्यस्तदानीमेव क्रीयते सोमोऽस्मिन्निति सद्यःक्रीः । प्रक्रीशब्दोऽपि इत्थं निर्वक्तव्यः । उक्थ्यः अग्निष्टोमसंस्थात ऊर्ध्वभावीनि त्रीणि स्तुतशस्त्राणि उक्थसंज्ञकानि यस्य सन्ति स सोमयाग उक्थ्यः[4] । तद् एतद् एकरात्रादिकम् उच्छिष्टे उदीरितलक्षणे ओतम् आबद्धं निहितम् निक्षिप्तम् । वर्तत इत्यर्थः । इत्थं यज्ञस्य संबन्धीनि अणूनि सूक्ष्माणि रूपाणि विद्यया भावनया । तत्रैव कारणभूते [5]ब्रह्मणि निहितानीत्यर्थः[5] ।

इति चतुर्थेऽनुवाके प्रथमं सूक्तम् ।

चतूरात्रः[6] पञ्चरात्रः षड्रात्रश्चोभयः सह ।
षोडशी सप्तरात्रश्चोच्छिष्टाज्जज्ञिरे सर्वे ये यज्ञा अमृते हिताः ॥ ११ ॥

चतुःऽरात्रः[7] । पञ्चऽरात्रः । षट्ऽरात्रः । च । उभयः । सह । षोडशी ।
सप्तऽरात्रः । च । उत्ऽशिष्टात् । जज्ञिरे । सर्वे । ये । यज्ञाः । अमृते । हिताः ॥ ११ ॥

चतसृभी रात्रिभिरावर्त्यमानः सोमयागः चतूरात्रः । एवं पञ्चरात्रषड्रात्रसप्तरात्रा व्याख्येयाः । उभयः इत्यनेन चतूरात्रादीनां द्विगुणितत्वं विवक्षितम् । उभौ चतूरात्रलक्षणौ अवयवावस्य सः अष्टरात्र उभयः । एवं पञ्चरात्रो द्विगुणितो दशरात्रो भवति । षड्रात्रो द्विगुणितो द्वादशरात्र इत्येवम् अवगन्तव्यम् । सहशब्द एतेषां साहित्यम् आचष्टे । षोडशी उक्थ्यसंस्थात उपरि षोडशं षोडशसंख्यापूरकं स्तोत्रं शस्त्रं च यस्यास्ति स सोमयागः षोडशी । तन्निर्वचनम् एवम् आम्नायते—'यद् वाव षोडशं स्तोत्रं षोडशं शस्त्रं तेन षोडशी । तत् षोडशिनः

---

१. त्रिरात्रश्च पै १६,८२,१०.　२. वैतु. मंपा.　३. परिक्रीः S'.　४. उक्थः S'.
५. ब्रह्मणापितत्व···नीत्यर्थः S'.　६. चतुरात्रः B; चतूरात्रः > चतुरात्रः Dc.　७. चतू° P.

षोडशिवम्' ( तै ६,६,११,१ ) इति । ये च अन्ये यज्ञा अमृते हिताः अमृतलक्षण-फलजनने समर्थाश्चतूरात्रादयः सर्वे ते यज्ञा उच्छिष्टात् ब्रह्मौदनोच्छेषणाद् उच्छि-ष्यमाणात् जगत्कारणाद् ब्रह्मण एव वा जज्ञिरे जाता बभूवुः । जनी प्रादुर्भावे। 'गमहन°' ( पा ६,४,९८ ) इति उपधालोपः । 'द्विर्वचनेऽचि' ( पा १,१,५९ ) इति स्थानिवत्त्वात् साच्कस्य द्विर्वचनम् ।

प्रतीहारो निधनं विश्वजिच्चाभिजिच्च यः ।
साह्नातिरात्रावुच्छिष्टे द्वादशाहोऽपि तन्मयि ॥ १२ ॥

प्रतिऽहारः । निऽधनम् । विश्वऽजित् । च । अभिऽजित् । च । यः ।
साह्नऽअतिरात्रौ । उत्ऽशिष्टे । द्वादशऽअहः । अपि । तत् । मयि ॥ १२ ॥

उद्गीथभक्त्यनन्तरभाविनी प्रतिहर्त्रा उच्यमाना साम्नश्चतुर्थी भक्तिः प्रतिहारः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' ( पा ६,३,१२२ ) इति सांहितिको दीर्घः । येन भागेन साम परिसमाप्यते तत् निधनम्[1]। तच्च सर्वैरुद्गातृभिर्वक्तव्यम् । विश्वजिदभिजितौ द्वौ सोमयागौ अग्निष्टोमसंस्थौ । साह्नातिरात्रौ । एकेन अह्ना समाप्यमानः सवनत्रयात्मकः सोमयागः साह्नः । रात्रिम् अतीत्य वर्तत इति अतिरात्रः एकोनत्रिंशत्स्तुतशस्त्रवान् सोमयागः । एते प्रतिहारादयः उच्छिष्टे ब्रह्मणि परिकल्पिताः । द्वादशाहोऽपि । द्वादशानाम् अह्नां समाहारो यस्मिन् क्रतौ स क्रतुर्द्वादशाहः । स च सत्राहीनात्मकः । सोपि तस्मिन् ब्रह्मणि आश्रितः । 'राजाहःसखिभ्यष्टच्' ( पा ५,४,९१ ) इति टच् समासान्तः । 'न संख्यादेः समाहारे' ( पा ५,४,८९ ) इति अह्नादेशाभावः । यद् एतद् अनुक्रान्तं यज्ञजातं तत् सर्वं मयि भवत्विति प्रार्थना अवगन्तव्या ।

सूनृता संनतिः क्षेमः[2] स्वधोर्जामृतं सहः ।
उच्छिष्टे सर्वे प्रत्यञ्चः कामाः कामेन तातृपुः[3] ॥ १३ ॥

सूनृता । सम्ऽनतिः । क्षेमः[4] । स्वधा । ऊर्जा[5] । अमृतम् । सहः ।
उत्ऽशिष्टे । सर्वे । प्रत्यञ्चः । कामाः । कामेन । ततृपुः ॥ १३ ॥

सूनृता प्रियसत्यात्मिका वाक् । संनतिः फलस्य नतिः उपनतिः । तस्य उपनतस्य फलस्य परिरक्षणं क्षेमः । स्वधा पितॄणां संबन्धिनी तृप्तिकरी । यद्वा अन्ननामैतत् । सर्वप्राण्युपभोग्यम् अन्नम् । ऊर्जा प्राणस्य स्थापकं बलकरम् अन्नम् । ऊर्ज बलप्राणनयोः[6] । अस्मात् पचाद्यच् । अमृतम् देवोपभोग्यम् अमृतत्वप्रापकं पीयूषम् । सहः

---

१. निधानम् S'. २. क्षमं B; क्षेमं Km,R,Sm,P3,O,R2,K2. ३. तृप्यन्ति पै १६,८३,३. ४. क्षेमं P,J,Bp2,D2,Kp; क्षमं P2. ५. ऊर्जाम् P. ६. °प्राणयोः S'.

पराभिभवनक्षमं बलम्। एते सर्वे कामाः काम्यमानाः फलविशेषा उच्छिष्टे ब्रह्मणि आश्रिताः प्रत्यञ्चः आत्माभिमुखम् अञ्चन्तः प्राप्नुवन्तः कामेन काम्यमानेन अभिलषितफलेन तातृपुः यजमानं तर्पयन्ति प्रीणयन्ति। तृप प्रीणने। 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति वर्तमाने लिट्।

नव॒ भूमीः॑[1] समु॒द्रा उच्छि॒ष्टेऽधि॑ श्रि॒ता दिवः॑।
आ सूर्यो॑ भा॒त्युच्छि॑ष्टेऽहोरा॒त्रे अपि॒[2] तन्मयि॑ ॥ १४ ॥

नव॑। भूमीः॑[1]। स॒मु॒द्राः। उत्ऽशि॑ष्टे। अधि॑। श्रि॒ताः॑[3]। दिवः॑।
आ। सूर्यः॑। भा॒ति॒। उत्ऽशि॑ष्टे। अ॒हो॒रा॒त्रे इति॑। अपि॑। तत्। मयि॑ ॥ १४ ॥

नव भूमीः नवखण्डात्मिकाः पृथिव्यः। समुद्राः सप्तसंख्याकाः। दिवः द्युलोका उपरितनाः। उच्छिष्टे अधि उच्छिष्यमाणे ब्रह्मणि श्रिताः आश्रिताः। सूर्यः चायम् उच्छिष्टे उच्छिष्यमाणे स्वप्रकाशे परब्रह्मणि आश्रितः सन् आ भाति आ समन्ताद् दीप्यते। 'तस्य भासा सर्वम् इदं विभाति' (कठ २,२,१५) इति श्रुतेः। अहोरात्रे अपि तद् आश्रित्य आभातः। तद् उक्तं सर्वं मयि भवत्विति।

[4]उ॒प॒ह॒व्यं॑ वि॑षू॒वन्तं॒[5] ये च॑ य॒ज्ञा गुहा॑ हि॒ताः॑।
बिभ॑र्ति भ॒र्ता विश्व॒स्योच्छि॑ष्टो जनि॒तुः पि॒ता ॥ १५ ॥

उ॒प॒ऽह॒व्य॑म्[6]। वि॒षु॒ऽवन्त॑म्। ये। च॒। य॒ज्ञाः। गुहा॑। हि॒ताः।
बिभ॑र्ति। भ॒र्ता। विश्व॑स्य। उत्ऽशि॑ष्टः। ज॒नि॒तुः। पि॒ता ॥ १५ ॥

उपहव्यम् एतत्संज्ञं सोमयागम्। विषूवन्तम्। गवामयनाख्यस्य संवत्सरसत्रस्य मासषट्कात्मकयोः पूर्वोत्तरपक्षयोर्मध्ये एकविंशस्तोमकोऽनुष्ठेयः सोमयागो विषूवान् तम्। ये च अन्ये यज्ञा गुहा हिताः गुहायां निगूढा अज्ञायमाना वर्तन्ते तान् सर्वान् यज्ञान् अयम् उच्छिष्टः उच्छिष्यमाण ओदनः परमात्मा वा बिभर्ति धारयति पोषयति वा। कीदृशः स इति विशेष्यते—विश्वस्य सर्वस्य जगतो भर्ता। जनितुः जनयितुः स्वजनकस्य सवयज्ञानुष्ठातुः पिता पुण्यलोके तस्योत्पादकः। परमात्मपक्षे तु लोके यो जनयिता तस्य सर्वस्यापि पिता। सर्वे जनयितारोऽपि अस्मात् प्रथमम् उत्पद्य[7] ततः स्वकार्यं जनयन्तीत्यर्थः। ततः सर्वकारणकारणभूत इति भावः।

---

१. भूमिः B,B^h,P.　२. पि B,E,O; अपि>पि Dc.　३. श्रिता P,P²,J; श्रिता>श्रिताः Cp.　४. उपह्व्यं° D,K²; उपहव्यं विषू° K,K^m,V,B²,W,O,R²,T; उपह्व्यं विषू°>उपहव्यं विषू° Dc.　५. दिवि श्रिताः पै १६,८३,५.　६. उपऽह्व्यम् P²,Cp,D².　७. उत्पाद्य S'.

पिता जनितुरुच्छिष्टोऽसोः पौत्रः पितामहः ।
'स क्षियति' विश्वस्येशानो वृषा भूम्यामतिघ्न्यः ॥ १६ ॥

पिता । जनितुः । उत्ऽशिष्टः । असोः । पौत्रः । पितामहः ।
सः । क्षियति । विश्वस्य । ईशानः । वृषा । भूम्याम् । अतिऽघ्न्यः ॥ १६ ॥

उच्छिष्टः हुतावशिष्ट ओदनः जनितुः जनयितुः स्वोत्पादकस्य पिता लोकान्तरे दिव्यशरीरस्य उत्पादकः । तथा असोः प्राणस्य पौत्रः । प्राणचलनात् शरीरस्य चलनं तेन च ओदनस्य पाक इति व्यवधानापेक्षया पौत्रत्वम् । तथा तस्यैव प्राणस्य अयं पितामहः । भाविस्वर्गभोगयोग्यस्य शरीरस्य तावद् अयं पिता । तस्य शरीरोत्पत्यनन्तरं तत्र प्राणसंचार इति भाविशरीरव्यवधानाद् भाविनः प्राणस्य अयं परंपरया उत्पादक इति पितामहत्वम् । 'अथात आदेशो नेति नेति' ( बृउ २,३,६ ) इति दृश्यप्रपञ्चनिषेधावधित्वेन उच्छिष्यमाणः परमात्मा यदा उच्छिष्टशब्दार्थः तदा एवं योजना—जनितुर्जनयितुः उत्पादकस्य प्राणिजातस्य उच्छिष्यमाणः परमात्मा पिता। स्वस्वकार्यम् उत्पादयतां सर्वेषाम् अयम् आद्यस्रष्टेत्यर्थः । तथा असोः प्राणस्य प्रथमसृष्टस्य हिरण्यगर्भात्मनः पौत्रः । पुत्रश्चतुर्मुखो ब्रह्मा तत्सृष्टा देवादयः पौत्राः। तदात्मना परमात्मैव अवस्थित इत्यर्थः । तत्र यः पितामहो हिरण्यगर्भः तस्य च परमात्मनश्च वास्तवभेदाभावात् पितामहत्वमपि विज्ञेयम् । एवंभूतः स उच्छिष्टः विश्वस्य सर्वस्य जगत ईशानः ईश्वरो भवन् वृषा कामानां वर्षिता अतिघ्न्यः अतिक्रान्तहननः सन् भूम्याम् पृथिव्यां क्षियति निवसति । सर्वप्राणिशरीरेषु वर्तते ।

ऋतं सत्यं तपो राष्ट्रं[2] श्रमो धर्मश्च कर्म च ।
भूतं भविष्यदुच्छिष्टे वीर्यं लक्ष्मीर्बलं बले ॥ १७ ॥

ऋतम् । सत्यम् । तपः । राष्ट्रम् । श्रमः । धर्मः । च । कर्म । च ।
भूतम् । भविष्यत् । उत्ऽशिष्टे । वीर्यम् । लक्ष्मीः । बलम् । बले ॥ १७ ॥

ऋतम् मनसा यथार्थसंकल्पनम् । सत्यम् वाचा यथार्थभाषणम् । तपः शरीरसंतापकरो व्रतोपवासादिनियमविशेषः । राष्ट्रम् राज्यम् । श्रमः ?शान्तिः शब्दादिविषयोपभोगस्य उपरतिः? । धर्मः तज्जन्यः अपूर्वविशेषः । कर्म वर्णाश्रमानुसारेण विहितं यागदानहोमादि । भूतम् उत्पन्नं जगत् । भविष्यत् उत्पत्स्यमानम् । एतत् सर्वम् उच्छिष्टे ब्रह्मणि तदात्मके[3] ओदने वा कार्यत्वेन नित्यम् आश्रितम् इति । तथा वीर्यम् सामर्थ्यम् ।

---

१. शिक्षत् ? पै १६,८३,६. २. दीक्षा पै १६,८३,७. ३. त्मके नास्ति S'.

लक्ष्मीः सर्ववस्तुसंपत्तिः । बलम् सर्वकर्मनिर्वर्तनक्षमं[1] शरीरगतं सामर्थ्यं बले बलवति तस्मिन् उच्छिष्टे । वर्तन्त इत्यर्थः ।

समृद्धिरोज आकूतिः क्षत्रं राष्ट्रं षडुर्व्यः ।
संवत्सरोऽध्युच्छिष्ट इडा प्रैषा ग्रहा हविः ॥ १८ ॥

सम्ऽऋद्धिः । ओजः । आऽकूतिः । क्षत्रम् । राष्ट्रम् । षट् । उर्व्यः ।
सम्ऽवत्सरः । अधि । उत्ऽशिष्टे । इडा । प्रऽएषाः । ग्रहाः । हविः ॥ १८ ॥

समृद्धिः इष्टफलस्य अभिवृद्धिः । ओजः शारीरबलम् अष्टमो धातुः । आकूतिः इष्टफलविषयः संकल्पः । क्षत्रम् क्षात्रं तेजः । राष्ट्रम् क्षत्रधर्मेण परिपालनीयं राज्यम् । षट् षट्संख्याका उर्व्यः । ताश्च मन्त्रान्तरे परिगण्यन्ते—'षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च' ( आश्रौ १,२,१ ) इति । तथा संवत्सरः द्वादशमासात्मकः कालः । इडा नाम देवता यस्याः प्रीतये यज्ञेषु हुतशिष्टात् पुरोडाशादेर्भागोऽवदीयते । प्रैषाः कर्मसु ऋत्विजां प्रेरका मन्त्राः । ग्रहाः वायव्यैर्गृह्यमाणा ऐन्द्रवायवादयः सोमाः । हविः चरुपुरोडाशादिलक्षणम् । एतत् सर्वम् उच्छिष्टे अधि उच्छिष्यमाणे ब्रह्मणि आधारे । वर्तत इत्यर्थः ।

चतुर्होतार आप्रियश्चातुर्मास्यानि नीविदः ।
उच्छिष्टे यज्ञाः होत्राः पशुबन्धास्तदिष्टयः ॥ १९ ॥

चतुःऽहोतारः । आप्रियः । चातुःऽमास्यानि । निऽविदः ।
उत्ऽशिष्टे । यज्ञाः । होत्राः । पशुऽबन्धाः । तत् । इष्टयः ॥ १९ ॥

चतुर्होतारः चतुर्होतृसंज्ञका मन्त्राः 'चित्ति स्रुक्' ( तैआ ३,१-५ ) इत्याद्याः पञ्चानुवाकास्तैत्तिरीयके समाम्नाताः । यद्यपि तेषां दशहोता चतुर्होता पञ्चहोता षड्ढोता सप्तहोतेति क्रमेण संज्ञा तथापि ते सर्वे चतुर्होतृसंज्ञयैवोच्यन्ते । तथा च तत्रैव होतृविध्यवसाने श्रूयते—'त्वं वै मे नेदिष्ठं हूतः प्रत्यश्रौषीः, [2]त्वयैनानाख्यातार इति । तस्मान्नु हैनांश्चतुर्होतार इत्याचक्षते' ( तैब्रा २,३,११,४ ) इति । आप्रियः पशुयागसंबन्धिनां प्रयाजानां याज्याः । श्रूयते हि तन्नामनिर्वचनम्—'आप्रीभिराप्नुवन् तद् आप्रीणामाप्रित्वम्' ( तैब्रा २, २,८,६ ) इति । भगवान् आश्वलायनोऽपि सूत्रयति स्म 'एकादश प्रयाजाः तेषां प्रैषाः । प्रथमं प्रैषसूक्तम् । उक्तं द्वितीये । अध्वर्युप्रेषितो मैत्रावरुणः प्रेष्यति[3] । प्रैषैर्होतारम् । होता यजत्याप्रीभिः प्रैषसलिङ्गाभिः' (आश्रौ ३,२,१-५) इति । चातुर्मास्यानि चतुर्षु मासेषु क्रियमाणानि वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि चत्वारि पर्वाणि 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं

---

१. °निवर्त्तन° S'. २. त्वं वै नाना° शंपा. ३. प्रैष्यति S'.

भवति' ( आपश्रौ ८,१,१ ) इति श्रुत्या विहितानि । निविदः स्तोतव्यगुणप्रकर्षनिवेदनपरा मन्त्राः 'अग्निर्देवेद्धः । अग्निर्मन्विद्धः । इन्द्रो मरुत्वान्त्सोमस्य पिबतु । इन्द्रो देवः सोमं पिबतु' ( खि ५,५,१-३ ) इत्येवमाद्याः । 'निविद्भिर्न्यवेदयंस्तन्निविदां निवित्त्वम्' ( ऐब्रा ३,९) इति हि ब्राह्मणम् । तथा यज्ञाः यागाः । होत्राः होतृप्रमुखाः सप्त वषट्कर्तारः । पशुबन्धाः अग्नीषोमीयसवनीयानुबन्ध्यात्मकाः सोमाङ्गभूताः पशुयागाः । स्वतन्त्राश्च 'वायव्यं श्वेतम् आलभेत' ( तै २,१,१,१ ) इत्यादिना विहिताः । इष्टयः अपि अङ्गभूताः स्वतन्त्राश्च । तद् एतद् अनुक्रान्तं चतुर्होतृप्रभृतिकं सर्वम् उच्छिष्टे उच्छिष्यमाणे ब्रह्मणि तदात्मके ओदने वा समाश्रित्य वर्तत इत्यर्थः ।

अ॒र्ध॒मा॒साश्च॑ मासा॑श्चार्त॒वा ऋ॒तुभि॑ः स॒ह ।
उच्छि॑ष्टे घो॒षिणी॒राप॑ः[1] स्तन॒यि॒त्नुः श्रु॒तिर्म॒ही[2] ॥ २० ॥

अ॒र्ध॒ऽमा॒साः । च॒ । मासा॑ः । च॒ । आ॒र्त॒वाः । ऋ॒तुऽभि॑ः । स॒ह ।
उत्ऽशि॑ष्टे । घो॒षिणी॑ः[3] । आप॑ः । स्त॒न॒यि॒त्नुः । श्रु॒तिः[4] । म॒ही ॥ २० ॥

अर्धमासाः पञ्चदशदिवसात्मकाः पक्षाः । मासाः चैत्राद्याः । आर्तवाः तत्तदृतुसंबन्धिनः पदार्थविशेषाः । ऋतुभिः तैर्वसन्ताद्यैः सह । सर्व एते उच्छिष्टे समाश्रिताः । तथा घोषिणीः घोषिण्यः घोषयुक्ता आपः । स्तनयित्नुः स्तनयन् गर्जितं कुर्वन् मेघः । शुचिः[5] शुद्धा मही महती भूमिः । एतेऽपि तस्मिन् उच्छिष्टे समाश्रिता इत्यर्थः ।

इति चतुर्थेऽनुवाके द्वितीयं सूक्तम् ।

शर्क॑राः सिक॑ता॒ अश्मा॑न॒ ओष॑धयो वी॒रुध॒स्तृणा॑ ।
अ॒भ्राणि॑ वि॒द्युतो॑ व॒र्षमुच्छि॑ष्टे॒ संश्रि॑ता श्रि॒ता ॥ २१ ॥

शर्क॑राः । सिक॑ताः । अश्मा॑नः । ओष॑धयः । वी॒रुध॑ः । तृणा॑ ।
अ॒भ्राणि॑ । वि॒ऽद्युत॑ः । व॒र्षम् । उत्ऽशि॑ष्टे । सम्ऽश्रि॑ता । श्रि॒ता ॥ २१ ॥

शर्कराः क्षुद्रपाषाणविशेषाः । सिकताः वालुकाः । अश्मानः पाषाणाः । ओषधयः व्रीहियवाद्याः । वीरुधः विरोहणशीला लताः । तृणा तृणानि गवादिभिरुपभोग्यानि । अभ्राणि उदकपूर्णा मेघाः । विद्युतः तडितः । वर्षम् वृष्टिः । एते सर्वे उच्छिष्टे संश्रिताः[5] समवस्थिताः । श्रिताः[5] इति पुनरुक्तिरादरार्था । यद्वा ये च अन्ये संश्रिताः स्वाश्रयसमवेताः पदार्थास्ते सर्वे श्रिता इति ।

---

१. °राप॑ D,E,K^m,R,S^m,V,Cs. २. शुचि॑° K,V, सा. पै १६,८३,१०.
३. घो॒षणी॑ः P. ४. शु॒तिः P. ५. वैतु. संश्रा.

**राद्धिः प्राप्तिः समाप्तिर्व्याप्तिर्महं[1] एधतुः[2] ।**
**अत्याप्तिरुच्छिष्टे भूतिश्चाहिता निहिता हिता ॥ २२ ॥**

राद्धिः । प्रऽआप्तिः । समऽआप्तिः । विऽआप्तिः । महः । एधतुः[3] ।
अतिऽआप्तिः । उत्ऽशिष्टे । भूतिः । च । आऽहिता । निऽहिता । हिता ॥ २२ ॥

राद्धिः **संसिद्धिः सम्यग् निष्पत्तिः ।** प्राप्तिः **प्रेप्सितस्य फलस्य अधिगमः ।** समाप्तिः **सम्यगाप्तिः ।** व्याप्तिः **विविधा आप्तिः ।** महः **तेजः उत्सवो वा ।** एधतुः **अभिवृद्धिः ।** अत्याप्तिः **अतिक्रान्ता आप्तिः ।** भूतिः **समृद्धिः । सा च** आहिता **आभिमुख्येन स्थिता** निहिता **निक्षिप्ता । अत्र सर्वत्र उपसर्गवशाद् अर्थभेदोऽव-गन्तव्यः । राद्ध्यादयः सर्वास्तस्मिन्** उच्छिष्टे हिताः[4] **स्थिताः ।**

**यच्चं प्राणति प्राणेन यच्च पश्यति चक्षुषा ।**
**उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः ॥ २३ ॥**

यत् । च । प्राणति । प्राणेन । यत् । च । पश्यति । चक्षुषा ।
उत्ऽशिष्टात् । जज्ञिरे । सर्वे । दिवि । देवाः । दिविऽश्रितः ॥ २३ ॥

यच्च **प्राणिजातं** प्राणेन **प्राणवायुना** प्राणति **प्राणनव्यापारं करोति यद्वा प्राणेन घ्राणेन्द्रियेण प्राणति गन्धान् आजिघ्रति ।** यच्च **प्राणिजातं** चक्षुषा **चक्षुरिन्द्रियेण** पश्यति **नीलपीतादिकं साक्षात्करोति ते** सर्वे **प्राणिनः** उच्छिष्टात् **उच्छिष्यमाणाद् ब्रह्मणः सकाशात्** जज्ञिरे **। तथा** दिविश्रितः **द्युलोके स्थिताः । श्रिञ् सेवायाम् ।** 'क्विप् च' ( पा ३,२,७६ ) **इति क्विप् ।** 'तत्पुरुषे कृति बहुलम्' ( पा ६,३,१४ ) **इत्यत्र** 'हृद्द्युभ्यां ङेरुपसंख्यानम्' ( पावा ६,३,९ ) **इति अलुक् । ये च अन्ये** दिवि **द्युलोके वर्तमाना** देवाः **ते सर्वे उच्छिष्टाज्जज्ञिरे ।**

**ऋचः सामानि च्छन्दांसि पुराणं यजुषा सह ।**
**उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः ॥ २४ ॥**

ऋचः । सामानि । छन्दांसि । पुराणम् । यजुषा । सह ।
उत्ऽशिष्टात् । जज्ञिरे । सर्वे । दिवि । देवाः । दिविऽश्रितः ॥ २४ ॥

**उच्छिष्टाज्जज्ञिर इति उत्तरोऽर्धर्चः अनुषज्यते ।** ऋचः **पादबद्धा मन्त्राः ।** सामानि **गीतविशिष्टा मन्त्राः** छन्दांसि **गायत्र्युष्णिगादीनि चतुरक्षराधिकानि सप्तसं-**

---

१. व्याप्ति° P³,M,W,I,O, Cs,Dc. २. एधतुः A,B,B²,Bʰ,C,D,E,K,Kᵐ,R,Sᵐ,V, ३. एधतुः P,J,Cp,WM. ४. वैतु. मंपा.

ख्याकानि । पुराणम् पुरातनवृत्तान्तकथनरूपम् आख्यानम् । यजुषा यजुर्मन्त्रेण सह उच्छिष्टाज्जज्ञिरे । शेषं पूर्ववत् ।

प्राणापानौ चक्षुः श्रोत्रमक्षितिश्च क्षितिश्च या ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः ॥ २५ ॥

प्राणापानौ । चक्षुः । श्रोत्रम् । अक्षितिः । च । क्षितिः । च । या ।
उत्ऽशिष्टात् । जज्ञिरे । सर्वे । दिवि । देवाः । दिविऽश्रितः ॥ २५ ॥

प्राणापानौ प्राणवृत्तिः अपानवृत्तिश्च । चक्षुः रूपदर्शनसाधनम् इन्द्रियम् । श्रोत्रम् शब्दग्रहणसाधनम् इन्द्रियम् । अक्षितिः क्षयाभावः । या च क्षितिः क्षयः । यद्वा अक्षितिः अक्षीयमाणा देवता । क्षितिः क्षयाभिमानिनी । एते सर्वे पदार्था उच्छिष्टाज्जज्ञिरे इति ।

[1]आनन्दा मोदाः प्रमुदोऽभीमोदमुदश्च[1] ये ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः ॥ २६ ॥

आऽनन्दाः । मोदाः[2] । प्रऽमुदः । अभिमोदऽमुदः[3] । च । ये ।
उत्ऽशिष्टात् । जज्ञिरे । सर्वे । दिवि । देवाः । दिविऽश्रितः ॥ २६ ॥

आनन्दाः विषयोपभोगजनिताः सुखविशेषाः । मोदाः विषयदर्शनजन्या हर्षाः । मुद हर्षे इत्यस्माद् भावे घञ् । प्रकृष्टा मुदः प्रमुदः प्रकृष्टविषयलाभजन्या हर्षाः । ये च अभीमोदमुदः आभिमुख्येन वर्तमानो मोदः अभिमोदः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' ( पा ६,३,१२२ ) इति दीर्घः । अभिमोदेन मोदयन्ति हर्षयन्तीत्यभिमोदमुदः संनिहिताः सुखहेतवः पदार्थाः । ते सर्वे उच्छिष्टाज्जज्ञिरे इति ।

देवाः पितरो मनुष्या गन्धर्वाप्सरसश्च ये ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः ॥ २७ ॥

देवाः । पितरः । मनुष्याः । गन्धर्वऽअप्सरसः । च । ये ।
उत्ऽशिष्टात् । जज्ञिरे । सर्वे । दिवि । देवाः । दिविऽश्रितः ॥ २७ ॥

देवाः अष्टौ वसव एकादश रुद्रा इत्येवं गणशो वर्तमानाः । पितरः पितृलोकनिवासिनः पूर्वपुरुषाः । मनुष्याः मनोः सकाशाद् उत्पन्ना मनुष्यजात्याक्रान्ताः ।

---

१. आनन्दाश्च प्रमोदाश्चाभिमोद° पै १६,८४,८. २. मोदः P. ३. °मदः P².

'मनोर्जातावञ्यतौ षुक् च' (पा ४,१,१६१) इति मनुशब्दाद् यत्प्रत्ययः षुगागमश्च। 'तित् स्वरितम्' (पा ६,१,१८५) इति स्वरितत्वम्। गन्धर्वाप्सरसः गन्धर्वाः विश्वावसुप्रभृतयः। अप्सरसः उर्वशीप्रभृतयः। ये च एते देवाद्या अनुक्रान्तास्ते सर्वे उच्छिष्टात् ब्रह्मौदनोच्छेषणाद् उच्छिष्यमाणाद् ब्रह्मणः सकाशाद् वा जज्ञिरे उत्पन्नाः। तथा दिवि द्युलोके वर्तमाना ये च अन्ये देवाः तथा दिविश्रितः दिवम् आश्रित्य वर्तमाना देवजनाः ते सर्वे उच्छिष्टाज्जज्ञिरे इति।

इति चतुर्थेऽनुवाके तृतीयं सूक्तम्।

ऋ. कौरुपथिः, दे. मन्युः, अध्यात्मम्

'यन्मन्युर्जायाम्' इत्यादिसूक्तत्रयम् अर्थसूक्तम्। अस्य सूक्तत्रयस्य ब्रह्मयज्ञजपे विनियोगः। अनेन च सूक्तत्रयेण षाट्कौशिकस्य शरीरस्य मध्ये आत्मत्वेन प्रविष्टं ब्रह्म उपदेक्ष्यन् उपलब्ध्यधिकरणभूतस्य तस्य शरीरस्य तत्साधनभूतानाम् इन्द्रियाणां च देवानां प्रश्नप्रतिवचनरूपेण उत्पत्तिम् अभिधित्सुस्तदुपायभूतां सृष्टिं प्रश्नप्रतिवचनाभ्याम् उपोद्घातयति 'यन्मन्युः' इति द्वयृचेन।

यन्मन्युर्जायामावहत् संकल्पस्य गृहादधि।
क आसं जन्याः के वराः क उ ज्येष्ठवरोऽभवत् ॥ १ ॥

यत्। मन्युः। जायाम्। आऽअवहत्। समऽकल्पस्य। गृहात्। अधि।
के। आसन्। जन्याः। के। वराः। कः। ऊं इति। ज्येष्ठऽवरः। अभवत् ॥ १ ॥

स्वमहिमप्रतिष्ठस्य परब्रह्मणः सत्त्वरजस्तमोगुणात्मिकाया मायाशक्तेश्च प्राणिकर्मपरिपाकजनितसंबन्धवशाज्जायमाना 'सोऽकामयत बहु स्यां प्रजायेय' (तैआ ८,६,१) इत्यादिश्रुतिप्रतिपाद्या या पारमेश्वरी[1] सिसृक्षावस्था [2]सा लौकिकविवाहत्वेन[2] रूप्यते। यत् यदा मन्युः मन्यते सर्वं जानातीति मन्युः निरावरणज्ञान ईश्वरः। अत एव तस्य सर्वदेवतात्मकत्वम् आम्नायते— 'मन्युर्भगो मन्युरेवास देवो मन्युर्होता वरुणो विश्ववेदाः' (तैब्रा २,४,१,११) इति। मन ज्ञाने इत्यस्माद् औणादिको युप्रत्ययः। स जायाम् आवहत् जायतेऽस्यां सर्वं जगद् इति जाया सिसृक्षावस्थापन्ना पारमेश्वरी[1] मायाशक्तिः। ताम् आभिमुख्यं प्रापयत्। भार्यात्वेन अभ्यमन्यतेत्यर्थः[3]। लोके हि जाया कस्यचित् श्वशुरस्य गृहाद् आनीयते। तद् दर्शयति— संकल्पस्य इति। 'सोऽकामयत बहु स्यां प्रजायेय' (तैआ ८,६,१) इति प्राथमिक ईश्वरकृतः संकल्पः तस्य गृहाद् आवासात्। तद्वशादेव हि एषा सिसृक्षावस्था समजायत इत्येवं व्यपदिश्यते। अधिः पञ्चम्यर्थानुवादी। तदा तस्मिन् जायाया आवहने जन्याः जनसंबन्धिनो बान्धवा वधूवरपक्षीयाः के

१. पर° S'. २. सा लौ नास्ति S'. ३. नाभ्य° S'.

आसन् । सृष्टेः प्राक् कस्यचिदपि अभावाद् एवं प्रश्नः । के वा वराः कन्या वरणस्य कर्तारः । को नाम तस्मिन् समये ज्येष्ठवरः प्रधानभूतो वरः उद्वाहकर्ता अभवत् ।

तप॑श्चैवास्तां कर्म॑ चान्तर्म॑हत्य॒र्ण॒वे[1] ।
त आ॑सं॒ जन्या॒स्ते व॒रा ब्रह्म॒ ज्येष्ठव॒रो॑ऽभवत् ॥ २ ॥

तप॑ः । च॒ । ए॒व । आ॒स्ता॒म्[2] । कर्म॑ । च॒ । अ॒न्तः । म॒ह॒ति[3] । अ॒र्ण॒वे ।
ते । आ॒स॒न् । जन्याः॑ । ते । व॒राः । ब्रह्म॑ । ज्ये॒ष्ठ॒ऽव॒रः । अ॒भ॒व॒त् ॥ २ ॥

तस्मिन् सृष्टिसमये स्रष्टुः परमेश्वरस्य तपः स्रष्टव्यपर्यालोचनात्मकम्[4] । 'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः' ( मुउ १,१,९ ) । इति श्रुतेः तस्य कर्म च प्राणिभिरनुष्ठितं पुण्यापुण्यात्मकं सुखदुःखफलोन्मुखं परिपक्वं कर्म च आस्ताम् अभवताम् । एवकारेण तदुभयव्यतिरिक्तस्य सत्ता निवार्यते । तपःकर्मणी एव सस्यशुपकरणत्वेन[5] तस्मिन् समये अवस्थिते इत्यर्थः । श्रूयते हि—'तपसा चीयते ब्रह्म' ( मुउ १,१,८ ) । 'स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वम् असृजत' (तैआ ८,६,१) इति तपःकर्मणोः सत्ताया आधारं निर्दिशति—महति प्रभूते अर्णवे समुद्रे प्रलयकालीने अन्तः मध्ये । 'आपो वा इदम् अग्रे सलिलम् आसीत् ( तैब्रा १,१,३,५ ) इति हि ब्राह्मणम् । अर्णांसि उदकानि विद्यन्ते अस्मिन् इति अर्णवः । 'अर्णसो लोपश्च' (पावा ५,२,१०९) इति मत्वर्थीयो वकारः सलोपश्च । अनयोरेव तपःकर्मणोर्वस्त्वन्तराभावाद् व्यक्तिबाहुल्यबहुत्वम्[6] उपचर्य कृतस्य प्रश्नस्य प्रतिवचनम्—त आसं जन्याः इति । 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददते' ( पाकै. पस्पशाह्निके ) इति न्यायेन त इति प्रतिनिर्दिश्यमानापेक्षं पुंलिङ्गत्वम् । ताः तपःकर्मव्यक्तयो जन्याः विवाहप्रवृत्ता बन्धुजना आसन् । ते एव वराः वरयितारश्च आसन् । यत् सिसृक्षावस्थं जगत्कारणं ब्रह्म मायाशक्तिरूपाया जायाया आवहने स एव ज्येष्ठवरः अभवत् । प्रधानभूतः उद्वाहकर्ताऽभवद् इत्यर्थः ।

दश॑ सा॒कम॑जायन्त दे॒वा दे॒वेभ्यः॑ पु॒रा ।
यो वै तान् वि॒द्यात् प्र॒त्यक्षं॒ स वा अ॒द्य म॒हद् व॑देत् ॥ ३ ॥

दश॑ । सा॒कम् । अ॒जा॒य॒न्त॒ । दे॒वाः । दे॒वेभ्यः॑ । पु॒रा ।
यः । वै । तान् । वि॒द्यात् । प्र॒ति॒ऽअ॒क्षम् । सः । वै । अ॒द्य । म॒ह॒त् । व॒दे॒त् ॥ ३ ॥

---

१. मै॑हत्य॒र्ण॒वे P³,M,E. २. आस्ता॑म् P,P²,J,WM. ३. म॒ह॒ति P,J,Bp².
४. °चनयात्मकम् S'. ५. सत्युपक° S'. ६. °बहुम् S'.

यद् ब्रह्म सशक्तिकम् अभवद् इत्युक्तं तस्मात् सकाशाद् देवेभ्यः अधिष्ठातृभ्यः अग्न्यादिभ्यः पुरा तेषाम् उत्पत्तेः प्रागेव दश दशसंख्याका देवाः दीव्यन्ति स्वस्वविषयं प्रकाशयन्तीति देवा ज्ञानकर्मेन्द्रियाणि । यद्वा सप्त शीर्षण्याः प्राणा द्वौ अवाञ्चौ मुख्यः प्राण एक इति दश । अथवा 'प्राणापानौ चक्षुः श्रोत्रम्' इत्युत्तरत्र वक्ष्यमाणा दशसंख्याका देवाः साकम् सह अजायन्त । श्रूयते हि—

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।' ( मुउ २,१,३ ) इति ।

यो वै यः खलु उपासकः तान् देवान् प्रत्यक्षं विद्यात् अपरोक्षं जानीयात् स वा खलु विद्वान् अद्य इदानीं महत् देशकालकृतपरिच्छेदरहितं[1] सर्वगतं ब्रह्म वदेत् उपदिशेत् ।

प्राणापानौ चक्षुः श्रोत्रमक्षितिश्च क्षितिश्च या[2] ।
व्यानोदानौ वाङ् मनस्ते वा आकूतिमावहन् ॥ ४ ॥

प्राणापानौ । चक्षुः । श्रोत्रम् । अक्षितिः । च । क्षितिः । च । या ।
व्यानऽउदानौ । वाक् । मनः । ते । वै । आऽकूतिम् । आ । अवहन् ॥ ४ ॥

हृदम्बुजमध्ये अवस्थितस्य क्रियाशक्त्यात्मकस्य मुख्यप्राणस्य प्राणापानाद्या वृत्तयः । चक्षुः दर्शनसाधनम् इन्द्रियम् । श्रोत्रम् शब्दग्रहणसाधनम् इन्द्रियम् । अक्षितिः अक्षीयमाणा ज्ञानशक्तिः । क्षितिः क्षीयमाणा निवासहेतुभूता वा क्रियाशक्तिः । ज्ञानशक्तिर्हि आत्मस्वरूपत्वेन नित्यत्वाद् न कदाचित् क्षीयते । क्रियाशक्तिस्तु अपवर्गसमये लिङ्गशरीरेण सह निवर्तत इति क्षितिशब्दाभिधेया । परस्परसमुच्चयार्थौ चकारौ । या एवंविधा द्विविधा शक्तिः । अस्तीत्यर्थः । व्यानोदानौ अन्नरसं[3] सर्वासु नाडीषु विविधम् अनिति प्रेरयतीति व्यानः । उत् ऊर्ध्वम् अनिति उद्गारादिव्यापारं करोतीति उदानः । एते प्राणस्य द्वे वृत्ती । वाक् वदनसाधनम्[4] इन्द्रियम् । मनः सर्वेन्द्रियानुग्राहकं सुखादिज्ञानसाधनमन्तःकरणम् । ते वै एते प्राणापानादयो दश देवाः आकूतिम् पुरुषकृतं संकल्पम् आवहन् आभिमुख्येन प्रापयन्ति । पुरुषस्य अभिमतम् अर्थं निष्पादयन्तीत्यर्थः ।

अजाता[5] आसन्नृतवोऽथो धाता बृहस्पतिः ।
इन्द्राग्नी अश्विना तर्हि कं ते ज्येष्ठमुपासत[6] ॥ ५ ॥

अजाताः । आसन् । ऋतवः । अथो इति । धाता । बृहस्पतिः ।
इन्द्राग्नी इति । अश्विना । तर्हि । कम् । ते[7] । ज्येष्ठम् । उप । आसत ॥ ५ ॥

---

१. °कालवकृत° S'. २. ये B. ३. °रसं विविधम् S'. ४. अणिवदन° S'. ५. आजाता B. ६. °सते S', सा. ७. ते P.

ऋतवः वसन्ताद्याः कालविशेषास्तस्मिन् सृष्टिसमये अजाता आसन् अनुत्पन्ना अभवन् । अथो अपि च धाता एतत्संज्ञकः अदितेः पुत्रः । बृहस्पतिः बृहतां देवानां पतिः सुरगुरुः । इन्द्राग्नी । अश्विना अश्विनौ एतत्संज्ञौ देवौ । एते षड् देवा ऋतूनाम् अधिपतयः । तेऽपि तस्मिन् समये अजाता अभवन् । एवं तर्हि तस्मिन् काले ते धात्रादयः स्वोत्पत्त्यर्थं ज्येष्ठम् वृद्धतमं कारणभूतं कं जनयितारम् उपासते[1] अभ्यर्थयन्ते । अस्य प्रश्नस्य उत्तरम् अनन्तरभाविनी ऋक् ।

तपश्चैवास्तां कर्म चान्तर्महत्यर्णवे[2] ।
तपो ह जज्ञे कर्मणस्तत् ते ज्येष्ठमुपासत ॥ ६ ॥

तपः । च । एव । आस्ताम्[3] । कर्म । च । अन्तः । महति[4] । अर्णवे ।
तपः । ह । जज्ञे[5] । कर्मणः । तत् । ते । ज्येष्ठम् । उप । आसत[6] ॥ ६ ॥

पूर्वोऽर्धर्चो व्याख्यातः (२) । तत्र जगत्स्रष्टुरीश्वरस्य स्रष्टव्यपर्यालोचनात्मकं तपः कर्मणः कल्पान्तरे प्राणिभिरनुष्ठितात् पुण्यापुण्यात्मकात् परिपक्वात् कर्मणः सकाशात् जज्ञे । स्वमहिमप्रतिष्ठस्य असङ्गोदासीनस्य सृष्ट्युन्मुखत्वं प्राणिकर्मपरिपाककृतम् इति तदीयस्य तपसोऽपि कर्मैव कारणम् इत्यर्थः । अतः ते धात्रादयो ज्येष्ठम् वृद्धतमं सृष्टेः कारणभूतं परिपक्वं स्वकृतं तत् कर्म उपासते[7] स्वोत्पादनाय प्रार्थयन्ते । देवमनुष्यादिरूपस्य सर्वस्य जगतः कर्मैव मूलकारणम् इत्यर्थः ।

येत आसीद् भूमिः पूर्वा यामद्धातय इद् विदुः ।
यो वै तां[8] विद्यान्नामथा स मन्येत पुराणवित्[9] ॥ ७ ॥

या । इतः । आसीत् । भूमिः । पूर्वा । याम् । अद्धातयः । इत् । विदुः ।
यः । वै । ताम्[10] । विद्यात् । नामऽथा । सः । मन्येत । पुराणऽवित् ॥ ७ ॥

इतः अस्याः पुरोवर्तिन्या भूमेः पूर्वा पूर्वभाविनी अतीतकल्पस्था या भूमिः आसीत् अभवत् । याम् पूर्वां भूमिम् अद्धातयः अद्धा प्रत्यक्षम् अतन्ति व्याप्नुवन्ति इति अद्धातयः तपःप्रभावसमासादितसार्वज्ञ्याः[11] अतीतानागतज्ञा महर्षयः । इत्शब्दः अवधारणे । त एव विदुः जानन्ति नान्ये । ताम् अतीतकल्पस्थां भूमिं यो वै यः खलु नामथा नामप्रकारेण तस्यां यद्यद् वस्त्वस्ति तत् सर्वं नामग्राहं विद्यात् जानीयात् । नामशब्दात् छान्दसस्थाल्

---

१. °सत S'; वैतु. मंगा. २. °त्यर्णवे P³,M,E². ३. आस्तांम् P²,J. ४. महति P,Bp³. ५. जन्ये P. ६. आसते P². ७. वैतु. मंपा. ८. तान् C,D,E,K,Sᵐ,V; तांन् Cs. ९. पुराणवत् K. १०. तान् P,Cp. ११. °सार्वज्ञाः S'.

**प्रत्ययः ।** पुराणवित् **पुरातनस्य अर्थस्य वेदिता** स **विद्वान्** मन्येत[1] **इदानींतनीमपि सर्वां भूमिं मन्यते जानीयात् । ज्ञातुं शक्नोतीत्यर्थः ।**

**कुत इन्द्रः कुतः सोमः कुतो अग्निरजायत ।**
**कुतस्त्वष्टा समभवत्[2] कुतो धाताजायत ॥ ८ ॥**

कुतः । इन्द्रः । कुतः । सोमः । कुतः । अग्निः । अजायत ।
कुतः । त्वष्टा । सम् । अभवत् । कुतः । धाता । अजायत ॥ ८ ॥

**धात्रादयो देवा अजाता आसन्निति उक्तम् । तेषाम् उत्पत्तिकारणम् अनया पृच्छयते[3]**—कुतः **कस्मात् कारणाद्** इन्द्रः अजायत **उदपद्यत । एवम् उत्तरत्रापि योजना । एषां प्रश्नानां प्रतिवचनम् उत्तरया ऋचा क्रियते ।**

**इन्द्रादिन्द्रः सोमात् सोमो अग्नेरग्निरजायत ।**
**त्वष्टा ह जज्ञे त्वष्टुर्धातुर्धाताजायत ॥ ९ ॥**

इन्द्रात् । इन्द्रः । सोमात् । सोमः । अग्नेः । अग्निः । अजायत ।
त्वष्टा । ह । जज्ञे । त्वष्टुः । धातुः । धाता । अजायत ॥ ९ ॥

**पूर्वस्मिन् कल्पे यादृग्रूप इन्द्रस्तस्माद्** इन्द्राद् **इदानींतन** इन्द्रो जज्ञे **। तत्समानरूपो जात इत्यर्थः । एवं** सोमात् सोमः **इत्यादिषु योजना । पूर्वपूर्वसृष्ट्यनुसारेणैव इदानींतना अपि इन्द्रादयो देवाः सृष्टा इत्यर्थः ।** 'सूर्याचन्द्रमसौ धाता यथापूर्वम् अकल्पयत्' (ऋ १०,१९०,३) **इति श्रुतेः । यद्वा इन्द्रात् इन्द्रत्वप्रापकात् कर्मणः इन्द्रो जज्ञे । इन्द्रशब्दः स्वकारणभूते कर्मणि उपचर्यते । इत्थं सोमात् सोमः इत्यादावपि द्रष्टव्यम् ।** 'तपो ह जज्ञे कर्मणस्तत् ते ज्येष्ठम् उपासते' (६) **इति हि कर्मणः सर्वजगत्कारणत्वम् उक्तम् । अस्मिन् पक्षे इन्द्राद् इन्द्रः इति** 'जनिकर्तुः प्रकृतिः' (पा १,४,३०) **इति पञ्चमी । अथवा अधिभूतम् अवस्थिता ये इन्द्रादयः तेभ्यः सकाशाद् अध्यात्मम् अवस्थितानाम् अधिष्ठातृदेवानाम् उत्पत्तिः कथ्यत इति बोद्धव्यम् ।**

**ये त आसन् दश जाता देवा देवेभ्यः पुरा ।**
**पुत्रेभ्यो लोकं दत्त्वा कस्मिंस्ते लोक आसते ॥ १० ॥**

---

१. मन्यते S'. २. धाता समभवत् कुतः पै १६,८५,७. ३. पृच्छते S'.

ये । ते । आसन्[1] । दश । जाताः । देवाः । देवेभ्यः । पुरा ।
पुत्रेभ्यः । लोकम् । दत्त्वा । कस्मिन् । ते । लोके । आसते ॥ १० ॥

देवेभ्यः अधिष्ठातृभ्यः अग्न्यादिदेवताभ्यः पुरा पूर्वं ये ते देवाः प्रागुक्ताः प्राणापानाद्या दशसंख्याका जाता आसन् ते पुत्रेभ्यः आत्मजेभ्यो लोकम् स्वकीयं स्थानं दत्त्वा कस्मिन् लोके स्थाने आसते उपविशन्ति । यथा लौकिका जनाः पुत्रान् उत्पाद्य तेषां स्वकीयं स्थानं दत्त्वा स्थानान्तरं स्वनिवासार्थम् आश्रयन्ति एवम् एषां सृष्टानाम् इन्द्रियाणां तदधिष्ठातृणाम् च देवानां निवासाश्रयः क इति प्रश्नार्थः । अस्य प्रश्नस्य 'देवाः पुरुषमाविशन्' (१३) इति प्रतिवचनम् अग्रे भविष्यति ।

इति चतुर्थेऽनुवाके चतुर्थं सूक्तम् ।

यदा केशानस्थि स्नाव मांसं मज्जानमाभरत् ।
शरीरं कृत्वा पादवत् कं लोकमनु प्राविशत् ॥ ११ ॥

यदा । केशान् । अस्थि । स्नाव । मांसम्[2] । मज्जानम् । आऽअभरत् ।
शरीरम् । कृत्वा । पादऽवत् । कम् । लोकम् । अनु । प्र । अविशत् ॥ ११ ॥

यदा यस्मिन् सृष्टिकाले केशान् शिरोरुहान् अस्थिस्नावादिधातून् शरीरोपादानभूतान् स्रष्टा समभरत्[3] एकत्र संभृतवान् । तत्र अस्थि प्रसिद्धं स्नाव अस्थ्नां संधिबन्धनार्थं सिराजालम् मांसम् प्रसिद्धम् मज्जा अस्थ्यन्तर्गतो रसः । तैः संभृतैः पादवत् । उपलक्षणम् एतत् । हस्तपादाद्यङ्गोपाङ्गसहितं शरीरं कृत्वा निर्माय । तदानीं कम् अन्यं लोकं स्थानम् अनु प्राविशत् । तदेव शरीरम् आत्मभावेन प्राविशद् इत्यर्थः । 'तत् सृष्ट्वा तदेवानुप्राविशत्' ( तैआ ८,६,१ ), 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' ( छांउ ६,३,२ ) इत्यादिश्रुतेः ।

कुतः केशान् कुतः स्नाव[4] कुतो अस्थीन्याभरत् ।
अङ्गा पर्वाणि मज्जानं को मांसं कुत आभरत् ॥ १२ ॥

कुतः । केशान् । कुतः । स्नाव[5] । कुतः । अस्थीनि । आ । अभरत् ।
अङ्गा । पर्वाणि । मज्जानम् । कः । मांसम्[2] । कुतः । आ । अभरत् ॥ १२ ॥

केशादीन् संभृत्य ईश्वरः शरीरं सृष्टवान् इत्युक्तम् । अत्र केशाद्युपादानत्वं

---

१. आसन् P,J. २. मासम् P. ३. वैतु. संपा. ४. स्नावः K,K^m,V, R². ५. स्नावः P²,Bp².

स्रष्टृत्वं च वस्त्वन्तरविरहात् स्वात्मन एवेति काका प्रतिपाद्यते । स्रष्टा ईश्वरः कुतः कस्माद् उपादानकारणात् केशान् सम्[1] अभरत् । किं तदुपादानकारणम् । न किंचिद् अस्ति । 'सदेव सोम्येदम् अग्र आसीत् एकमेवाद्वितीयम्' ( छाउ ६,२,१ ) इति अद्वितीयत्वश्रुतेर्वस्त्वन्तरस्याभावात् स्वात्मन एव केशादीन् समभरद् इत्यर्थः । तथा च अभिन्ननिमित्तोपादानत्वम् ईश्वरस्य श्रूयते—'सोऽकामयत बहु स्यां प्रजायेय' ( तैआ ८,६,१) इति । तत्र कामयितृत्वात् कुलालादिवन्निमित्तत्वम् । प्रजायेयेति उत्तमपुरुषश्रुत्या स्वस्यैव बहुभावावस्थानप्रतिपादनाद् उपादानत्वम् । [2]आह च भगवान् बादरायणः-[2] 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' ( ब्रसू १,४,२३ ) इति । तथा कुतः कस्माद् उपादानकारणात् स्नाव उत्पन्नम् । न कस्माच्चित् । किंतु स्वस्मादेव । एवम् उत्तरत्रापि योज्यम् । अङ्गा अङ्गानि हस्तपादादीनि पर्वाणि तत्संधीन् मज्जानम् अस्थ्यन्तर्गतं रसम् । कर्मकर्तृभावस्य एकत्र विरोधात् केशाद्युपादानभूताद् अन्य एव कश्चित् संभर्ता स्याद् इत्याशङ्क्य तदनन्यत्वमपि प्रतिपादयति—क इति । कः अन्यः एतान् आभरत् । न कश्चिद् अस्ति । उपादानभावेन स्थित एव ईश्वरः केशादीनाम् आहर्तापि अभवद् इत्यर्थः । विचित्रशक्तियोगित्वेन एकस्यैव कर्तृत्वं कर्मत्वं च न व्याहन्यत इत्यर्थः । यद्वा कुतः केशान् इत्यादिषु सर्वत्र कारणप्रश्नमात्रं क्रियते । को मांसम् इति कर्तृप्रश्नमात्रम् । तस्य सर्वस्य प्रतिवचनम् उत्तरया क्रियते ।

संसिचो नाम ते देवा ये [3]संभारान्त्समभरन्[3] ।
सर्वं संसिच्य मर्त्यं देवाः पुरुषमाविशन् ॥ १३ ॥

सम्ऽसिचः । नाम । ते[4] । देवाः । ये । सम्ऽभारान् । सम्ऽअभरन् ।
सर्वम् । सम्ऽसिच्य । मर्त्यम् । देवाः । पुरुषम् । आ । अविशन् ॥१३॥

ये देवाः प्रागुक्ता ज्ञानेन्द्रियकर्मेन्द्रियात्मका साधिष्ठातृकाः प्राणापानाद्या वा संभारान् संभ्रियन्त इति संभाराः प्राग् उदीरिता केशाद्याः तान् समभरन् एकत्र संभृतवन्तः ते देवाः संसिचो नाम । संसिञ्चन्ति । सम् इति एकीभावे । तान् संभारान् एकीकृत्य बन्धकेन रसेन आबध्नन्ति इति संसिचः संसेचनसमर्थाः । संधायका इत्यर्थः । ते मर्त्यम् मरणधर्माणम् सर्वं शरीरं संसिच्य असृजा आर्द्रीकृत्य पुरुषम् पुरुषाकृतिं कृत्वा तम् आविशन् प्रविष्टवन्तः । यावत् शरीरे प्राणा निवसन्ति तावन्तं कालं प्राणाधिष्ठितं शरीरं सर्वव्यवहारक्षमं भवति । तस्मात् प्राणदेवाः पृथिव्यादिपञ्चभूतमात्राभ्यः समुद्भूतं प्रागुदीरितकेशास्थ्यादिधातुमयं पुरुषशरीरं प्रविश्य वर्तन्त इत्यर्थः ।

---

१. वैतु. मंपा.  २. ह च भगवान् बा नास्ति S'.  ३. संभागंत्सम° K,K<sup>m</sup>; संभारान् सम° Cs; संभारैस्सम° पै १६,८६,३.  ४. ते P.

ऊरू पादावष्ठीवन्तौ शिरो[1] हस्तावथो मुखम् ।
पृष्टीर्बर्जह्ये[2] पार्श्वे कस्तत् समदधादृषिः ॥ १४ ॥

ऊरू इति । पादौ । अष्ठीवन्तौ । शिरः । हस्तौ । अथो इति । मुखम् ।
पृष्टीः[2] । बर्जह्ये३[3] इति । [4]पार्श्वे इति[4] । कः । तत् । सम् । अदधात् । ऋषिः[5] ॥१४॥

ऊरू **जान्वोरुपरि वर्तमानौ** । पादौ **तयोरधस्ताद्भागौ** । अष्ठीवन्तौ **ऊरुपादयोर्मध्यस्थे जानुनी** । शिरः **मूर्धानम्**[6] । हस्तौ **बाहू** । अथो **अपि च** मुखम् **आस्यम्** । पृष्टीः **पृष्ठवंशस्य अभितो वर्तमानाः पर्शूः**[7] । बर्जह्ये **एतत्संज्ञौ अवयवौ** । **उभे** पार्श्वे । तत् **अनुक्रान्तं सर्वम् अङ्गजातं** क ऋषिः **संधानोपायज्ञानवान्** समदधात् **परस्परं संहितं संश्लिष्टं कृतवान्** । **अस्य प्रश्नस्य प्रतिवचनम् उत्तरया क्रियते** ।

शिरो हस्तावथो मुखं[8] जिह्वां ग्रीवाश्च कीकसाः[9] ।
त्वचा प्रावृत्य सर्वं तत् संधा समदधान्मही[10] ॥ १५ ॥

शिरः । हस्तौ । अथो इति । मुखम् । जिह्वाम् । ग्रीवाः । च । कीकसाः ।
त्वचा । प्रऽआवृत्य । सर्वम् । तत् । सम्ऽधा । सम् । अदधात् । मही ॥ १५ ॥

शिरः **मूर्धानम्** । हस्तौ **बाहू** । अथो **अपि च** मुखम् **आस्यम्** । जिह्वाम् **तन्मध्ये वर्तमानां रसनाम्** । ग्रीवाः **कन्धराः** । कीकसाः **कीकसान् अस्थीनि** । **उपलक्षणम् एतत्** । **एतदुपलक्षितानि प्रागुदीरितानि अस्थिस्नावादीनि ऊरुपादादीनि च सर्वाणि अङ्गानि** त्वचा **चर्मणा** प्रावृत्य **प्रावृतानि आच्छन्नानि कृत्वा** सर्वं तत् **अङ्गजातं** मही । **अच्छब्दलोपश्छान्दसः** । **महती** संधा **संधानकर्त्री देवता** समदधात् **संहितं परस्परसंश्लिष्टं स्वस्वव्यापारक्षमं कृतवती** । **संधेति** । 'आतश्चोपसर्गे' ( पा ३,१,१३६ ) **इति संपूर्वाद् दधातेः कर्तरि कप्रत्ययः** ।

यत्तच्छरीरमशयत्[11] संधया संहितं महत्[12] ।
येनेदमद्य[13] रोचते को अस्मिन्[14] वर्णमाभरत् ॥ १६ ॥

यत् । तत् । शरीरम् । अशयत् । सम्ऽधया । सम्ऽहितम् । महत् ।
येन । इदम् । अद्य । रोचते । कः । अस्मिन् । वर्णम् । [15]आ । अभरत्[15] ॥ १६ ॥

---

१. श्रोणी पै १६,८६,५. २. पृष्ठी° K,Km,C,E,Sm,P,P२,J,Cp. ३. बर्जह्ये J; बर्जह्ये P,P२. ४. पार्श्वेन् । इति । > पार्श्वे इति P. ५. ऋषि P. ६. मूर्धा S'. ७. पर्शुः S'. ८. बाहू पै १६,८६,४. ९. °सा Bh,K,V. १०. संमद° B. ११. °मदधत् पै १६,८६,६. १२. मयि पै. १३. तेनेद° K,V. १४. ऽस्मिन् पै. १५. तु. शपा. WM.; वैतु. P,P२,J,Cp आऽअभरत्.

तत् **उक्तप्रकारं** यत् शरीरं संधया **संधात्र्या देवतया** संहितं **कृतावयवसंधानं** महत् **प्रवृद्धम्** अशयत् **शेते । वर्तत इत्यर्थः ।** इदं **शरीरम्** अद्य **इदानीं** येन **वर्णेन कृष्णगौरादिरूपेण** रोचते **दीप्यते** अस्मिन् **शरीरे** को **नाम देवः तं** वर्णम् आभरत् **आहरत् संपादितवान् । अस्य प्रतिवचनम् उत्तरया क्रियते ।**

**सर्वे देवा उपाशिक्षन् तदजानाद् वधूः सती[1] ।**
**ईशा वशस्य[2] या जाया सास्मिन् वर्णमाभरत् ॥ १७ ॥**

सर्वे । देवाः । उप । अशिक्षन् । तत् । अजानात् । वधूः । सती ।
ईशा । वशस्य[3] । या । जाया । सा । अस्मिन् । वर्णम् । आ । अभरत् ॥ १७ ॥

सर्वे **इन्द्रादयो** देवा उपाशिक्षन् **समीपे शक्ता भवितुम् ऐच्छन् ।** वधूः सती **परमेश्वरेण कृतोद्वाहा भगवती[4] आद्या परचिद्रूपिणी शक्तिः** तत् **देवैः कृतम्** अजानात् **ज्ञातवती ।** या **एषा** विश्वस्य[5] **सर्वस्य जगतः** ईशा **ईशाना नियन्त्री** *[ जाया ] **मायाशक्तिः ।** 'यन्मन्युर्जायाम् आवहद्' ( १ ) **इति ह्युक्तम् ।** सा **पारमेश्वरी[6] शक्तिः** अस्मिन् **षाट्कौशिके[7] शरीरे गौरपीतनीलादिवर्णम्** आभरत् **आहरत् । उदपादयद् इत्यर्थः ।**

**यदा त्वष्टा व्यतृणत् पिता त्वष्टुर्य उत्तरः ।**
**गृहं कृत्वा मर्त्यं[8] देवाः पुरुषमाविशन् ॥ १८ ॥**

यदा । त्वष्टा । वि॒ऽअतृणत् । पिता । त्वष्टुः । यः । उत्तरः ।
गृहम्[9] । कृत्वा । मर्त्यम् । देवाः । पुरुषम् । आ । अविशन्[10] ॥ १८ ॥

**यत् पूर्वं सामान्येन उक्तं** 'देवाः पुरुषमाविशन्' (१३) **इति तद् अत्र विशेष्यते ।** 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत् प्रजायते' ( तै १,५, ९,२ ) **इति हि श्रूयते । तत्र** यः **अध्यात्मम् अवस्थितः** त्वष्टा **मनुष्यगवाश्वादिरूपाणां विकर्ता देवः तस्य** त्वष्टुः पिता **उत्पादकः** उत्तरः **उत्कृष्टतरो यस्त्वष्टा अधिदैवं स्थितः विचित्रस्य जगतो निर्माता एतत्संज्ञो देवः स** यदा **यस्मिन् काले** व्यतृणत् **विविधं चक्षुःश्रोत्रादीनि छिद्राणि पुरुषशरीरे तर्दनेन अकरोत् । उतृदिर् हिंसानादरयोः । तदा** मर्त्यम् **मरणधर्मकं त्वष्ट्रा देवेन वितृण्णं बहुच्छिद्रं पुरुषशरीरं** गृहं कृत्वा **आवासस्थानं कृत्वा** देवाः **इन्द्रियाणि प्राणापानादयश्च तं** पुरुषम् आविशन् **प्रविष्टवन्तः ।**

---

१. सतीः A,B[b]. २ विश्ववस्य K,V, सा. ३. विश्वस्य K'; वशस्य P.
४. भवती S'. ५. वैतु. मंपा. ६. पर° S'. ७ षट्कौ° S'. ८. मर्त्यं B[b].
९. गृहान् P. १०. विशन् P[2].

स्वप्नो वै तन्द्रीर्निर्ऋतिः पाप्मानो नाम देवताः ।
जरा खालत्यं पालित्यं शरीरमनु प्राविशन्[1] ॥ १९ ॥

स्वप्नः । वै । तन्द्रीः । निःऽऋतिः । पाप्मानः । नाम । देवताः ।
जरा । खालत्यम् । पालित्यम् । शरीरम् । अनु । प्र । अविशन् ॥ १९ ॥

इत्थं शरीरस्योत्पत्तिम् अभिधाय प्रथमसृष्टानाम् इन्द्रियाणां प्राणापानादीनां च तत्र प्रवेश उक्तः । तावता सात्मकं सत् तच्छरीरं सर्वव्यवहारक्षमं जातम् । इतः परं सर्वविकाराश्रयत्वम् अस्य उच्यते । स्वप्नः स्वापो निद्रा । ञिष्वप् शये । 'स्वपो नन्' (पा ३, ३,९१) इति भावे नन्प्रत्ययः । वैशब्दो लोकप्रसिद्धिं[2] द्योतयति । तन्द्री[3] अलसता । निर्ऋतिः पापदेवता दुर्गतिः । पाप्मानः ब्रह्महत्यादिपापानि । स्वप्नादिरूपा एता देवताः पुरुषशरीरम् अनु प्राविशन् । तथा जरा वयोहानिकरी चरमावस्था । खालित्यम्[3] चित्तस्य चक्षुरादीनां च स्खलनम् । पालित्यम् पलितत्वम् । एतदभिमानिनो देवाश्च शरीरम् अनु प्राविशन् ।

स्तेयं दुष्कृतं वृजिनं सत्यं यज्ञो यशो बृहत्[4] ।
बलं च क्षत्रमोजश्च शरीरमनु प्राविशन् ॥ २० ॥

स्तेयम् । दुःऽकृतम् । वृजिनम् । सत्यम् । यज्ञः । यशः । बृहत् ।
बलम् । च । क्षत्रम् । ओजः । च । शरीरम् । अनु । प्र । अविशन् ॥ २० ॥

स्तेयम् स्तैन्यं तस्करत्वम् । 'स्तेनाद् यन्नलोपश्च' (पा ५,१,१२५) इति स्तेनशब्दाद् भावे यत्प्रत्ययो नलोपश्च । दुष्कृतम् दुष्कर्म सुरापानादिकम् । वृजिनम् तज्जनितम् दुरितम् । सत्यम् यथार्थकथनम् । यज्ञो यागः । यशः कीर्तिः । बृहत् प्रभूतम् । यशसो विशेषणम् एतत् । बलम् प्रसिद्धम् एतत् । क्षत्रम् क्षत्रियसम्बन्धि तेजः । ओजः शरीरगतो बलहेतुरष्टमो धातुः । एते सर्वे पुरुषस्य शरीरम् अनु प्राविशन् । जीवच्छरीरम् आश्रित्य उत्पद्यन्त इत्यर्थः ।

इति चतुर्थेऽनुवाके पञ्चमं सूक्तम् ।

भूतिश्च वा अभूतिश्च रातयोऽरातयश्च याः ।
क्षुधश्च सर्वास्तृष्णाश्च शरीरमनु प्राविशन् ॥ २१ ॥

---

१. °शत् R,Bh. २. °प्रसिद्धं S'. ३. वैद्य. मंपा. ४. महः पै १६,८६,१०.

भूतिः । च । वै । अभूतिः । च । रातयः । अरातयः । च । याः ।
क्षुधः । च । सर्वाः । तृष्णाः । च । शरीरम् । अनु । प्र । अविशन् ॥ २१ ॥

भूतिः **समृद्धिः** । अभूतिः **असमृद्धिः** । **परस्परसमुच्चयार्थौ** चकारौ । वैशब्दः **प्रसिद्धौ** । रातयो **मित्राणि** । अरातयः **शत्रवः** । या **इमा भूतिप्रभृतयः** क्षुधः **बुभुक्षा अन्नाकाङ्क्षाः** तृष्णाः **पिपासाः एताश्च** सर्वाः **पुरुषस्य** शरीरम् अनु प्राविशन् । **आश्रित्य प्रभवन्तीत्यर्थः** ।

**निन्दाश्च वा अनिन्दाश्च यच्च हन्तेति नेति च ।**
**शरीरं श्रद्धा 'दक्षिणाश्रद्धा'[1] चानु प्राविशन् ॥ २२ ॥**

निन्दाः । च । वै । अनिन्दाः । च । यत् । च । हन्त[2] । इति । न । इति । च ।
शरीरम् । श्रद्धा । दक्षिणा[3] । अश्रद्धा । च । अनु । प्र । अविशन् ॥ २२ ॥

निन्दाः **कुत्सनानि** । अनिन्दाः **अकुत्सनानि** । हन्त **इति हर्षे** । यच्च **वस्तु हर्षजनकम्** । न **इत्ययं शब्दः संनिहितस्य हन्तार्थस्य हर्षस्य निषेधे** । **यच्च वस्तु हर्षाजनकम्** । श्रद्धा **श्रद्धानम् अभिलाषविशेषः** । दक्षिणा **दक्ष्यते समृध्यते अनयेति दक्षिणा धनसमृद्धिः** । **दक्ष वृद्धौ इत्यस्माद्** 'द्रुदक्षिभ्यामिनन्' ( पाउ २,५० ) **इति इनन्प्रत्ययः** । अश्रद्धा **श्रद्धानाभावः अभिलाषराहित्यम्** [4]**एतानि सर्वाणि**[4] **पुरुषस्य** शरीरम् अनु प्राविशन् **तद् आश्रित्य प्रादुर्भवन्तीत्यर्थः** ।

**विद्याश्च वा अविद्याश्च यच्चान्यदुपदेश्यम् ।**
**शरीरं [5]ब्रह्म प्राविशदृचः[5] सामाथो यजुः ॥ २३ ॥**

विद्याः । च । वै । अविद्याः । च । यत् । च । अन्यत् । उपऽदेश्यम् ।
शरीरम् । ब्रह्म । प्र । अविशत् । ऋचः । साम । अथो इति । यजुः ॥ २३ ॥

विद्याः **शास्त्रजनितज्ञानानि** । अविद्याः **अज्ञानानि** । यच्चान्यत् **वस्तु** उपदेश्यम् **उपदेश**-[6]**समधिगम्यं विद्याविद्यानाम् आश्रयभूतं तच्छाब्दं** ब्रह्म **पुरुषस्य** शरीरं प्राविशत् । **परापश्यन्त्यादिरूपेण तत्रैव प्रादुर्भवतीत्यर्थः** । अथो **अपि च ऋक्सामयजुरात्मकास्त्रयो वेदाः पुरुषशरीरम् अनु प्राविशन्** । **यद्वा ऋगादीनां पृथगुपादानात् तदङ्गभूताः पुराणादयो विद्याशब्देन विवक्षिताः** । **अविद्याशब्देन च वेदविरुद्धागमाः** ।

---

१. दक्षिणाश्रद्धा B,T,K²; दक्षिणाश्रद्धा A,Bʰ,C,D,R,Sᵐ,K,Cs; दक्षिणाः श्रद्धा E; दक्षिणाश्रद्धा > दक्षिणाश्रद्धा Dc. २. हत P²; हंत J; हंताः > हंता P. ३. दक्षिणा P,J,Bp². ४. एतत्सर्वं S'. ५. सर्वे प्राविशन्नृचः पै १६,८७,३. ६. उपदेश्य° S'.

आन॒न्दा मोदाः॑ प्र॒मुदो॑ऽभीमोद॒मुद॑श्च॒ ये ।
ह॒सो न॒रिष्टा॑ नृ॒त्तानि॒ शरी॑र॒मनु॒ प्रावि॑शन् ॥ २४ ॥

आ॒ऽन॒न्दाः । मोदाः॑ । प्र॒ऽमुदः॑ । अ॒भि॒मो॒द॒ऽमुदः॑ । च॒ । ये ।
ह॒सः । न॒रिष्टा॑[3] । नृ॒त्तानि॑ । शरी॑रम् । अनु॑ । प्र । अ॒वि॒श॒न् ॥ २४ ॥

**पूर्वोऽर्धर्चो व्याख्यातः** ( अ ११,९,२६ ) । हसः **हासः । हसे हसने ।** 'स्वनहसोर्वा' ( पा ३,३,६२ ) **इति भावे अप्**[4] । नुरिष्टाः[5] **मनुष्यस्य इच्छागोचराः शब्दस्पर्शादिविषयाः ।** नृत्तानि **नर्तनानि भरतशास्त्रोक्तानि । एते आनन्दादयः सर्वे पुरुषस्य** शरीरम् अनु प्राविशन् ।

आ॒ला॒पाश्च॑ प्रला॒पाश्चा॑भीला॒प॒लप॑श्च॒ ये ।
शरी॑रं॒ सर्वे॒ प्रावि॑शन्ना॒युजः॑ प्र॒युजो॒ युजः॑ ॥ २५ ॥

आ॒ऽला॒पाः । च॒ । प्र॒ऽला॒पाः । च॒ । अ॒भि॒ला॒प॒ऽलपः॑ । च॒ । ये ।
शरी॑रम् । सर्वे॑ । प्र । अ॒वि॒श॒न्[6] । आ॒ऽयुजः॑ । प्र॒ऽयुजः॑ । युजः॑ ॥ २५ ॥

आलापाः **आभाषणानि सार्थकानि वचनानि**[7] । प्रलापाः **निरर्थकानि वचनानि । लप व्यक्तायां वाचि । भावे घञ् ।** ये च अभीलापलपः **अभिलापः उक्तविधः शब्दः तेन लपन्ति**[8] **ब्रुवन्तीति अभीलापलपः शब्दस्य उच्चारयितारः ।** 'क्विप् च' ( पा ३, २,७६ ) **इति लपेः क्विप् । ते** सर्वे **आलापादयः पुरुषशरीरं** प्राविशन् । आयुजः **आयोजनानि** प्रयुजः **प्रयोजनानि** युजः **योजनानि । सर्वत्र संपदादिलक्षणो भावे क्विप् । उपसर्गवशाद् अमीषाम् अर्थभेदोऽवगन्तव्यः । एवम् आयोजनादिक्रियाः शरीरम् अनु प्राविशन् ।**

प्रा॒णा॒पा॒नौ चक्षुः॒ श्रोत्र॒मक्षि॑तिश्च॒ क्षिति॑श्च॒ या ।
व्या॒नो॒दा॒नौ वाङ् मनः॒ शरी॑रे॒ण त ई॑यन्ते ॥ २६ ॥

प्रा॒णा॒पा॒नौ । चक्षुः॑ । श्रोत्र॑म् । अक्षि॑तिः । च॒ । क्षिति॑ः । च॒ । या ।
व्या॒न॒ऽउ॒दा॒नौ । वाक् । मनः॑ । शरी॑रेण । ते । ई॒य॒न्ते॒ ॥ २६ ॥

**त्रयः पादाः पूर्ववद्** (अ ११,९,२५) **व्याख्येयाः ।** ते **प्राणापानादयः सर्वे शरीरम्**

---

1. नन्दाः पै १६,८७,४. 2. प्रमोदौ॑ B 3. नुरिष्टा॑ K, सा.; नरिष्ठा॑ J.
4. एवं स्वरो न सिध्यति. 5. वैतु. मंपा. 6. °शत P[2]. 7. ···नि S'.
8. लपं···वंतीति S'.

अनुप्रविश्य तेन सह ईयन्ते स्वस्वव्यापारेषु[1] प्रवर्तन्ते । ईङ् गतौ । दिवादित्वात् श्यन्प्रत्ययः ।

आशिषश्च प्रशिषश्च संशिषो विशिषश्च याः ।
चित्तानि सर्वे संकल्पाः शरीरमनु प्राविशन् ॥ २७ ॥

आऽशिषः । च । प्रऽशिषः । च । समऽशिषः । विऽशिषः । च । याः ।
चित्तानि । सर्वे । समऽकल्पाः । शरीरम् । अनु । प्र । अविशन् ॥ २७ ॥

आशिषः आशासनानि इष्टफलप्रार्थनानि । 'आशासः क्वौ' (पावा ६,४,२४)इति वचनाद् इत्त्वम् । तथा प्रशिषः प्रशासनानि । संशिषः संशासनानि । विशिषः विविधानि शासनानि । अत्र उपसर्गवशाद् धात्वर्थस्य भेदोऽवगन्तव्यः । याः एता आशीराद्याः सन्ति । चित्तानि इति बहुवचनेन मनोबुद्ध्यहङ्काराः संगृह्यन्ते । तथा संकल्पाः इति बहुवचनेन सर्वा अन्तःकरणवृत्तयः । एते सर्वे पुरुषस्य शरीरम् अनु प्राविशन् ।

आस्तेयीश्च[2] वास्तेयीश्च[3] त्वरणाः कृपणाश्च याः ।
गुह्याः शुक्रा[4] स्थूला अपस्ता[5] बीभत्सावसादयन्[6] ॥ २८ ॥

आस्तेयीः[2] । च । वास्तेयीः[3] । च । त्वरणाः[7] । कृपणाः । च । याः ।
गुह्याः । शुक्राः । स्थूलाः । अपः[8] । ताः । बीभत्सौ । असादयन् ॥ २८ ॥

*[आस्नेयीः ][9] । आ समन्तात् स्नानम् आस्नेयम् । ष्णा शौचे । 'अचो यत्' (पा ३,१,९७) इति भावे यत् । 'ईद्यति' (पा ६,४,६५) इति ईत्त्वम् । तत्संबन्धिन्य आपः आस्नेय्यः । 'तस्येदम्' (पा ४,३,१२०) इति अण्[10] । 'टिड्ढाणञ्'[10] (पा ४,१,१५) इति ङीप् । *[वास्नेयीः ][9] । वाशब्दो विकल्पार्थः । तस्य सुप्सुपेति स्नेयशब्देन समासः । विकल्पेन स्नानं वास्नेयं[10] [11]तत्सम्बन्धिन्य आपः[11] । यद्वा आस उपवेशने इत्यस्माद् औणादिको नप्रत्ययः । आस्नस्य शरीरे प्राणावस्थानस्य निमित्तभूता आपः आस्नेय्यः । तथा वस्नम् मूल्यद्रव्यं सर्वव्यवहारास्पदं शरीरं तदुपादानभूता आपः वास्नेय्यः 'पञ्चम्याम् आहुतावापः पुरुषवचसो भवन्ति' (छाउ ५,३,३) इति श्रुतेः । आस्नशब्दाद् वस्न-शब्दाच्च शैषिको ढक्प्रत्ययः । तथा त्वरणाः त्वरया गच्छन्त्यः । कृपणाः कृशा

---

१. स्वस्यव्या° S'.
२. आस्नेयी° A,B,C,D,E,R,Sm,K,V,P,J, सा.; आस्तेयी° > आस्तैयी° Dc.
३. वास्नेयी° K,V, सा.
४. शुक्राः B,Bh,C,E,R.
५. आपस्ता S', सा.
६. बीभत्सुरसादयत् पै १६,८७,९.
७. त्वरणः P.
८. अपः P².
९. वैतु. संपा.
१०. एवं स्वरो न सिध्यति.
११. तत्संबंधिनीरपः S'.

अल्पाः । एवंभूताः च या आपः सन्ति । याश्च गुह्या गुहायां भवाः । शुक्रा शुक्लवर्णाः शुक्रात्मना[1] परिणता वा । स्थूलाः स्थौल्योपेता महत्यः आपः[2] व्यापनशीला नद्यादिरूपेण वर्तमानाः ताः सर्वा आपः बीभत्सौ बीभत्स्यमाने जुगुप्स्यमाने पुरुषशरीरे असादयन् । अथवा ता एव आपो बीभत्सौ जुगुप्स्यमाने[3] पुरुषे स्वकार्यं शरीरम् असादयन्नित्यर्थः । बध बन्धने । 'मान्बधदान्शान्भ्यः॰' (पा ३,१,६) इति सन्प्रत्ययः । स च 'बधेर्वैरूप्ये' (पाका ३,१,६) इति स्मरणात् कुत्सनेऽर्थे भवति । 'सनाशंसभिक्ष उः' (पा ३,२,१६८) इति उप्रत्ययः ।

अस्थि कृत्वा समिधं तदष्टापो असादयन् ।
रेतः कृत्वाज्यं देवाः पुरुषमाविशन् ॥ २९ ॥

अस्थि । कृत्वा । सम्ऽइधम् । तत् । अष्ट । आपः । असादयन् ।
रेतः । कृत्वा । आज्यम्[4] । देवाः । पुरुषम् । आ । अविशन् ॥ २९ ॥

अस्थि प्राणिशरीरसंबन्धि अस्थिजातं समिधम् समिन्धनसाधनं शरीरपरिपाकस्य निमित्तं कृत्वा तत् तत्र षाट्कौशिके शरीरे अष्ट अष्टसंख्याकाः 'आग्नेयीश्च' (२८) इत्यादिना अनुक्रान्ता अपः[2] असादयन् । तस्य समिन्धनस्य अभिवृद्धिकारणम् आज्यं रेतः शुक्रं[5] कृत्वा परिकल्प्य । अत्रास्थीनि पुरुषशरीरान्तर्गतानि शरीरवृद्धिहेतुत्वात् समित्त्वेन रूप्यन्ते रेतश्च स्वशरीरवृद्धेः पुत्राद्युत्पत्तिहेतुत्वेन च आज्यत्वेन रूप्यते। अत एव तैत्तिरीयके अग्न्याधेयप्रकरणे आधीयमानासु समित्सु अस्थित्वं तदञ्जनसाधने आज्ये रेतस्त्वं च आरोप्य स्तूयते— 'अस्थि वा एतद् यत् समिधः । एतद् रेतो यद् आज्यम्' (तैब्रा १,१,९,४) इति । इत्थं कृत्वा देवाः इन्द्रियाणि तदधिष्ठातारः अग्न्यादयो वा पुरुषम् आविशन् पुरुषशरीरं प्राविशन् ।

या आपो याश्च देवता या विराड् ब्रह्मणा सह ।
शरीरं ब्रह्म प्राविशच्छरीरेऽधि प्रजापतिः ॥ ३० ॥

याः । आपः । याः । च । देवताः । या[6] । विऽराट् । ब्रह्मणा । सह ।
शरीरम् । ब्रह्म । प्र । अविशत् । शरीरे । अधि । प्रजाऽपतिः ॥ ३० ॥

याः प्रागुदीरिता आपः याश्च देवताः इन्द्रियाभिमानिन्यः [7]या च[7] विराट् 'विराड् वा इदम् अग्र आसीत्' (अ ८,१०,१) इत्यादिना सार्वात्म्येन उक्ता विराट्संज्ञा

---

[1] शुक्लात्मना S'. [2] वैतु. मंपा. [3] जुगुप्समाने S'. [4] अज्यम् P. [5] शुक्लं S'. [6] याः Cp. [7] याश्च S'.

देवता ब्रह्मणा ब्राह्मणतेजसा सह वर्तमाना ताः सर्वाः शरीरं प्राविशन्[1]। तदनन्तरं यज्जगत्कारणं परं ब्रह्म तदपि अन्तर्यामिरूपेण तच्छरीरं प्राविशत्। तस्मिन् शरीरे अधि प्रजापतिः प्रजानां पालयिता पुत्राद्युत्पादको जीवो वर्तते।

सूर्य॑श्चक्षुर्वात॑: प्राणं पुरु॑षस्य॒ वि भे॑जिरे ।
अथा॒स्येत॑रमा॒त्मानं॑[2] दे॒वाः प्राय॑च्छन्न॒ग्नये॑ ॥ ३१ ॥

सूर्य॑: । चक्षु॑: । वात॑: । प्राणम् । पुरु॑षस्य । वि । भे॒जि॒रे॒ ।
अथ॑ । अ॒स्य॒ । इत॑रम् । आ॒त्मान॑म् । दे॒वाः । प्र । अ॒य॒च्छ॒न् । अ॒ग्नये॑ ॥ ३१ ॥

'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' (ऐआ २,४,२) इति श्रुतेः सूर्यः चक्षुरभिमानी देवः। स च पुरुषस्य संबन्धि चक्षुः इन्द्रियम् आत्मीयभागत्वेन स्वीकृतवान्। वातः वायुः प्राणम् घ्राणेन्द्रियं भागत्वेन स्वीचकार। 'वायुः प्राणो भूत्वा नासिके प्राविशत्' (ऐआ २,४,२) इति श्रुतेः। उपलक्षणम् एतत्। एवम् अन्यान्यपि इन्द्रियाणि पुरुषसंबन्धीनि तत्तदधिदेवता वि भेजिरे विभज्य स्वीकृतवत्यः। अथ अनन्तरम् इतरम् प्राणेन्द्रियव्यतिरिक्तम् अस्य आत्मानम् षाट्कौशिकं स्थूलशरीरम् अग्नये सर्वे देवाः भागत्वेन प्रायच्छन्। अग्निना मरणानन्तरं स्थूलशरीरमेव केवलं दह्यते।

'ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाण्यपि ।
वायवः पञ्च बुद्धिश्च मनः सप्तदशं विदुः ॥'

इति यत् सप्तदशात्मकं[3] लिङ्गशरीरम् उक्तं तस्य मुक्तिपर्यन्तं विनाशाभावात् तत्तद्देवतारूपेण अवस्थानमेवेत्यर्थः।

तस्मा॒द् वै वि॒द्वान् पुरु॑षमि॒दं ब्रह्मेति॑ मन्यते ।
सर्वा॒ ह्य॑स्मिन् दे॒वता॒[4] गावो॑ गो॒ष्ठ इ॑वास॑ते† ॥ ३२ ॥

तस्मा॑त् । वै । वि॒द्वान् । पुरु॑षम् । इ॒दम् । ब्रह्म॑ । इति॑ । म॒न्य॒ते॒ ।
सर्वा॑: । हि । अ॒स्मि॒न् । दे॒वता॑: । गाव॑: । गो॒स्थेऽइ॑व । आस॑ते[5] ॥ ३२ ॥

तस्मात् वै खलु कारणात् विद्वान् उक्तप्रकारं सर्वं जानन् पुरुषम् पुरुषशरीरम् इदम् अपरोक्षम् अन्तर्बहिर्व्याप्य अवस्थितं ब्रह्मेति मन्यते जानाति। कुत इत्यत आह — हि यस्मात् सर्वा देवताः प्राणापानादिवायवः सर्वेन्द्रियाणि तदधिष्ठातारः अग्न्यादयश्च अस्मिन् शरीरे आसते निवसन्ति। तत्र दृष्टान्तः — गावो गोष्ठ इव।

---

१. °शत् S'. २. अथो॒स्ये° K,Km; तथास्ये° पै १६,८८,२. ३. °दशकात्मकं S'. ४. शरीरे ऽधि समाहिताः पै १६,८८,३. † इं॑वासते B². ५. आ॒स॒ते Bp², Cp; आ॒स॒ते > आस॑ते J.

यथा गावः स्वकीये गोष्ठे स्थाने विस्रम्भेण निवसन्ति तथेत्यर्थः । तस्मात् सर्वाभिर्देवताभिः आश्रितं जीवरूपेण अन्तर्यामिरूपेण च ब्रह्मणा प्रविष्टं पुरुषशरीरं तत्तादात्म्येन विद्वान् साक्षात्करोतीत्यर्थः ।

प्रथमेन प्रमारेण त्रेधा विष्वङ् वि[1] गच्छति[2] ।
अद एकेन गच्छत्यद एकेन गच्छतीहैकेन[3] नि षेवते ॥ ३३ ॥

प्रथमेन । प्रऽमारेण । त्रेधा । विष्वङ् । वि । गच्छति ।
अदः । एकेन । गच्छति । अदः । एकेन । गच्छति । इह । एकेन । नि । सेवते ॥ ३३ ॥

शरीरम् अभिमन्यमानो जीवात्मा तेन शरीरेण तत्र प्रविष्टैरिन्द्रियैश्च पुण्यापुण्यात्मकानि कर्माणि अनुष्ठाय तत्फलोपभोगार्थं मरणानन्तरं स्वर्गनरकादीनि स्थानानि प्राप्नोति । तद् अत्र निरूप्यते — प्रथमेन प्रथमभाविना स्थूलशरीरेण प्रमारेण प्रमृतेन । हेतौ तृतीया । भोगायतनस्य शरीरस्य तदारम्भक-[4] कर्मक्षयेण त्यागाद्धेतोरित्यर्थः । त्यक्तशरीरः स जीवात्मा त्रेधा त्रिप्रकारं विष्वङ् नाना नि[5] गच्छति नियमेन प्रयाति । अदः विप्रकृष्टं स्वर्गाख्यं स्थानम् एकेन पुण्येन कर्मणा गच्छति प्राप्नोति । अदः विप्रकृष्टं नरकाख्यं स्थानम् एकेन पापेन कर्मणा गच्छति प्राप्नोति । तथा इह अस्मिन् भूलोके एकेन पुण्यपापात्मकेन मिश्रितेन कर्मणा नि षेवते नितरां सुखदुःखात्मकान् भोगान् सेवते । श्रूयते हि — 'पुण्येन पुण्यं लोकं नयति पापेन पापम् उभाभ्यामेव मनुष्यलोकम्' ( प्रउ ३,७ ) इति ।

अप्सु स्तीमासु वृद्धासु शरीरमन्तरा हितम् ।
तस्मिञ्छवोध्यन्तरा तस्माच्छवोध्युच्यते ॥ ३४ ॥

अप्ऽसु । स्तीमासु । वृद्धासु । शरीरम् । अन्तरा । हितम् ।
तस्मिन् । शवः । अधि । अन्तरा । तस्मात् । शवः । अधि । उच्यते ॥ ३४ ॥

स्तीमासु अनार्द्रं सर्वं जगत् आर्द्रं कुर्वतीषु । तिम ष्टिम ष्टीम आर्द्रीभावे । तत्र स्तीम्यतेः पचाद्यच् । तथाविधासु वृद्धासु प्रवृद्धासु अप्सु उदकेषु अन्तरा मध्ये शरीरम् ब्रह्माण्डात्मकं समष्टिभूतं हितम् निहितं वर्तते । स्मर्यते हि —

---

१. नि S', V, सा. २. परिवर्त्य यंछति Bh. ३. गछति Bh, V. ४. तदातारंभक° S'. ५. वैतु. मंपा.

'अप एव ससर्जादौ तासु [1]वीर्यमवाकिरत्[1] ।'
'तदण्डमभवद्धैमं [2]कोटिसूर्यसमप्रभम्[2] ।' ( मस्मृ १,८;९ ) इति ।

तस्मिन् **ब्रह्माण्डशरीरे** अधि **उपरि** अन्तरा **मध्ये च** शवः **बलात्मकः सूत्रात्मा सर्वाधारभूतवस्त्वात्मकः**[3] **परमेश्वरो वर्तते** । तस्मात् **समष्टिशरीराद्** अधि **अधिकत्वेन स** शवः **बलात्मकः सूत्रात्मा** उच्यते । **श्रूयते हि**—'वायुर्वै गौतम तत् सूत्रम् । वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति' ( बृउ ३,७,२ ) **इति** ।

**इति चतुर्थेऽनुवाके षष्ठं सूक्तम् ।**

**इति एकादशे काण्डे चतुर्थोऽनुवाकः ।**

ऋ. काङ्कायन, दे. अर्बुदिः

**पञ्चमेऽनुवाके षट् सूक्तानि । तत्र** 'ये बाहवः' **इत्यादिसूक्तत्रयम्** 'उत्तिष्ठत सं नह्यध्वम्' **इत्यादिसूक्तत्रयं च अर्थसूक्तम् । आभ्याम् अर्थसूक्ताभ्याम् जयकामो राजा युद्धकाले यथालिङ्गं स्वीयान् भटान् प्रति संप्रैषं कुर्यात् जपं कुर्याच्च ।**

**तथा शत्रुजयकर्मणि** 'ये बाहवः **इत्यनुवाकेन पृषदाज्यं सक्तूंश्च जुहुयात् ।**

**तथा अनेनानुवाकेन धनुरिध्मेऽग्नौ पृषदाज्येन अक्ता धनुःसमिध आदध्यात् । इषिध्मेऽग्नौ पृषदाज्येन अक्ता इषुसमिध आदध्यात् ।**

**तथा अनेनानुवाकेन पृषदाज्येन धनुः संपात्य विमृज्य अभिमन्त्र्य योद्ध्रे जयकामाय राज्ञे प्रयच्छेत् ।**

**अनेनानुवाकेन भाङ्गपाशान्**[4] **पृषदाज्येन संपात्य अभिमन्त्र्य परसेनाक्रमणस्थानेषु प्रक्षिपेत् ।**

**तथा अनेनानुवाकेन मौञ्जपाशान् आमपात्राणि त्रिसंधीनि लोहमयानि पात्राणि वज्ररूपाणि अर्बुदरूपाणि वा पृषदाज्येन संपात्य अभिमन्त्र्य युद्धस्थानेषु प्रक्षिपेत् ।**

**तथा अनेन अनुवाकेन शितिपदीं गां पृषदाज्येन संपात्य अभिमन्त्र्य राज्ञश्चिह्नितकेतुदण्डे रहस्यं बध्नीयात् । अन्यां शितिपदीं गां संपात्य अभिमन्त्र्य शत्रुसेनामध्ये निरस्येत् । ततो युद्धार्थं सेनानायकम्**[5] **उत्सृजेत् ।**

**एतत् सर्वं कौशिकेन सूत्रितम्**—"'ये बाहवः', 'उत्तिष्ठत' ( अ ११,१२ ) **इति** यथालिङ्गं संप्रेष्यति । होमार्थे पृषदाज्यम् । प्रदानान्तानि वाप्यानि । वाप्यैस्त्रिषन्धीनि[6] वज्ररूपाण्यर्बु-

---

१. **बीजमवासृजत्** इति उपलभ्यमानः पाठः. २. **सहस्रांशुसमप्रभम्** इति उपलभ्यमानः पाठः. ३. **भूतवास्त्वात्मकः** S'. ४. **भाग°** S'. ५. **सेनायकम्** S'. ६. **°त्रिसंधीनि** S'.

दरूपाणि[1] । शितिपदीं संपातवतीं दर्भरज्ज्वा क्षत्रियायोपासङ्गदण्डे[2] बध्नाति । द्वितीयाम् अस्यति" ( कौसू १६,२१-२६ ) इति ।

ये बाहवो या इषवो धन्वनां वीर्याणि च ।
असीन्[3] परशूनायुधं चित्ताकूतं च यद्धृदि ।
सर्वं तदर्बुदे त्वममित्रेभ्यो दृशे कुरूदारांश्च[4] प्र दर्शय ॥ १ ॥

ये । बाहवः । याः । इषवः । धन्वनाम्[5] । वीर्याणि । च । असीन्[6] । परशून् । आयुधम् । चित्तऽआकूतम् । च । यत् । हृदि । सर्वम् । तत् । अर्बुदे । त्वम् । अमित्रेभ्यः । दृशे । कुरु । उत्ऽआरान् । च । प्र । दर्शय ॥ १ ॥

ये अस्मदीयानां योद्धॄणां भटानां बाहवः आयुधग्राहिणो हस्ताः या इषवः बाणाः तथा धन्वनाम् धनुषाम् अस्मदीयानां यानि च वीर्याणि वीरकर्माणि शत्रुनिपातनसामर्थ्यानि सन्ति तान् सर्वान् बाह्वादीन् असीन् खड्गान् परशून् परश्वधान् कुठारविशेषान् यद् अन्यदपि आयुधम् आयोधनसाधनशस्त्रम् यत् च अस्मदीयानां योद्धॄणां हृदि हृदये अवस्थितं चित्ताकूतम् चित्तेन मनसा संकल्प्यमानं शत्रूणां मारणम् । यद्वा चित्तानि अस्मदीयानां भटानां धैर्ययुक्तानि मनांसि आकूतानि संकल्पाः इमम् अनेन प्रकारेण हनिष्यामि इमम् अनेनेत्येवं बहुधा भिन्नाः । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (पा २,४,२ ) इति एकवद्भावाद्[7] एकवचनम् । ये बाहव इत्यादिना यद् एतद् अनुक्रान्तं तत् सर्वम् हे अर्बुदे । अर्बुदो नाम सर्पऋषिः । तथा च ऐतरेयके समाम्नायते—अर्बुदः काद्रवेयः सर्पऋषिर्मन्त्रकृत्' ( ऐब्रा ६,१ ) इति तस्य द्वौ पुत्रौ अर्बुदिश्च[8] न्यर्बुदिश्चेति । अपत्येऽर्थे 'अत इञ्' (पा ४,१,९५) इति इञ् । 'संज्ञापूर्वको विधिरनित्यः' (पाका ६,४,१४६) इति आदिवृद्धिर्न क्रियते । हे अर्बुदस्य पुत्र हे सर्प त्वम् उक्तं सर्वम् अमित्रेभ्यः अस्मच्छत्रुभ्यः दृशे द्रष्टुं कुरु । यथा शत्रूणां मनसि भीतिर्जायते तथा अस्मदीयानि युद्धोपकरणानि दर्शयेत्यर्थः । अपि च उदारान् उद्गतान् अन्तरिक्षचरान् रक्षःपिशाचादीन् मन्त्रसामर्थ्योद्भावितान् शत्रूणां भीत्यर्थं प्र दर्शय । यद्वा सूर्यरश्मिप्रभवा उल्कादय आन्तरिक्ष्या उत्पाता उदाराः । तानपि तेभ्यः पराजयार्थं प्रदर्शय । 'तस्मात् तेपानाद् उदारा अजायन्त' ( तैब्रा २,२,९,२ ) इति तैत्तिरीयकम् । उदारयन्ति आर्तिम् उद्भावयन्तीति उदाराः । ऋ गतौ । अस्मात् उत्पूर्वात् ण्यन्तात् पचाद्यच् ।

उत्तिष्ठत सं नह्यध्वं मित्रा देवजना यूयम् ।

---

१. °दिरूपाणि Bl. २. क्षत्रियायोपाशुमंकदंडे S'. ३. आसीत् S^m; असीत E; आसीन् K^m,K,V,S'. ४. कुरु° B. ५. धन्वानाम् P. ६. आसीन् P. ७. इदं चिन्त्यम्, एकवद्भावाप्राप्तेः. ८. अर्बुदश्च S'.

संदृष्टा गुप्ता वः सन्तु या नो[1] मित्राण्यर्बुदे[1] ॥ २ ॥

उत् । तिष्ठत । सम् । नह्यध्वम् । मित्राः । देवऽजनाः । यूयम् ।
समऽदृष्टा । गुप्ता । वः । सन्तु । या[2] । नः । मित्राणि । अर्बुदे[3] ॥ २ ॥

हे मित्राः मित्रभूता अस्माकं जये प्रवृत्ता हे देवजनाः यूयम् उत्तिष्ठत अस्मात् सेनानिवेशाद् उद्गच्छत । 'उदोऽनूर्ध्वकर्मणि' (पा १,३,२४) इति पर्युदस्तत्वाद् आत्मनेपदाभावः । सं नह्यध्वम् उत्थानानन्तरं युद्धाय संनद्धा भवत । तथा वः युष्माभिः संदृष्टाः[4] सम्यङ् निरीक्षिताः अस्मदीया भटाः गुप्ताः[4] रक्षिताः सन्तु भवन्तु । व इति तृतीयार्थे षष्ठी । हे अर्बुदे सर्प नः अस्माकं या यानि मित्राणि अस्मदीयैः शत्रुभिः सह योद्धुम् आगतानि तानि त्वया गुप्तानि रक्षितानि भवन्त्वित्यर्थः ।

उत्तिष्ठतमा रभेथामादानसंदानाभ्याम् ।
अमित्राणां सेना अभि[5] धत्तमर्बुदे ॥ ३ ॥

उत् । तिष्ठतम् । आ । रभेथाम् । आदानऽसंदानाभ्याम् ।
अमित्राणाम् । सेनाः । अभि । धत्तम् । अर्बुदे ॥ ३ ॥

हे अर्बुदे त्वं च न्यर्बुदिश्च युवाम् उत्तिष्ठतम् स्थानाद् उच्चलतम् । आ रभेथाम् युद्धम् उपक्रमेथाम् । रभ राभस्ये । 'राभस्यं कार्योपक्रमः' ( क्षीरतरङ्गिणी ) इति तद्वृत्तिः । अनन्तरम् आदानसंदानाभ्याम् आदीयते गृह्यते अनेनेति ग्रहणार्थं रज्जुयन्त्रम् आदानम् । संदीयते बध्यते अनेनेति संदानं बन्धनरज्जुः । ताभ्यां रज्जुभ्याम् अमित्राणां शत्रूणां संबन्धिनीं सेनाम्[6] अभि धत्तम् बध्नीतम् । अभिपूर्वो दधातिर्बन्धने वर्तते । यथा 'अश्वाभिधानीमादत्ते' ( तै ५,१,२,१ ) इति ।

अर्बुदिर्नाम यो देव ईशानश्च न्यर्बुदिः ।
याभ्यामन्तरिक्षमावृतमियं च पृथिवी मही ।
ताभ्यामिन्द्रमेदिभ्यामहं जितमन्वेमि सेनया ॥ ४ ॥

अर्बुदिः[7] । नाम । यः । देवः । ईशानः । च । निऽअर्बुदिः[8] । याभ्याम् । अन्तरिक्षम् । आऽवृतम् । इयम् । च । पृथिवी । मही । ताभ्याम् । इन्द्रमेदिऽभ्याम् । अहम् । जितम् । अनु । एमि । सेनया ॥ ४ ॥

---

१. नो मित्राण्य° K,K<sup>m</sup>,V. २. याः Bp[2]. ३. अर्बेदे P. ४. वैतु. पपा. ५. सेनामभि S'. ६. वैतु. संपा ७. अर्बेदिः P. ८. °अर्बेदिः P.

**अर्बुदिन्यर्बुद्योर्माहात्म्यम् अनया प्रतिपाद्यते**—अर्बुदिः **इति प्रसिद्धः सर्पात्मको** यो देवः **तथा** ईशानः **सर्वस्य ईशिता यश्च** न्यर्बुदिः **इति प्रसिद्धः सर्पः** याभ्याम् **अर्बुदिन्यर्बुदिभ्याम्** अन्तरिक्षम् **सर्वम्** आवृतम् **स्वशरीरैरावेष्टितम्** इयं **परिदृश्यमाना** मही **महती** पृथिवी च **याभ्याम् आवृता । तौ सर्पात्मकौ देवौ संग्रामजयकर्मणि सर्वोत्कर्षेण वर्तेते इत्यर्थः ।** ताभ्यां **द्यावापृथिव्यौ व्याप्य वर्तमानाभ्याम्** इन्द्रमेदिभ्याम् **इन्द्रस्य स्निग्धाभ्याम्**[1] **। ञिमिदा स्नेहने । अस्मात् ताच्छीलिको णिनिः । अर्बुदिन्यर्बुदिभ्यां** जितं **शत्रुबलम्** अहं **पश्चात्** सेनया अन्वेमि **अनुगच्छामि ।**

उत्तिष्ठ त्वं देवजनार्बुदे सेनया सह ।
भञ्जन्नमित्राणां सेनां भोगेभिः परि वारय ॥ ५ ॥

उत् । तिष्ठ । त्वम् । देवऽजन । अर्बुदे[2] । सेनया । सह ।
भञ्जन् । अमित्राणाम् । सेनाम् । भोगेभिः । परि । वारय ॥ ५ ॥

**हे** देवजन **देवजातीय** अर्बुदे त्वं सेनया **आत्मीयया सह** उत्तिष्ठ **उद्गच्छ । शत्रून् प्रथमम् अभियाहीत्यर्थः । अनन्तरम्** अमित्राणाम् **शत्रूणां** सेनां भञ्जन् **आमर्दयन् भग्नवीर्यां कुर्वन्** भोगेभिः **भोगैः आत्मीयैः सर्पशरीरैः** परि वारय **परिवेष्टय । यथा शत्रुसेना अस्मान् न पश्यति तथा तदीयानि अक्षीणि पिधेहीत्यर्थः ।**

सप्त जातान् न्यर्बुद[3] उदाराणां समीक्षयन् ।
तेभिष्ट्वमाज्ये हुते सर्वैरुत्तिष्ठ सेनया ॥ ६ ॥

सप्त । जातान् । निऽअर्बुदे । उत्ऽआराणाम् । सम्ऽईक्षयन् ।
तेभिः । त्वम् । आज्ये । हुते । सर्वैः । उत् । तिष्ठ । सेनया ॥ ६ ॥

**हे** न्यर्बुदे **एतत्संज्ञ सर्प** उदाराणाम् **प्रागुक्तलक्षणानां मध्ये** सप्त **सप्तसंख्याकान्** जातान् **उत्पन्नान् दृष्टितिरोधायकान्**[4] समीक्षयन् **शत्रूणां दर्शयन्** त्वम् आज्ये हुते। **उपलक्षणम् एतत् । आज्योपलक्षितेषु द्रव्येषु हुतेषु सत्सु** तेभिः **तैः** सर्वैः **उपलक्षितः सन् अस्मदीयया** सेनया सह उत्तिष्ठ **उद्गच्छ ।**

प्रतिघ्नानाश्रुमुखी कृधुकर्णी च क्रोशतु ।
विकेशी पुरुषे हते रदिते अर्बुदे[5] तव ॥ ७ ॥

---

१. एवं स्वरो न सिध्यति. २. अर्बदे P. ३. तु. पपा., अ ११,११,११; वैद्र. शंपा. न्यऽ° ४. दृष्टतिरो° S'. ५. अर्बुदे B.

प्रतिऽघ्नाना । अश्रुऽमुखी । कृधुऽकर्णी । च । क्रोशतु ।
विऽकेशी । पुरुषे । हते । रदिते । अर्बुदे । तव ॥ ७ ॥

हे अर्बुदे तव रदिते दन्तैर्विलेखने खादने सति 'तथा तेन'[1] रदनेन शत्रुभूते पुरुषे हते मृते सति तदीया जाया प्रतिघ्नाना प्रतिमुखं स्वकीयं वक्षस्ताडयन्ती। प्रतिपूर्वात् हन्तेर्लटः शानच् । 'गमहन°' (पा ६,४,९८) इति उपधालोपः। अश्रुमुखी बाष्पमुखी कृधुकर्णी । कृध्विति ह्रस्वनाम । कर्णाभरणपरित्यागेन ह्रस्वकर्णी च विकेशी विकीर्णशिरोरुहा च सती क्रोशतु रोदनं करोतु । क्रुश आह्वाने रोदने च।

संकर्षन्ती करूकरं मनसा पुत्रमिच्छन्ती ।
पतिं भ्रातरमात्स्वान्[2] रदिते[3] अर्बुदे तव ॥ ८ ॥

सम्ऽकर्षन्ती[4] । करूकरम् । मनसा । पुत्रम् । इच्छन्ती ।
पतिम् । भ्रातरम् । आत् । स्वान्[2] । रदिते । अर्बुदे । तव ॥ ८ ॥

हे अर्बुदे तव त्वदीये रदिते रदने दन्तैर्विलेखने सति विषावेशवशात् शत्रुस्त्री करूकरं संकर्षन्ती। करु इति अनुकरणशब्दोऽयम् । तत्करोतीति करूकरम्[5] हस्तपादाद्यवयवगतं संधिमद् अस्थिजातं तत् सम्यक् कर्षन्ती। लोके हि भयवशाद् उभयोर्हस्तयोः परस्पराङ्गुलिनिपीडनेन तादृशं शब्दम् उत्पादयन्ति। तदनन्तरं मनसा अन्तःकरणेन विषप्रतीकाराय पुत्रम् आत्मीयं सुतम् इच्छन्ती। तदनन्तरं पतिम् भर्तारम् इच्छन्ती। ततो भ्रातरम् आत्मीयं सहजम् । आत् अनन्तरं स्वान् स्वकीयान् बन्धुजनान् विषनिर्हरणाय इच्छन्ती। इत्थम् इतिकर्तव्यतामूढा भवत्वित्यर्थः।

अलिक्लवा जाष्कमदा[6] गृध्राः श्येनाः पतत्रिणः ।
ध्वाङ्क्षाः शकुनयस्तृप्यन्त्वमित्रेषु समीक्षयन् रदिते अर्बुदे तव ॥ ९ ॥

अलिक्लवाः । जाष्कमदाः[7] । गृध्राः । श्येनाः । पतत्रिणः ।
ध्वाङ्क्षाः । शकुनयः । तृप्यन्तु । अमित्रेषु । सम्ऽईक्षयन् । रदिते । अर्बुदे । तव ॥ ९ ॥

अलिक्लबाः[8] विशिष्टक्लैब्ययुक्ता विक्लबाः तद्विपरीता अलिक्लबाः । धृष्टाः पक्षिण इत्यर्थः । याः[8] च पक्षिजातयः क्लमदाः[8] क्लमस्य शरीरावसादस्य दात्र्यः

---

१. तथा ते नास्ति S'. २. स्वाऽन् WM. ३. रदिते B,Cs. ४. °कर्षती P. ५. करूषकरं S'. ६. जाःक्रमदा B; जाःकमदा A,D,K,S^m,V,Cs,B²,O; याः क्लमदा K,V, सा. ७. जाःक्रमदाः Cp. ८. वैतु. मंपा.

'ता अनुक्रामति'[1] — गृध्राः श्वेतवर्णा मांसाभिलाषिणः पक्षिणः । श्येनाः प्रसिद्धाः । पतत्रिणः अन्ये च मांसभक्षकाः पक्षिणः पतत्रिशब्देन विवक्षिताः । ध्वाङ्क्षाः काकाः । एवमात्मकाः शकुनयः हे अर्बुदे तव रदिते त्वदीये रदने विषदन्तैर्विलेखने अमित्रेषु अस्मदीयेषु शत्रुषु सति समीक्षयन् । व्यत्ययेन एकवचनम् । तन्मरणं प्रतीक्षमाणास्तदनन्तरं तद्भक्षणेन तृप्यन्तु तृप्ता भवन्तु ।

अथो सर्वं श्वापदं मक्षिका तृप्यतु क्रिमिः ।
पौरुषेयेऽधि कुणपे रदिते अर्बुदे तव ॥ १० ॥

अथो इति । सर्वम् । श्वापदम् । मक्षिका । तृप्यतु । क्रिमिः[2] ।
पौरुषेये । अधि । कुणपे । रदिते । अर्बुदे । तव ॥ १० ॥

अथो अपि च सर्वं श्वापदम् शुनः पदानीव पदानि यस्य सृगालव्याघ्रादेः तत् सर्वं श्वापदम् । मक्षिका मांसनिषेविणी या नीलमक्षिकेति प्रसिद्धा । क्रिमिः मांसेषु जीर्णेषु जायमानः प्राणी । एतत् सर्वम् हे अर्बुदे तव रदिते सति पौरुषेये पुरुषसम्बन्धिनि कुणपे शवशरीरे अधि उपरि तृप्यतु । तव खादनेन सर्वेषु शत्रुषु मृतेषु तच्छरीराणि गृध्रादयः पक्षिणः श्वसृगालादयश्च भक्षयन्त्वित्यर्थः ।

इति पञ्चमेऽनुवाके प्रथमं सूक्तम् ।

'आ गृह्णीतम्' इति सूक्तस्य शत्रुजयकर्मणि विनियोग उक्तः ।

आ गृह्णीतं सं बृहतं प्राणापानान् न्यर्बुदे ।
निवाशा घोषाः सं यन्त्वमित्रेषु समीक्षयन् रदिते अर्बुदे तव ॥ ११ ॥

आ । गृह्णीतम् । सम् । बृहतम्[3] । प्राणापानान् । निऽअर्बुदे ।
निऽवाशाः । घोषाः । सम् । यन्तु । अमित्रेषु । सम्ऽईक्षयन् । रदिते । अर्बुदे । तव ॥ ११ ॥

हे न्यर्बुदे त्वं च अर्बुदिश्च युवां शत्रुसंबन्धिनः प्राणापानान् आ गृह्णीतम् आ समन्तात् स्वीकुरुतम् । तदनन्तरं सं बृहतम्[4] समूलम् उत्खिदतम् । बृहू उद्यमने । तुदादित्वात् शप्रत्ययः । हे अर्बुदे तव रदिते सति अमित्रेषु शत्रुषु तद् रदितं समीक्षयन् । षष्ठ्यर्थे प्रथमा । समीक्षयतां जनानां निवाशाः नीचीनं वाश्यमाना आभाष्यमाणा घोषाः शब्दाः सं यन्तु सम्यग् वर्तन्ताम् । विषनिपीडितानाम् आर्तस्वरा उत्पद्यन्ताम् इत्यर्थः ।

---

१. तावानु° S'. २. क्रुमिः P,Cp. ३. वृहतम् P²,J, सा. ४. वैतु. मंपा.

उद् वेपय सं विजन्तां [1]भियामित्रान्त्सं सृज ।
उरुग्राहैर्बाह्वङ्कैर्विध्यामित्रान्[2] न्यर्बुदे[2] ॥ १२ ॥

उत् । वेपय । सम् । विजन्ताम् । भिया । अमित्रान् । सम् । सृज ।
उरुऽग्राहैः । बाहुऽअङ्कैः । विध्य । अमित्रान् । निऽअर्बुदे ॥ १२ ॥

हे न्यर्बुदे **एतत्संज्ञ सर्पजातीय देव** अमित्रान् **अस्मदीयान् शत्रून्** उद् वेपय **उत्कम्पय । टुवेपृ कम्पने इति धातुः । ते च अनन्तरं** सं विजन्ताम् **भयात् स्वस्थानात् प्रचलिताः उद्विग्ना भवन्तु । ओविजी भयचलनयोः ।** भिया **अस्मत्सकाशाज्जनितया भीत्या** सं सृज **संयोजय । तदनन्तरम्** ऊरुग्राहैः[3] **ऊरूणां ग्रहणैः** बाहुवङ्कैः[3] **बाहुना वक्रबन्धनैः** अमित्रान् **अस्मदीयान् शत्रून्** विध्य **ताडय ।**

मुह्यन्त्वेषां बाहवश्चित्ताकूतं च यद्धृदि ।
मैषामुच्छेषि[4] किं चन रदिते अर्बुदे तव ॥ १३ ॥

मुह्यन्तु । एषाम् । बाहवः । चित्तऽआकूतम् । च । यत् । हृदि ।
मा । एषाम् । उत् । शेषि । किम् । चन । रदिते । अर्बुदे । तव ॥ १३ ॥

हे अर्बुदे तव रदिते **खादने सति** एषां **शत्रूणां** बाहवः **विषावेशवशाद्** मुह्यन्तु **मूढा व्यापारासमर्था भवन्तु । एषां शत्रूणां** हृदि **हृदये** यत् चित्ताकूतम् **चित्तेन संकल्पितम् अर्थजातं तदपि मुह्यतु मूढं विस्मृतं भवतु । यद्वा चित्तानि मनांसि आकूतानि कर्तव्यविशेषविषयास्तद्वृत्तयः । तत् सर्वं मुह्यतु । अपि च** एषां **शत्रूणां संबन्धि** किं चन **किमपि रथतुरगहस्त्यादिलक्षणं बलं** मा उच्छेषि **उच्छिष्टम् अवशिष्टं मा भूत् । सर्वमपि त्वया हन्यताम्[5] इत्यर्थः ।**

प्रतिघ्नानाः सं [6]धावन्तूरः पटूरावाघ्नानाः[6] ।
अघारिणीर्विकेश्यो रुदत्यः[7] पुरुषे हते रदिते अर्बुदे तव ॥ १४ ॥

प्रतिऽघ्नानाः । सम् । धावन्तु । उरः । पटूरौ[8] । आऽघ्नानाः ।
अघारिणीः । विऽकेश्यः । रुदत्यः । पुरुषे । हते । रदिते । अर्बुदे । तव ॥ १४ ॥

हे अर्बुदे तव रदिते **खादने सति** पुरुषे **स्वकीये भर्तरि** हते **सति तदीयाः**

---

१. भया° K. २. मित्रांण्यर्बुदे P³,M,W. ३. वैतु. मंपा. ४. मैषा° B.
५. हन्यंताम् S′. ६. °तूरः पटुरा° V; °तूरंश्चतुरा° K; °तूरः पट्टौरा° A,B,Bʰ,C,E,Kᵐ,R.
७. °त्युः A,B,Bʰ,C,E. ८. पट्टौरो P,P²,J.

**स्त्रियः** प्रतिघ्नानाः **प्रतिमुखं स्वशरीरम् आघ्नत्यस्ताडयन्त्यः। तथा** उरः **वक्षःस्थलं** पट्टूरौ **तत्प्रदेशौ च** आघ्नानाः **हस्ताभ्याम् आताडयन्त्यः ।** विकेश्यः **विकीर्णकेश्यः ।** अघारिणीः **अघेन भर्तृवियोगजनितेन दुःखेन आर्ताः ।** रुदत्यः **संजातरोदनाः सत्यः** सं धावन्तु **मृतपुरुषसमीपं शीघ्रं गच्छन्तु ।** 'सर्तेर्वेगितायां गतौ धावादेशो वक्तव्यः' ( पाका ७,३,७८ ) **इति** 'पाघ्रा' ( पा ७,३,७८ ) **इत्यादिना धौरादेशः ।**

[1]श्वन्वतीरप्सरसो रूपका उतार्बुदे ।
अन्तःपात्रे रेरिहतीं[2] रिशां दुर्णिहितैषिणीम् ।
सर्वास्ता अर्बुदे त्वममित्रेभ्यो दृशे कुरूदारांश्च प्र दर्शय ॥ १५ ॥

[1]श्वन्ऽवतीः । अप्सरसः । रूपकाः । उत । अर्बुदे । अन्तःऽपात्रे । रेरिहतीम् । रिशाम्[3] । दुर्निहितऽएषिणीम् । सर्वाः । ताः । अर्बुदे । त्वम् । अमित्रेभ्यः । दृशे । कुरु । उत्ऽआरान् । च । प्र । दर्शय ॥ १५ ॥

श्वन्वतीः **शुना क्रीडार्थेन सारमेयेण सहिता** अप्सरसः **गन्धर्वस्त्रियः ।** रूपकाः **मायावशात् केवलं रूपमात्रेण उपलभ्यमानाः सेना रूपकाः । हे** अर्बुदे **ताः सर्वा अमित्रेभ्यो दर्शय । तथा** पात्रे[4] अन्तः[4] **मध्ये** रेरिहतीम्[2] **पुनःपुनर्लिहतीं**[5] दुर्निहितैषिणीम् **दुष्टनिक्षितम् इच्छन्तीं** वशाम्[5] **गाम् हे** अर्बुदे त्वं सर्वास्ताः **प्राग् उदीरिता** अमित्रेभ्यः **शत्रुभ्यो** दृशे **दर्शनाय** कुरु । उदारान् **उल्कापातादीन् अद्भुतान् विकृतदर्शनान् यक्षराक्षसान्** च प्र दर्शय ।

खड्डूरेऽधिचङ्क्रमां[6] खर्विकां खर्ववासिनीम् ।
य उदारा अन्तर्हिता गन्धर्वाप्सरसश्च ये । सर्पा इतरजना रक्षांसि ॥१६॥

खड्डूरे । अधिऽचङ्क्रमाम्[7] । खर्विकाम् । खर्वऽवासिनीम् ।
ये । उत्ऽआराः । अन्तःऽहिताः । गन्धर्वऽअप्सरसः । च । ये । सर्पाः । इतरऽजनाः[8] । रक्षांसि ॥

चतुर्दंष्ट्रां[9] छ्यावदतः कुम्भमुष्कां[10] असृङ्मुखान् ।
स्वभ्यसा ये चोद्भ्यसाः ॥ १७ ॥

---

१. अत्र स्वरितार्थं < शु-अन् इति द्र. [तु. द्यौ, ज्यांके प्रभृ. वैप १]. २. रेरिहंती S'. ३. रिषाम् Bp². ४. वैतु. मंपा. ५. लिहन्तीं S'. ६. °चक्रमां K. ७. °चक्रमाम् P,P². ८. इतरऽजनाः P. ९. °दंष्ट्रा B; °दंष्ट्रां १०. मुष्कां B,Bh.

चतुःऽदंष्ट्रान् । श्यावऽदतः । कुम्भऽमुष्कान् । असृक्ऽमुखान् ।
स्वऽभ्यसाः । ये । च । उत्ऽभ्यसाः ॥ १७ ॥

दूरभूतं खं खदूरम्[1] आकाशे दूरदेशे अधि[1] उपरि चङ्क्रमाम्[1] चङ्क्रमणशीलां मायावशाद् इतस्ततः प्रादुर्भवन्तीं खर्विकाम् अल्पह्रस्वां खर्ववाशिनीम्[1] खर्वम् अल्पं शब्दायमानां [2]मानवशात् मितभाषमाणाम्[2] हे अर्बुदे त्वं शत्रुभ्यः प्र दर्शय यथा ते पराजयेरन्। ये उदाराः यक्षराक्षसादयः अन्तर्हिताः स्वमायया व्यवहिताः अस्मद्दृग्गोचरा न भवन्ति ये च गन्धर्वाप्सरसः तथाविधाः तान् सर्वान् पराजयार्थं शत्रुभ्यो दर्शय। सर्पाः सर्पस्वरूपाः इतरजनाः इतरजनसंज्ञका देवाः । यद्वा सर्पाः सर्पात्मका देवास्तदपेक्षया इतरजनाः तत्सदृशा देवजातयः। रक्षांसि राक्षसाः [१६]। ते च चतुर्दंष्ट्राः दंशनसाधनचतुर्दन्तयुक्ताः। तान्। श्यावदतः श्यामवर्णदन्तयुक्तान् । एतानपि मायामयान् अमित्रेभ्यो दर्शय । तथा कुम्भमुष्कान् कुम्भाकृतिमुष्कयुक्तान् । असृङ्मुखान् रक्तास्यान् स्वभ्यसाः स्वायत्तभीतयो राक्षसाः । ये च उद्भ्यसाः उद्गतभीतयः । भ्यस भये। 'घञर्थे कविधानम्' (पा ३,३,२८) इति कप्रत्ययः । घोरेण रूपेण इत्थं विविधभयजनका राक्षसा इत्यर्थः। तान् सर्वान् अमित्रेभ्यो मायया दर्शय [१७]।

उद् वेपय [3]त्वमर्बुदेऽमित्राणाममूः[3] सिचः[4] ।
जयांश्च[5] जिष्णुश्चामित्राँ[6] जयतामिन्द्रमेदिनौ ॥ १८ ॥

उत् । वेपय । त्वम् । अर्बुदे । अमित्राणाम् । अमूः । सिचः ।
जयन्[7] । च । जिष्णुः । च । अमित्रान् । जयताम् । इन्द्रऽमेदिनौ ॥ १८ ॥

हे अर्बुदे त्वम् अमित्राणाम् शत्रूणां अमूः सेनाः शुचः[1] शोचमाना विषावेशजनितशोकार्ताः उद्वेपय उत्कम्पय। शुच शोके। अस्मात् 'क्विप् च' (पा ३,२,५) इति क्विप्। तथा अमित्रान् शत्रून् जयन् पराभावयन् जिष्णुः जयशीलः च अर्बुदिन्यर्बुदी इन्द्रमेदिनौ इन्द्रेण सह स्निह्यन्तौ जयताम् अस्माकं जयं कुरुताम्।

प्रब्लीनो मृदितः शयां हतोऽमित्रो न्यर्बुदे ।
अग्निजिह्वा धूमशिखा जयन्तीर्यन्तु सेनया ॥ १९ ॥

प्रऽब्लीनः । मृदितः । शयाम् । हतः । अमित्रः । निऽअर्बुदे ।
अग्निऽजिह्वाः । धूमऽशिखाः । जयन्तीः । यन्तु । सेनया ॥ १९ ॥

---

१. वैतु. मंपा. २. मानावशात् प्रतिभासमानाम् S'. ३. °दे अमित्रा° B.
४. शुचः K,V. ५. जयंश्च S,K,V. ६. °मित्रां B; °मित्रान् Bh,K,KmV,Cs.
७. जयान् Cp.

हे न्यर्बुदे अमित्रः **अस्मदीयः शत्रुः** प्रव्लीनः[1] **प्रभीतः** मृदितः **संपिष्टगात्रः** हतः **गतासुः** शयाम् **शेताम्** । 'लोपस्त आत्मनेपदेषु' ( पा ७,१,४१ ) **इति तलोपः । व्ली भये । अस्मात् प्रपूर्वात् कर्मणि निष्ठा । तकारस्य नत्वम्** (पा ८,२,४४) । अग्निजिह्वाः **अग्नेर्ज्वालाः** धूमशिखाः **धूमप्ररोहाः मायावशात् त्वयोत्पादिता** जयन्तीः **शत्रुबलं जयन्त्यः** सेनया **अस्मदीयया सह** यन्तु **गच्छन्तु ।**

**तयार्बुदे प्रणुत्तानामिन्द्रो हन्तु वरंवरम् ।**
**अमित्राणां शचीपतिर्मामीषां मोचि कश्चन ॥ २० ॥**

तया । अर्बुदे । प्रऽनुत्तानाम् । इन्द्रः । हन्तु । वरम्ऽवरम् ।
अमित्राणाम् । शचीऽपतिः । मा । अमीषाम् । मोचि । कः । चन ॥ २० ॥

**हे** अर्बुदे त्वया[1] प्रणुत्तानाम् **युद्धरङ्गात् प्रच्यावितानाम्** । 'नसत्तनिषत्तानुत्तप्रतूर्त' ( पा ८,२,६१ ) **इति निपातनात् निष्ठानत्वाभावः ।** अमित्राणां **शत्रूणां** शचीपतिः **शच्याः पतिः** इन्द्रः वरंवरम् **श्रेष्ठंश्रेष्ठं** हन्तु **मारयतु ।** अमीषां **शत्रूणां मध्ये** कश्चन **कश्चिदपि** [2]मा मोचि **मा मुच्यताम्**[2] **क्रमशः सर्वो हन्यताम् इत्यर्थः । मुच्लृ मोक्षणे इत्यस्मात् कर्मणि माङि लुङ् ।** 'चिण् भावकर्मणोः' ( पा ३,१,६६ ) **इति च्लेश्चिण् आदेशः ।** 'चिणो लुक्' ( पा ६,४,१०४ ) **इति तशब्दस्य लुक् ।**

**इति पञ्चमेऽनुवाके द्वितीयं सूक्तम् ।**

'उत्कसन्तु हृदयानि' **इति सूक्तस्य शत्रुजयकर्मणि विनियोग उक्तः ।**

**उत्कसन्तु हृदयान्यूर्ध्वः प्राण उदीषतु ।**
**शौष्कास्यमनु वर्ततामामित्रान् मोत मित्रिणः ॥ २१ ॥**

उत् । कसन्तु । हृदयानि । ऊर्ध्वः । प्राणः । उत् । ईषतु ।
शौष्कऽआस्यम् । अनु । वर्तताम् । अमित्रान् । मा । उत । मित्रिणः ॥ २१ ॥

**शत्रूणां संबन्धीनि** हृदयानि **अन्तःकरणानि** उत् कसन्तु **शरीराद् उद्गच्छन्तु । तथा** प्राणः **प्राणवायुः** ऊर्ध्वः **सन्** उदीषतु । **शत्रुशरीरान्निर्गच्छतु । ईष गतौ ।** अमित्रान् **शत्रून्** शौष्कास्यम् **शुष्कास्यता भीतिवशाद् आस्यस्य निर्द्रवत्वम् । तद्** अनु वर्तताम् **अनुगच्छतु । आस्यशोषणेन शत्रवो म्रियन्ताम् इत्यर्थः ।** उत **अपि च** मित्रिणः **अस्माकं मित्रभूतान् जनान्** मा **अनुवर्तताम् । तेषाम् आस्यशोषो मा भूद् इत्यर्थः ।**

---

१. वैतु. मंपा. २. चि **मा मुच्यताम्** नास्ति, स्थानं तु उपसप्तवर्णानां रिक्तम् S'.

ये च धीरा ये चाधीराः पराञ्चो बधिराश्च ये ।
तमसा ये च तूपरा अथो बस्ताभिवासिनः ।
सर्वांस्ताँ अर्बुदे त्वममित्रेभ्यो दृशे कुरूदारांश्च प्र दर्शय ॥ २२ ॥

ये । च । धीराः । ये । च । अधीराः । पराञ्चः । बधिराः । च । ये । तमसाः । ये । च । तूपराः । अथो इति । बस्तऽअभिवासिनः । सर्वान् । तान् । अर्बुदे । त्वम् । अमित्रेभ्यः । दृशे । कुरु । उत्ऽआरान् । च । प्र । दर्शय ॥ २२ ॥

ये च धीराः **शूरा भटाः** ये च अधीराः **अशूराः कातराः** । पराञ्चः **पराङ्मुखा युद्धात् पलायमानाः** ये च बधिराः **भयवशात् हतश्रवणसामर्थ्याः** । तमसा[1] **मोहेन** ये च तूपराः **तूपरः शृङ्गहीनः पशुः तद्वद् अवस्थिताः** । अथो **अपि च** बस्ताविवाशिनः[1] **बस्ताश्च अवयश्च बस्तावयः तद्वद् वाशितुं शीलम् एषां ते बस्ताविवाशिनः । बस्ताविध्वनिं कुर्वाणा इत्यर्थः । हे** अर्बुदे त्वं सर्वांस्तान् **स्वमायया उद्भावितान्** अमित्रेभ्यः **शत्रुभ्यो** दृशे **दर्शनाय** कुरु **पराजयार्थम् । गतम् अन्यत् ।**

अर्बुदिश्च त्रिषन्धिश्चामित्रान् नो वि विध्यताम् ।
यथैषामिन्द्र[2] वृत्रहन् हनाम शचीपतेऽमित्राणां सहस्रशः ॥ २३ ॥

अर्बुदिः । च । त्रिऽसंधिः । च । अमित्रान् । नः । वि । विध्यताम् ।
यथा । एषाम् । इन्द्र । वृत्रऽहन् । हनाम । शचीऽपते । अमित्राणाम् । सहस्रऽशः ॥२३॥

त्रिषंधिः **कश्चित् सेनामोहको**[3] **देवः संधित्रयोपेतवज्रायुधाभिमानी वा । स** च अर्बुदिश्च **उभौ** नः **अस्माकम्** अमित्रान् **शत्रून्** वि विध्यताम् **विविधं ताडयताम् । हे** वृत्रहन् **वृत्रस्य हन्तः** इन्द्र **हे** शचीपते **शच्या देव्याः पते** यथा **येन प्रकारेण** एषाम् अमित्राणाम् **शत्रूणां संबन्धिनो जनान्** सहस्रशः **सहस्रसंख्याकान् एकोद्योगेन** हनाम **मारयाम । तथा वि विध्यताम् इति संबन्धः** । 'संख्यैकवचनाच्च वीप्सायाम्' ( पा ५,४,४३ ) **इति सहस्रशब्दात् शस्प्रत्ययः ।**

वनस्पतीन् वानस्पत्यानोषधीरुत वीरुधः ।
गन्धर्वाप्सरसः सर्पान् देवान् पुण्यजनान् पितॄन् ।
सर्वांस्ताँ[4] अर्बुदे त्वममित्रेभ्यो दृशे कुरूदारांश्च प्र दर्शय ॥ २४ ॥

---

१. वैतु. मंपा. २. अथैषा° K. ३. °मोक्षको S'. ४. सर्वांस्तां B^h,Cs.

वनस्पतीन् । वानस्पत्यान् । ओषधीः । उत[1] । वीरुधः । गन्धर्वऽअप्सरसः । सर्पान् । देवान् । पुण्यऽजनान् । पितॄन् । सर्वान् । तान् । अर्बुदे । त्वम् । अमित्रेभ्यः । दृशे । कुरु । उत्ऽआरान् । च । प्र । दर्शय ॥ २४ ॥

वनस्पतीन् **वृक्षान्** । वानस्पत्यान् **वनस्पतिविकारान्** । ओषधीः **व्रीहियवाद्याः** । उत वीरुधः **विरोहणशीला आरण्याः** गन्धर्वाप्सरसः **गन्धर्वान् अप्सरसश्च** सर्पान् **विकृतवेषान् भुजङ्गान्** देवान् पुण्यजनान् **यक्षान्** पितॄन् **मृतान् पूर्वपुरुषान् मायामयान्** । तान् सर्वान् **हे** अर्बुदे त्वम् अमित्रेभ्यः **शत्रुभ्यो दृष्टिविषयान्** कुरु । **उक्तार्थम् अन्यत्** ।

**ईशां वो मरुतो देव आदित्यो ब्रह्मणस्पतिः ।**
**ईशां व इन्द्रश्चाग्निश्च धाता मित्रः प्रजापतिः ।**
**ईशां व ऋषयश्चक्रुरमित्रेषु[2] समीक्षयन् रदिते अर्बुदे तव ॥ २५ ॥**

ईशाम् । वः । मरुतः । देवः । आदित्यः । ब्रह्मणः । पतिः । ईशाम् । वः । इन्द्रः । च । अग्निः । च । धाता । मित्रः । प्रजाऽपतिः । ईशाम् । वः । ऋषयः । चक्रुः । अमित्रेषु । सम्ऽईक्षयन् । रदिते । अर्बुदे । तव ॥ २५ ॥

**हे शत्रवः** वः **युष्माकं मरुदाद्या[3] देवाः । प्रत्ययश्रवणसामर्थ्यात् चक्रुरिति अन्ते श्रूयमाणं सर्वत्र संबध्यते** । ईशां चक्रुः **ईश्वराः शिक्षका भवन्तु । तथा** इन्द्रश्च अग्निश्च **इत्यनुक्रान्ताश्च देवाः हे शत्रवः** वः **युष्माकम्** ईशां **चक्रुः ईश्वराः युष्माकं नियन्तारो भवन्तु । तथा** ऋषयः **अथर्वाङ्गिरःप्रभृतयः** ईशां **चक्रुः ईश्वराः शिक्षका भवन्तु । ईश ऐश्वर्ये** । 'इजादेश्च गुरुमतोऽनृच्छः' ( पा ३,१,३६ ) **इति आम्प्रत्ययः** । 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य' ( पा १,३,६३ ) **इत्यनुप्रयुज्यमानस्य करोतेः आत्मनेपदाभावश्छान्दसः । हे** अर्बुदे अमित्रेषु **अस्मदीयेषु शत्रुषु** तव रदिते **दन्तैर्विलेखने खादने सति तत्** समीक्षयन् । **व्यत्ययेन एकवचनम् । अवलोकयन्तो देवाद्याः । ईशां चक्रुः इति सम्बन्धः ।**

**तेषां सर्वेषामीशाना उत्तिष्ठत सं नह्यध्वं मित्रा देवजना यूयम्[4] ।**
**इमं संग्रामं संजित्य यथालोकं वि तिष्ठध्वम् ॥ २६ ॥**

तेषाम् । सर्वेषाम् । ईशानाः । उत् । तिष्ठत । सम् । नह्यध्वम् । मित्राः । देवऽजनाः । यूयम् । इमम् । सम्ऽग्रामम् । सम्ऽजित्य । यथाऽलोकम् । वि । तिष्ठध्वम् ॥ २६ ॥

---

**१.** उग्र P. **२.** ऋषय॒° B. **३.** मरुताद्या S'. **४.** RW. नह्यध्वम् । इत्यत्र विरमति, नेह.

तेषां सर्वेषाम् **अस्मदीयानां शत्रूणाम्** ईशानाः **ईश्वराः शिक्षकाः सन्तः** उत्तिष्ठत सं नह्यध्वं **च तेषां शिक्षणाय उत्थाय संनद्धा भवत । हे** मित्रा देवजनाः यूयम् इमम् **अस्मदीयं प्रस्तुतं** संग्रामं संजित्य **सम्यग् जित्वा अस्मदीयान् शत्रून् निरस्य** यथालोकं **यथास्थानम्** वि तिष्ठध्वम् **स्वंस्वं स्थानं गच्छतेत्यर्थः ।** 'समवप्रविभ्यः स्थः' ( पा १,३,२२ ) **इति आत्मनेपदम् ।**

**इति पञ्चमेऽनुवाके तृतीयं सूक्तम् ।**

ऋ. भृग्वङ्गिरा. दे. त्रिषन्धिः

'उत्तिष्ठत' **इति सूक्तस्य शत्रुजयकर्मणि संप्रेषणादिषु विनियोग उक्तः ।**

**उत्तिष्ठत सं नह्यध्वमुदाराः केतुभिः सह ।**
**सर्पा इतरजना रक्षांस्यमित्राननु धावत ॥ १ ॥**

उत् । तिष्ठत । सम् । नह्यध्वम् । उत्ऽआराः । केतुऽभिः । सह ।
सर्पाः । इतरऽजनाः । रक्षांसि । अमित्रान् । अनु । धावत ॥ १ ॥

हे उदाराः **औदार्यगुणोपेताः सेनानायकाः** केतुभिः **आत्मीयैर्ध्वजैः** सह उत्तिष्ठत **युद्धार्थम् उद्गच्छत** सं नह्यध्वम् **संनद्धाः कवचादिभिः संबद्धा युद्धोद्युक्ता भवत । यद्वा उदाराः पूर्वोक्ता मायामया अद्भुतरूपा यातुधानाद्याः । तेऽत्र संबोध्याः ।** सर्पाः **हे सर्पाकृतयो देवजनाः ।** इतरजनाः **सर्पव्यतिरिक्ता देवजातयः एतत्संज्ञाः । हे** रक्षांसि **राक्षसाः यूयमपि अस्मदीयान्** अमित्रान् **शत्रून्** अनु धावत **अनु पृष्ठतः शीघ्रं गच्छत ।**

**ईशां वो वेद राज्यं त्रिषन्धे अरुणैः केतुभिः सह ।**
**ये अन्तरिक्षे ये दिवि पृथिव्यां ये च मानवाः ।**
**त्रिषन्धेस्ते[1] चेतसि [2]दुर्णामान उपासताम्[2] ॥ २ ॥**

ईशाम् । वः । वेद[3] । राज्यम्[3] । त्रिऽसंन्धे । अरुणैः । केतुऽभिः । सह । ये । अन्तरिक्षे । ये । दिवि । पृथिव्याम् । ये । च । मानवाः । त्रिऽसंधेः । ते । चेतसि । दुःऽनामानः । उप । आसताम् ॥ २ ॥

**अयोमुखाः सूचीमुखा अथो विकङ्कतीमुखाः ।**
**क्रव्यादो वातरंहस आ सजन्त्वमित्रान् वज्रेण त्रिषन्धिना ॥ ३ ॥**

---

१. °धेस्त्वे K; °धेस्थे Km; °धेत्वे V; त्रिसंधे त्वे S'. २. मानुमुपा° B,O,S'.
३. तु. सा.; वैतु. P,P², J, Cp वेदऽराज्यम्.

अयःऽमुखाः । सूचीऽमुखाः[1] अथो इति । विकङ्कतीऽमुखाः । क्रव्यऽअदः । वातऽरंहसः । आ । सजन्तु । अमित्रान् । वज्रेण । त्रिऽसंधिना ॥ ३ ॥

हे अमित्राः वः युष्माकं राज्यम् राष्ट्रं त्रिसंधिर्वज्राभिमानी देवः ईशां वेद ईशितव्यत्वेन जानातु । युष्मत्तः अपहृत्य स्ववशं करोत्वित्यर्थः । ईश ऐश्वर्ये । 'इजादेश्च गुरुमतः°' ( पा ३,१,३६ ) इति पूर्ववद् आम्प्रत्ययः । कृभ्वस्तिव्यतिरिक्तस्य विदेरनुप्रयोगश्छान्दसः । हे त्रिसन्धे वज्रात्मक देव अरुणैः अरुणवर्णैः केतुभिः आत्मीयैर्ध्वजैः सह । उत्तिष्ठेति शेषः । ये केतवः अन्तरिक्षे उत्पातरूपेण प्रादुर्भवन्ति ये च दिवि द्युलोके ये च पृथिव्याम् भूलोके मानवाः मनुष्यसम्बन्धिनः केतवः । तैः केतुभिः सहेति पूर्वत्र संबन्धः । हे त्रिसन्धे[2] त्वे[2] तव चेतसि मनसि[3] वर्तमानं दुर्णामानम् दुष्टसंज्ञकम् अस्मदीयं शत्रुम् उपासताम् संभजन्ताम् [२] । के पुनस्त इत्याह — अयोमुखाः अयःसदृशतुण्डयुक्ताः पक्षिणः । सूचीमुखाः सूच्याकारतुण्डयुक्ताः पक्षिणः । अथो अपि च विकङ्कतीमुखाः विकङ्कतः बहुकण्टको वृक्षविशेषः । 'छन्दसीवनिपौ' ( पावा ५,२,१२२ ) इति मत्वर्थीय ईकारः । विकङ्कतवद् बहुकण्टकयुक्तमुखाः[4] पक्षिविशेषाः क्रव्यादः क्रव्यम् आममांसम् अदन्ति भक्षयन्तीति क्रव्यादो गृध्रादयः । 'क्रव्ये च' ( पा ३,२,६९ ) इति अद भक्षणे इत्यस्माद् विट्प्रत्ययः । वातरंहसः वातवेगाः त्रिसंधिना एतत्संज्ञेन देवेन वज्रेण वज्रायुधाभिमानिना प्रेरिताः सन्तः अमित्रान् अस्मदीयान् शत्रून् आ सजन्तु आसक्ता भवन्तु । यद्वा संधित्रयोपेतेन वज्रायुधेन आसक्तान् संबद्धान् कुर्वन्तु । यथा ते वज्रेण हन्येरन् तथा प्रयतन्ताम् इत्यर्थः । यस्य हि निकटे एवंरूपाः पक्षिणः उपसर्पन्ति तस्य मरणम् अवश्यं भवतीति शाकुनिकशास्त्रप्रसिद्धिः [३] ।

अन्तर्धेहि जातवेद आदित्य कुणपं बहु ।
त्रिषन्धेरियं सेना सुहितास्तु मे वशे ॥ ४ ॥

अन्तः । धेहि । जातऽवेदः । आदित्य । कुणपम् । बहु ।
त्रिऽसंधेः । इयम् । सेना[5] । सुऽहिता । अस्तु । मे । वशे ॥ ४ ॥

हे जातवेदः जातानां वेदितः सांग्रामिकाग्ने आदित्य । 'सुपां सुलुक्°' ( पा ७,१,३९ ) इति विभक्तेर्लुक्[6] । आदित्यम् दिवि वर्तमानं सूर्यं बहु बहुलं कुणपम् ।

---

१. शुची° P; शूची° P²,J. २. वैतु. मंपा. ३. मनसि मनसि S'.
४. युक्त इत्यस्य स्थाने द्विवर्णस्थानं रिक्तम् S'. ५. सेनाः P,P²,J. ६. एवं स्वरो न सिध्यति.

**तृतीयार्थे द्वितीया। बहुलेन शवशरीरेण अन्तरिक्षे निपद्यमानेन** अन्तर्धेहि **आच्छादय।** त्रिषन्धेः **देवस्य संबन्धिनी** इयं सेना मे **मम** वशे सुहिताऽस्तु **सम्यग् निहिताऽस्तु। तया वयं शत्रून् जयेमैवेत्यर्थः।**

**उत्तिष्ठ त्वं देवजनार्बुदे सेनया सह।**
**अयं बलिर्व आहुतस्त्रिषन्धेराहुतिः प्रिया॥ ५॥**

उत्। तिष्ठ। त्वम्। देवऽजन[1]। अर्बुदे। सेनया। सह।
अयम्। बलिः। वः। आऽहुतः। त्रिऽसंधेः। आऽहुतिः। प्रिया॥ ५॥

हे देवजन **देवजातीय** अर्बुदे त्वम् **आत्मीयया** सेनया सह उत्तिष्ठ **उद्गच्छ।** हे **अर्बुदे** आहुतिः[2] **हूयमानः पृषदाज्यहोमः** वः **युष्माकम्** अयं बलिः **तृप्तिकरो हविर्भागः। यतो बलिप्रियास्त्वदीयाः सर्पाः अतोऽस्मदीयं हूयमानं पृषदाज्यं स्वीकृत्य अस्मदीयान् शत्रून् मारयन्तु इत्यर्थः। तथा** त्रिषन्धेः **देवस्य या सेना प्राग् उक्ता साऽपि** आहुतिप्रिया[2] **अनयाहुत्या प्रीता सती शत्रून् हिनस्तु।**

**शितिपदी सं द्यतु[3] शरव्ये३यं चतुष्पदी।**
**कृत्येमित्रेभ्यो भव त्रिषन्धेः सह सेनया॥ ६॥**

शितिऽपदी। सम्। द्यतु। शरव्या। इयम्[4]। चतुःऽपदी।
कृत्ये। अमित्रेभ्यः। भव। त्रिऽसंधेः। सह। सेनया॥ ६॥

**शितिः श्वेतवर्णः पादो यस्याः सा** शितिपदी **गौः। सा** इयं चतुष्पदी **पादचतुष्टयोपेता** शरव्या **शरूणां बाणानां समूहः शरव्या।** 'पाशादिभ्यो यः' (पा ४,२,४९) **इति समूहेऽर्थे यप्रत्ययः**[5]**। शरसंहतिरूपा भूत्वा** सं पततु[2] **शत्रून् संप्राप्नोतु। हे** कृत्ये **कृत्यारूपिणि शितिपदि त्वम्** अमित्रेभ्यः **शत्रुभ्यः कृत्यारूपा संहर्त्री** भव। त्रिषन्धेः **देवस्य** सेनया सह। **सेनाऽपि तव सहायभूतेत्यर्थः।**

**धूमाक्षी सं पततु कृधुकर्णी च क्रोशतु।**
**त्रिषन्धेः[6] सेनया जिते अरुणाः सन्तु केतवः॥ ७॥**

धूमऽअक्षी। सम्। पततु[7]। कृधुऽकर्णी। च। क्रोशतु।
त्रिऽसंधेः। सेनया। जिते। अरुणाः। सन्तु। केतवः॥ ७॥

---

१. °जना P². २. वैतु. मंपा. ३. पततु S', सा. ४. इदम् P.
५. यप्रत्यये स्वरितत्वं न सिध्यति. ६. °धे Bh. ७. तपतु P,P²,J.

शत्रुसम्बन्धिनी सेना धूमाक्षी धूमेन मायामयेन आवृतानि अक्षीणि चक्षूंषि यस्याः सा तथोक्ता । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' (पा ५,४,११३) इति षच् समासान्तः । 'षिद्गौरादिभ्यश्च' (पा ४,१,४१) इति ङीष् । तादृशी सती सं पततु सम्यग् निपद्यताम् । तथा कृधुकर्णी अल्पश्रोत्रा पटहध्वनिना हतश्रवणसामर्थ्या च सा परकीया सेना क्रोशतु आक्रोशतु इतिकर्तव्यतामूढा भवतु । इत्थं त्रिषन्धेः देवस्य संबन्धिन्या सेनया परकीये बले जिते जेतव्ये सति तत्संबन्धिनः अरुणाः अरुणवर्णाः केतवः ध्वजाः सन्तु भवन्तु । यद्वा धूमैरक्षीणि आवृण्वती कृत्या धूमाक्षी। सा सं पततु शत्रुसेनां समागच्छतु । तथा कृधुकर्णी । कृधु इति अल्पनाम । कर्णयोः अल्पत्वापादिका श्रवणशक्तेर्विहन्त्री कृत्या कृधुकर्णी । सा च भीत्युत्पादनाय क्रोशतु । एवं त्रिषंधेः सेनया परकीये बले जिते सति तदीयाः केतवः अरुणाः रुधिरेणाक्ताः अरुणवर्णा भवन्तु ।

अवायन्तां पुक्षिणो ये वयांस्युन्तरिक्षे दिवि ये चरन्ति ।
श्वापदो मक्षिकाः सं रभन्तामामादो[1] गृध्राः कुणपे रदन्ताम् ॥ ८ ॥

अव । अयन्ताम् । पक्षिणः । ये । वयांसि । अन्तरिक्षे । दिवि । ये । चरन्ति ।
श्वापदः । मक्षिकाः । सम् । रभन्ताम् । आमऽअदः । गृध्राः । कुणपे । रदन्ताम् ॥ ८ ॥

अथ जयानन्तरभावीनि कार्याणि प्रार्थ्यन्ते — अन्तरिक्षे आकाशे ये वयांसि पक्षिणः संचरन्ति ते पक्षिणः अवायन्ताम् मृते शत्रुबले मांसभक्षणाय अवाङ्मुखं निपद्यन्ताम् । अय पय गतौ । अनुदात्तेत्त्वाद् आत्मनेपदम् । तथा दिवि द्युलोके ये पक्षिणः चरन्ति तेऽप्यवायन्ताम्[2] । तथा श्वापदः शुनः पादा इव पादा येषां ते तथोक्ताः श्वसृगालादयः मक्षिकाः च सं रभन्ताम् शत्रुसेनायां शवभक्षणार्थम् उपक्रमन्ताम् । तथा आमादः आममांसभक्षका गृध्राः पक्षिविशेषाः कुणपे शत्रुसेनासंबन्धिशवशरीरे रदन्ताम् स्वतुण्डैः पादैश्च विलिखन्तु । भक्षणाय उद्युञ्जताम् इत्यर्थः । रद विलेखने ।

यामिन्द्रेण संधां समधत्था[3] ब्रह्मणा च बृहस्पते ।
तयाऽहमिन्द्रसंधया सर्वान् देवानिह हुव इतो जयत मामुतः ॥ ९ ॥

याम् । इन्द्रेण । सम्ऽधाम् । सम्ऽअधत्थाः[4] । ब्रह्मणा । च । बृहस्पते ।
तया । अहम् । इन्द्रऽसंधया । सर्वान् । देवान् । इह । हुवे । इतः । जयत । मा । अमुतः ॥९॥

---

१. रंभ° Bh. २. तेप्यवाय नास्ति S'. ३. समधत्ता K,A,V. ४. °अधत्ताः P.

हे बृहस्पते देव इन्द्रेण देवानाम् अधिपतिना ब्रह्मणा च तत्स्रष्ट्रा प्रजापतिना च यां सन्धाम् सन्धानक्रियां प्रतिज्ञारूपां[1] समधत्ताः[2] । छान्दसो वर्णविकारः। संहितवान् असि । तथा च मन्त्रान्तरम् । 'इयं वः सा सत्या सन्धाभूद् याम् इन्द्रेण समधद्ध्वम्'[3] ( तै १,७,८,४ ) इति । हे इन्द्र[4] तया संधया[4] प्रतिज्ञारूपया सन्धानक्रियया सर्वान् देवान् इह अस्मिन् संग्रामे हुवे आह्वयामि । हे आहूता देवाः इतः आसु अस्मदीयासु सेनासु जयत जयं कुरुत । अमुतः अमीषु परसेनासु मा जयत ।

बृहस्पतिराङ्गिरस ऋषयो ब्रह्मसंशिताः[5] ।
असुरक्षयणं वधं त्रिषंधिं दिव्याश्रयन् ॥ १० ॥

बृहस्पतिः । आङ्गिरसः । ऋषयः । ब्रह्मऽसंशिताः ।
असुरऽक्षयणम् । वधम्[6] । त्रिऽसंधिम् । दिवि । आ । अश्रयन् ॥ १० ॥

आङ्गिरसः अङ्गिरसः पुत्रो बृहस्पतिः देवमन्त्री ब्रह्मसंशिताः ब्रह्मणा मन्त्रेण स्वभ्यस्तेन तीक्ष्णीकृता अन्ये ऋषयः च असुरक्षयणम् असुराणां क्षयकरं वधम् हननसाधनम् आयुधं त्रिषन्धिम् एतत्संज्ञं देवं संधित्रयोपेतं वज्रं दिवि द्युलोके स्थितम् आश्रयन् असेवन्त समभजन्तेत्यर्थः ।

इति पञ्चमेऽनुवाके चतुर्थं सूक्तम् ।

'येनासौ गुप्त आदित्यः' इति सूक्तस्य शत्रुसेनाजयकर्मणि विनियोग उक्तः ।

येनासौ[7] गुप्त आदित्य उभाविन्द्रश्च तिष्ठतः ।
त्रिषंधिं देवा अभजन्तौजसे च बलाय च ॥ ११ ॥

येन । असौ । गुप्तः । आदित्यः । उभौ । इन्द्रः । च । तिष्ठतः ।
त्रिऽसंधिम् । देवाः । अभजन्त । ओजसे । च । बलाय । च ॥ ११ ॥

येन त्रिसंधिना असौ दूरे दिवि दृश्यमान आदित्यः गुप्तः रक्षितः असुरकृतोपद्रवपरिहारेण पालितः स आदित्यः इन्द्रश्च उभौ येन त्रिसंधिना वज्रेण बलेन तिष्ठतः स्वस्थाने प्रतिष्ठितौ भवतः तं त्रिसंधिम् असुरक्षयणम् आयुधभूतं देवं देवाः सर्वे अभजन्त असेवन्त । किमर्थम् । ओजसे ओजो नाम [8]शरीरान्तर्गतोऽष्टमो धातुः[8] । बलं तेजः । तस्मै च तत्कार्याय बलाय च । उभयत्र तादर्थ्ये चतुर्थी ।

---

१. °रूपं S'. २. °धत्ता S'; वैतु. मंपा. ३. समदध्वम् S'. ४. वैतु. मंपा. ५. °स्थिताः > °शिताः B[h]. ६. वेधम् P. ७. येनासु B. ८. ष्टमो धातुः नास्ति S'.

सर्वांल्लोकान्त्समजयन् देवा आहुत्यानया ।
बृहस्पतिराङ्गिरसो वज्रं यमसिञ्चतासुरक्षयणं वधम् ॥ १२ ॥

सर्वान् । लोकान् । सम् । अजयन् । देवाः । आऽहुत्या । अनया ।
बृहस्पतिः । आङ्गिरसः । वज्रम् । यम् । असिञ्चत । असुरऽक्षयणम् । वधम् ॥ १२ ॥

देवाः **इन्द्रादयः** अनया आहुत्या **अनेन पृषदाज्यहोमेन** सर्वान् लोकान् समजयन् **असुरान् निहत्य प्राप्नुवन्** । आङ्गिरसः **अङ्गिरसः पुत्रो** बृहस्पतिः असुरक्षयणम् **असुराणां क्षयकरं** यं वधम् **हननसाधनं** वज्रम् **आयुधम्** असिञ्चत **सेचनेन निर्मितवान्** । **पृषदाज्याहुतिरेव वज्रात्मना परिणतेत्यर्थः । अनया वज्ररूपया आहुत्येति पूर्वत्रान्वयः ।**

बृहस्पतिराङ्गिरसो वज्रं यमसिञ्चतासुरक्षयणं वधम् ।
तेनाहममूं सेनां नि लिम्पामि बृहस्पतेमित्रान् हन्म्योजसा ॥ १३ ॥

बृहस्पतिः । आङ्गिरसः । वज्रम् । यम । असिञ्चत । असुरऽक्षयणम् । वधम् । तेन ।
अहम् । अमूम् । सेनाम् । नि । लिम्पामि । बृहस्पते । अमित्रान् । हन्मि । ओजसा ॥ १३ ॥

**पूर्वोऽर्धर्चः पूर्ववद् व्याख्येयः । हे बृहस्पते** तेन **त्वया निर्मितेन असुराणाम् अन्तकारिणा वज्रेण** अहम् अमूः[1] **शात्रवीः** सेनाम् । **व्यत्ययेन एकवचनम् । सेनाः** नि लिम्पामि **नितरां छिनद्मि । सेनाच्छेदनानन्तरं तदधिपतीन्** अमित्रान् **शत्रून्** ओजसा **आत्मीयेन बलेन नि** हन्मि **निहिनस्मि ।**

सर्वे देवा अत्यायन्ति ये अश्नन्ति वषट्कृतम् ।
इमां जुषध्वमाहुतिमितो जयत मामुतः ॥ १४ ॥

सर्वे । देवाः । अतिऽआयन्ति । ये । अश्नन्ति । वषट्ऽकृतम् ।
इमाम् । जुषध्वम् । आऽहुतिम् । इतः । जयत । मा । अमुतः ॥ १४ ॥

सर्वे **इन्द्रादयो** देवाः अत्यायन्ति **शत्रून् अतिक्रम्य अस्मदभिमुखम् आगच्छन्ति । ते विशेष्यन्ते** — ये **देवा** वषट्कृतम् **वषट्कारेण दत्तं हविः** अश्नन्ति **भुञ्जते । ते सर्वे यूयम्** इमाम् **अस्मदीयाम्** आहुतिं जुषध्वं **सेवध्वम् । तथा प्रीता यूयम्** इतः । **सप्तम्यर्थे तसिल्प्रत्ययः । आसु अस्मदीयासु सेनासु** जयत **जयं कुरुत** । अमुतः **अमूषु परकीयासु सेनासु** मा जयत । **तत्र पराजय एव भवत्वित्यर्थः ।**

---

१. वैतु. मंपा.

सर्वे देवा अत्यायन्तु त्रिषन्धेराहुतिः प्रिया ।
संधां महतीं रक्षत ययाग्रे असुरा जिताः ॥१५॥

सर्वे । देवाः । अतिऽआयन्तु । त्रिऽसंधेः । आऽहुतिः । प्रिया ।
सम्ऽधाम् । महतीम् । रक्षत । यया । अग्रे । असुराः । जिताः ॥ १५ ॥

सर्वे इन्द्रादयो देवाः अत्यायन्ति[1] शत्रून् अतिक्रम्य अस्मदभिमुखम् आगच्छन्तु। तथा त्रिसन्धेः एतन्नाम्नः सेनामोहकस्य देवस्य इयम् अस्मदीया आहुतिः प्रिया प्रीतिकरी भवतु। हे देवाः सन्धाम् जयविषयप्रतिज्ञां महतीम् प्रौढां रक्षत। सा च त्रिसन्धेराहुतिः तां प्रतिज्ञां रक्षतु। यया सन्धया अग्रे पूर्वं देवासुरयुद्धकाले असुरा जिताः पराजयं प्रापिताः। तां संधाम् इति पूर्वत्रान्वयः।

वायुरमित्राणामिष्वग्राण्याञ्चतु ।
इन्द्र एषां बाहून् प्रति भनक्तु मा शकन् प्रतिधामिषुम् ।
आदित्य एषामस्त्रं वि नाशयतु[2] चन्द्रमा युतामगतस्य पन्थाम् ॥१६॥

वायुः । अमित्राणाम् । इषुऽअग्राणि । आ । अञ्चतु[3] ।
इन्द्रः । एषाम् । बाहून् । प्रति । भनक्तु । मा । शकन् । प्रतिऽधाम्[4] । इषुम् ।
आदित्यः । एषाम् । अस्त्रम् । वि । नाशयतु । चन्द्रमाः । युताम् । अगतस्य । पन्थाम् ॥१६॥

वायुः देवः अमित्राणां शत्रूणाम् इष्वग्राणि इषूणाम् शराणाम् अग्राणि आञ्चतु[5] अभिमुखं गच्छतु। प्रतिकूलवातेन[6] लक्ष्यप्राप्तेः प्रागेव तानि निपात्यन्ताम् इत्यर्थः। तथा इन्द्रो देवः एषां शत्रूणां बाहून् प्रति भनक्तु प्रातिकूल्येन भग्नान् आयुधग्रहणासमर्थान् करोतु। भञ्जो आमर्दने। रुधादित्वात् श्नम्प्रत्ययः। अतस्ते इषुम् बाणं प्रतिधाम् पुनर्धनुषि प्रतिहितां कर्तुं मा शकन् शक्ता न भवन्तु। शक्लृ शक्तौ। माङि लुङि लृदित्त्वात् च्लेः अङ् आदेशः। एषां शत्रूणाम् अस्त्रम् आयुधजातम् आदित्यः सूर्यो वि नाशयतु सामर्थ्यकुण्ठनेन विनष्टं करोतु। तथा चन्द्रमाः सोमः अगतस्य अप्राप्तस्य आजिगमिषतः[7] शत्रोः पन्थाम् पन्थानम् अस्मत्प्राप्त्युपायभूतं मार्गं युताम् ततः पृथक् कुरुताम्। तादृशं मार्गं शत्रुर्न पश्यत्वित्यर्थः। यु मिश्रणामिश्रणयोः। अस्मात् लोटि अदादित्वात् शपो लुक्।

---

१. वेतु. मंपा. २. °यति B. ३. अचतु J. ४. प्रति। धाम् P.
५. आचतु S'. ६. °वादेन S'. ७. आ नास्ति S'.

यदि प्रेयुर्देवपुरा ब्रह्म वर्माणि चक्रिरे ।
तनूपानं परिपाणं कृण्वाना यदुपोचिरे सर्वं तदरसं कृधि ॥ १७ ॥

यदि । प्रऽईयुः । देवऽपुराः । ब्रह्म । वर्माणि । चक्रिरे ।
तनूऽपानम् । परिऽपानम् । कृण्वानाः । यत् । उपऽऊचिरे । सर्वम् । तत् । अरसम् । कृधि ॥

'यदि प्रेयुः' इत्येषा पूर्वम् ( अ ५,८,६ ) आम्नाता । सा तत्रैव व्याख्याता ।

क्रव्यादानुवर्तयन्[1] मृत्युना च पुरोहितम् ।
त्रिषन्धे प्रेहि सेनया जयामित्रान् प्र पद्यस्व ॥ १८ ॥

क्रव्यऽअदा । अनुऽवर्तयन् । मृत्युना । च । पुरःऽहितम् ।
त्रिऽसंधे । प्र । इहि । सेनया । जय । अमित्रान् । प्र । पद्यस्व ॥ १८ ॥

हे त्रिसन्धे एतत्संज्ञक देव पुरोहितं पुरस्तात् स्थितं शत्रुं क्रव्यादा । क्रव्यम् आममांसम् अत्ति भक्षयतीति क्रव्यात् । तेन अनुवर्तयन् अनुगमयन् मृत्युना मारकेण देवेन च अनुगमयन् । सेनया आत्मीयया प्रेहि प्रगच्छ । गत्वा च अमित्रान् शत्रून् जय तदर्थं प्र पद्यस्व शत्रुमध्यं प्रविश । पद गतौ । दिवादित्वात् श्यन् प्रत्ययः ।

त्रिषन्धे तमसा त्वममित्रान् परि वारय ।
पृषदाज्यप्रणुत्तानां[2] मामीषां मोचि कश्चन ॥ १९ ॥

त्रिऽसंधे । तमसा । त्वम् । अमित्रान् । परि । वारय ।
पृषदाज्यऽप्रनुत्तानाम् । मा । अमीषाम् । मोचि । कः । चन ॥ १९ ॥

हे त्रिसन्धे एतत्संज्ञक देव त्वं तमसा मायामयेन अन्धकारेण अमित्रान् शत्रून् परि वारय परिवृतान् परिवेष्टितान् कुरु । पृषदाज्यप्रणुत्तानाम् दधिमिश्रम् आज्यं पृषदाज्यम् । तद् अस्मिन् कर्मणि होमसाधनत्वेन विहितम् । तेन हूयमानेन प्रणुत्तानां प्रकर्षेण क्षिप्तानाम् अमीषां शत्रूणां मध्ये कश्चन एकोऽपि मा मोचि मुक्तो मा भूत् । सर्वांस्तमसा प्रावृत्य मारयेत्यर्थः ।

शितिपदी सं पतत्वमित्राणाममूः सिचः[3] ।
मुह्यन्त्वद्यामूः सेना अमित्राणां न्यर्बुदे ॥ २० ॥

---

1. क्रव्यादनु B. 2. °दाज्यं B. 3. शुचः K,V.

शि॒ति॒ऽप॒दी । सम् । प॒त॒तु॒ । अ॒मित्रा॑णाम् । अ॒मूः । सिचः॑[1] ।
मु॒ह्य॑न्तु । अ॒द्य । अ॒मूः । सेना॑: । अ॒मित्रा॑णाम् । नि॒ऽअ॒र्बु॒दे॒ ॥ २० ॥

**शितिः श्वेतवर्णः पादो यस्याः सा** शितिपदी **गौः । सा परसेनामध्ये विसृज्यमाना** अमित्राणां **शत्रूणां** शुचः[2] **शोचन्त्यः अस्मदायुधैर्निपीड्यमाना** अमूः **सेनाः** सं पततु **संगच्छतु । हे** न्यर्बुदे **एतत्संज्ञक सर्प** अमित्राणाम् **शत्रूणाम्** अमूः **दूरे दृश्यमानाः** सेनाः अद्य **इदानीं युद्धसमये** मुह्यन्तु **मूढा भवन्तु । स्वमाया-वशेन तासां मोहम् उत्पादयेत्यर्थः ।**

**इति पञ्चमेऽनुवाके पञ्चमं सूक्तम् ।**

'मूढा अमित्रा न्यर्बुदे' **इति सूक्तस्य शत्रुजयकर्मणि विनियोग उक्तः ।**

**मू॒ढा अ॒मित्रा॑ न्यर्बुदे ज॒ह्ये॑षां॒ वर॑वरम् । अ॒नया॑ जहि॒ सेन॑या ॥ २१ ॥**

मू॒ढाः । अ॒मित्रा॑: । नि॒ऽअ॒र्बु॒दे॒ । ज॒हि । ए॒षा॒म् । वर॑म्ऽवरम् । अ॒नया॑ । ज॒हि॒ । सेन॑या ॥

हे न्यर्बुदे **एतत्संज्ञक देव त्वम्** अमित्रान्[2] **शत्रून्** मूढाः[3] **त्वदीयया मायया मूढान् संजातमोहान् कर्तव्याकर्तव्यविभागज्ञानशून्यान् कुरु ।** एषां **शत्रूणां मध्ये** वरंवरम् **श्रेष्ठंश्रेष्ठं** जहि **मारय । तथा** अनया **अस्मदीयया** सेनया **तान्** जहि **। त्वत्प्रसादाद् अस्मदीयापि सेना जयं लभताम् इत्यर्थः ।**

**यश्च॑ कव॒ची यश्चा॑कव॒चो॒३॑ऽमित्रो॒ यश्चाज्म॑नि[4] ।**
**ज्या॒पा॒शैः[5] क॑वचपा॒शैरज्म॑ना॒भिह॑तः[6] शयाम् ॥ २२ ॥**

यः । च॒ । क॒व॒ची । यः । च॒ । अ॒क॒व॒चः । अ॒मित्र॑: । यः । च॒ । अज्म॑नि[7] ।
ज्या॒ऽपा॒शैः । क॒व॒च॒ऽपा॒शैः । अज्म॑ना[8] । अ॒भिऽह॑तः । श॒या॒म् ॥ २२ ॥

यः **शत्रुः** कवची **कवचवान् तनुत्रेणावृतशरीरः** यश्च **शत्रुः** अकवचः **कवचरहितः अनावृतशरीरः** यश्च अमित्रः **शत्रुः** अज्मनि **अजति[9] गच्छत्यनेनेति अज्म रथादियानम् तत्र वर्तते स सर्वः शत्रुः** ज्यापाशैः[10] **स्वस्वधनुर्गतैर्मौर्वीपाशैः** कवचपाशैः **वर्मबन्धनपाशैः** अज्मना **रथादिना तत्रत्यैः पाशैश्च** अभिहितः[2] **बद्धः** शयाम् **शेताम् ।** 'लोपस्त आत्मनेपदेषु' ( पा ७,१,४१ ) **इति तलोपः । अयम् अर्थः— यद्यत् स्वरक्षणाय धनुःकवचादिकम् आबध्यते तदेव तस्य गतिप्रतिबन्धकं भवत्विति ।**

---

१. शुचः K,V, सा. २. वैतु. मंपा. ३. मूढा S'. ४. यश्चाय्म॑नि B,C,D,E,R,S[m],Cs. ५. यापाशैः S'. ६. °रय्म॑ना° B,C,D,E,R,S[m]; °रज्म॑ना° K. ७. अय्म॑नि P,P[2],J,Cp. ८. अय्म॑ना P,P[2],J,Cp. ९. अज्मति S'. १०. यापाशैः । लोपः । लोपः ( ? यापाशैः । जकारलोपः) S'.

ये वर्मिणो येऽवर्माणो अमित्रा ये च वर्मिणः ।
सर्वास्ताँ[1] अर्बुदे हतांछ्वानोऽदन्तु भूम्याम् ॥ २३ ॥

ये । वर्मिणः । ये । अवर्माणः । अमित्राः । ये । च । वर्मिणः ।
सर्वान् । तान् । अर्बुदे । हतान् । श्वानः । अदन्तु । भूम्याम् ॥ २३ ॥

उक्त एवार्थो विव्रियते— ये शत्रवो वर्मिणः वर्मणा शस्त्रवारककवचेन युक्ताः ये अवर्माणः वर्मरहिताः ये च अमित्राः शत्रवो वर्मिणः वर्म कवचव्यतिरिक्तं शस्त्रनिवारकम् तद्युक्ताः । तदाच्छन्ना इत्यर्थः । हे अर्बुदे तान् सर्वान् त्वया हतान् मारितान् भूम्याम् पृथिव्यां निपतितान् श्वानः श्वसृगालाद्याः श्वापदा अदन्तु भक्षयन्तु ।

ये रथिनो ये अरथा असादा ये च सादिनः ।
सर्वानदन्तु[2] तान् हतान् गृध्राः श्येनाः पतत्रिणः ॥ २४ ॥

ये । रथिनः । ये । अरथाः । असादाः । ये । च । सादिनः ।
सर्वान् । अदन्तु । तान् । हतान् । गृध्राः । श्येनाः । पतत्रिणः ॥ २४ ॥

ये शत्रवो रथिनः रथारूढाः ये च अरथाः रथरहिताः ये च असादाः अश्वादियान-रहिताः पदातयः ये च सादिनः अश्वारूढाः[3] हे अर्बुदे त्वत्प्रसादेन अस्माभिः हतान् मारितान् तान् सर्वान् शत्रून् गृध्रादयः पक्षिणो रदन्तु[4] विलिखन्तु । नखैर्मुखेन विलिख्य भक्षयन्त्वित्यर्थः । रद विलेखने इति धातुः ।

सहस्रकुणपा शेतामामित्री[5] सेना समरे वधानाम् । विविद्धा ककजाकृता ॥२५॥

सहस्रऽकुणपा । शेताम् । आमित्री । सेना । सम्ऽअरे । वधानाम् । विऽविद्धा । ककजाऽकृता ॥२५॥

आमित्री अमित्रसम्बन्धिनी शात्रवी सेना अस्मदीयां सेनां प्राप्य वधानाम् हननसाधनानाम् आयुधानां समरे संगमने सति विविद्धा विविधशस्त्रपातेन हता सहस्रकुणपा असंख्यातशवयुक्ता सती ककजाकृता कुत्सितजनना विलोलजनना वा कृता भवतु ।

मर्माविधं रोरुवतं सुपर्णैरदन्तु[6] दुश्चितं मृदितं शयानम् ।
य इमां प्रतीचीमाहुतिममित्रो नो युयुत्सति ॥ २६ ॥

---

१. °स्तां B,Cs. २. सर्वां ददन्तु B; सर्वां नन्दन्तु K,C; सर्वान्रदन्तु V.
३. अश्वरूढाः S', ४. वैतु. मंपा. ५. शतेमा° B; शेमामा° K; सेनामा° S', सा.
६. °रदंतु > °रुदंतु Dc; °रदंतु A,B,C,D,E,K,K^m,R,S^m,Cs,V.

मर्माविधम् । रोरुवतम् । सुऽपर्णैः । अदन्तु[1] । दुःऽचितम् । मृदितम् । शयानम् ।
यः । इमाम् । प्रतीचीम् । आऽहुतिम् । अमित्रः । नः । युयुत्सति ॥ २६ ॥

सुपर्णैः **शोभनपतनैः शरैः** मर्माविधम् **मर्मसु स्तनमूलादिस्थानेषु विध्यमानम् । व्यध ताडने इत्यस्मात् मर्मशब्दोपपदात् संपदादिलक्षणः**[2] **कर्मणि क्विप् ।** 'ग्रहिज्या' (पा ६,१,१६) **इत्यादिना संप्रसारणम् ।** 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' (पा ६,३,११६) **इति पूर्वपदस्य दीर्घः । मर्मव्यधनादेव** रोरुवतम् **अत्यर्थं क्रोशन्तं** दुश्चितम् **दुःखैः पूरितम्** मृदितम् **चूर्णीकृतम् अत एव भूमौ** शयानम् **एवंभूतं शत्रुम्** अदन्तु **श्वसृगालादयो भक्षयन्तु ।** यः अमित्रः **शत्रुः** नः **अस्माकं सम्बन्धिनीम्** इमां **पृषदाज्येन हूयमानाम्** आहुतिं प्रतीचीम् **प्रतिमुखम् अञ्चन्तीं प्रतिनिवृत्तगतिं कर्तुं** युयुत्सति **योद्धुम् इच्छति । तम् एवंभूतं भक्षयन्तु इति पूर्वत्र सम्बन्धः ।**

**यां देवा अनुतिष्ठन्ति यस्या नास्ति विराधनम् ।**
**तयेन्द्रो हन्तु वृत्रहा वज्रेण त्रिषंधिना ॥ २७ ॥**

याम् । देवाः । अनुऽतिष्ठन्ति । यस्याः । न । अस्ति । विऽराधनम् ।
तया । इन्द्रः । हन्तु । वृत्रऽहा । वज्रेण । त्रिऽसंधिना ॥ २७ ॥

यां **पृषदाज्याहुतिं** देवा अनुतिष्ठन्ति **वज्रोत्पादनाय आचरन्ति ।** यस्याः **आहुतेः** विराधनम् **विराद्धिर्मोघवीर्यता** नास्ति । **अप्रतिहता शक्तिर्विद्यत इत्यर्थः ।** तया **आहुत्या उत्पादितेन** त्रिसंधिना **संधित्रयोपेतेन** वज्रेण वृत्रहा **वृत्रासुरं हतवान्** इन्द्रः हन्तु **अस्मदीयान् शत्रून् हिनस्तु ।** 'सर्वांल्लोकान्त्समजयन् देवा आहुत्याऽनया' (१२) **इत्यनया** [3]**ऋचा पृषदाज्याहुतेर्वज्ररूपता**[3] **प्रागेवोक्ता ।**

**इति पञ्चमेऽनुवाके षष्ठं सूक्तम् ।**

**वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।**
**पुमर्थांश्चतुरो देयाद्**[4] **विद्यातीर्थमहेश्वरः ॥**

**श्रीमद्राजाधिराजराजपरमेश्वरश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण**
**सायणार्येण विरचिते अथर्वसंहिताभाष्ये**
**एकादशः काण्डः समाप्तः ॥**

---

१. अदुन्तु P,J. २. संपदादिलक्षणस्य क्विपः स्त्रियां विधानाच्चिन्त्यमिदम्. ३. ऋचा पृषदाज्या···पता S'. ४. वेदात् S'.

अथ

# द्वादशं काण्डम्

ऋ. अथर्वा, दे. भूमिः

पृथिवीसूक्तम् एतत्। अस्मिन् पृथिव्याः प्रभूतं निसर्गवर्णनम्। कतिचित्पौराणिकीः कथाश्चानुलक्ष्य वर्णनम्। बहुवारं च ऋषिः पृथिवीं वरान् प्रार्थयते।

संप्रदायानुसारेण तु सूक्तं बहुविधं विनियुज्यते। तद्यथा 'सत्यं बृहत्' इत्यनुवाको वास्तोष्पत्यगणे पठितः। अस्य गणस्य विनियोगः 'इहैव ध्रुवाम्' (अ ३,१२) इति सूक्ते द्रष्टव्यः।

तथा आग्रहायणीकर्मणि रात्रौ अभ्यातानान्तं कृत्वा त्रयश्चरवः श्रपयितव्याः। ततः अनेनानुवाकेन अग्नेः पश्चाद् गर्ते दर्भान् आस्तीर्य एकं चरुं सकृत् सर्वहुतं जुहोति। द्वितीयं चरुम् अनेनानुवाकेन संपात्याभिमन्त्र्य अश्नाति। तृतीयं चरुं 'सत्यं बृहत्' इति आद्याभिः सप्तभिर्ऋग्भिः 'भूमे मातः' (६३) इत्यष्टम्या ऋचा च त्रिर्जुहोति। अष्टानाम् ऋचाम् आवृत्त्या होमत्रयं संपादनीयम् इत्यर्थः। अग्नेः पश्चाद् दर्भेषु कशिपु तृणमयं प्रस्तरणम् आस्तीर्य 'विमृग्वरीम्' (२९) इत्यनयोपविशति। 'यास्ते शिवाः' (अ ९,२,२५) इति संविशति। 'यच्छयानः' (३४) इति पर्यावर्तते। 'सत्यं बृहत्' इति नवभिः 'शन्तिवा' (५९) इत्यृचा 'उदायुषा' (३,३१,१०;११) इति द्वाभ्यां च प्रातरुत्तिष्ठति। 'उद्वयम्' (अ ७,५५,७) इति गच्छति। 'उदीराणाः' (२८) इत्यृचा प्राङ् वोदङ् वा बाह्यतो गच्छति। 'यावत् ते' (३३) इत्यृचा भुवम् ईक्षते। इत्याग्रहायणीकर्म।

तथा पुष्टिकामः उन्नतं स्थलम् आरुह्य 'यावत् ते' (३३) इत्यृचा ईक्षते।

तथा अनेनानुवाकेन उदपात्रं संपात्य पुरस्ताद् अग्नेः सीरं युक्तं संप्रोक्षति।

तथा अनेनानुवाकेन कृषिकर्म भवति। तच्च 'सीरा युञ्जन्ति' (अ ३,१७) इति सूक्ते विस्तरेणोक्तं द्रष्टव्यम्।

तथा पुत्रधनादिसर्वफलप्राप्त्यर्थं 'यस्यां सदोहविर्धाने' (३८-४०) इति तिसृभिराज्यं जुहोति।

तथा व्रीहियवाद्यन्नकामः 'यस्यामन्नम्' (४२) इत्यृचा पृथिवीम् उपतिष्ठते।

तथा मणिहिरण्यादिकामः 'निधिं बिभ्रती' (४४,४५) इति द्वाभ्यां पृथिवीम् उपतिष्ठते।

तथा प्राप्यापि मणिं हिरण्यं वा आभ्यामेवोपतिष्ठते।

तथा पुष्टिकामो वृष्टिकाले 'यस्यां कृष्णम्' (५२) इत्यृचा नवोदकम् अभिमन्त्र्य आचमनं स्नानं च करोति ।

तद् उक्तं कौशिकेन — "'सत्यं बृहद्' इत्याग्रहायण्याम् । पश्चाद् अग्नेर्दर्भेषु खदायां सर्वहुतम् । द्वितीयं संपातवन्तम् अश्नाति । तृतीयस्यादितः सप्तभिः 'भूमे मातः' इति त्रिर्जुहोति । पश्चाद् अग्नेर्दर्भेषु कशिप्वास्तीर्य 'विमृग्वरीम्' इत्युपविशति । 'यास्ते शिवाः' इति संविशति । 'यच्छयानः' इति पर्यावर्तते । नवभिः 'शन्तिवा' इति दशम्या 'उदायुषा' इत्युपोत्तिष्ठति । 'उद्वयम्' इत्युत्क्रामति । 'उदीराणाः' इति त्रीणि पदानि प्राङ् वोदङ् वा बाह्येनोपनिष्क्रम्य 'यावत् ते' इति वीक्षते । उन्नताच्च । पुरस्ताद् अग्नेः सीरं युक्तम् उदपात्रेण संपातवतावसिञ्चति । आयोजनानाम् अप्ययः । 'यस्यां सदोहविर्धाने' इति जुहोति वरो म आगमिष्यतीति । 'यस्यामन्नम्' इत्युपतिष्ठते । 'निधिं बिभ्रती' इति मणिं हिरण्यकामः । एवं विद्वान्[1] । 'यस्यां कृष्णम्' इति वार्षकृतस्याचामति शिरस्यानयते" (कौसू २४,२४-४१) इति । वरो वरणीयोऽर्थो मम भवेद् इत्यर्थः ।

तथा ग्रामपत्तनादिरक्षार्थम् अनेनानुवाकेन चतुरः पुरोडाशान् अश्मोत्तरान् कृत्वा ग्रामादिकोणेषु निखनति ।

तथा ग्रामपत्तनादिरक्षार्थम् अनेनानुवाकेन एकैकस्य पुरोडाशस्य उपरि पाषाणम् कृत्वा उभयान् संपातवतः कृत्वा ग्रामादिकोणेषु निखनति । सर्वत्र प्रतिद्रव्यं सूक्तावृत्तिः ।

तथा अग्नेरायतनस्य असंतापयुक्ते देशे शयानः एतम् अनुवाकं जपति । सर्वत्र कर्मणां विकल्पः ।

तद् उक्तं कौशिकसूत्रे — 'भौमस्य इतिकर्माणि । पुरोडाशान् अश्मोत्तरान् अन्तः स्रक्तिषु निदधाति । उभयान्त्संपातवतः । सभाभागधानेषु च । असंतापे ज्योतिरायतनस्यैकतोऽन्यं शयानो भौमं जपति' (कौसू ३८,१२-१६) इति ।

तथा भूमिचलने अस्यानुवाकस्य होमे विनियोगः । 'अथ यत्रैतद् भूमिचलो भवति' इत्युपक्रम्योक्तं कौशिकेन — "'सत्यं बृहद्' इत्येतेनानुवाकेन जुहुयात् । सा तत्र प्रायश्चित्तिः" (कौसू ९८,१;३;४) इति ।

तथा सोमयज्ञे दीक्षितनियमेषु मूत्रपुरीषशुद्ध्यर्थं लोष्टादाने अस्य विनियोगः । तद् उक्तं वैताने — "'सत्यं बृहद्' इति लोष्टम् आदाय" (वैताश्रौ १२,६) इति ।

तथा 'पार्थिवीं भूमिकामस्य' (शांक १७,५) इति विहितायां पार्थिव्यां महाशान्तौ अस्यानुवाकस्य विनियोगः । तद् उक्तं शान्तिकल्पे — "'सत्यं बृहद्' इत्यनुवाकः पार्थिव्याम्" (शांक १८,८) इति ।

---

१. विश्वा Bl.

सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः[1] पृथिवीं धारयन्ति ।
सा नो भूतस्य भव्यस्य[2] पत्न्युरुं लोकं पृथिवी नः कृणोतु ॥ १ ॥

सत्यम् । बृहत् । ऋतम् । उग्रम् । दीक्षा । तपः । ब्रह्म । यज्ञः । पृथिवीम् । धारयन्ति ।
सा । नः । भूतस्य । भव्यस्य । पत्नी । उरुम् । लोकम् । पृथिवी । नः । कृणोतु ॥ १ ॥

असंबाधं[3] मध्यतो[4] मानवानां[5] यस्या उद्वतः प्रवतः समं बहु[6] ।
नानावीर्या[7] ओषधीर्या बिभर्ति पृथिवी नः प्रथतां राध्यतां नः ॥ २ ॥

असम्ऽबाधम् । मध्यतः[8] । मानवानाम् । यस्याः । उत्ऽवतः । प्रऽवतः । समम् । बहु ।
नानाऽवीर्याः । ओषधीः । या । बिभर्ति । पृथिवी । नः । प्रथताम् । राध्यताम् । नः ॥ २ ॥

यस्यां समुद्र उत सिन्धुरापो [9]यस्यामन्नं कृष्टयः संबभूवुः[9] ।
[10]यस्यामिदं[10] [11]जिन्वति †प्राणदेजत्[11] सा नो भूमिः पूर्वपेये[12] दधातु ॥ ३

यस्याम् । समुद्रः । उत । सिन्धुः । आपः । यस्याम् । अन्नम् । कृष्टयः । सम्ऽबभूवुः ।
यस्याम् । इदम् । जिन्वति । प्राणत् । एजत् । सा । नः । भूमिः । पूर्वऽपेये । दधातु ॥ ३ ॥

यस्याश्चतस्रः[13] प्रदिशः पृथिव्या[14] यस्यामन्नं कृष्टयः संबभूवुः ।
या बिभर्ति[15] बहुधा †प्राणदेजत् सा नो [16]भूमिर्गोष्वप्यन्ने[16] दधातु[17] ॥४॥

यस्याः । चतस्रः । प्रऽदिशः । पृथिव्याः । यस्याम् । अन्नम् । कृष्टयः । सम्ऽबभूवुः ।
या । बिभर्ति । बहुऽधा । प्राणत् । एजत् । सा । नः । भूमिः । गोषु । अपि । अन्ने[18] । दधातु ॥

यस्यां पूर्वे पूर्वजना विचक्रिरे यस्यां देवा असुरानभ्यवर्तयन् ।

---

१. यज्ञाः मै ४,१४,११. २. भुवनस्य मै. ३. °बाधा मै. ४. तु. K,Km,V, Dc,P,P²,J, पपा. कौसू १३७,१६; वैतु. A,B,Bh,C,D,R,Sm,Cs,Cp,RW.,WI. पै १७,१,२ बध्यतो. ५. मानवेभ्यो मै.; मानवेषु पै. ६. महत् मै. ७. नानारूपा मै. ८. बध्यतः Cp. ९. यस्यां देवा अमृतमन्वविन्दन् पै १७,१,३. १० यां बिभर्त्ति मै. ११. जीवति ? विश्वमेजत् पै.; बहुधा प्राणदेजत् मै. † प्राणादे° V,K,Dc. १२. °पेयं मै. १३. यस्यां च° पै १७,१,५. १४. °व्यां K,Km,V,Dc, पै. १५. बिभर्त्ति मै. १६. °ष्वप्य° B,Bh,K,Km,R,Sm,Dc; °प्यन्ये A,C,R,RW; °गोष्वश्वेषु पिन्वे ? पै. १७. कृणोतु पै. १८. अन्ये P,P²,J.

गवामश्वानां वयसश्च विष्ठा[1] भगं वर्चः पृथिवी नो दधातु ॥ ५ ॥

यस्याम् । पूर्वे । पूर्वऽजनाः । विऽचक्रिरे । यस्याम् । देवाः । असुरान् । अभिऽअवर्तयन् । गवाम् । अश्वानाम् । वयसः । च । विऽस्था । भगम् । वर्चः । पृथिवी । नः । दधातु ॥५॥

विश्वंभरा वसुधानी प्रतिष्ठा[2] हिरण्यवक्षा[3] जगतो निवेशनी[4] ।
वैश्वानरं बिभ्रती भूमिरग्निमिन्द्रऋषभा[5] द्रविणे[6] नो दधातु ॥ ६ ॥

विश्वम्ऽभरा । वसुऽधानी । प्रतिऽस्था । हिरण्यऽवक्षाः । जगतः । निऽवेशनी । वैश्वानरम् । बिभ्रती । भूमिः । अग्निम् । इन्द्रऽऋषभा । द्रविणे । नः । दधातु ॥ ६ ॥

यां रक्षन्त्यस्वप्ना विश्वदानीं देवा भूमिं पृथिवीमप्रमादम् ।
सा नो मधु प्रियं[7] दुहामथो उक्षतु वर्चसा ॥ ७ ॥

याम् । रक्षन्ति । अस्वप्नाः । विश्वऽदानीम् । देवाः । भूमिम् । पृथिवीम् । अप्रऽमादम् । सा । नः । मधु । प्रियम् । दुहाम् । अथो इति । उक्षतु । वर्चसा ॥ ७ ॥

यार्णवेधि[8] सलिलमग्र आसीत् यां मायाभिरन्वचरन् मनीषिणः ।
यस्या हृदयं परमे व्योमन्त्सत्येनावृतममृतं पृथिव्याः ।
सा नो भूमिस्त्विषिं[9] बलं राष्ट्रे दधातूत्तमे ॥ ८ ॥

या । अर्णवे । आधि । सलिलम् । अग्रे । आसीत् । याम् । मायाभिः । अनुऽअचरन् । मनीषिणः । यस्याः । हृदयम् । परमे । विऽओमन् । सत्येन । आऽवृतम् । अमृतम् । पृथिव्याः । सा । नः । भूमिः । त्विषिम् । बलम् । राष्ट्रे । दधातु । उत्ऽतमे ॥ ८ ॥

यस्यामापः परिचराः समानीरहोरात्रे अप्रमादं क्षरन्ति ।
सा नो भूमिर्भूरिधारा पयो दुहामथो उक्षतु वर्चसा ॥ ९ ॥

यस्याम् । आपः । परिऽचराः । समानीः । अहोरात्रे इति । अप्रऽमादम् । क्षरन्ति । सा । नः । भूमिः । भूरिऽधारा । पयः । दुहाम् । अथो इति । उक्षतु । वर्चसा ॥ ९ ॥

---

१. विष्टा A,Bh,C,D,Cs. २. पुरुक्षुद् मै ४,१४,११. ३. °वर्णा मै. ४. प्रतिष्ठां मै. ५. °न्द्रर्षभा D,Dc. ६. द्रविणं मै. ७. घृतं मै. ८. यार्णवे° A,C,D,R,Cs. °वे अधि पं १७,१,७. ९. °षिं > °षि Dc; °षं D.

यामश्विनावमिमातां विष्णुर्यस्यां विचक्रमे ।
इन्द्रो यां चक्र आत्मनेऽनमित्रां शचीपतिः[1] ।
सा नो भूमिर्वि सृजतां माता पुत्राय मे पयः ॥ १० ॥

याम् । अश्विनौ । अमिमाताम् । विष्णुः । यस्याम् । विऽचक्रमे ।
इन्द्रः । याम् । चक्रे । आत्मने । अनमित्राम्[2] । शचीऽपतिः[3] ।
सा । नः । भूमिः । वि । सृजताम् । माता । पुत्राय । मे । पयः ॥ १० ॥

गिरयस्ते पर्वता हिमवन्तोऽरण्यं ते पृथिवि स्योनमस्तु ।
बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम् ।
अजीतोऽहतो अक्षतोऽध्यष्ठां पृथिवीमहम् ॥ ११ ॥

गिरयः । ते । पर्वताः । हिमऽवन्तः । अरण्यम् । ते । पृथिवि । स्योनम् । अस्तु ।
बभ्रुम् । कृष्णाम् । रोहिणीम् । विश्वऽरूपाम् । ध्रुवाम् । भूमिम् । पृथिवीम् । इन्द्रऽगुप्ताम् ।
अजीतः । अहतः । अक्षतः । अधि । अस्थाम् । पृथिवीम् । अहम् ॥ ११ ॥

यत् ते मध्यं पृथिवि यच्च नभ्यं यास्त ऊर्जस्तन्वः संबभूवुः ।
तासु नो धेह्यभि नः पवस्व माता भूमिः पुत्रो अहं[4] पृथिव्याः ।
पर्जन्यः पिता स उ नः पिपर्तु ॥ १२ ॥

यत् । ते । मध्यम् । पृथिवि । यत् । च । नभ्यम् । याः । ते । ऊर्जः । तन्वः । सम्ऽबभूवुः ।
तासु । नः । धेहि । अभि । नः । पवस्व । माता । भूमिः । पुत्रः । अहम् । पृथिव्याः ।
पर्जन्यः । पिता । सः । ऊं इति । नः । पिपर्तु ॥ १२ ॥

यस्यां वेदिं परिगृह्णन्ति[5] भूम्यां यस्यां यज्ञं तन्वते विश्वकर्माणः ।
यस्यां मीयन्ते स्वरवः पृथिव्यामूर्ध्वाः शुक्रा आहुत्याः पुरस्तात् ।
सा नो 'भूमिर्वर्धयद् वर्धमाना'[6] ॥ १३ ॥

यस्याम् । वेदिम् । परिऽगृह्णन्ति । भूम्याम् । यस्याम् । यज्ञम् । तन्वते । विश्वऽकर्माणः ।

---

१. शंची° $B^h$,$K^m$,R,Cs. २. °मित्रान् $Bp^2$. ३. शची° P,$P^2$,Cp. ४. ऽहं पै १७,२,३. ५. °न्तु पै १७,२,४. ६. तु. RW.; वैतु. मूको. °वर्धयद्वर्धमाना.; °वर्धयातु व° पै.

यस्याम् । मीयन्ते । स्वरवः । पृथिव्याम् । ऊर्ध्वाः । शुक्राः । आऽहुत्याः । पुरस्तात् । सा । नः । भूमिः । वर्धयत् । वर्धमाना[1] ॥ १३ ॥

यो नो द्वेषत् पृथिवि यः पृतन्याद् [2]योऽभिदासान्मनसा[2] यो वधेन ।
तं नो भूमे रन्धय पूर्वकृत्वरि ॥ १४ ॥

यः । नः । द्वेषत् । पृथिवि । यः । पृतन्यात् । यः । अभिऽदासात् । मनसा । यः । वधेन । तम् । नः । भूमे । रन्धय । पूर्वऽकृत्वरि ॥ १४ ॥

त्वज्जातास्त्वयि चरन्ति[3] मर्त्यास्त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः ।
तवेमे पृथिवि पञ्च मानवा येभ्यो ज्योतिरमृतं मर्त्येभ्य[4] उद्यन्त्सूर्यो रश्मिभिरातनोति ॥

त्वत् । जाताः । त्वयि । चरन्ति । मर्त्याः । त्वम् । बिभर्षि । द्विऽपदः । त्वम् । चतुःऽपदः । तव । इमे । पृथिवि । पञ्च । मानवाः । येभ्यः । ज्योतिः । अमृतम् । मर्त्येभ्यः । उत्ऽयन् । सूर्यः । रश्मिऽभिः । आऽतनोति ॥ १५ ॥

ता नः प्रजाः सं दुह्रतां समग्रा वाचो मधु पृथिवि धेहि मह्यम् ॥ १६ ॥

ताः । नः । प्रऽजाः । सम् । दुह्रताम् । समऽअग्राः । वाचः । मधु । पृथिवि । धेहि । मह्यम् ॥

विश्वस्वं मातरमोषधीनां ध्रुवां भूमिं पृथिवीं धर्मणा धृताम् ।
शिवां स्योनामनु चरेम विश्वहा ॥ १७ ॥

विश्वऽस्वम् । मातरम् । ओषधीनाम् । ध्रुवाम् । भूमिम् । पृथिवीम् । धर्मणा । धृताम् । शिवाम् । स्योनाम् । अनु । चरेम । विश्वहा ॥ १७ ॥

महत् सधस्थं महती बभूविथ महान् वेग एजथुर्वेपथुष्टे ।
महांस्त्वेन्द्रो [5]रक्षत्यप्रमादम्[5] ।
सा नो भूमे प्र रोचय हिरण्यस्येव संदृशि मा नो द्विक्षत कश्चन ॥ १८ ॥

महत् । सधऽस्थम् । महती । बभूविथ । महान् । वेगः । एजथुः । वेपथुः । ते ।

---

१. तु. मंपा.; वैतु. मूको. वर्धमाना.   २. योभि° Bh,C,E,K,R,Cs; योऽभि मन्यातै मनसा पै १७,२,५.   ३. चरन्तु पै १७,२,६.   ४. मर्तेभ्य A.   ५. रक्षतु वीर्येण पै १७,२,९.

महान् । त्वा । इन्द्रः । रक्षति । अप्रऽमादम् ।
सा । नः । भूमे । प्र । रोचय । हिरण्यस्यऽइव । सम्ऽदृशि । मा । नः । द्विक्षत । कः । चन ॥

अग्निर्भूम्यामोषधीष्वग्निमापो बिभ्रत्यग्निरश्मसु ।
अग्निरन्तः पुरुषेषु गोष्वश्वेष्वग्नयः ॥ १९ ॥

अग्निः । भूम्याम् । ओषधीषु । अग्निम् । आपः । बिभ्रति । अग्निः । अश्मऽसु ।
अग्निः । अन्तः । पुरुषेषु । गोषु । अश्वेषु । अग्नयः ॥ १९ ॥

अग्निर्दिव आ तपत्यग्नेर्देवस्योर्व१न्तरिक्षम्[1] ।
अग्निं मर्तास इन्धते हव्यवाहं घृतप्रियम् ॥ २० ॥

अग्निः । दिवः । आ । तपति । अग्नेः । देवस्य । उरु । अन्तरिक्षम् ।
अग्निम् । मर्तासः । इन्धते । हव्यऽवाहम् । घृतऽप्रियम् ॥ २० ॥

अग्निवासाः पृथिव्यसितज्ञूस्त्विषीमन्तं[2] संशितं मा कृणोतु ॥ २१ ॥

अग्निऽवासाः । पृथिवी । असितऽज्ञूः । त्विषिऽमन्तम् । सम्ऽशितम् । मा । कृणोतु ॥२१॥

भूम्यां देवेभ्यो ददति[3] यज्ञं हव्यमरंकृतम् ।
भूम्यां मनुष्या[4] जीवन्ति स्वधयान्नेन मर्त्याः ।
सा नो भूमिः प्राणमायुर्दधातु जरदष्टिं मा पृथिवी कृणोतु ॥ २२ ॥

भूम्याम् । देवेभ्यः । ददति[5] । यज्ञम् । हव्यम् । अरम्ऽकृतम् ।
भूम्याम् । मनुष्याः । जीवन्ति । स्वधया । अन्नेन । मर्त्याः ।
सा । नः । भूमिः । प्राणम् । आयुः । दधातु । जरत्ऽअष्टिम् । मा । पृथिवी । कृणोतु ॥

यस्ते गन्धः पृथिवि संबभूव यं बिभ्रत्योषधयो यमापः ।
यं गन्धर्वा अप्सरसश्च भेजिरे तेन[6] मा सुरभिं कृणु मा नो द्विक्षत[7] कश्चन ॥२३॥

यः । ते । गन्धः । पृथिवि । सम्ऽबभूव । यम् । बिभ्रति । ओषधयः । यम् । आपः ।
यम् । गन्धर्वाः । अप्सरसः । च । भेजिरे । तेन । मा । सुरभिम् । कृणु । मा । नः । द्विक्षत । कः । चन ॥

---

१. °र्व१न्त° A,B,Bh,C,E. २. °षीवन्तं पै १७,३,२. ३. जुह्वति पै १७,३,३. ४. मानु° Sm. ५. ददाति P. ६. तेनास्मान् सुरभीन् पै १७,३,४. ७. द्विक्षतु पै.

यस्ते गन्धः पुष्करमाविवेश यं संजभ्रुः सूर्याया विवाहे ।
अमर्त्याः पृथिवि गन्धमग्रे [1]तेन मा सुरभिं[1] कृणु मा नो द्विक्षत[2] कश्चन ॥२४॥

यः । ते । गन्धः । पुष्करम् । आऽविवेश । यम् । सम्ऽजभ्रुः । सूर्यायाः । विऽवाहे ।
अमर्त्याः । पृथिवि । गन्धम् । अग्रे । तेन । मा । सुरभिम् । कृणु । मा । नः । द्विक्षत । कः । चन ॥

यस्ते गन्धः[3] पुरुषेषु स्त्रीषु पुंसु भगो रुचिः ।
यो [4]अश्वेषु[†] वीरेषु[4] यो मृगेषूत हस्तिषु ।
कन्यायां वर्चो यद् भूमे[5] तेनास्माँ[6] अपि सं सृज मा नो द्विक्षत[7] कश्चन ॥२५

यः । ते । गन्धः । पुरुषेषु । स्त्रीषु । पुम्ऽसु । भगः । रुचिः ।
यः । अश्वेषु । वीरेषु । यः । मृगेषु । उत । हस्तिषु ।
कन्यायाम् । वर्चः । यत् । भूमे । तेन । अस्मान् । अपि । सम् । सृज । मा । नः । द्विक्षत । कः । चन ॥

शिला भूमिरश्मा पांसुः सा भूमिः संधृता धृता ।
तस्यै हिरण्यवक्षसे पृथिव्या अकरं नमः ॥ २६ ॥

शिला । भूमिः । अश्मा । पांसुः । सा । भूमिः । सम्ऽधृता । धृता ।
तस्यै । हिरण्यऽवक्षसे । पृथिव्यै । अकरम् । नमः ॥ २६ ॥

यस्यां वृक्षा वानस्पत्या ध्रुवास्तिष्ठन्ति[8] विश्वहा ।
[9]पृथिवीं विश्वधायसं[9] धृतामच्छावदामसि ॥ २७ ॥

यस्याम् । वृक्षाः । वानस्पत्याः । ध्रुवाः । तिष्ठन्ति । विश्वहा ।
पृथिवीम् । विश्वऽधायसम् । धृताम् । अच्छऽआवदामसि ॥ २७ ॥

उदीराणा उतासीनास्तिष्ठन्तः प्रक्रामन्तः ।
पद्भ्यां दक्षिणसव्याभ्यां मा व्यथिष्महि भूम्याम् ॥ २८ ॥

उत्ऽईराणाः । उत । आसीनाः । तिष्ठन्तः । प्रऽक्रामन्तः ।
पत्ऽभ्याम् । दक्षिणऽसव्याभ्याम् । मा । व्यथिष्महि । भूम्याम् ॥ २८ ॥

---

१. तेनास्मान् सुरभीन् पै १७,३,५. २. द्विक्षतु पै. ३. भूमे पै १७,३,६.
४. वधूषु यो गोष्वश्वेषु पै. † अश्व्येषु Sm,Cs. ५. भूमे Bh,C,D,Sm. ६. °स्माँ R,E. ७. द्विक्षतु पै. ८. °न्तु पै १७,३,८. ९. भूमिं हिरण्यवक्षसं पै.

विमृग्वरीं पृथिवीमा[१] वदामि क्षमां भूमिं ब्रह्मणा वावृधानाम्[२] ।
ऊर्जं पुष्टं[३] बिभ्रतीमन्नभागं घृतं त्वाभि नि षीदेम[४] भूमे ॥ २९ ॥

विऽमृग्वरीम् । पृथिवीम् । आ । वदामि । क्षमाम् । भूमिम् । ब्रह्मणा । ववृधानाम् ।
ऊर्जम् । पुष्टम् । बिभ्रतीम् । अन्नऽभागम् । घृतम् । त्वा । अभि । नि । सीदेम । भूमे ॥२९॥

शुद्धा न[५] आपस्तन्वे क्षरन्तु[६] यो नः[७] सेदुरप्रिये[८] तं नि दध्मः ।
पवित्रेण पृथिवि मोत् पुनामि ॥ ३० ॥

शुद्धाः । नः । आपः । तन्वे । क्षरन्तु । यः । नः । सेदुः[९] । अप्रिये । तम् । नि । दध्मः ।
पवित्रेण । पृथिवि । मा[१०] । उत् । पुनामि ॥ ३० ॥

यास्ते प्राचीः प्रदिशो या [११]उदीचीर्यास्ते भूमे अधराद् याश्च पश्चात्[११] ।
स्योनास्ता[१२] मह्यं चरते भवन्तु मा नि पप्तं भुवने शिश्रियाणः ॥ ३१ ॥

याः । ते । प्राचीः । प्रऽदिशः । याः । उदीचीः । याः । ते । भूमे । अधरात् । याः । च । पश्चात् ।
स्योनाः । ताः । मह्यम् । चरते । भवन्तु । मा । नि । पप्तम् । भुवने । शिश्रियाणः ॥३१॥

मा नः[१३] पश्चान्मा पुरस्तान्नुदिष्ठा[१४] मोत्तरादधरादुत ।
स्वस्ति भूमे [१५]नो भव[१५] मा विदन् परिपन्थिनो वरीयो यावया वधम् ॥३२॥

मा । नः । पश्चात् । मा । पुरस्तात् । नुदिष्ठाः । मा । उत्तरात् । अधरात् । उत ।
स्वस्ति । भूमे । नः । भव । मा । विदन् । परिऽपन्थिनः । वरीयः । यवय । वधम् ॥३२॥

यावत् तेऽभि विपश्यामि भूमे सूर्येण मेदिना ।
तावन्मे चक्षुर्मा मेष्टोत्तरामुत्तरां समाम् ॥ ३३ ॥

यावत् । ते । अभि । विऽपश्यामि । भूमे । सूर्येण । मेदिना ।
तावत् । मे । चक्षुः । मा । मेष्ट[१६] । उत्तराम्ऽउत्तराम् । समाम् ॥ ३३ ॥

यच्छयानः पर्यावर्ते दक्षिणं सव्यमभि[१७] भूमे पार्श्वम् ।

---

१. पृथिवीमा Bʰ,D,Sᵐ. २. °धानः पै १७,३,१०. ३. पुष्टिं पै. ४. षीदामि पै. ५. म पै १७,३,११. ६. क्षरन्ति पै. ७. मे पै. ८. स्वेदु° Kᵐ; स्येदु° A,Bʰ,C,E,R. ९. स्येदुः P,P², J. १०. मा Bp²,P. ११. °र्याश्च भूम्यधराद् याश्च पश्चा मै ४,१४,११. १२. शिवास्ता मै. १३. मा १७,४,२. १४. °नुदिष्ठा C,Sᵐ. १५. मे कृणु पै. १६. मेष्ठाः P. १७. °°मपि पै १७,४,५.

उत्तानास्त्वा प्रतीचीं यत् [1]पृष्ठीभिरधिशेमहे ।
मा हिंसीस्तत्र नो भूमे सर्वस्य प्रतिशीवरि ॥ ३४ ॥

यत् । शयानः । परिऽआवर्ते । दक्षिणम्[2] । सव्यम् । अभि । भूमे । पार्श्वम् ।
उत्तानाः । त्वा । प्रतीचीम् । यत् । पृष्ठीभिः[3] । अधिऽशेमहे ।
मा । हिंसीः । तत्र । नः । भूमे । सर्वस्य । प्रतिऽशीवरि ॥ ३४ ॥

यत् ते भूमे विखनामि[4] क्षिप्रं[5] तदपि रोहतु ।
मा ते मर्म विमृग्वरि मा ते हृदयमर्पिपम्[6] ॥ ३५ ॥

यत् । ते । भूमे । विऽखनामि । क्षिप्रम् । तत् । अपि । रोहतु ।
मा । ते । मर्म । विऽमृग्वरि[7] । मा । ते । हृदयम् । अर्पिपम् ॥ ३५ ॥

ग्रीष्मस्ते भूमे वर्षाणि शरद्धेमन्तः शिशिरो वसन्तः ।
ऋतवस्ते विहिता हायनीरहोरात्रे[8] पृथिवि नो दुहाताम् ॥ ३६ ॥

ग्रीष्मः । ते । भूमे । वर्षाणि । शरत्[9] । हेमन्तः । शिशिरः । वसन्तः ।
ऋतवः । ते । विऽहिताः । हायनीः । अहोरात्रे इति । पृथिवि । नः । दुहाताम् ॥ ३६ ॥

याप सर्पं विजमाना[10] विमृग्वरी यस्यामासन्नग्नयो ये अप्स्व१न्तः[11] ।
परा दस्यून् ददती देवपीयूनिन्द्रं वृणाना पृथिवी न वृत्रम् ।
शक्राय दध्रे वृषभाय वृष्णे ॥ ३७ ॥

या । अप । सर्पम् । विजमाना । विऽमृग्वरी । यस्याम् । आसन् । अग्नयः । ये । अप्ऽसु ।
अन्तः । परा । दस्यून् । ददती । देवऽपीयून् । इन्द्रम् । वृणाना । पृथिवी । न । वृत्रम् ।
शक्राय । दध्रे । वृषभाय । वृष्णे ॥ ३७ ॥

यस्यां सदोहविर्धाने यूपो यस्यां निमीयते ।
ब्रह्माणो यस्यामर्चन्त्यृग्भिः साम्ना यजुर्विदः ।

---

१. पृष्ठी॰ K,K$^{m}$,S$^{m}$,V,Dc,Cs; पृष्ट्या यदधि॰ पै १७,४,५. २. दक्षिणाम् P. ३. पृष्ठीभिः P,P$^{2}$,J,Cp. ४. विषनामि A,B$^{h}$,D,E. ५. ओषं पै १७,४,४. ६. ॰मर्पितम् K,K$^{m}$,V,Dc. ७. विमृग्वरि P. ८. हायना अहो॰ पै १७,४,६. ९. शातम् P. १०. यतमाना ? पै १७,४,७. ११. ॰स्व३न्तः A,B,B$^{h}$,C,D,E,R,S$^{m}$,Cs.

युज्यन्ते यस्यामृत्विजः सोममिन्द्राय पातवे ॥ ३८ ॥

यस्याम् । सदोहविर्धाने इति सदःऽहविर्धाने । यूपः । यस्याम् । निऽमीयते ।
ब्रह्माणः । यस्याम् । अर्चन्ति । ऋक्ऽभिः । साम्ना । यजुःऽविदः ।
युज्यन्ते । यस्याम् । ऋत्विजः । सोमम् । इन्द्राय । पातवे ॥ ३८ ॥

यस्यां पूर्वे भूतकृत ऋषयो गा उदानृचुः[1] ।
सप्त सत्रेण वेधसो यज्ञेन तपसा[2] सह ॥ ३९ ॥

यस्याम । पूर्वे । भूतऽकृतः । ऋषयः । गाः । उत्ऽआनृचुः[3] ।
सप्त । सत्रेण । वेधसः । यज्ञेन । तपसा । सह ॥ ३९ ॥

सा नो भूमिरा दिशतु यद्धनं कामयामहे ।
भगो अनुप्रयुङ्क्तामिन्द्र[4] एतु[5] पुरोगवः ॥ ४० ॥

सा । नः । भूमिः । आ । दिशतु । यत् । धनम् । कामयामहे ।
भगः । अनुऽप्रयुङ्क्ताम्[6] । इन्द्रः । एतु । पुरःऽगवः ॥ ४० ॥

यस्यां गायन्ति नृत्यन्ति भूम्यां[7] मर्त्या व्यैलबाः ।
युध्यन्ते यस्यामाक्रन्दो यस्यां वदति दुन्दुभिः ।
सा नो भूमिः प्र णुदतां सपत्नानसपत्नं मा पृथिवी कृणोतु ॥ ४१ ॥

यस्याम् । गायन्ति । नृत्यन्ति । भूम्याम् । मर्त्याः । विऽऐलबाः[8] ।
युध्यन्ते । यस्याम् । आऽक्रन्दः । यस्याम् । वदति । दुन्दुभिः ।
सा । नः । भूमिः । प्र । नुदताम् । सऽपत्नान् । असपत्नम् । मा । पृथिवी । कृणोतु ॥ ४१ ॥

यस्यामन्नं व्रीहियवौ [9]यस्या इमाः पञ्च कृष्टयः ।
भूम्यै पर्जन्यपत्न्यै नमोऽस्तु वर्षमेदसे ॥ ४२ ॥

यस्याम् । अन्नम् । व्रीहिऽयवौ । यस्याः । इमाः । पञ्च । कृष्टयः ।
भूम्यै । पर्जन्यऽपत्न्यै । नमः । अस्तु । वर्षऽमेदसे ॥ ४२ ॥

---

१. तु. RW.; वैतु. शंपा. सात. उदानृचुः. २. पयसा पै १७,४,१०. ३. तु. मंपा.; वैतु. शंपा. उत् । आनृचुः. ४. °युंक्ता° Bh,R. ५. यातु पै १७,४,८. ६. °युक्ताम् P,P². ७. जना पै १७,५,१. ८. विऽएलबाः P. ९. यत्रेमाः पै १७,४,११.

यस्याः[1] पुरो देवकृताः क्षेत्रे यस्या[1] विकुर्वते ।
प्रजापतिः पृथिवीं विश्वगर्भामाशामाशां रण्यां नः कृणोतु ॥ ४३ ॥

यस्याः । पुरः । देवऽकृताः । क्षेत्रे । यस्याः । विऽकुर्वते ।
प्रजाऽपतिः । पृथिवीम् । विश्वऽगर्भाम् । आशाम्ऽआशाम् । रण्याम् । नः । कृणोतु ॥ ४३ ॥

निधिं बिभ्रती बहुधा गुहा वसु मणिं हिरण्यं पृथिवी ददातु[2] मे[3] ।
वसूनि नो वसुदा रासमाना देवी दधातु सुमनस्यमाना ॥ ४४ ॥

निऽधिम् । बिभ्रती । बहुऽधा । गुहा । वसु । मणिम् । हिरण्यम् । पृथिवी । ददातु । मे ।
वसूनि । नः । वसुऽदाः । रासमाना । देवी । दधातु । सुऽमनस्यमाना ॥ ४४ ॥

जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम् ।
सहस्रं धारा द्रविणस्य मे[4] दुहां ध्रुवेव धेनुरनपस्फुरन्ती[5] ॥ ४५ ॥

जनम् । बिभ्रती । बहुऽधा । विऽवाचसम् । नानाऽधर्माणम् । पृथिवी । यथाऽओकसम् ।
सहस्रम् । धाराः । द्रविणस्य । मे । दुहाम् । ध्रुवाऽइव । धेनुः । अनपऽस्फुरन्ती ॥ ४५ ॥

यस्ते सर्पो वृश्चिकस्तृष्टदंश्मा हेमन्तजब्धो भृमलो गुहा शये[6] ।
क्रिमिर्जिन्वत् पृथिवि यद्यदेजति प्रावृषि[7] तन्नः सर्पन्मोप सृपद् यच्छिवं तेन नो मृड ॥

यः । ते । सर्पः । वृश्चिकः । तृष्टऽदंश्मा । हेमन्तऽजब्धः । भृमलः । गुहा । शये ।
क्रिमिः । जिन्वत् । पृथिवि । यत्ऽयत् । एजति । प्रावृषि । तत् । नः । सर्पत् । मा ।
उप । सृपत् । यत् । शिवम् । तेन । नः । मृड ॥ ४६ ॥

ये ते पन्थानो बहवो[8] जनायना रथस्य वर्त्मानसश्च[9] यातवे ।
यैः[10] संचरन्त्युभये भद्रपापास्तं पन्थानं जयेमानमित्रमतस्करं यच्छिवं तेन नो मृड ॥

ये । ते । पन्थानः । बहवः । जनऽअयनाः । रथस्य । वर्त्म । अनसः । च । यातवे ।
यैः । सम्ऽचरन्ति । उभये । भद्रऽपापाः । तम् । पन्थानम् । जयेम । अनमित्रम् ।
अतस्करम् । यत् । शिवम् । तेन । नः । मृड ॥ ४७ ॥

---

१. यस्यां पै १७,५,२. २. दधातु A, पै १७,३,१२ (सूको.). ३. नः पै.
४. नो पै १७,५,३. ५. °पस्पुर° B,B^h,K^m; °पस्फर° A,E. ६. शये R. ७. प्रावृषि RW., सात. ८. बहुधा पै १७,५,५. ९. वर्त्मान° B,E. १०. येभिः पै.

मल्वं[1] बिभ्रती गुरुभृद्[2] भद्रपापस्य निधनं तितिक्षुः ।
वराहेण[3] पृथिवी संविदाना सूकराय[4] वि जिहीते मृगाय ॥ ४८ ॥

मल्वम्[5] । बिभ्रती । गुरुऽभृत् । भद्रऽपापस्य । निऽधनम् । तितिक्षुः ।
वराहेण । पृथिवी । सम्ऽविदाना । सूकराय । वि । जिहीते । मृगाय ॥ ४८ ॥

ये 'त[6] आरण्याः[6] पशवो मृगा वने हिताः सिंहा व्याघ्राः पुरुषादश्चरन्ति ।
उलं वृकं पृथिवि दुच्छुनामित ऋक्षीकां[7] रक्षो[8] अप[8] बाधयास्मत् ॥४९॥

ये । ते[9] । आरण्याः । पशवः । मृगाः । वने । हिताः । सिंहाः । व्याघ्राः । पुरुषऽअदः । चरन्ति ।
उलम् । वृकम् । पृथिवि । दुच्छुनाम् । इतः । ऋक्षीकाम्[10] । रक्षः[11] । अप । बाधय । अस्मत् ॥

ये गन्धर्वा अप्सरसो ये चारायाः किमीदिनः ।
पिशाचान्त्सर्वा रक्षांसि तानस्मद् भूमे यावय ॥ ५० ॥

ये । गन्धर्वाः । अप्सरसः । ये । च । अरायाः । किमीदिनः ।
पिशाचान् । सर्वा[12] । रक्षांसि । तान् । अस्मत् । भूमे । यवय ॥ ५० ॥

यां द्विपादः[13] पक्षिणः संपतन्ति हंसाः सुपर्णाः शकुना वयांसि ।
यस्यां वातो मातरिश्वेयते रजांसि कृण्वंश्च्यावयंश्च[14] वृक्षान् ।
वातस्य प्रवामुपवामनु वात्यर्चिः ॥ ५१ ॥

याम् । द्विऽपादः । पक्षिणः । सम्ऽपतन्ति । हंसाः । सुऽपर्णाः । शकुनाः । वयांसि ।
यस्याम् । वातः । मातरिश्वा । ईयते । रजांसि । कृण्वन् । च्यवयन् । च । वृक्षान् ।
वातस्य । प्रऽवाम् । उपऽवाम् । अनु । वाति । अर्चिः ॥ ५१ ॥

यस्यां कृष्णमरुणं च संहिते[15] अहोरात्रे विहिते भूम्यामधि ।
वर्षेण भूमिः पृथिवी वृतावृता सा नो दधातु भद्रया प्रिये धामनिधामनि[16] ॥५२॥

---

१. सर्पं पै १७,५,६. २. सुरभिर् पै. ३. सूकरेण पै. ४. वराहाय पै.
५. मल्वम् P². ६. तु. P; वैतु. अन्ये मूको. शंपा. प्रभृ. त आ°. ७. रक्षीकां WM.
८. रक्ष्यो B,Bʰ; रक्षोप K,V,Dc,Cs; रक्षोऽप पै १७,५,७. ९. तु. मंपा.; वैतु. शंपा.
प्रभृ. ते. १०. °कान् P,P². ११. ऋक्षः Bp². १२. सर्वाः P. १३. द्विपदः
K,Kᵐ,V,Dc, पै १७,५,९. १४. °वयांश्च A,B,D,E,Cs. १५. संभृते पै १७,५,१०.
१६. धाम्निधाम्नि पै.

यस्याम् । कृष्णम् । अरुणम् । च । संहिते इति सम्ऽहिते । अहोरात्रे इति । विहिते इति विऽहिते । भूम्याम् । अधि । वर्षेण । भूमिः । पृथिवी । वृता । आऽवृता[1] । सा । नः । दधातु । भद्रया । प्रिये । धामनिऽधामनि ॥ ५२ ॥

द्यौश्च म इदं पृथिवी चान्तरिक्षं च मे व्यचः ।
अग्निः सूर्य आपो मेधां विश्वे देवाश्च सं ददुः ॥ ५३ ॥

द्यौः । च । मे । इदम् । पृथिवी । च । अन्तरिक्षम् । च । मे । व्यचः ।
अग्निः । सूर्यः । आपः । मेधाम् । विश्वे । देवाः । च । सम् । ददुः ॥ ५३ ॥

अहमस्मि सहमान उत्तरो नाम भूम्याम् ।
अभीषाडस्मि विश्वाषाडाशामाशां विषासहिः ॥ ५४ ॥

अहम् । अस्मि । सहमानः । उत्तरः । नाम । भूम्याम् ।
अभीषाट् । अस्मि । विश्वाषाट् । आशाम्ऽआशाम् । विऽससहिः ॥ ५४ ॥

अदो यद् देवि प्रथमाना पुरस्ताद् देवैरुक्ता[2] व्यसर्पो महित्वम् ।
आ त्वा सुभूतमविशत् तदानीमकल्पयथाः प्रदिशश्चतस्रः ॥ ५५ ॥

अदः । यत् । देवि । प्रथमाना । पुरस्तात् । देवैः । उक्ता[3] । विऽअसर्पः । महिऽत्वम् ।
आ । त्वा । सुऽभूतम् । अविशत् । तदानीम् । अकल्पयथाः । प्रऽदिशः । चतस्रः ॥५५॥

ये ग्रामा यदरण्यं[4] याः सभा अधि[5] भूम्याम् ।
ये संग्रामाः समितयस्तेषु[6] चारु वदेम ते ॥ ५६ ॥

ये । ग्रामाः । यत् । अरण्यम् । याः । सभाः । अधि । भूम्याम् ।
ये । सम्ऽग्रामाः । सम्ऽइतयः[7] । तेषु । चारु । वदेम । ते ॥ ५६ ॥

अश्व इव रजो दुधुवे वि तान् जनान् य आक्षियन् पृथिवीं यादजायत ।
मन्द्राग्रेत्वरी भुवनस्य गोपा वनस्पतीनां गृभिरोषधीनाम् ॥ ५७ ॥

---

१. °वृत्ता P.  २. देवैः सृष्टा पै १७,६,३.  ३. उक्ताः J,P[2].  ४. यान्यरण्यानि पै १७,६,४.  ५. अधि B.  ६. समिधय° B; समित° R; समितय° अन्यत्र.  ७. सम्ऽइतयः P,J; सम्ऽइतयः > सम्ऽइतयः Cp.

अश्वःऽइव । रजः । दुधुवे । वि । तान् । जनान् । ये । आऽअक्षियन् । पृथिवीम् । यात् ।
अजायत । मन्द्रा । अग्रऽइत्वरी । भुवनस्य । गोपाः । वनस्पतीनाम् । गृभिः । ओषधीनाम् ॥

**यद् वदामि[1] मधुमत् तद् वदामि[2] यदीक्षे तद्[3] वनन्ति[4] मा ।**
**त्विषीमानस्मि जूतिमानवान्यान् हन्मि दोधतः ॥ ५८ ॥**

यत् । वदामि । मधुऽमत् । तत् । वदामि[5] । यत् । ईक्षे । तत् । वनन्ति[6] । मा ।
त्विषिऽमान् । अस्मि । जूतिऽमान् । अव । अन्यान् । हन्मि । दोधतः ॥ ५८ ॥

**शन्तिवा सुरभिः स्योना कीलालोध्नी पयस्वती ।**
**भूमिरधि ब्रवीतु मे[7] पृथिवी पयसा सह ॥ ५९ ॥**

शन्तिऽवा[8] । सुरभिः । स्योना । कीलालऽऊध्नी[9] । पयस्वती ।
भूमिः । अधि । ब्रवीतु । मे । पृथिवी । पयसा । सह ॥ ५९ ॥

**यामन्वैच्छद्धविषा विश्वकर्मान्तरर्णवे रजसि प्रविष्टाम् ।**
**भुजिष्यं१[10] पात्रं निहितं गुहा यदाविर्भोगे अभवन्मातृमद्भ्यः ॥ ६० ॥**

याम् । अनुऽऐच्छत् । हविषा । विश्वऽकर्मा । अन्तः । अर्णवे । रजसि । प्रऽविष्टाम् ।
भुजिष्यम् । पात्रम् । निऽहितम् । गुहा । यत् । आविः । भोगे । अभवत् । मातृमत्ऽभ्यः ॥

**त्वमस्यावपनी जनानामदितिः कामदुघा पप्रथाना[11] ।**
**यत् त ऊनं तत् त आ पूरयाति प्रजापतिः प्रथमजा ऋतस्य ॥ ६१ ॥**

त्वम् । असि । आऽवपनी । जनानाम् । अदितिः । कामऽदुघा । पप्रथाना ।
यत् । ते । ऊनम् । तत् । ते । आ । पूरयाति । प्रजाऽपतिः । प्रथमऽजाः । ऋतस्य ॥ ६१ ॥

**उपस्थास्ते अनमीवा अयक्ष्मा अस्मभ्यं सन्तु पृथिवि प्रसूताः ।**
**दीर्घं न आयुः प्रतिबुध्यमाना वयं तुभ्यं बलिहृतः स्याम ॥ ६२ ॥**

---

१. वदानि Km. २. वदानि A,D,E,K,Km,Sm,V,Dc,Cs. ३. °क्षेत्तद् A,R.
४. वहन्ति O; वनन्तु पै १७,६,५. ५. वदानि P,P², J. ६. वदन्ति Bp².
७. नः पै १७,६,७. ८. शिंति° P. ९. °उध्नी P,P². १०. °ष्यं३ A,B,Bh,
C,D,E,K,Km,R,Sm,Dc,Cs. ११. विश्वरूपा पै १७,६,१०.

उपऽस्थाः । ते । अनमीवाः । अयक्ष्माः । अस्मभ्यम् । सन्तु । पृथिवि । प्रऽसूताः ।
दीर्घम् । नः । आयुः । प्रतिऽबुध्यमानाः । वयम् । तुभ्यम् । बलिऽहृतः । स्याम ॥६२॥

भूमे मातर्नि धेहि मा भद्रया सुप्रतिष्ठितम् ।
संविदाना दिवा कवे श्रियां मा धेहि भूत्याम् ॥ ६३ ॥

भूमे । मातः । नि । धेहि । मा । भद्रया । सुऽप्रतिस्थितम् ।
सम्ऽविदाना । दिवा । कवे । श्रियाम् । मा । धेहि । भूत्याम् ॥ ६३ ॥

इति प्रथमेऽनुवाके प्रथमं सूक्तम् ।

इति प्रथमोऽनुवाकः ।

ऋ· भृगुः, दे· अग्निः

क्रव्याद् नाम योऽग्निस्तद्विषयं सूक्तम् एतत् । त्रयोऽग्नयो भवन्ति । आमात्क्रव्याद्धव्यवाह इति । आमम् अपक्वम् अत्तीति आमाद् लौकिकोऽग्निः 'येनेदं मनुष्याः पक्त्वाश्नन्ति' इति शतपथे (१,२,१,४)। क्रव्यं शवदाहे मांसम् अत्तीति क्रव्याद् घोरस्वरूपश्चिताग्निः पित्र्यः 'येन पुरुषं दहन्ति स क्रव्याद्' इति तत्रैव। हव्यं पक्वं देवयजन आहुतम् अन्नम् अत्तीति वा देवान् प्रति तदन्नं वहतीति वा समिद्धो हव्यवाट् यागयोग्योऽग्निः। आमात्क्रव्यादौ यागयोग्यौ न भवतः। अत्र क्रव्यादं घोरस्वरूपम् अग्निम् अनुलक्ष्य सूक्तं प्रवर्तते। न केवलं क्रव्याच्छवदाहे शवमांसम् अत्ति अपि तु घोरत्वाद् यक्ष्मादीन् बहून् रोगान् मृत्युं च बहुविधम् आवहति। तथैव नानापत्कारको भवति । तास्ता आपदस्तांस्तान् रोगांस्तं तं च मृत्युं सूक्तकर्ता प्रार्थनया परिहारयति । अपि च क्रव्यादो यद् घोरं रूपं तेन स शत्रून् मारयत्विति प्रार्थयते। सर्वाणि पापानि क्रव्याद् अपहरत्वित्याशास्ते। तथैव क्रव्यादो नाशाय गार्हपत्यस्याग्नेः प्रार्थना । क्रव्यादोऽग्नेर्ये पर्युपासकास्ते नाशमाप्नुवन्तीत्याह ।

सांप्रदायिकाः क्रव्याच्छमने विनियुञ्जते । क्रव्यादं शमयिष्यन् क्रव्याच्छमनकामः कौशिकोक्तप्रकारेण कर्म करोति । तत् सर्वं 'पित्र्यमग्निं शमयिष्यन् ज्येष्ठस्य चाविभक्तिनः' (कौसू ६९,१) इत्यादि नवमेऽध्याये चतुर्थकण्डिकां यावत् प्रपञ्चितं द्रष्टव्यम् ।

नडमा रोह न ते अत्र[2] लोक इदं सीसं भागधेयं त एहि ।
यो गोषु यक्ष्मः पुरुषेषु यक्ष्मस्तेन त्वं साकमधराङ् परेहि ॥ १ ॥

---

१. त्वं पै १७,६,८. २. ऽत्र पै १७,३०,१.

नडम् । आ । गेह । न । ते । अत्र । लोकः । इदम् । सीसम् । भागऽधेयम् । ते । आ । इहि ।
यः । गोषु । यक्ष्मः । पुरुषेषु । यक्ष्मः । तेन । त्वम् । साकम् । अधराङ् । परा । इहि ॥ १ ॥

अघशंसदुःशंसाभ्यां करेणानुकरेण च ।
[1]यक्ष्मं च सर्वं तेनेतो मृत्युं[1] च निरजामसि ॥ २ ॥

अघशंसऽदुःशंसाभ्याम् । करेण । अनुऽकरेण । च ।
यक्ष्मम् । च । सर्वम् । तेन । इतः । मृत्युम् । च । निः । अजामसि ॥ २ ॥

निरितो मृत्युं [2]निर्ऋतिं निररातिमजामसि[2] ।
यो नो द्वेष्टि तमद्ध्यग्ने[3] अक्रव्याद् यमु द्विष्मस्तमु ते प्र सुवामसि[4] ॥ ३ ॥

निः । इतः । मृत्युम् । निःऽऋतिम् । निः । अरातिम् । अजामसि । यः । नः । द्वेष्टि । तम् ।
अद्धि[5] । अग्ने । अक्रव्यऽअत्[6] । यम् । ऊं इति । द्विष्मः । तम् । ऊं इति । ते । प्र । सुवामसि ॥

यद्यग्निः क्रव्याद् यदि वा व्याघ्र[7] इमं गोष्ठं प्रविवेशान्योकाः ।
तं माषाज्यं कृत्वा प्र हिणोमि दूरं स गच्छत्वप्सुषदोऽप्यग्नीन्[8] ॥ ४ ॥

यदि । अग्निः । क्रव्यऽअत् । यदि । वा । व्याघ्रः । इमम् । गोऽस्थम् । प्रऽविवेश । अन्यिऽओकाः ।
तम् । माषऽआज्यम् । कृत्वा । प्र । हिणोमि । दूरम् । सः । गच्छतु । अप्सुऽसदः । अपि । अग्नीन् ॥

[9]यत् त्वा क्रुद्धाः प्रचक्रुर्मन्युना पुरुषे मृते[9] ।
सुकल्पमग्ने तत् त्वया[10] पुनस्त्वोद्दीपयामसि ॥ ५ ॥

यत् । त्वा । क्रुद्धाः । प्रऽचक्रुः । मन्युना । पुरुषे । मृते ।
सुऽकल्पम् । अग्ने । तत् । त्वया । पुनः । त्वा । उत् । दीपयामसि ॥ ५ ॥

पुनस्त्वादित्या रुद्रा वसवः पुनर्ब्रह्मा[11] वसुनीतिरग्ने[12] ।

---

१. मृत्यूंश्च सर्वांस्तेनेतो यक्ष्मांश् पै १७,३०,२. २. नैर्ऋतान्निरु यक्ष्ममजा° पै १७,३०,३. ३. तमद्ध्यग्ने A,B,Bʰ,C,E,B²,E²; तमध्यग्ने D,K,Kᵐ,R,Sᵐ,V,Dc,Cs,WM.; तमुद्ध्यग्ने RW. ४. सुवामः पै. ५. अधि P,P²,J,V,Cp. ६. अक्रव्यऽअत् P,P²,Cp,Bp². ७. व्याघ्र्य RW. ८. °त्यप्सुषदोऽभ्यग्नी° पै १७,३०,४; °षदो° Bʰ,D,E,Cs. ९. यत् त्वा ( ते काठ. ) क्रुद्धः परोवप मन्युना यदवर्त्या ( सुमनस्तर मै. ) तै १,५,३,२ मै१,७,१ काठ ८,१४. १०. तव तै. मै. काठ. ११. ब्रह्माणो मा १२,४४ तै ४,२,३,५ मै. काठ. पै १७,३०,६. १२. वसुनीथ यज्ञैः मा. तै.; वसुधीते अग्ने मै.; वसुधीतमग्ने काठ.

पुनस्त्वा ब्रह्मणस्पतिराधाद् दीर्घायुत्वाय शतशारदाय ॥ ६ ॥

पुनः । त्वा । आदित्याः । रुद्राः । वसवः । पुनः । ब्रह्मा । वसुऽनीतिः । अग्ने ।
पुनः । त्वा । ब्रह्मणः । पतिः । आ । अधात् । दीर्घायुऽत्वाय । शतऽशारदाय ॥ ६ ॥

यो अग्निः क्रव्यात् प्रविवेश नो[1] गृहमिमं पश्यन्नितरं जातवेदसम् ।
तं हरामि पितृयज्ञाय दूरं[2] स घर्ममिन्धां[3] परमे सधस्थे ॥ ७ ॥

यः । अग्निः । क्रव्यऽअत् । प्रऽविवेश । नः । गृहम् । इमम् । पश्यन् । इतरम् । जातऽवेदसम् ।
तम् । हरामि । पितृऽयज्ञाय । दूरम् । सः । घर्मम् । इन्धाम् । परमे । सधऽस्थे ॥ ७ ॥

क्रव्यादमग्निं प्र हिणोमि दूरं यमराज्ञो[4] गच्छतु रिप्रवाहः ।
इहायमितरो[5] जातवेदा देवो देवेभ्यो हव्यं वहतु प्रजानन् ॥ ८ ॥

क्रव्यऽअदम् । अग्निम् । प्र । हिणोमि । दूरम् । यमऽराज्ञः । गच्छतु । रिप्रऽवाहः ।
इह । अयम् । इतरः । जातऽवेदाः । देवः । देवेभ्यः । हव्यम् । वहतु । प्रऽजानन् ॥ ८ ॥

'क्रव्यादमग्निमिषितो हरामि जनान् दृंहन्तं वज्रेण मृत्युम् ।
नि तं शास्मि[7] गार्हपत्येन विद्वान् पितॄणां 'लोकेऽपि[†] भागो अस्तु[8] ॥९॥

क्रव्यऽअदम् । अग्निम् । इषितः । हरामि । जनान् । दृंहन्तम् । वज्रेण । मृत्युम् ।
नि । तम् । शास्मि । गार्हऽपत्येन । विद्वान् । पितॄणाम् । लोके । अपि । भागः । अस्तु ॥

क्रव्यादमग्निं शशमानमुक्थ्यं१[9] प्र हिणोमि पथिभिः पितृयाणैः[10] ।
मा देवयानैः पुनरा[11] गा अत्रैवैधि पितृषु जागृहि त्वम् ॥ १० ॥

क्रव्यऽअदम् । अग्निम् । शशमानम् । उक्थ्यम् । प्र । हिणोमि । पथिऽभिः । पितृऽयानैः ।
मा । देवऽयानैः । पुनः । आ । गाः । अत्र । एव । एधि । पितृषु । जागृहि । त्वम् ॥

समिन्धते संकसुकं[12] स्वस्तये शुद्धा भवन्तः[13] शुचयः पावकाः ।
जहाति रिप्रमत्येन एति समिद्धो अग्निः[14] सुपुना पुनाति ॥ ११ ॥

---

१. वो ऋ १०,१६,१०.　२. देवं ऋ.　३. °मिन्वात् ऋ.　४. यमराज्यं मा ३५,९.　५. इहैवाय° मा. पै १७,३०,९.　६. क्रव्यादम् नास्ति मूको. (तु. शंपा.).　७. शास्ति R.　८. लोकम् ? परमो योऽत्र पै १७,३०,८.　† लोके अपि Bh,B²,C,E.　९. °थ्यं३ A,B,Bh,C,D,E,R,Sm,Dc,Cs; °मानमग्निं पै १७,३०,१०.　१०. °यानैः पै.　११. पथिभिरा पै.　१२. संकुसिकं पै १७,३१,१.　१३. भवन्तु पै.　१४. ऽग्निः पै.

सम् । इन्धते । सम्ऽकसुकम् । स्वस्तये । शुद्धाः । भवन्तः । शुचयः । पावकाः ।
जहाति । रिप्रम् । अति । एनः । एति । सम्ऽइद्धः । अग्निः । सुऽपुना । पुनाति ॥११॥

देवो अग्निः संकसुको[1] दिवस्पृष्ठान्यारुहत् ।
मुच्यमानो [2]निरेणसोऽमोगस्माँ[3] अशस्त्याः ॥ १२ ॥

देवः । अग्निः । सम्ऽकसुकः । दिवः । पृष्ठानि । आ । अरुहत् ।
मुच्यमानः । निः । एनसः । अमोक् । अस्मान् । अशस्त्याः ॥ १२ ॥

अस्मिन् वयं [4]संकसुके अग्नौ[4] रिप्राणि मृज्महे[5] ।
अभूम यज्ञियाः शुद्धाः प्र ण आयूंषि तारिषत्[6] ॥ १३ ॥

अस्मिन् । वयम् । सम्ऽकसुके । अग्नौ । रिप्राणि । मृज्महे ।
अभूम । यज्ञियाः । शुद्धाः । प्र । नः । आयूंषि । तारिषत्[7] ॥ १३ ॥

[8]संकसुको विकसुको[8] निर्ऋथो[9] यश्च निस्वरः[10] ।
[11]ते ते यक्ष्मं [†]सवेदसो[11] दूराद् दूरमनीनशन्[12]॥ १४ ॥

सम्ऽकसुकः । विऽकसुकः । निःऽऋथः । यः । च । निऽस्वरः[13] ।
ते । ते । यक्ष्मम् । सऽवेदसः । दूरात् । दूरम् । अनीनशन् ॥ १४ ॥

यो नो[14] अश्वेषु[15] वीरेषु यो नो गोष्वजाविषु ।
क्रव्यादं निर्णुदामसि यो अग्निर्जनयोपनः ॥ १५ ॥

यः । नः । अश्वेषु । वीरेषु । यः । नः । गोषु । अजऽअविषु[16] ।
क्रव्यऽअदम् । निः । नुदामसि । यः । अग्निः । जनऽयोपनः ॥ १५ ॥

---

१. संकुसिको पै १७,३१,२. २. निरेनसो° C,R,Dc,RW., पै. ३. °गस्माँ R,E. ४. संकुसिके° पै १७,३१,३; संकुसुके ऽग्नौ आपश्रौ ९,३,२२. ५. मृज्महे B. ६. तार्षत A,Bh,C,E,K,Km,R,B², E², R², K². ७. तार्षत P²,J,D². ८. संकुसिको विकुसिको पै १७,३१,४; संकुसुको विकुसुको तैआ २,४,१. ९. निर्ऋतो मै ४,१४,१७, निरृथः I,K²,Bp². १०. निःस्वरः R,E,Dc; निस्वनः मै. तैआ. ११. तेंऽस्मद् यक्ष्ममनागसो मै. तैआ. † सुवेधसो पै. १२. दूरमुचिग्यवौ? पै.; °नशं मूको. ( तु. शंपा. ); °मचीचतम् मै. तैआ. १३. निःऽस्वरः Cp. १४. न B. १५. ऽश्वेषु पै १७,३१,६. १६. पृ ८६५ टि ३ द्र.

[1]अन्येभ्यस्त्वा[1] पुरुषेभ्यो गोभ्यो अश्वेभ्यस्त्वा ।
निः[2] क्रव्यादं नुदामसि [3]यो अग्निर्जीवितयोपनः[3] ॥ १६ ॥
अन्येभ्यः । त्वा । पुरुषेभ्यः । गोभ्यः । अश्वेभ्यः । त्वा ।
निः । क्रव्यऽअदम् । नुदामसि । यः । अग्निः । जीवितऽयोपनः ॥ १६ ॥

यस्मिन् देवा अमृजत[4] यस्मिन् मनुष्या उत ।
तस्मिन् घृतस्तावो मृष्ट्वा त्वमग्ने दिवं रुह[5] ॥ १७ ॥
यस्मिन् । देवाः । अमृजत[6] । यस्मिन् । मनुष्याः । उत ।
तस्मिन् । घृतऽस्तावः[7] । मृष्ट्वा । आ । त्वम् । अग्ने । दिवम् । रुह[8] ॥ १७ ॥

समिद्धो अग्न[9] आहुत स नो माभ्यपक्रमीः ।
अत्रैव दीदिहि द्यवि ज्योक् च सूर्यं दृशे ॥ १८ ॥
सम्ऽइद्धः । अग्ने । आहुत । सः । नः । मा[10] । अभिऽअपक्रमीः ।
अत्र । एव । दीदिहि । द्यवि । ज्योक् । च । सूर्यम् । दृशे ॥ १८ ॥

सीसे मृड्ढ्वं नडे [11]मृड्ढ्वमग्नौ संकसुके च यत्[11] ।
अथो अव्यां रामायां शीर्षक्तिमुपबर्हणे ॥ १९ ॥
सीसे । मृड्ढ्वम्[12] । नडे । मृड्ढ्वम्[12] । अग्नौ । सम्ऽकसुके । च । यत् ।
अथो इति । अव्याम् । रामायाम् । शीर्षक्तिम् । उपऽबर्हणे ॥ १९ ॥

सीसे मलं सादयित्वा शीर्षक्तिमुपबर्हणे ।
अव्यामसिक्न्यां मृष्ट्वा[13] शुद्धा भवत[14] यज्ञियाः ॥ २० ॥
सीसे । मलम् । सादयित्वा । शीर्षक्तिम् । उपऽबर्हणे ।
अव्याम् । असिक्न्याम् । मृष्ट्वा । शुद्धाः । भवत । यज्ञियाः ॥ २० ॥

परं मृत्यो अनु परेहि पन्थां यस्त एष[15] इतरो देवयानात्[16] ।

---

१. अज्ञातं पै १७,३१,५. २. निष् A,B,D,S^m,Cs,B^२,I. ३. अग्निं जीवितयोपनम् पै. ४. असृजत E^२. ५. रुहः A,B,D,K,K^m,S^m,V,Dc,Cs. ६. अमृजत > अमृजत J. ७. वैप १,१२७९ r द्र. ८. रुहः P,P^२,J. ९. ऽग्न पै १७,३१,७. १०. मा P. ११. मृड्ढ्व° B^२; °मग्निः संकुसिकश्च यः पै १७,३१,९. १२. मृढ्वम् P. १३. पिष्ट्वा पै १७,३१,१०. १४. भवन्ति पै. १५. स्व ऋ १०,१८,१ तैब्रा ३,७,१४,५ तैआ ३,१५,२; अन्य मा ३५,७. १६. °यानान् B^h.

चक्षुष्मते शृण्वते ते [1]ब्रवीमीहेमे वीरा बहवो भवन्तु[1] ॥ २१ ॥

परम् । मृत्यो[2] इति । अनु । परा । इहि । पन्थाम् । यः । ते । एषः । इतरः । देवऽयानात् ।
चक्षुष्मते । शृण्वते । ते । ब्रवीमि । इह । इमे । वीराः । बहवः । भवन्तु ॥२१॥

इमे जीवा [3]वि मृतैराववृत्रन्नभूद्[3] भद्रा देवहूतिर्नो अद्य ।
[4]प्राञ्चो अगाम[4] नृतये हसाय [5]सुवीरासो विदथमा वदेम[5] ॥ २२ ॥

इमे । जीवाः । वि । मृतैः । आ । अववृत्रन् । अभूत् । भद्रा । देवऽहूतिः । नः । अद्य ।
प्राञ्चः । अगाम । नृतये । हसाय । सुऽवीरासः । विदथम् । आ । वदेम ॥ २२ ॥

इमं जीवेभ्यः परिधिं दधामि [6]मैषां नु[6] गादपरो [7]अर्थमेतम्[7] ।
शतं[8] जीवन्तः[9] शरदः पुरूचीस्तिरो[10] मृत्युं दधतां[11] पर्वतेन ॥ २३ ॥

इमम् । जीवेभ्यः । परिऽधिम् । दधामि । मा । एषाम् । नु । गात् । अपरः । अर्थम् । एतम् ।
शतम् । जीवन्तः । शरदः । पुरूचीः । तिरः । मृत्युम् । दधताम् । पर्वतेन ॥ २३ ॥

आ रोहतायुर्जरसं वृणाना[12] अनुपूर्वं यतमाना[13] यति[14] स्थ[15] ।
[16]तान् वस्त्वष्टा[16] सुजनिमा सजोषाः[17] [18]सर्वमायुर्नयतु जीवनाय[18] ॥२४॥

आ । रोहत । आयुः । जरसम् । वृणानाः । अनुऽपूर्वम् । यतमानाः । यति[19] । स्थ ।
तान् । वः । त्वष्टा । सुऽजनिमा । सऽजोषाः । सर्वम् । आयुः । नयतु । जीवनाय ॥ २४॥

यथाहान्यनुपूर्वं भवन्ति[20] यथर्तव[21] ऋतुभिर्यन्ति[20] साकम्[22] ।
यथा न पूर्वमपरो जहात्येवा धातरायूंषि कल्पयैषाम् ॥ २५ ॥

---

१. ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ऋ. मा. तैब्रा. तैआ. २. मृत्यो° P. ३. विमृतै° B,R; °राववर्त्तिन्न° तैआ ६,१०,२. ४. प्राञ्चोऽगामा तैआ. ५. द्राघीय आयुः प्रतरं (तैआ. प्रतरां) दधानाः ऋ. मा. तैब्रा. तैआ. ६. मा नोऽनु तैआ ६,१०,२ आपश्रौ ९,१२,४. ७. अर्धमेतम् तैब्रा ३,७,११,३ तैआ. आपश्रौ. ८. ज्योग् पै १७,३२,३. ९. जीवन्तु ऋ १०,१८,८ मा ३५,१५ आपश्रौ. १०. °चीरन्तर् ऋ. मा. ११. दद्महे तैआ.; दध्महे आपश्रौ १४,२२,३. १२. गृणाना तैआ ६,१०,१. १३. यजमाना पै १७,३२,५. १४. यदि A,D,K,K^m,S^m,V,Dc,Cs; °ति > °दि E. १५. ष्ठ ऋ १०,१८,६ तैआ. १६. इह त्वष्टा ऋ. तैआ. १७. सुरत्नो तैआ. १८. दीर्घमायुः करति (°तु तैआ.) जीवसे वः ऋ. तैआ. १९. यदि Cp. २०. °न्तु पै १७,३२,४. २१. यथ ऋतव ऋ १०,१८,५ पै. २२. साधु ऋ.; कॢप्ताः तैआ.

यथा । अहानि । अनुऽपूर्वम् । भवन्ति । यथा । ऋतवः । ऋतुऽभिः । यन्ति । साकम् ।
यथा । न । पूर्वम् । अपरः । जहाति । एव । धातः । आयूंषि । कल्पय । एषाम् ॥ २५ ॥

**अश्मन्वती रीयते[1] सं रभध्वं वीरयध्वं[2] प्र तरता सखायः[3] ।**
**अत्रा जहीत[4] ये असन् दुरेवा[5] 'अनमीवानुत्तरेमाभि[6] वाजान् ॥ २६ ॥**

अश्मन्ऽवती । रीयते । सम् । रभध्वम् । वीरयध्वम् । प्र । तरत । सखायः ।
अत्र । जहीत । ये । असन् । दुःऽएवाः । अनमीवान् । उत् । तरेम । अभि । वाजान् ॥

**उत्तिष्ठता प्र तरता सखायोऽश्मन्वती नदी स्यन्दत इयम् ।**
**अत्रा जहीत [7]ये असन्नशिवाः[7] शिवान्त्स्योनानुत्तरेमाभि वाजान् ॥२७॥**

उत् । तिष्ठत । प्र । तरत । सखायः । अश्मन्ऽवती । नदी । स्यन्दते । इयम् ।
अत्र । जहीत । ये । असन् । अशिवाः । शिवान् । स्योनान् । उत् । तरेम । अभि । वाजान् ॥

**वैश्वदेवीं[8] वर्चस[9] आ रभध्वं शुद्धा भवन्तः शुचयः पावकाः ।**
**अतिक्रामन्तो [10]दुरिता पदानि[10] शतं हिमाः सर्ववीरा मदेम ॥ २८ ॥**

वैश्वऽदेवीम् । वर्चसे । आ । रभध्वम् । शुद्धाः । भवन्तः । शुचयः । पावकाः ।
अतिऽक्रामन्तः । दुःऽइता । पदानि । शतम् । हिमाः । सर्वऽवीराः । मदेम ॥ २८ ॥

**उदीचीनैः पथिभिर्वायुमद्भिरतिक्रामन्तोऽवरान्[11] परेभिः ।**
**त्रिः सप्त कृत्व ऋषयः परेता मृत्युं प्रत्यौहन् पदयोपनेन ॥ २९ ॥**

उदीचीनैः । पथिऽभिः । वायुमत्ऽभिः । अतिऽक्रामन्तः । अवरान् । परेभिः ।
त्रिः । सप्त । कृत्वः । ऋषयः । पराऽइताः[12] । मृत्युम् । प्रति । औहन् । पदऽयोपनेन ॥

**मृत्योः पदं योपयन्त एत[13] द्राघीय आयुः[14] प्रतरं[15] दधानाः ।**
**आसीना मृत्युं नुदता [16]सधस्थेथ जीवासो[16] विदथमा वदेम ॥ ३० ॥**

---

१. रेवतीः तैआ ६,३,२.	२. उत्तिष्ठत ऋ १०,५३,८ मा ३५,१० तैआ.	३. सखायः A,Bh,R.	४. जहाम ऋ. तैआ.; जहीमो मा.	५. अशेवाः ऋ. तैआ.; °ऽशिवा मा.	६. शिवान् वयमुत्तरेमाभि ऋ. मा. तैआ.	७. येसन्न° D.	८. वैश्वानरीं अ ६,६२,३.	९. सूनृताम् पै १७,३२,८.	१०. दुरितानि विश्वा पै.	११. °रपक्रामन्तो दुरितान् पै १७,३२,९.	१२. °इतः P,P².	१३. यदैत ऋ १०,१८,२; यदैम तैआ.	१४. आयुष् Sm,D,Cs.	१५. प्रतरां तैआ.; प्रतिरं पै १७,३२,१०.	१६. सधस्थेथ जीवासो E; °स्थे अथ° पै.

मृत्योः । पदम् । योपयन्तः । आ । इत । द्राघीयः । आयुः । प्रऽतरम् । दधानाः ।
आसीनाः । मृत्युम् । नुदत । सधऽस्थे । अथ । जीवासः । विदथम् । आ । वदेम ॥३०॥

इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सं स्पृशन्ताम्[1] ।
अनश्रवो अनमीवाः सुरत्ना[2] आ रोहन्तु जनयो योनिमग्रे ॥ ३१ ॥

इमाः । नारीः । अविधवाः । सुऽपत्नीः । आऽअञ्जनेन । सर्पिषा । सम् । स्पृशन्ताम् ।
अनश्रवः । अनमीवाः । सुऽरत्नाः । आ । रोहन्तु । जनयः । योनिम् । अग्रे ॥ ३१ ॥

व्याकरोमि हविषाहमेतौ तौ ब्रह्मणा व्य१हं[3] कल्पयामि ।
स्वधां पितृभ्यो अजरां कृणोमि दीर्घेणायुषा समिमान्त्सृजामि[4] ॥ ३२ ॥

विऽआकरोमि । हविषा । अहम् । एतौ । तौ । ब्रह्मणा । वि । अहम् । कल्पयामि ।
स्वधाम् । पितृऽभ्यः । अजराम् । कृणोमि । दीर्घेण । आयुषा । सम् । इमान् । सृजामि ॥

यो नो अग्निः पितरो[5] हृत्स्व१[6]न्तराविवेशामृतो[7] मर्त्येषु[8] ।
[9]मय्यहं तं [10]परि गृह्णामि[10] देवं मा सो अस्मान् द्विक्षत[11] मा वयं तम् ॥३३॥

यः । नः । अग्निः । पितरः । हृत्ऽसु । अन्तः । आऽविवेश । अमृतः । मर्त्येषु । मयि ।
अहम् । तम् । परि । गृह्णामि । देवम् । मा । सः । अस्मान् । द्विक्षत । मा । वयम् । तम् ॥

अपावृत्य गार्हपत्यात्[12] क्रव्यादा[13] प्रेत दक्षिणा ।
प्रियं पितृभ्य आत्मने ब्रह्मभ्यः कृणुता[14] प्रियम् ॥ ३४ ॥

अपऽआवृत्य । गार्हऽपत्यात् । क्रव्यऽअदा । प्र । इत । दक्षिणा ।
प्रियम् । पितृऽभ्यः । आत्मने । ब्रह्मऽभ्यः । कृणुत । प्रियम् ॥ ३४ ॥

द्विभागधनमादाय प्र क्षिणात्यवर्त्या ।
अग्निः पुत्रस्य ज्येष्ठस्य यः क्रव्यादनिराहितः ॥३५॥

---

१. विशन्तु ऋ १०,१८,७ पै १७,३३,१; मृशन्ताम् तैआ ६,१०,२. २. सुशेवा तैआ. ३. व्यु३हं A,B,B^h,C,D,E,R,S^m,Dc,Cs. ४. °मां सृ° A,B^h,K,K^m,V,Dc. ५. पितरो K^m; पितरो E. ६. °स्व३न्त° A,B^h,C,D,E,R,S^m,Cs. ७. °शामर्त्यो तै ५,७,९,१ मै १,६,१ पै १७,३३,४. ८. मर्त्तेषु A; मर्त्यां२ ते .; मर्त्यं मै. ९. आत्मनि मै.; आत्मन् ते. १०. परि गृह्णीमसि मै.; परि गृह्णीमहे ते. ११. द्विक्षतु पै. १२. °पत्यं पै १७,३३,५. १३. °दात K,V. १४. कृणुत पै.

द्विभागऽधनम् । आऽदाय । प्र । क्षिणाति । अवर्त्या ।
अग्निः । पुत्रस्य । ज्येष्ठस्य । यः । क्रव्यऽअत् । अनिःऽआहितः ॥ ३५ ॥

यत् कृषते यद् वनुते यच्च वस्नेन[1] विन्दते ।
सर्वं मर्त्यस्य तन्नास्ति क्रव्याच्चेदनिराहितः[2] ॥ ३६ ॥

यत् । कृषते । यत् । वनुते । यत् । च । वस्नेन[1] । विन्दते ।
सर्वम् । मर्त्यस्य । तत् । न । अस्ति[3] । क्रव्यऽअत् । च । इत् । अनिःऽआहितः ॥ ३६ ॥

अयज्ञियो हतवर्चा भवति नैनेन हविरत्तवे ।
छिनत्ति [4]कृष्या गोर्धनाद्[4] यं क्रव्यादनुवर्तते ॥ ३७ ॥

अयज्ञियः । हतऽवर्चाः । भवति[5] । न । एनेन[6] । हविः । अत्तवे ।
छिनत्ति । कृष्याः । गोः । धनात् । यम् । क्रव्यऽअत् । अनुऽवर्तते ॥ ३७ ॥

मुहुर्गृध्यैः प्र वदत्यार्तिं मर्त्यो नीत्य ।
क्रव्याद् यानग्निरन्तिकादनुविद्वान् वितावति[7] ॥ ३८ ॥

मुहुः । गृध्यैः । प्र । वदति । आर्तिम् । मर्त्यः । निऽइत्य ।
क्रव्यऽअत् । यान् । अग्निः । अन्तिकात् । अनुऽविद्वान् । विऽतावति ॥ ३८ ॥

ग्राह्या गृहाः[8] सं सृज्यन्ते स्त्रिया यन्म्रियते पतिः ।
ब्रह्मैव विद्वानेष्यो३[9] यः क्रव्यादं निरादधत्[10] ॥ ३९ ॥

ग्राह्या । गृहाः । सम् । सृज्यन्ते । स्त्रियाः । यत् । म्रियते । पतिः ।
ब्रह्मा । एव । विद्वान् । एष्यः । यः । क्रव्यऽअदम् । निःऽआदधत्[11] ॥ ३९ ॥

यद् रिप्रं शमलं[12] चकृम यच्च दुष्कृतम्[13] ।
आपो मा [14]तस्माच्छुम्भन्त्वग्नेः संकसुकाच्च[14] यत् ॥ ४० ॥

---

१. वस्तेन C,R,Cs,P.　२. क्रव्याच्चे° A,B,D,Cs.　३. अस्ति P,J,V,Cp,Bp².　४. कृषिं गां धनं पै १७,३३,७.　५. भवति P.　६. एनेन P,J,Cp,Bp².　७. वैप १,२८४५ g द्र.　८. ग्रहाः B.　९. °ष्यो१ Bʰ,K.　१०. °दधात् Sᵐ.　११. निःऽआदधत् P,J.　१२. दुरितं पै १७,३४,१.　१३. दुःकृ° B,Bʰ,C,Dc.　१४. °च्छुन्धन्त्वग्नेः संकुसिकाच्च पै.

यत् । रिप्रम् । शमलम् । चकृम । यत् । च । दुःऽकृतम् ।
आपः । मा । तस्मात् । शुम्भन्तु । अग्नेः । सम्ऽकसुकात् । च । यत् ॥ ४० ॥

[१]ता अधरादुदीचीराववृत्रन्[१] प्रजानतीः पथिभिर्देवयानैः ।
[२]पर्वतस्य [+]वृषभस्याधि पृष्ठे[२] [३]नवाश्चरन्ति सरितः पुराणीः[३] ॥ ४१ ॥

ताः । अधरात् । उदीचीः । आ । अववृत्रन् । प्रऽजानतीः । पथिऽभिः । देवऽयानैः ।
पर्वतस्य । वृषभस्य । अधि । पृष्ठे । नवाः । चरन्ति । सरितः । पुराणीः ॥ ४१ ॥

अग्ने [४]अक्रव्यान्निः क्रव्यादं[४] नुदा देवयजनं वह ॥ ॥ ४२ ॥

अग्ने । अक्रव्यऽअत्[५] । निः । क्रव्यऽअदम् । नुद । आ । देवऽयजनम् । वह ॥ ४२ ॥

इमं क्रव्यादा[६] विवेशायं क्रव्यादमन्वगात् ।
व्याघ्रौ कृत्वा[७] नानानं तं हरामि शिवापरम् ॥ ४३ ॥

इमम् । क्रव्यऽअत् । आ । विवेश । अयम् । क्रव्यऽअदम् । अनु । अगात् ।
व्याघ्रौ । कृत्वा । नानानम् । तम् । हरामि । शिवऽअपरम् ॥ ४३ ॥

अन्तर्धिर्देवानां परिधिर्मनुष्याणामग्निर्गार्हपत्य[८] उभयानन्तरा[९] श्रितः ॥ ४४ ॥

अन्तःऽधिः । देवानाम् । परिऽधिः । मनुष्याणाम् । अग्निः । गार्हऽपत्यः । उभयान् । अन्तरा । श्रितः ॥

जीवानामायुः प्र तिर त्वमग्ने पितॄणां [१०]लोकमपि गच्छन्तु ये मृताः[१०] ।
सुगार्हपत्यो [११]वितपन्नरातिमुषामुषां श्रेयसीं धेह्यस्मै[११] ॥ ४५ ॥

जीवानाम् । आयुः । प्र । तिर । त्वम् । अग्ने । पितॄणाम् । लोकम् । अपि । गच्छन्तु । ये । मृताः ।
सुऽगार्हपत्यः । विऽतपन्[१२] । अरातिम् । उषाम्ऽउषाम् । श्रेयसीम् । धेहि । अस्मै ॥ ४५ ॥

सर्वानग्ने सहमानः सपत्नानैषामूर्जं रयिमस्मासु धेहि ॥ ४६ ॥

---

१. ता आववृत्रन् (समाववृत्रन् तै. मै. काठ.) अधरागुदक्ता ( °गुदीचीर् तै. ) मा १०,१९ तै १,८,१४,२ मै २,६,११ काठ १५,७. २. प्र (ताः तै. मै. काठ.) पर्वतस्य वृषभस्य पृष्ठान् (पृष्ठे तै. काठ.) मा. तै. मै. काठ. [+] ऋषभ° पै १७,३४,२. ३. नावश्चरन्ति स्वसिच इयानाः मा. तै.; नावो वियन्ति सुसिचो (सुषिचो काठ.) न वाणीः मै. काठ. ४. °न्निष्क्र° A,D, E,S$^m$,Cs, पै १७,३४,३; °न्निःष्क्र° R. ५. अक्रव्यऽअत् P,Cp,WM. ६. क्रव्यात् प्र पै १७,३४,४. ७. क्रत्वा B. ८. °णाम् । अग्नि° RW. पै १७,३४,५. ९. उभयान° C,R. १०. लोकं परमो योऽत्र? पै १७,३४,६. ११. विलप° K,K$^m$,S$^m$,V,Dc,Cs. °रातीरुषामुषां श्रेयान् श्रेयसीं दधत् पै. १२. विऽलपन् Cp.

सर्वान् । अग्ने । सहमानः । सऽपत्नान् । आ । एषाम् । ऊर्जम् । रयिम् । अस्मासु । धेहि ॥

**इममिन्द्रं वह्निं पप्रिमन्वारभध्वं स वो निर्वक्षद् दुरितादवद्यात्[1] ।**
**तेनाप हत शरुमापतन्तं तेन रुद्रस्य परि पातास्ताम् ॥ ४७ ॥**

इमम् । इन्द्रम् । वह्निम् । पप्रिम्[2] । अनुऽआरभध्वम् । सः । वः । निः । वक्षत् । दुःऽइतात् । अवद्यात् । तेन । अप । हत । शरुम् । आऽपतन्तम् । तेन । रुद्रस्य । परि । पात । अस्ताम्[3] ॥

**अनड्वाहं प्लवमन्वारभध्वं स वो निर्वक्षद्[4] दुरितादवद्यात् ।**
**आ रोहत सवितुर्नावमेतां[5] षड्भिरुर्वीभिरमतिं तरेम ॥ ४८ ॥**

अनड्वाहम् । प्लवम्[6] । अनुऽआरभध्वम् । सः । वः । निः । वक्षत् । दुःऽइतात् । अवद्यात् । आ । रोहत । सवितुः । नावम् । एताम् । षट्ऽभिः । उर्वीभिः । अमतिम् । तरेम ॥ ४८ ॥

**अहोरात्रे अन्वेषि बिभ्रत् क्षेम्यस्तिष्ठन्[7] प्रतरणः सुवीरः ।**
**अनातुरान्त्सुमनसस्तल्प बिभ्रज्ज्योगेव नः पुरुषगन्धिरेधि ॥ ४९ ॥**

अहोरात्रे इति । अनु । एषि । बिभ्रत् । क्षेम्यः । तिष्ठन् । प्रऽतरणः । सुऽवीरः । अनातुरान् । सुऽमनसः । तल्प । बिभ्रत् । ज्योक् । एव । नः । पुरुषऽगन्धिः । एधि ॥ ४९॥

**ते देवेभ्य आ वृश्चन्ते पापं जीवन्ति सर्वदा ।**
**क्रव्याद् यानग्निरन्तिकादश्व इवानुवपते नडम्[8] ॥ ५० ॥**

ते । देवेभ्यः । आ । वृश्चन्ते । पापम् । जीवन्ति । सर्वदा । क्रव्यऽअत् । यान् । अग्निः । अन्तिकात् । अश्वःऽइव । अनुऽवपते । नडम् ॥ ५० ॥

**येऽश्रद्धा[9] धनकाम्या[10] क्रव्यादा समासते ।**
**ते वा अन्येषां कुम्भीं पर्यादधति सर्वदा ॥ ५१ ॥**

ये । अश्रद्धाः । धनऽकाम्या[11] । क्रव्यऽअदा । सम्ऽआसते । ते । वै । अन्येषाम् । कुम्भीम् । परिऽआदधति । सर्वदा ॥ ५१ ॥

---

१. यो विद्वान् विजहाति मृत्युम् पै १७,३४,८. २. प्रपिम् P. ३. आस्ताम् P. ४. निर्वहद् पै १७,३५,५. ५. °नीवं हिरण्ययं पै. ६. °ठुलम् P. ७. °ष्ठन्त K. ८. °कादनुविद्वान् वितावर्ति पै १७,३४,१०. ९. येश्रद्धा Bh,C,E,Km,R; °ऽश्रद्धया पै १७,३५,१. १०. तु. Dc; वैतु. मूको. °काम्यात्; °काम्याः पै. ११. तु. संपा.; वैतु. V °काम्यात्; P,P²,J,Cp °काम्या । आत्.

प्रेव पिपतिषति[१] मनसा मुहुरा वर्तते पुनः ।
क्रव्याद् [२]यानग्निरन्तिकादनुविद्वान् वितावति[२] ॥ ५२ ॥

प्रऽइव । पिपतिषति । मनसा । मुहुः । आ । वर्तते । पुनः ।
क्रव्यऽअत् । यान् । अग्निः । अन्तिकात् । अनुऽविद्वान् । विऽतावति ॥ ५२ ॥

अविः कृष्णा भागधेयं पशूनां सीसं क्रव्यादपि[३] चन्द्रं त आहुः ।
माषाः पिष्टा[४] भागधेयं ते हव्यमरण्यान्या गह्वरं सचस्व ॥ ५३ ॥

अविः । कृष्णा । भागऽधेयम् । पशूनाम् । सीसम् । क्रव्यऽअत् । अपि । चन्द्रम् । ते ।
आहुः । माषाः । पिष्टाः[५] । भागऽधेयम् । ते । हव्यम् । अरण्यान्याः । गह्वरम् । सचस्व ॥५३॥

इषीकां जरतीमिष्ट्वा तिल्पिञ्जं[६] दण्डनं नडम् ।
तमिन्द्र[७] इध्मं कृत्वा यमस्याग्निं निरादधौ ॥ ५४ ॥

इषीकाम् । जरतीम् । इष्ट्वा । तिल्पिञ्जम् । दण्डनम् । नडम् ।
तम् । इन्द्रः । इध्मम् । कृत्वा । यमस्य । अग्निम् । निःऽआदधौ ॥ ५४ ॥

प्रत्यञ्चमर्कं प्रत्यर्पयित्वा प्रविद्वान्[८] पन्थां वि ह्या[९]विवेश[९] ।
[१०]परामीषामसून् दिदेश[१०] दीर्घेणायुषा समिमान्त्सृजामि[११] ॥ ५५ ॥

प्रत्यञ्चम् । अर्कम् । प्रतिऽअर्पयित्वा । प्रऽविद्वान् । पन्थाम् । वि । हि । आऽविवेश ।
परा । अमीषाम् । असून् । दिदेश[१२] । दीर्घेण । आयुषा । सम् । इमान् । सृजामि ॥५५॥

इति द्वितीयेऽनुवाके प्रथमं सूक्तम् ।

इति द्वितीयोऽनुवाकः ।

ऋ. यम:, दे. स्वर्ग:, ओदन:, अग्नि:

'पुमान् पुंसोऽधि तिष्ठ चर्म' इति स्वर्गौदनविषयकं सूक्तम् । ऋषिः क्वचिद् ओदनं क्वचिद् दंपती संबोधयति । पक्वस्य स्वर्गौदनस्य प्रतापं तथा तेन

---

१. विपति K; पतति पै १७,३४,११. २. °कादश्व इवानुवपते नडम् पै. ३. क्रव्यादुत पै १७,३५,३. ४. पिष्ठा K. ५. पिष्ठाः K,J. ६. तिल्पिञ्चं? पै १७,३५,२. ७. तानिन्द्र पै. ८. प्रविद्वान् R. ९. ह्याचकार पै १७,३५,४. १०. प्र वा अमीषा° पै.; °सूनिर्देश B; °सून् दीदेश B^b; °मसूनदि° R. ११. °मां सं° B,D,K,K^m,V,Dc; °मान् दधामि पै. १२. दिदेश P,J.

प्रापणीयानि फलानि चिन्तयित्वाह । स्वर्गेऽनेनौदनेन पुत्रादिभिः समागमो भविष्यतीत्यभिप्रायं दर्शयति । स्वर्गौदनात् क्रव्यादं रक्षश्च पिशाचं च परिहरति । आदित्याश्च अङ्गिरसश्च एतं क्रव्यादादिभ्यः पालयन्त्वित्याशास्ते । यः स्वर्गौदनः स षष्टिवर्षानन्तरं फलप्रदो भवतीति तथा पक्तुर्निधिपा इवेति वर्ण्यते । तं च प्राच्यादिभ्यः सर्वाभ्यो दिग्भ्यः संरक्षणार्थं परिदद्मस्ता एतम् अस्मदर्थे परिरक्षन्तु स चास्मान् जरापूर्वकं मृत्युं यावद् भागधेयम् आनयत्वित्याशास्य सूक्तम् उपसंहरति ।

सांप्रदायिका यत् सवयज्ञविधौ विनियुञ्जते सूक्तं, सम्यक् तत् । तच्च 'अग्नीन् आधास्यमानः सवान् वा दास्यन्' इति प्रक्रम्य 'यथासवम् अन्यान् पृथग्वेति प्रकृतिः' ( कौसू ६०,१;६३,२३ ) इत्यन्ते कौशिकसूत्रे द्रष्टव्यम् । अयं यः सौत्रिको विनियोगस्तेन कतिपयमन्त्राणां तात्पर्यं समीचीनम् आविर्भवतीत्यसंशयम् ।

पुमा॑न् पुं॒सोऽधि॒[1] तिष्ठ॒ चर्मे॑हि॒ तत्र॑ ह्वयस्व यत॒मा प्रि॒या ते॑ ।
याव॑न्ता॒वग्रे॑ प्रथ॒मं स॑मे॒यथु॒स्तद्[2] वां॒ वयो॑ यम॒राज्ये॑ समा॒नम् ॥ १ ॥

पुमा॑न् । पुं॒सः । अधि॑ । ति॒ष्ठ॒ । चर्म॑ । इ॒हि॒ । तत्र॑ । ह्व॒य॒स्व॒ । य॒त॒मा । प्रि॒या । ते॒ ।
याव॑न्तौ । अग्रे॑ । प्र॒थ॒मम् । स॒म्ऽए॒यथुः॑ । तत् । वा॒म् । वयः॑ । य॒म॒ऽराज्ये॑ । स॒मा॒नम् ॥१॥

ताव॑द् वां॒ चक्षु॒स्तति॑[3] वी॒र्या॒णि॒ ताव॒त् तेज॑स्तति॒धा[4] वाजि॑नानि ।
अ॒ग्निः शरी॑रं सचते य॒दैधो॒धा[5] प॒क्वान्मि॑थु॒ना[6] सं भ॑वाथः ॥ २ ॥

ताव॑त् । वा॒म् । चक्षुः॑ । तति॑ । वी॒र्या॒णि॒ । ताव॑त् । तेजः॑ । त॒ति॒ऽधा । वाजि॑नानि ।
अ॒ग्निः । शरी॑रम् । स॒च॒ते॒ । य॒दा । एधः॑ । अध॑ । प॒क्वात् । मि॒थु॒ना[7] । सम् । भ॒वा॒थः॒ ।

सम॒स्मिँल्लो॒के सम्उ॑ देव॒याने॒ सं स्मा॑ स॒मेतं॑ यम॒राज्ये॑षु ।
पू॒तौ प॒वित्रै॒रुप॒ तद्ध्व॑येथां॒[8] यद्य॒द् रेतो॒ अधि॑ वां सं॑ब॒भूव॑ ॥ ३ ॥

सम् । अ॒स्मि॒न् । लो॒के । सम् । ऊं इति॑ । दे॒व॒ऽयाने॑ । सम् । स्म॒ । स॒म्ऽए॒त॒म् । य॒म॒ऽराज्ये॑षु ।
पू॒तौ । प॒वित्रैः॑ । उप॑ । तत् । ह्व॒ये॒था॒म् । यत्ऽय॑त् । रेतः॑ । अधि॑ । वा॒म् । स॒म्ऽब॒भूव॑ ॥ ३ ॥

[9]आप॑स्पुत्रासो अ॒भि सं वि॑शध्वमि॒मं जी॒वं जी॒वधन्याः स॒मेत्य॑ ।

---

१. पुंसो अधि पै १७,३६,१. २. समे॒य° E. ३. तेजस्तति पै १७,३६,२.
४. चक्षुस्त° पै. ५. धो अधा पै. ६. पक्वंन मि° पै. ७. मि॒थु॒ना P,P[2].
८. तध्र्व° A,K,Cs; तत्ध्व° Km; तद्ध° Bh,D. ९. वैप १,३६६ h द्र.

तासां भजध्वममृतं यमाहुर्यमोदनं पचति वां[१] जनित्री ॥ ४ ॥

आर्पः । पुत्रासः । अभि । सम् । विशध्वम् । इमम् । जीवम् । जीवऽधन्याः । समऽएत्य । तासाम् । भजध्वम् । अमृतम् । यम् । आहुः । यम् । ओदनम् । पचति । वाम् । जनित्री ॥४॥

यं वां[२] पिता पचति यं च माता रिप्रान्निर्मुक्त्यै[३] शमलाच्च[४] वाचः ।
स ओदनः शतधारः स्वर्ग उभे व्याप नभसी महित्वा ॥ ५ ॥

यम् । वाम् । पिता । पचति । यम् । च । माता । रिप्रात् । निःऽमुक्त्यै । शमलात् । च । वाचः । सः । ओदनः । शतऽधारः । स्वःऽगः । उभे इति । वि । आप । नभसी इति । महिऽत्वा ॥५॥

उभे नभसी उभयांश्च लोकान् ये [५]यज्वनामभिजिताः[५] स्वर्गाः ।
तेषां ज्योतिष्मान् मधुमान् यो अग्रे[६] तस्मिन् पुत्रैर्जरसि सं श्रयेथाम् ॥६॥

उभे इति । नभसी इति । उभयान् । च । लोकान् । ये । यज्वनाम् । अभिऽजिताः । स्वःऽगाः । तेषाम् । ज्योतिष्मान् । मधुऽमान् । यः । अग्रे । तस्मिन् । पुत्रैः । जरसि । सम् । श्रयेथाम् ॥६॥

प्राचींप्राचीं प्रदिशमा रभेथामेतं लोकं श्रद्दधानाः सचन्ते[७] ।
यद् वां पक्वं परिविष्टमग्नौ तस्य गुप्तये दंपती सं श्रयेथाम् ॥ ७ ॥

प्राचीम्ऽप्राचीम् । प्रऽदिशम् । आ । रभेथाम् । एतम् । लोकम् । श्रत्ऽदधानाः । सचन्ते । यत् । वाम् । पक्वम् । परिऽविष्टम् । अग्नौ । तस्य । गुप्तये । दंपती इति दम्ऽपती । सम् । श्रयेथाम् ॥ ७ ॥

दक्षिणां दिशमभि नक्षमाणौ पर्यावर्तेथामभि पात्रमेतत् ।
तस्मिन्[८] वां[९] यमः पितृभिः संविदानः पक्वाय शर्म बहुलं नि यच्छात् ॥८॥

दक्षिणाम्[१०] । दिशम् । अभि । नक्षमाणौ । परिऽआवर्तेथाम् । अभि । पात्रम् । एतत् । तस्मिन् । वाम्[११] । यमः । पितृऽभिः । सम्ऽविदानः । पक्वाय । शर्म । बहुलम् । नि । यच्छात् ॥

---

१. वो पै १७,३६,४. २. वः पै १७,३६,५. ३. °न्निरसुमुग्धी ? पै. ४. °लाच B. ५. अर्जुनानभ्यन्विताः? पै १७,३६,६. ६. °ऽग्रे P³,M,W,T. ७. सृजन्ते पै १७,३६,७. ८. तस्मै पै १७,३६,८. ९. वां > वयं A; वो > वयं B, वयं D,K,Kᵐ, Sᵐ,Dc,Cs,B²; वरां R²; वां यं I; वायं P³,M,W. १०. दक्षिणम् P. ११. वयं Cp.

प्रतीचीं [१]दिशामियमिद् वरं[१] यस्यां सोमो अधिपा मृडिता च ।
तस्यां श्रयेथां[२] सुकृतः सचेथामधा[३] [४]पक्कान्मिथुना सं भवाथः[४] ॥ ९ ॥

प्रतीचीं । दिशाम् । इयम् । इत् । वरम् । यस्याम् । सोमः । अधिऽपाः । मृडिता । च ।
तस्याम् । श्रयेथाम् । सुऽकृतः । सचेथाम् । अध । पक्कात् । मिथुना । सम् । भवाथः ॥

उत्तरं राष्ट्रं प्रजयोत्तरावद् दिशामुदीची कृणवन्नो अग्रम् ।
पाङ्क्तं[५] छन्दः पुरुषो बभूव विश्वैर्विश्वाङ्गैः सह सं भवेम ॥ १० ॥

उत्तरम् । राष्ट्रम् । प्रऽजया । उत्तरऽवत् । दिशाम् । उदीची । कृणवत्[६] । नः । अग्रम् ।
पाङ्क्तम् । छन्दः । पुरुषः । बभूव । विश्वैः । विश्वऽअङ्गैः । सह । सम् । भवेम ॥ १० ॥

ध्रुवेयं विराण्नमो अस्त्वस्यै शिवा पुत्रेभ्य उत मह्यमस्तु ।
सा नो देव्यदिते विश्ववार इर्य इव गोपा अभि रक्ष पक्कम् ॥११॥

ध्रुवा । इयम् । विऽराट् । नमः । अस्तु । अस्यै । शिवा । पुत्रेभ्यः । उत । मह्यम् । अस्तु ।
सा । नः । देवि । अदिते । विश्वऽवारे । इर्यःऽइव । गोपाः । अभि । रक्ष । पक्कम् ॥११॥

पितेव पुत्रानभि[७] सं स्वजस्व[८] नः शिवा नो वाता इह वान्तु भूमौ[९] ।
यमोदनं पचतो देवते इह [१०]तं नस्तप[१०] उत सत्यं च वेत्तु[११] ॥ १२ ॥

पिताऽइव । पुत्रान् । अभि । सम् । स्वजस्व । नः । शिवाः । नः । वाताः । इह । वान्तु । भूमौ ।
यम् । ओदनम् । पचतः । देवते इति । इह । तम् । नः । तपः । उत । सत्यम् । च । वेत्तु ॥

यद्यत् कृष्णः शकुन एह गत्वा त्सरन्[१२] विषक्तं बिल आससाद ।
यद्वा दास्यार्द्रहस्ता समङ्क्त उलूखलं मुसलं शुम्भतापः[१३] ॥ १३ ॥

यत्ऽयत् । कृष्णः । शकुनः । आ । इह । गत्वा । त्सरन्[१४] । विऽसक्तम् । बिले । आऽससाद ।
यत् । वा । दासी । आर्द्रऽहस्ता । सम्ऽअङ्क्ते[१५] । उलूखलम् । मुसलम् । शुम्भत । आपः ॥

---

१. °यमध्व° > °यमिध्व° B. २. मिमाथां पै १७,३६,९. ३. सचेताम° D; °मथा B. ४. पक्केन सह सं सुवेम पै. ५. पङ्क्तिश् पै १७,३६,१०. ६. कृण्वत् P. ७. पुत्राँ अभि पै १७,३७,२. ८. स्व नास्ति P³,M,W. ९. शग्माः पै. १०. तन्न° Sᵐ,D,Cs. ११. वित्ताम् ? पै. १२. सरन् Bʰ,C,Cs,; रुद्रि नन्तुं ? पै १७,३७,३. १३. शुन्धतापः पै. १४. सरन् P; त्सरम् P². १५. °अक्ते P.

**अयं ग्रावा पृथुबुध्नो वयोधाः पूतः पवित्रैरप हन्तु रक्षः ।**
**आ रोह चर्म महि शर्म यच्छ मा दंपती पौत्रमघं नि गाताम् ॥१४॥**

अयम् । ग्रावा । पृथुऽबुध्नः । वयःऽधाः । पूतः । पवित्रैः । अप । हन्तु । रक्षः । आ ।
रोह । चर्म । महि । शर्म । यच्छ । मा । दंपती इति दम्ऽपती । पौत्रम् । अघम् । नि । गाताम् ॥१४॥

**वनस्पतिः सह देवैर्न आगन् रक्षः पिशाचाँ[1] अपबाधमानः ।**
**स उच्छ्रयातै प्र वदाति वाचं तेन लोकाँ[2] अभि सर्वान् जयेम ॥ १५ ॥**

वनस्पतिः । सह । देवैः । नः । आ । अगन् । रक्षः । पिशाचान् । अपऽबाधमानः ।
सः । उत् । श्रयातै । प्र । वदाति[3] । वाचम् । तेन । लोकान् । अभि । सर्वान् । जयेम ॥

**सप्त मेधान् पशवः पर्यगृह्णन् य एषां ज्योतिष्माँ[4] उत यश्चकर्श[5] ।**
**त्रयस्त्रिंशद् देवतास्तान्संचन्ते[6] स नः स्वर्गमभि नेष[7] लोकम् ॥ १६ ॥**

सप्त । मेधान् । पशवः । परि । अगृह्णन् । यः । एषाम् । ज्योतिष्मान् । उत । यः । चकर्श ।
त्रयःऽत्रिंशत् । देवताः । तान्[8] । सचन्ते । सः । नः । स्वःऽगम् । अभि । नेष । लोकम् ॥

**स्वर्गं लोकमभि नो नयासि[9] सं जायया सह पुत्रैः स्याम ।**
**गृह्णामि हस्तमनु मैत्वत्र मा नस्तारीन्निर्ऋतिर्मो अरातिः ॥ १७ ॥**

स्वःऽगम् । लोकम् । अभि । नः । नयासि । सम् । जायया । सह । पुत्रैः । स्याम । गृह्णामि ।
हस्तम् । अनु । मा । आ । एतु । अत्र । मा । नः । तारीत् । निःऽऋतिः । मो इति । अरातिः ॥

**ग्राहिं पाप्मानमति ताँ[10] अयाम तमो व्यस्य प्र वदासि वल्गु ।**
**वानस्पत्य [11]उद्यतो मा जिहिंसीर्मा[11] तण्डुलं वि शरीर्देवयन्तम्[12] ॥ १८ ॥**

ग्राहिम् । पाप्मानम् । अति । तान् । अयाम । तमः । वि । अस्य । प्र । वदासि । वल्गु ।
वानस्पत्यः । उत्ऽयतः । मा । जिहिंसीः[13] । मा । तण्डुलम्[14] । वि । शरीः । देवऽयन्तम् ॥

---

१. पिशाचँ E,R. २. लोकँ E. ३. वदति P. ४. °ष्मँ E,R; मेधस्वान् पै १७,३७,६. ५. चकर्षा पै. ६. °तां सं° P³,M,W,E; °सजन्ते पै. ७. नेषि पै. ८. ताम् Bp². ९. जयासि R. १०. तँ E,R. ११. संभृत उस्त्रियाभिर्मा पै १७,३७,८; °जहिं Bʰ,D,K; °जिहिं A,C,K,Kᵐ,V,Dc,Cs, १२. शरैर्दे° Bʰ,C,RW., पै. १३. जिहिंसीः P,P²; जहिंसीः J. १४. तन्दुलम् P.

विश्वव्यचा घृतपृष्ठो भविष्यन्त्सयोनिर्लोकमुप[1] याह्येतम्[2] ।
वर्षवृद्धमुप यच्छ शूर्पं तुषं [3]पलावानप तद्[3] विनक्तु ॥ १९ ॥

विश्वऽव्यचाः । घृतऽपृष्ठः । भविष्यन् । सऽयोनिः । लोकम् । उप । याहि । एतम् ।
वर्षऽवृद्धम् । उप । यच्छ । शूर्पम् । तुषम् । पलावान्[4] । अप । तत् । विनक्तु ॥ १९ ॥

त्रयो लोकाः संमिता ब्राह्मणेन [5]द्यौरेवासौ पृथिव्यन्तरिक्षम्[5] ।
अंशून् [6]गृभीत्वान्वारभेथामा[6] प्यायन्तां[7] पुनरा यन्तु शूर्पम् ॥ २० ॥

त्रयः । लोकाः । सम्ऽमिताः । ब्राह्मणेन । द्यौः । एव । असौ[8] । पृथिवी । अन्तरिक्षम् ।
अंशून् । गृभीत्वा । अनुऽआरभेथाम् । आ । प्यायन्ताम् । पुनः । आ । यन्तु । शूर्पम् ॥२०॥

पृथग्रूपाणि बहुधा पशूनामेकरूपो भवसि सं समृद्ध्या ।
एतां त्वचं लोहिनीं तां नुदस्व[9] ग्रावा शुम्भाति[10] मलग इव वस्त्रा ॥२१॥

पृथक् । रूपाणि । बहुऽधा । पशूनाम् । एकऽरूपः । भवसि । सम् । सम्ऽऋद्ध्या ।
एताम् । त्वचम् । लोहिनीम् । ताम् । नुदस्व । ग्रावा । शुम्भाति । मलगःऽइव । वस्त्रा ॥२१

[11]पृथिवीं त्वा पृथिव्यामा वेशयामि तनूः समानी[11] विकृता त एषा ।
यद्यद् [12]द्युत्तं लिखितमर्पणेन तेन मा सुस्रोर्ब्रह्मणापि[12] तद् वपामि ॥२२॥

पृथिवीम् । त्वा । पृथिव्याम् । आ । वेशयामि । तनूः । समानी । विऽकृता । ते । एषा ।
यत्ऽयत् । द्युत्तम् । लिखितम् । अर्पणेन । तेन । मा[13] । सुस्रोः । ब्रह्मणा । अपि । तत् । वपामि ॥

जनित्रीव प्रति हर्यासि[14] सूनुं सं त्वा दधामि पृथिवीं पृथिव्या ।
उखा[15] कुम्भी[16] वेद्यां [17]मा व्यथिष्ठा[17] यज्ञायुधैराज्येनातिषक्ता[18] ॥२३॥

---

१. °क उप K; °कमप D. २. याहि विद्वान् पै १७,३७,९. ३. पलावामप° I,O,D², K², A,E,R,Cs; °नपिषद् K. ४. °वाम् P,P²,J. ५. °सौ पृथि° A,Bʰ,C, D,E,K,R,Sᵐ,Dc,Cs,WM.; °व्यइन्त° A,C,E,R,Dc. ६. °भीत्वा अन्वा° A,Bʰ,C, D,E,Kᵐ,R,Cs,WM. °त्वानु संर° पै १०,३७,१०. ७. °यतां K; °यन्तो पै. ८. असौ P,J. ९. नुदेत पै १७,३८,१. १०. शुन्धाति पै. ११. भूम्यां भूमिमधि धारयामि तनूस्समाना पै १७,३८,३. १२. द्युतं लिखितमर्पणं च तेन मा सुस्रोरप पै. १३. मा P, Cp. १४. रण्यासि पै १७,३८,२. १५. उषा A,K,Kᵐ,B²,O; उखाः पै. १६. कुम्भीर् पै. १७. सं चरन्तां पै. १८. °षक्ताः पै.

जनित्रीऽइव । प्रति । हर्यासि । सूनुम् । सम् । त्वा । दधामि । पृथिवीम् । पृथिव्या । उखा । कुम्भी । वेद्याम् । मा । व्यथिष्ठाः । यज्ञऽआयुधैः । आज्येन । अतिऽसक्ता ॥ २३ ॥

अग्निः पचन् रक्षतु त्वा पुरस्तादिन्द्रो रक्षतु[1] दक्षिणतो मरुत्वान् ।
वरुणस्त्वा[2] दृंहाद्धरुणे[3] प्रतीच्या उत्तरात् त्वा सोमः[4] सं ददातै[5] ॥ २४ ॥

अग्निः । पचन्[6] । रक्षतु । त्वा । पुरस्तात् । इन्द्रः । रक्षतु । दक्षिणतः । मरुत्वान् । वरुणः । त्वा । दृंहात् । धरुणे । प्रतीच्याः । उत्तरात् । त्वा । सोमः । सम् । ददातै ॥ २४ ॥

पूताः पवित्रैः पवन्ते अभ्राद् दिवं च यन्ति पृथिवीं च लोकान्[7] ।
ता जीवला जीवधन्याः प्रतिष्ठाः[8] पात्र आसिक्ताः पर्यग्निरिन्धाम्[9] ॥ २५ ॥

पूताः । पवित्रैः । पवन्ते । अभ्रात् । दिवम् । च । यन्ति । पृथिवीम् । च । लोकान् । ताः । जीवलाः । जीवऽधन्याः । प्रतिऽस्थाः । पात्रे । आऽसिक्ताः । परि । अग्निः । इन्धाम् ॥

आ यन्ति दिवः पृथिवीं सचन्ते[10] भूम्याः सचन्ते[10] अध्यन्तरिक्षम् ।
शुद्धाः सतीस्ता उ [11]शुम्भन्त एव[11] ता नः स्वर्गमभि लोकं नयन्तु[12] ॥ २६ ॥

आ । यन्ति । दिवः । पृथिवीम् । सचन्ते । भूम्याः । सचन्ते । अधि । अन्तरिक्षम् । शुद्धाः । सतीः । ताः । ऊं इति । शुम्भन्ते[13] । एव । ताः । नः । स्वःऽगम् । अभि । लोकम् । नयन्तु ॥

उतेव प्रभ्वीरुत संमितास उत शुक्राः शुचयश्चामृतासः ।
ता ओदनं दंपतिभ्यां [14]प्रशिष्टा‡ आपः[14] शिक्षन्तीः पचता[15] सुनाथाः ॥ २७ ॥

उतऽइव । प्रऽभ्वीः । उत । सम्ऽमितासः । उत । शुक्राः । शुचयः । च । अमृतासः । ताः । ओदनम् । दंपतिऽभ्याम् । प्रऽशिष्टाः । [16]आपः । शिक्षन्तीः[16] । पचत । सुऽनाथाः ॥

संख्याता स्तोकाः पृथिवीं सचन्ते प्राणापानैः संमिता ओषधीभिः ।
असंख्याता ओप्यमानाः सुवर्णाः सर्वं व्यापुः शुचयः शुचित्वम् ॥ २८ ॥

---

१. रक्षाद् पै १७,३८,४. २. सोमस्त्वा पै. ३. °द्धरणे पै. ४. वरुणः पै. ५. दंधातै D. ६. पचंम् P². ७. धर्मणा पै १७,३८,६. ८. समेताः पै. ९. °रिन्धान् K. १०. सजन्ते पै १७,३८,५. ११. शुन्धन्त्येव पै. † स्वरः? १२. नयन्ति पै. १३. शुंभं । ते P; शुंभंम् । ते J; शुंभंम् । ते P². १४. तु. W; वैतु. शंपा. RW. प्रशिष्टा आपः. ‡ प्रशिंष्टा A. १५. प्रपता पै १७,३८,७. १६. तु. मंपा.; वैतु. शंपा. आपः । शिक्षन्तीः K,P,P²,J,V; आपःऽशिक्षन्तीः.

सम्ऽख्याताः । स्तोकाः । पृथिवीम् । सचन्ते । प्राणापानैः । सम्ऽमिताः । ओषधीभिः ।
असंम्ऽख्याताः । आऽउप्यमानाः । सुऽवर्णाः । सर्वम् । वि । आपुः । शुचयः । शुचिऽत्वम् ॥२८॥

उद्योधन्त्यभि वल्गन्ति तप्ताः फेनमस्यन्ति [1]बहुलांश्च बिन्दून्[1] ।
योषेव दृष्ट्वा [2]पतिमृत्वियायैतैस्तण्डुलैर्भवता[2] समापः ॥ २९ ॥

उत् । योधन्ति । अभि । वल्गन्ति । तप्ताः । फेनम् । अस्यन्ति । बहुलान् । च । बिन्दून् ।
योषाऽइव । दृष्ट्वा । पतिम् । ऋत्वियाय । एतैः । तण्डुलैः । भवत । सम् । आपः ॥ २९ ॥

उत्थापय सीदतो बुध्न [3]एनानद्भिरात्मानमभि सं स्पृशन्ताम्[3] ।
अमासि पात्रैरुदकं यदेतन्मितास्तण्डुलाः प्रदिशो यदीमाः ॥ ३० ॥

उत् । स्थापय । सीदतः । बुध्ने । एनान् । अत्ऽभिः । आत्मानम् । अभि । सम् । स्पृशन्ताम् ।
अमासि । पात्रैः । उदकम् । यत् । एतत् । मिताः । तण्डुलाः । प्रऽदिशः । यदि । इमाः ॥३०॥

प्र यच्छ पर्शुं[4] त्वरया[5] [6]हरौषमहिंसन्त[6] ओषधीर्दान्तु पर्वन् ।
यासां सोमः [7]परि राज्यं[7] बभूवामन्युता नो[8] वीरुधो भवन्तु ॥ ३१ ॥

प्र । यच्छ । पर्शुम् । त्वरय । आ । हर । ओषम् । अहिंसन्तः । ओषधीः । दान्तु । पर्वन् ।
यासाम् । सोमः । परि । राज्यम् । बभूव । अमन्युताः[9] । नः । वीरुधः । भवन्तु ॥ ३१ ॥

नवं बर्हिरोदनाय स्तृणीत प्रियं[10] हृदश्चक्षुषो वल्ग्वस्तु[11] ।
तस्मिन्[12] देवाः सह दैवीर्विशन्त्विमं [13]प्राश्नन्त्वृतुभिर्निषद्य ॥ ३२ ॥

नवम् । बर्हिः । ओदनाय । स्तृणीत । प्रियम् । हृदः । चक्षुषः । वल्गु । अस्तु ।
तस्मिन् । देवाः । सह । दैवीः । विशन्तु । इमम् । प्र । अश्नन्तु[14] । ऋतुऽभिः । निऽसद्य ॥३२॥

---

१. बहुलं च बिन्दुम् पै १७,३८,८.    २. °मृत्वियायैस्तैरत° C; °मृत्वियाय एतैस्त° Km; (पपा. ऋत्वियाय । एतैः); °मृत्वियायै° (ऋत्विया या एतैः इत्यादि) RW.; °मृत्वियायै° अन्यत्र.
३. °नमभिजितं सजन्ताम् पै १७,३८,९.    ४. परशुं M,W; परशुं O.    ५. त्वर्या इत्यपि K.    ६. हरन्त्वहिं° पै १७,३९,१.    ७. परिराज्यं K,Km,V,Dc,O,D[2],R[2].    ८. मे पै.    ९. वैप १,३८१ h द्र.    १०. प्रियां मूको. (तु. शंपा. WM.).    ११. वग्ल्वस्तु B[2]; वल्गवस्तु R[2]; वल्गवस्तु I.    १२. तत्र पै १७,३९,२.    १३. प्राश्नन्तु° B[2]; °श्नन्त्यृतु° O,R[2]; प्राश्नन्तु दक्षिणतो निषद्य पै.    १४. अश्नन्तु P,J.

वनस्पते स्तीर्णमा सीद बर्हिरग्निष्टोमैः संमितो देवताभिः ।
त्वष्ट्रेव रूपं सुकृतं[1] स्वधित्यैना[2] एहाः परि पात्रे ददृश्राम्[3] ॥ ३३ ॥

वनस्पते । स्तीर्णम् । आ । सीद । बर्हिः । अग्निऽस्तोमैः । समऽमितः । देवताभिः ।
त्वष्ट्राऽइव । रूपम् । सुऽकृतम्[4] । स्वऽधित्या[5] । एना । एहाः । परि । पात्रे । ददृश्राम् ।

[6]षष्ट्यां शरत्सु निधिपा अभीच्छात्[6] स्वः पक्वेनाभ्यश्नवातै ।
उपैनं जीवान्[7] पितरश्च पुत्रा एतं[8] स्वर्गं गमयान्तमग्नेः ॥ ३४ ॥

षष्ट्याम्[9] । शरत्ऽसु । निधिऽपाः । अभि । इच्छात् । स्वः । पक्वेन । अभि । अश्नवातै ।
उप । एनम् । जीवान्[10] । पितरः । च । पुत्राः । एतम् । स्वःऽगम् । गमय । अन्तम् । अग्नेः ॥

धर्ता ध्रियस्व धरुणे पृथिव्या अच्युतं त्वा देवताश्च्यावयन्तु ।
तं त्वा दंपती जीवन्तौ जीवपुत्रावुद्[11] वासयातः पर्यग्निधानात् ॥ ३५ ॥

धर्ता । ध्रियस्व । धरुणे । पृथिव्याः । अच्युतम् । त्वा । देवताः । च्यवयन्तु ।
तम् । त्वा । दंपती इति दम्ऽपती । जीवन्तौ । जीवऽपुत्रौ । उत् । वासयातः । परि ।
अग्निऽधानात् ॥ ३५ ॥

सर्वान्त्समागा अभिजित्य लोकान् यावन्तः कामाः [12]समतीतृपस्तान्[12] ।
वि गाहेथामायवनं[13] च दर्विरेकस्मिन्[14] पात्रे अध्युद्धरैनम्[15] ॥ ३६ ॥

सर्वान् । समऽआगाः । अभिऽजित्य । लोकान् । यावन्तः । कामाः । सम् । अतीतृपः । तान् ।
वि । गाहेथाम् । आऽयवनम् । च । दर्विः । एकस्मिन् । पात्रे । अधि । उत् । हर । एनम् ॥३६॥

उप स्तृणीहि प्रथय[16] पुरस्ताद् घृतेन पात्रमभि घारयैतत्[17] ।
वाश्रेवोस्रा तरुणं स्तनस्युमिमं देवासो अभिहिङ्कृणोत[18] ॥ ३७ ॥

उप । स्तृणीहि । प्रथय । पुरस्तात् । घृतेन । पात्रम् । अभि । घारय । एतत् ।
वाश्राऽइव । उस्रा । तरुणम् । स्तनस्युम् । इमम् । देवासः । अभिऽहिङ्कृणोत ॥ ३७ ॥

---

१. सुकृतं A,Km. २. स्वधियैना B²; एना एहाः इत्यत्र संध्यभावे तु. शौच. ३,३४. ३. वैप १,१९३५ | द्र.; ददृश्याम् पै १७,३९,३. ४. सुऽकृतम् P,J. ५. स्वऽधिया Bp². ६. षष्ट्या शरद्भिः परि दध्म एनं पै १७,३९,५. ७. जीवान् O,R; सीदान् पै. ८. इमं पै. ९. पृष्ठयाम् Bp². १०. जीवान् P. ११. °त्रा उद् R; °त्राबुद् Sm. १२. समितौ? पुरस्तात् पै १७,३९,६. १३. गायेथा° B. १४. दर्व्येक° पै. १५. अभ्युद्ध° P³,M,W,T. १६. प्रथया पै १७,३९,७. १७. घारयेदम् पै. १८. अभिहि° A,B,D; °हिङ्कराथ पै.

उपास्तरीरकरो लोकमेतमुरुः प्रथतामसमः[1] स्वर्गः ।
तस्मिं छ्रयातै महिषः सुपर्णो देवा एनं देवताभ्यः प्र यच्छान्[2] ॥ ३८ ॥

उप । अस्तरीः । अकरः । लोकम् । एतम् । उरुः । प्रथताम् । असमः । स्वःऽगः[3] ।
तस्मिन् । श्रयातै । महिषः । सुऽपर्णः । देवाः । एनम् । देवताभ्यः । प्र । यच्छान्[4] ॥३८॥

यद्यंज्जाया पचति त्वत् परःपरः पतिर्वा जाये त्वत् तिरः ।
सं तत् सृजेथां सह वां तदस्तु संपादयन्तौ[5] सह लोकमेकम् ॥ ३९ ॥

यत्ऽयत् । जाया । पचति । त्वत् । परःऽपरः । पतिः । वा । जाये । त्वत् । तिरः । सम् ।
तत् । सृजेथाम् । सह । वाम् । तत् । अस्तु । सम्ऽपादयन्तौ । सह । लोकम् । एकम् ॥

यावन्तो अस्याः पृथिवीं सचन्ते[6] अस्मत् पुत्राः परि ये संबभूवुः ।
[7]सर्वास्ताँ उप पात्रे ह्वयेथां नाभिं जानानाः शिशवः समायान् ॥ ४० ॥

यावन्तः । अस्याः । पृथिवीम् । सचन्ते[8] । अस्मत् । पुत्राः । परि । ये । सम्ऽबभूवुः ।
सर्वान् । तान् । उप । पात्रे । ह्वयेथाम् । नाभिम् । जानानाः । शिशवः । सम्ऽआयान् ॥

वसोर्या धारा मधुना प्रपीना[9] घृतेन मिश्रा अमृतस्य नाभयः[10] ।
सर्वास्ता[11] अव रुन्धे स्वर्गः षष्ट्यां[12] शरत्सु निधिपा अभीच्छात् ॥४१॥

वसोः । याः । धाराः । मधुना । प्रऽपीनाः । घृतेन । मिश्राः । अमृतस्य । नाभयः । सर्वाः ।
ताः । अव । रुन्धे । स्वःऽगः । षष्ट्याम्[12] । शरत्ऽसु । निधिऽपाः । अभि । इच्छात् ॥

निधिं निधिपा अभ्येनमिच्छादनीश्वरा[13] अभितः[14] सन्तु येऽन्ये[15] ।
अस्माभिर्दत्तो निहितः स्वर्गस्त्रिभिः काण्डैस्त्रीन्त्स्वर्गानरुक्षत् ॥ ४२ ॥

निऽधिम् । निधिऽपाः । अभि । एनम् । इच्छात् । अनीश्वराः । अभितः । सन्तु । ये । अन्ये ।
अस्माभिः । दत्तः । निऽहितः[16] । स्वःऽगः[3] । त्रिऽभिः । काण्डैः । त्रीन् । स्वःऽगान् । अरुक्षत् ॥

---

१. पृथुश्चासमः पै १७,३९,८. २, °छात् $B^h$,C,D.$K^m$. ३. °गाः P.
४. °छात् P,$P^2$,J. ५. संराधयन्तौ पै १७,३९,९. ६. संचन्ते A,B,$B^h$,C,D,E,K,
R,$S^m$,Dc,Cs,W M.; सजन्ते पै १७,३९,१०. ७. °स्ताँ R,E. ८. सचन्ते P,J,Cp,
९. समक्ता पै १७,४०,१. १०. धासयः पै. ११. सर्वांस्ता B,D. १२. पृष्ठ्यां
D,K,$K^m$,$S^m$,Cs,J,$Bp^2$. १३. °मिच्छा° K,$K^m$,V,Dc. १४. अव्रताः पै १७,४०,२.
१५. ये१न्ये K; येंऽये Cs; येन्ये सात[2]. १६. °हिताः P.

अग्नी[1] रक्षस्तपतु[2] यद् विदेवं क्रव्यात् पिशाच इह मा प्र पास्त ।
नुदाम एनमप[3] रुध्मो[4] अस्मदादित्या एनमङ्गिरसः[5] सचन्ताम् ॥४३॥

अग्निः । रक्षः । तपतु । यत् । विऽदेवम् । क्रव्यऽअत् । पिशाचः । इह । मा[6] । प्र । पास्त ।
नुदामः । एनम् । अप । रुध्मः[7] । अस्मत् । आदित्याः । एनम् । अङ्गिरसः । सचन्ताम् ॥

आदित्येभ्यो अङ्गिरोभ्यो मध्विदं घृतेन मिश्रं प्रति वेदयामि[8] ।
शुद्धहस्तौ ब्राह्मणस्यानिहत्यैतं स्वर्गं सुकृतावपीतम्[9] ॥ ४४ ॥

आदित्येभ्यः । अङ्गिरःऽभ्यः । मधु । इदम् । घृतेन । मिश्रम् । प्रति । वेदयामि ।
शुद्धऽहस्तौ । ब्राह्मणस्य[10] । अनिऽहत्य । एतम् । स्वःऽगम् । सुऽकृतौ । अपि । इतम् ॥४४॥

इदं प्रापमुत्तमं[11] काण्डमस्य[12] यस्माल्लोकात् परमेष्ठी समाप ।
आ सिञ्च सर्पिर्घृतवत् समङ्ग्ध्येष भागो अङ्गिरसो नो अत्र ॥ ४५ ॥

इदम् । प्र । आपम् । उत्ऽतमम् । काण्डम् । अस्य । यस्मात् । लोकात् । परमेऽस्थी । सम्ऽआप ।
आ । सिञ्च । सर्पिः । घृतऽवत् । सम् । अङ्ग्धि । एषः । भागः । अङ्गिरसः । नः । अत्र ॥

सत्याय च तपसे देवताभ्यो निधिं शेवधिं परि दद्म[13] एतम् ।
मा नो द्यूतेव[14] गान्मा समित्यां मा स्मान्यस्मा उत्सृजता पुरा मत्[15] ॥४६

सत्याय । च । तपसे । देवताभ्यः । निऽधिम् । शेवऽधिम् । परि । दद्मः । एतम् । मा ।
नः । द्यूते[16] । अव । गात् । मा । सम्ऽइत्याम् । मा । स्म । अन्यस्मै । उत् । सृजत । पुरा । मत्[17] ॥

अहं पचाम्यहं ददामि[18] ममेदु कर्मन् करुणेऽधि[19] जाया ।
कौमारो लोको अजनिष्ट पुत्रो३न्वारभेथां[20] वय उत्तरावत् ॥ ४७ ॥

अहम् । पचामि । अहम् । ददामि । मम । इत् । ऊं इति । कर्मन् । करुणे । अधि । जाया ।
कौमारः । लोकः । अजनिष्ट[21] । पुत्रः । अनुऽआरभेथाम् । वयः । उत्तरऽवत् ॥ ४७ ॥

---

१. अग्ने पै १७,४०,३. २. °तप पै. ३. °मव पै. ४. रुंध्मो D. ५. नो अङ्गि° पै. ६. मा P. ७. रुध्मः P,J. ८. °यामः पै १७,४०,४. ९. °पि° > °पं° B. १०. ब्रह्म° P. ११. प्राप° E. १२. काण्डमस्य B. १३. दध्म Bh, पै १७,४०,६. १४. द्यूते अव पै. १५. मेंत E; वंत Bh; मंत A,D,R,Sm,Cs. १६. द्युते P. १७. मत P,J. १८. वंदामि K. १९. °णेऽपि पै १७,४०,८. २०. पुत्रो१न्वा° Km,S; पुत्रो अन्वारभेतां पै. २१. °निष्ठ P.

न किल्बिषमत्र नाधारो अस्ति[1] न यन्मित्रैः सममममान[2] एति ।
अनूनं पात्रं निहितं[3] न एतत्[4] पक्तारं पक्वः पुनरा विशाति[5] ॥ ४८ ॥

न । किल्बिषम्[5] । अत्र । न । आऽधारः । अस्ति । न । यत् । मित्रैः । सम्ऽअममानः । एति ।
अनूनम् । पात्रम् । निऽहितम् । नः । एतत् । पक्तारम् । पक्वः । पुनः । आ । विशाति ॥४८॥

प्रियं प्रियाणां कृणवाम[6] तमस्ते यन्तु यतमे द्विषन्ति ।
धेनुरनड्वान् [7]वयोवय आयदेव[7] पौरुषेयमप मृत्युं नुदन्तु ॥ ४९ ॥

प्रियम् । प्रियाणाम् । कृणवाम[8] । तमः । ते । यन्तु । यतमे । द्विषन्ति ।
धेनुः । अनड्वान् । वयःऽवयः । आऽयत् । एव । पौरुषेयम् । अप । मृत्युम् । नुदन्तु ॥४९॥

समग्नयो विदुरन्यो[9] अन्यं य ओषधीः सचते[10] यश्च सिन्धून्[11] ।
यावन्तो देवा दिव्या३तपन्ति हिरण्यं ज्योतिः पचतो[12] बभूव ॥ ५० ॥

सम् । अग्नयः । विदुः[13] । अन्यः । अन्यम् । यः । ओषधीः । सचते । यः । च । सिन्धून् ।
यावन्तः । देवाः । दिवि । आऽतपन्ति । हिरण्यम् । ज्योतिः । पचतः । बभूव ॥ ५० ॥

एषा[14] त्वचां[15] पुरुषे सं बभूवानग्नाः सर्वे पशवो ये अन्ये ।
क्षत्रेणात्मानं परि धापयाथोऽमोतं[16] वासो मुखमोदनस्य ॥ ५१ ॥

एषा । त्वचाम् । पुरुषे । सम् । बभूव । अनग्नाः । सर्वे । पशवः । ये । अन्ये ।
क्षत्रेण । आत्मानम् । परि । धापयाथः । अमाऽउतम् । वासः । मुखम् । ओदनस्य ॥५१॥

यदक्षेषु[17] वदा[18] यत् समित्यां यद्वा वदा[19] अनृतं वित्तकाम्या[20] ।
समानं तन्तुमभि[21] संवसानौ तस्मिन्त्सर्वं शमलं सादयाथः[22] ॥ ५२ ॥

यत् । अक्षेषु । वदाः । यत् । सम्ऽइत्याम् । यत् । वा । वदाः । अनृतम् । वित्तऽकाम्या ।
समानम् । तन्तुम् । अभि । सम्ऽवसानौ । तस्मिन् । सर्वम् । शमलम् । सादयाथः ॥ ५२ ॥

---

१. स्वरः? अस्तु पै १७,४०,७.  २. संनमममान D; सनममान Bʰ,R; सममान E; संमममान Cs.  ३. निहितं B,Bʰ,Cs.  ४. विशासि पै.  ५. किल्बिषम् P.  ६. °म एषत् पै १७,४०,९.  ७. वयोवदन्यात्? पै.  ८. कृण्वाम P.  ९. विदु° A,B,Bʰ,D,E,R,Sᵐ, V,Cs; विदु° > विदु° Dc.  १०. सचते A,Sᵐ; सृजते पै १७,४०,१०.  ११. सिन्धुम् पै.  १२. दधतो पै.  १३. विदुः P², Cp.  १४. एषां > एषा Dc.  १५. त्वचा Sᵐ.  १६. धापयेथो अमोतं पै १७,४१,१.  १७. यद्दुक्षेषु R.  १८. वदसि पै १७,४१,२.  १९. धने पै.  २०. °काम्यां Bʰ.  २१. तन्तुं सह पै.  २२. सादयेथाः B.

वर्षं वनुष्वापि गच्छ देवांस्त्वचो[1] धूमं पर्युत्पातयासि[2] ।
विश्वव्यचा [3]घृतपृष्ठो भविष्यन्त्सयोनिर्लोकमुप[3] याह्येतम् ॥ ५३ ॥

वर्षम् । वनुष्व । अपि । गच्छ । देवान् । त्वचः । धूमम् । परि । उत् । पातयासि[4] ।
विश्वऽव्यचाः । घृतऽपृष्ठः । भविष्यन् । सऽयोनिः । लोकम् । उप । याहि । एतम् ॥ ५३ ॥

तन्वं स्वर्गो बहुधा वि चक्रे यथा विद आत्मन्नन्यवर्णाम् ।
अपाजैत् कृष्णां रुशतीं[5] पुनानो या लोहिनी तां ते अग्नौ जुहोमि ॥५४॥

तन्वम् । स्वःऽगः । बहुऽधा । वि । चक्रे । यथा । विदे । आत्मन् । अन्यऽवर्णाम् ।
अप । अजैत् । कृष्णाम् । रुशतीम् । पुनानः । या । लोहिनी । ताम् । ते । अग्नौ । जुहोमि ॥

प्राच्यै त्वा दिशे[6]ऽग्नयेऽधिपतयेऽसिताय रक्षित्र आदित्यायेषुमते ।
एतं परि दद्मस्तं[7] नो गोपायतास्माकमैतोः ।
दिष्टं नो अत्र जरसे नि नेषज्जरा मृत्यवे परि णो ददात्वथ[8] पक्वेन सह सं भवेम ॥५५॥

प्राच्यै । त्वा । दिशे । अग्नये । अधिऽपतये । असिताय । रक्षित्रे । आदित्याय । इषुऽमते ।
एतम् । परि । दद्मः । तम् । नः । गोपायत । आ । अस्माकम् । आऽएतोः । दिष्टम् ।
नः । अत्र । जरसे । नि । नेषत् । जरा । मृत्यवे । परि । नः । ददातु । अथ । पक्वेन ।
सह । सम् । भवेम ॥ ५५ ॥

दक्षिणायै त्वा दिश इन्द्रायाऽधिपतये तिरश्चिराजये रक्षित्रे [9]यमायेषुमते[9] ।
एतं०।० ॥ ५६ ॥

दक्षिणायै । त्वा । दिशे । इन्द्राय । अधिऽपतये । तिरश्चिऽराजये । रक्षित्रे । यमाय ।
इषुऽमते । एतम् ॥ ० ॥ ५६ ॥

प्रतीच्यै त्वा दिशे वरुणायाऽधिपतये पृदाकवे [10]रक्षित्रेऽन्नायेषुमते[10] ।
एतं०।० ॥ ५७ ॥

---

१. देवांस्ततो पै १७,४१,३. २. °यामि B, पै (मूको.); पातयामसि R. ३. विश्वकर्मा स्वर्गस्सयोनि° पै ; °मुप Sm. ४. पातयामसि P,P², J. ५. रुषतीं B, पै १७,४१,४ (मूको.). ६. दिशे अग्नये° पै १७,४१,५. ७. दध्मस्तं पै. एवमुत्तरत्र. ८. दधातु । अधा पै. एवमुत्तरत्र. ९. वसुभ्य इषुमद्भ्यः पै १७,४१,६. १०. रक्षित्रे मित्रायेषु° पै १७,४१,७.

प्रतीच्यै । त्वा । दिशे । वरुणाय । अधिऽपतये । पृदाकवे । रक्षित्रे । अन्नाय । इषुऽमते ॥० ॥५७॥

**उदीच्यै त्वा दिशे सोमायाधिपतये स्वजाय [1]रक्षित्रेशन्या इषुमत्यै[1] । एतं० । ० ।५८।**

उदीच्यै । त्वा । दिशे । सोमाय । अधिऽपतये । स्वजाय । रक्षित्रे । अशन्यै । इषुऽमत्यै ॥० ॥ ५८ ॥

**ध्रुवायै त्वा दिशे विष्णवेधिपतये कुल्माषग्रीवाय रक्षित्र [2]ओषधीभ्य इषुमतीभ्यः[2] । एतं०।० ॥ ५९ ॥**

ध्रुवायै । त्वा । दिशे । विष्णवे । अधिऽपतये । कुल्माषऽग्रीवाय[3] । रक्षित्रे । ओषधीभ्यः । इषुऽमतीभ्यः ॥० ॥ ५९ ॥

**ऊर्ध्वायै त्वा दिशे बृहस्पतयेधिपतये श्वित्राय[4] रक्षित्रे [5]वर्षायेषुमते[5] ।**
**एतं परि दद्मस्तं नो गोपायतास्माकमैतोः ।**
**दिष्टं नो अत्र जरसे नि नेषज्जरा मृत्यवे परि णो ददात्वथ पक्वेन सह सं भवेम । ६०।**

ऊर्ध्वायै । त्वा । दिशे । बृहस्पतये । अधिऽपतये । श्वित्राय[4] । रक्षित्रे । वर्षाय । इषुऽमते । एतम् । परि । दद्मः । तम् । नः । गोपायत । आ । अस्माकम् । आऽएतोः । दिष्टम् । नः । अत्र । जरसे । नि । नेषत् । जरा । मृत्यवे । परि । नः । ददातु । अथ । पक्वेन । सह । सम् । भवेम ॥ ६० ॥

**इति तृतीयेऽनुवाके प्रथमं सूक्तम् ।**

**इति तृतीयोऽनुवाकः ।**

ऋ· कश्यप : दे· वशा

**वशाविषयकं सूक्तम् एतत् ।** 'वशा गौर्या गर्भं न गृह्णाति' ( कौसू ४४,१ ) **इति दारिलः ।** 'वशा वन्ध्या गौः' ( ऋ २,७,५ ) **इति सायणः ।** 'वशा स्वभाववन्ध्या गौः' ( ऋ १०,९१,१४ ) **इति स एव ।**

**यस्य गृहे वशा जाता तस्य गृहे** 'अविज्ञातगदा सती' (१६) **अर्थाद् अज्ञातवशात्वरूपवैकल्या सती आ वर्षत्रयाद् रक्षितव्या । तदनन्तरम् असंग्राह्या भवति । वशा गौर्देवानां विशेषेण प्रियं हविर्भवति । तस्माद्देवानामर्थे तां याचद्भ्यो**

---

१. °त्रे वातायेषुमते पै १७,४१,८. २. वीरुद्भ्य इषुमद्भ्यः पै १७,४१,९. ३. कुल्फाष° P. ४. श्वित्राय Km,V,Dc,P[2]. ५. अशनिभ्य इषुमतीभ्यः पै १७,४१,१०.

ब्राह्मणेभ्यस्तत्पतिर्दद्यादेव। तथा कृते प्रजादिवृद्धिर्भवति अकृते च बह्वय आपदः संजायन्ते। तदेव आपद्व्यसनं तस्या अदत्तायाः कस्मादङ्गात् कीदृशं भवतीत्याह। अन्यापि कथं विपत्तिर्भवतीति च। याचद्भ्यो ब्राह्मणेभ्योऽदत्ता वशा ब्रह्मोपद्रवादि पापं जनयति। यदा वशां ब्राह्मणा याचन्ते देवा एव तद् याचन्तीति मन्तव्यम्। वशा हि देवानां भागो भवति। वशा दत्ता सती सर्वान् दातुः कामान् दुग्धे। यो वशां वेहतं मन्यमानः स्वयमेव हत्वा पचेत्तस्य हानिर्भवति। वशा हि ब्राह्मणेभ्य आत्मानं दीयमानां तैश्च हता सती देवेभ्यो हवीरूपेण अर्प्यमाणाम् इच्छति। तस्माद् यदि हुतां वा अहुतां वा यो वशापतिस्तां स्वगृह एव पचते सोधःपातम् आप्य नरकं गच्छतीत्याह।

वशाशमनप्रकारः कौशिके (४३,२०-४५,१९) प्रपञ्चितः।

वशादानस्य प्रकारस्तु "'ददामि' इति वशाम् उदपात्रेण संपातवता संप्रोक्ष्याभिमन्त्र्याभिनिगद्य दद्याद् दाता वाच्यमानः" (कौसू ६६,२०) इति कौशिके दर्शितः।

ददामीत्येव ब्रूयादनु[1] चैनामभुत्सत[2]।
वशां ब्रह्मभ्यो याचद्भ्यस्तत् प्रजावदपत्यवत् ॥ १ ॥

ददामि। इति। एव। ब्रूयात्। अनु। च। एनाम्। अभुत्सत।
वशाम्। ब्रह्मऽभ्यः। याचत्ऽभ्यः। तत्। प्रजाऽवत्। अपत्यऽवत् ॥ १ ॥

प्रजया स वि क्रीणीते पशुभिश्चोप दस्यति।
य आर्षेयेभ्यो याचद्भ्यो देवानां गां न दित्सति ॥ २ ॥

प्रऽजया। सः। वि। क्रीणीते। पशुऽभिः। च। उप। दस्यति।
यः। आर्षेयेभ्यः। याचत्ऽभ्यः। देवानाम्। गाम्। न। दित्सति ॥ २ ॥

कूटयास्य सं शीर्यन्ते श्लोणया[3] काटमर्दति।
बण्डया दह्यन्ते गृहाः काणया दीयते स्वम् ॥ ३ ॥

कूटया। अस्य। सम्। शीर्यन्ते। श्लोणया। काटम्। अर्दति।
बण्डया। दह्यन्ते। गृहाः। काणया। दीयते। स्वम् ॥ ३ ॥

---

१. °दनु B. २. अभुत्सत इति स्वरदर्शनाद् यद्वृत्तयोगोऽनुमेयः. ३. श्रोणया पै १७,१६,३.

विलोहितो अधिष्ठानाच्छक्नो विन्दति गोपतिम् ।
तथा [1]वशायाः संविद्यं[1] दुरदभ्ना[2] ह्यु१च्यसे[3] ॥ ४ ॥

विऽलोहितः । अधिऽस्थानात् । शक्नः । विन्दति । गोऽपतिम् ।
तथा । वशायाः । सम्ऽविद्यम्[4] । दुरदभ्ना[5] । हि । उच्यसे ॥ ४ ॥

पदोरस्या अधिष्ठानाद् विक्लिन्दुर्नाम विन्दति ।
अनामनात्[6] सं शीर्यन्ते या मुखेनोपजिघ्रति ॥ ५ ॥

पदोः । अस्याः । अधिऽस्थानात् । विऽक्लिन्दुः । नाम । विन्दति ।
अनामनात् । सम् । शीर्यन्ते । याः । मुखेन । उपऽजिघ्रति ॥ ५ ॥

यो अस्याः कर्णावास्कुनोत्या स देवेषु वृश्चते ।
लक्ष्म[7] कुर्व इति मन्यते कनीयः कृणुते[8] स्वम् ॥ ६ ॥

यः । अस्याः । कर्णौ । आऽस्कुनोति । आ । सः । देवेषु । वृश्चते ।
लक्ष्म । कुर्वे । इति । मन्यते । कनीयः । कृणुते । स्वम् ॥ ६ ॥

यदस्याः कस्मै चिद् भोगाय बालान् कश्चित् प्रकृन्तति ।
ततः किशोरा म्रियन्ते वत्सांश्च घातुको वृकः ॥ ७ ॥

यत् । अस्याः । कस्मै । चित् । भोगाय । बालान् । कः । चित् । प्रऽकृन्तति ।
ततः । किशोराः । म्रियन्ते । वत्सान् । च । घातुकः । वृकः ॥ ७ ॥

यदस्या[9] गोपतौ सत्या लोम ध्वाङ्क्षो अजीहिडत् ।
ततः कुमारा म्रियन्ते यक्ष्मो विन्दत्यनामनात्[10] ॥ ८ ॥

यत् । अस्याः । गोऽपतौ । सत्याः । लोम । ध्वाङ्क्षः । अजीहिडत् ।
ततः । कुमाराः । म्रियन्ते । यक्ष्मः । विन्दति । अनामनात् ॥ ८ ॥

---

१. °सांविद्यं M,O; वशायां: सांविद्यं R². २. °दुब्द्ना O. ३. ह्यूच्यसै A,K,Kᵐ; ह्यु१च्यसे Bᵇ,V; ह्यूच्यसे C,Sᵐ,Cs; ह्यू१च्यसे D,Dc; ह्यु३च्यसे E,W.M.; ह्युच्यसै R. ४. साम्ऽविद्यम् D². ५. दुभ्द्ना Bp². ६. °मनान् B. ७. यक्ष्मं B. ८. कृणोति पै १७,१६,५. ९. यो अस्या B. १०. चरत्यना° पै १७,१६,८.

**यदस्याः पल्पूलनं[1] शकृद्[2] दासी[3] समस्यति ।**
**ततोपरूपं जायते तस्मादव्येष्यदेनसः ॥ ९ ॥**

यत् । अस्याः । पल्पूलनम् । शकृत् । दासी । समऽअस्यति ।
ततः । अपऽरूपम् । जायते । तस्मात् । अविऽएष्यत् । एनसः ॥ ९ ॥

**जायमानाभि जायते देवान्त्सब्राह्मणान् वशा ।**
**तस्माद् ब्रह्मभ्यो देयैषा तदाहुः स्वस्य गोपनम् ॥ १० ॥**

जायमाना । अभि । जायते । देवान् । सऽब्राह्मणान् । वशा ।
तस्मात् । ब्रह्मऽभ्यः । देया । एषा । तत् । आहुः । स्वस्य । गोपनम्[4] ॥ १० ॥

**य एनां वनिमायन्ति तेषां देवकृता वशा ।**
**ब्रह्मज्येयं तदब्रुवन् य एनां निप्रियायते[5] ॥ ११ ॥**

ये । एनाम् । वनिम् । आऽयन्ति । तेषाम् । देवऽकृता । वशा ।
ब्रह्मऽज्येयम् । तत् । अब्रुवन् । यः । एनाम्[6] । निऽप्रियायते ॥ ११ ॥

**य आर्षेयेभ्यो याचद्भ्यो देवानां गां न दित्सति ।**
**आ स देवेषु वृश्चते ब्राह्मणानां च मन्यवे ॥ १२ ॥**

यः । आर्षेयेभ्यः । याचत्ऽभ्यः । देवानाम् । गाम् । न । दित्सति ।
आ । सः । देवेषु । वृश्चते । ब्राह्मणानाम् । च । मन्यवे[7] ॥ १२ ॥

**'यो अस्य[8] स्याद् वशाऽभोगो अन्यामिच्छेत तर्हि सः ।**
**'हिंस्ते अदत्ता पुरुषं[9] याचितां च न दित्सति[10] ॥ १३ ॥**

यः । अस्य । स्यात्[11] । वशाऽभोगः । अन्याम् । इच्छेत । तर्हि । सः ।
हिंस्ते । अदत्ता । पुरुषम् । याचिताम् । च । न । दित्सति ॥ १३ ॥

**यथा शेवधिर्निहितो ब्राह्मणानां तथा वशा ।**

---

१. पल्यूलनं K,V,WM. २. सकृद् R. ३. देवी पै १७,१६,९. ४. गोऽपनम् P,P²,J,Cp. ५. नु प्रिया° पै १७,१७,१. ६. एनान् P²,J. ७. मृत्यवे P². ८. यस्यान्यः पै १७,१७,३. ९. हिंस्राणिधत्स्वा? गोपतिं पै. १०. दित्सते B; स्वरदर्शनाद् यद्वृत्तयोगोऽनुमेयः. ११. स्यात P.

तामेतदच्छायन्ति यस्मिन् कस्मिंश्च जायते ॥ १४ ॥

यथा । शेवऽधिः । निऽहितः । ब्राह्मणानाम् । तथा । वशा ।
ताम् । एतत् । अच्छऽआयन्ति[1] । यस्मिन् । कस्मिन् । च । जायते ॥ १४ ॥

स्वमेतदच्छायन्ति यद् वशां ब्राह्मणा[2] अभि ।
यथैनानन्यस्मिन्[3] जिनीयादेवास्या निरोधनम्[4] ॥ १५ ॥

स्वम्[5] । एतत् । अच्छऽआयन्ति । यत् । वशाम् । ब्राह्मणाः[2] । अभि ।
यथा । एनान् । अन्यस्मिन् । जिनीयात् । एव । अस्याः । निऽरोधनम् ॥ १५ ॥

चरेदेवा त्रैहायणादविज्ञातगदा सती ।
वशां च विद्यान्नारद[6] ब्राह्मणास्तर्ह्येष्याः ॥ १६ ॥

चरेत् । एव । आ । त्रैहायनात् । अविज्ञातऽगदा । सती ।
वशाम् । च । विद्यात् । नारद । ब्राह्मणाः । तर्हि । एष्याः ॥ १६ ॥

य एनामवशामाह देवानां निहितं निधिम् ।
उभौ तस्मै भवाशर्वौ परिक्रम्येषुमस्यतः ॥ १७ ॥

यः । एनाम् । अवशाम् । आह । देवानाम् । निऽहितम् । निऽधिम् ।
उभौ । तस्मै । भवाशर्वौ । परिऽक्रम्य । इषुम् । अस्यतः ॥ १७ ॥

यो अस्या[7] ऊधो न वेदाथो अस्या[7] स्तनानुत ।
उभयेनैवास्मै दुहे दातुं चेदशकद् वशाम् ॥ १८ ॥

यः । अस्याः । ऊधः । न । वेद । अथो इति । अस्याः । स्तनान् । उत ।
उभयेन । एव । अस्मै । दुहे । दातुम् । च । इत् । अशकत् । वशाम्[8] ॥ १८ ॥

दुरदभ्नैनमा शये याचितां च न दित्सति[9] ।
नास्मै कामाः समृध्यन्ते यामदत्त्वा चिकीर्षति ॥ १९ ॥

---

१. अच्छऽयन्ति P. २. ब्राह्मणा A,B,Bh,C,D,E.R,Sm,Cs,P,J,Cp,WM. ३. °नन्यज् पै १७,१७,५. ४. अधिरोहणम् पै. ५. स्वाम् P. ६. विद्यात् इत्यत्र स्वरदर्शनाद् यद्वृत्तयोगोऽनुमेयः. ७. अस्याः पै १७,१७,९. ८. वशा C. ९. पृ. १४८० टि. १० द्र.

दुरदभ्ना । एनम् । आ । शये । याचिताम् । च । न । दित्सति ।
न । अस्मै । कामाः । सम् । ऋध्यन्ते । याम् । अदत्त्वा । चिकीर्षति ॥ १९ ॥

देवा [1]वशामयाचन्[1] मुखं कृत्वा ब्राह्मणम् ।
तेषां सर्वेषामददद्धेडं[2] न्येति[3] मानुषः ॥ २० ॥

देवाः । वशाम् । अयाचन्[4] । मुखम् । कृत्वा । ब्राह्मणम् ।
तेषाम् । सर्वेषाम् । अददत् । हेडम् । नि । एति । मानुषः ॥ २० ॥

हेडं पशूनां न्येति ब्राह्मणेभ्योददद् वशाम् ।
देवानां निहितं भागं मर्त्यश्चेन्निप्रियायते[6] ॥ २१ ॥

हेडम् । पशूनाम् । नि । एति । ब्राह्मणेभ्यः । अददत्[5] । वशाम् ।
देवानाम् । निऽहितम् । भागम् । मर्त्यः[7] । च । इत् । निऽप्रियायते ॥ २१ ॥

यदन्ये शतं याचेयुर्ब्राह्मणा गोपतिं वशाम् ।
अथैनां[8] देवा अब्रुवन्नेवं ह विदुषो वशा ॥ २२ ॥

यत् । अन्ये । शतम् । याचेयुः । ब्राह्मणाः । गोऽपतिम् । वशाम् ।
अथ । एनाम्[9] । देवाः । अब्रुवन् । एवम् । ह । विदुषः । वशा ॥ २२ ॥

य एवं [10]विदुषेदत्त्वाथान्येभ्यो ददद् वशाम्[10] ।
दुर्गा तस्मा अधिष्ठाने पृथिवी सहदेवता ॥ २३ ॥

यः । एवम् । विदुषे । अदत्त्वा । अथ । अन्येभ्यः । ददत्[11] । वशाम् ।
दुःऽगा । तस्मै । अधिऽस्थाने । पृथिवी । सहऽदेवता ॥ २३ ॥

देवा वशामयाचन् यस्मिन्नग्रे अजायत ।
तामेतां विद्यान्नारदः[12] सह देवैरुदाजत ॥ २४ ॥

---

१. वशां याचन्ति पै १७,१७,१०. २. °दद्धयेडं K,S^m,V. ३. न्येति B,B^h, C,E,K^m. ४. अयाचन् P. ५. तु. Cp; वैतु. मूको. °भ्योंददद्वशाम्; P,P², J,K,V अददत्. ६. चेन्नु प्रियायते पै १७,१८,१. ७. मर्त्यः P. ८. अथैतां A,C,E,K,R,S^m,WM., पै १७,१८,२. ९. एताम् P; एताम् P²,J,Cp. १०. विदुषे A,B,B^h,D,E,Cs; °थान्यस्मै पै १७,१८,३; °भ्योंददद् वशाम् मूको. (तु. शंपा. WM.); °भ्योऽददद् वशाम् RW. ११. ददत् P,P²,J,Cp. १२. विद्यान्नारदः D²,R²; विद्यान्नारदः > विद्यान्नारदः Dc.

देवाः । वशाम् । अयाचन् । यस्मिन् । अग्रे । अजायत ।
ताम् । एताम् । विद्यात् । नारदः[1] । सह । देवैः । उत् । आजत ॥ २४ ॥

अनपत्यमल्पपशुं वशा कृणोति[2] पूरुषम् ।
ब्राह्मणैश्च याचितामथैनां [3]निप्रियायते[3] ॥ २५ ॥

अनपत्यम् । अल्पऽपशुम् । वशा । कृणोति । पुरुषम् ।
ब्राह्मणैः । च । याचिताम्[4] । अथ । एनाम् । निऽप्रियायते ॥ २५ ॥

अग्नीषोमाभ्यां कामाय मित्राय वरुणाय च ।
तेभ्यो[5] याचन्ति ब्राह्मणास्तेष्वा[6] वृश्चतेददत् ॥ २६ ॥

अग्नीषोमाभ्याम् । कामाय । मित्राय । वरुणाय । च ।
तेभ्यः । याचन्ति । ब्राह्मणाः । तेषु । आ । वृश्चते । अददत् ॥ २६ ॥

यावदस्या गोपतिर्नोपशृणुयादृचः स्वयम् ।
चरेदस्य तावद् गोषु नास्य श्रुत्वा गृहे वसेत्[7] ॥ २७ ॥

यावत् । अस्याः । गोऽपतिः । न । उपऽशृणुयात् । ऋचः । स्वयम् ।
चरेत् । अस्य । तावत् । गोषु । न । अस्य । श्रुत्वा । गृहे । वसेत्[7] ॥ २७ ॥

यो अस्या[8] ऋचः[9] उपश्रुत्याथ गोष्वचीचरत्[10] ।
आयुश्च तस्य भूतिं[11] च देवा वृश्चन्ति[12] हीडिताः[13] ॥ २८ ॥

यः । अस्याः । ऋचः । उपऽश्रुत्य । अथ । गोषु । अचीचरत् ।
आयुः । च । तस्य । भूतिम् । च । देवाः । वृश्चन्ति । हीडिताः ॥ २८ ॥

वशा चरन्ती बहुधा देवानां निहितो निधिः ।
आविष्कृणुष्व[14] रूपाणि यदा[15] स्थाम जिघांसति ॥ २९ ॥

---

१. नारदः P,P². २. कृणोतु पै १७,१८,५. ३. नु प्रिया° पै. ४. यातिताम् P. ५. येभ्यो पै १७,१८,६. ६. °णस्तेष्वा R,Sᵐ; °तेभ्य आ पै. ७. वशेत् A,Bʰ,C,E,R.P,P²,J; स्यात् ? पै १७,१८,७. ८. अस्या३ A,D,Sᵐ; ऽस्या पै १७,१८,८. ९. ऋषं K. १०. अचीचरत् E²; अन्यत्र अचीचरत् (पपा. अचीचरत्.). ११. शुभं पै. १२. वृश्चन्ति A.D,C,R,Cs,P,J,Cp,WM.; °न्तु पै. १३. हेडिताः पै. १४. आविः कृ° Bʰ,E,R,V,Dc; °णुति O,D²,T; °णुते W. १५. यथा पै १७,१८,९.

वशा । चरन्ती । बहुऽधा । देवानाम् । निऽहितः । निऽधिः ।
आविः । कृणुष्व[1] । रूपाणि । यदा । स्थाम । जिघांसति ॥ २९ ॥

**आविरात्मानं कृणुते यदा स्थाम जिघांसति ।**
**अथो[2] ह ब्रह्मभ्यो वशा याच्न्याय[3] कृणुते मनः ॥ ३० ॥**

आविः । आत्मानम् । कृणुते । यदा । स्थाम[4] । जिघांसति ।
अथो इति । ह । ब्रह्मऽभ्यः । वशा । याच्न्याय[3] । कृणुते । मनः ॥ ३० ॥

**मनसा सं कल्पयति तद् देवाँ[5] अपि गच्छति ।**
**ततो ह ब्रह्माणो[6] वशामुपप्रयन्ति याचितुम् ॥ ३१ ॥**

मनसा । सम् । कल्पयति । तत् । देवान् । अपि । गच्छति ।
ततः । ह । ब्रह्माणः । वशाम् । उपऽप्रयन्ति । याचितुम् ॥ ३१ ॥

**स्वधाकारेण पितृभ्यो यज्ञेन देवताभ्यः[7] ।**
**दानेन राजन्यो[8] वशाया मातुर्हेडं न गच्छति ॥ ३२ ॥**

स्वधाऽकारेण । पितृऽभ्यः । यज्ञेन । देवताभ्यः ।
दानेन । राजन्यः । वशायाः । मातुः । हेडम् । न । गच्छति ॥ ३२ ॥

**वशा माता राजन्यस्य[8] तथा संभूतमग्रशः ।**
**तस्या आहुरनर्पणं यद् ब्रह्मभ्यः प्रदीयते ॥ ३३ ॥**

वशा । माता । राजन्यस्य । तथा । समऽभूतम् । अग्रऽशः ।
तस्याः । आहुः । अनर्पणम् । यत् । ब्रह्मऽभ्यः । प्रऽदीयते ॥ ३३ ॥

**'यथाज्यं प्रगृहीतमालुम्पेत्' स्रुचो अग्नये ।**
**[10]एवा ह ब्रह्मभ्यो[10] वशामग्नय आ वृश्चतेऽददत्[11] ॥ ३४ ॥**

यथा । आज्यम् । प्रऽगृहीतम् । आऽलुम्पेत् । स्रुचः[12] । अग्नये ।
एव । ह । ब्रह्मऽभ्यः । वशाम् । अग्नये । आ । वृश्चते । अददत् ॥ ३४ ॥

---

१. कृणुते P,P², J. २. उतो पै १७,१८,१०. ३. याच्याय B,K,Kᵐ; याञ्च्याय A,Bʰ,E,R,P²,V,WM.; याच्नाय D,Cs; याञ्चाय Cp. ४. स्थाम P. ५. देवाँ E,R. ६. ब्रह्मणो B,K,Kᵐ. ७. देवेभ्यः पै १७,१९,२. ८. राजन्य ते पै १७, १९,३. ९. यदाज्यं प्रतिजग्राहमा° पै १७,१९,४; °प्रगृहीत° A,R. १०. ततोऽब्राह्मणो पै. ११. °ददत् B. १२. स्रुच P.

पुरोडाशवत्सा सुदुघा [१]लोकेस्मा उप[१] तिष्ठति ।
सास्मै[२] सर्वान् कामान् वशा प्रददुषे दुहे ॥ ३५ ॥

पुरोडाशऽवत्सा । सुऽदुघा । लोके । अस्मै । उप । तिष्ठति ।
सा । अस्मै[३] । सर्वान् । कामान् । वशा । प्रऽददुषे । दुहे ॥ ३५ ॥

सर्वान् कामान् यमराज्ये वशा प्रददुषे दुहे ।
[४]अथाहुर्नारकं लोकं[५] निरुन्धानस्य याचिताम् ॥ ३६ ॥

सर्वान् । कामान् । यमऽराज्ये । वशा । प्रऽददुषे । दुहे ।
अथ । आहुः । नरकम् । लोकम् । निऽरुन्धानस्य[६] । याचिताम् ॥ ३६ ॥

प्रवीयमाना चरति क्रुद्धा गोपतये वशा ।
वेहतं मा मन्यमानो मृत्योः पाशेषु बध्यताम् ॥ ३७ ॥

प्रऽवीयमाना । चरति । क्रुद्धा । गोऽपतये । वशा ।
वेहतम् । मा । मन्यमानः । मृत्योः । पाशेषु । बध्यताम् ॥ ३७ ॥

यो वेहतं [७]मन्यमानोमा च[७] पचते वशाम् ।
अप्यस्य पुत्रान् पौत्रांश्च याचयते[८] बृहस्पतिः ॥ ३८ ॥

यः । वेहतम् । मन्यमानः । अमा । च । पचते । वशाम् ।
अपि । अस्य । पुत्रान् । पौत्रान् । च । याचयते । बृहस्पतिः ॥ ३८ ॥

महदेषाव तपति चरन्ती गोषु गौरपि ।
[९]अथो ह[९] गोपतये वशाददुषे विषं दुहे ॥ ३९ ॥

महत् । एषा । अव । तपति । चरन्ती । गोषु । गौः । अपि ।
अथो इति । ह । गोऽपतये । वशा । अददुषे । विषम् । दुहे ॥ ३९ ॥

प्रियं पशूनां भवति यद् ब्रह्मभ्यः प्रदीयते ।

---

१. लोके° V,Dc,WM.; लोकेऽस्योप पै १७,१९,५. २. तस्मै पै. ३. अस्मै P.
४. तथा° पै १७,३९,६. ५. त्वेकं पै. ६. °रुधानस्य P. ७. मन्यमानो R;
°मानो गृहेषु पै १७,१९,८. ८. चातयते पै. ९. ततो पै १८,१९,९.

अथो वशायास्तत् प्रियं यद् देवत्रा हविः स्यात्[१] ॥ ४० ॥

प्रियम् । पशूनाम् । भवति । यत् । ब्रह्मऽभ्यः । प्रऽदीयते ।
अथो इति । वशायाः । तत् । प्रियम् । यत् । देवऽत्रा । हविः । स्यात्[२] ॥ ४० ॥

या वशा उदकल्पयन् देवा यज्ञादुदेत्य ।
तासां विलिप्त्यं[३] भीमामुदाकुरुत नारदः ॥ ४१ ॥

याः । वशाः । उत्ऽअकल्पयन् । देवाः । यज्ञात् । उत्ऽएत्य ।
तासाम् । विऽलिप्त्यम्[४] । भीमाम् । उत्ऽआकुरुत । नारदः ॥ ४१ ॥

तां देवा अमीमांसन्त वशेया३मवशेति[५] ।
तामब्रवीन्नारद एषा वशानां वशतमेति ॥ ४२ ॥

ताम् । देवाः । अमीमांसन्त । वशा । इया३म् । अवशा३[६] । इति ।
ताम् । अब्रवीत् । नारदः । एषा । वशानाम् । वशऽतमा । इति ॥ ४२ ॥

कति नु वशा नारद यास्त्वं[७] वेत्थ मनुष्यजाः ।
[८]तास्त्वा पृच्छामि विद्वांसं[८] कस्या नाश्नीयादब्राह्मणः ॥ ४३ ॥

कति । नु । वशाः । नारद । याः । त्वम् । वेत्थ[९] । मनुष्यऽजाः ।
ताः । त्वा । पृच्छामि । विद्वांसम् । कस्याः । न । अश्नीयात् । अब्राह्मणः ॥ ४३ ॥

विलिप्त्या बृहस्पते या च सूतवशा वशा ।
तस्या[१०] नाश्नीयादब्राह्मणो य आशंसेत भूत्याम् ॥ ४४ ॥

विऽलिप्त्याः । बृहस्पते । या । च । सूतऽवशा । वशा ।
तस्याः । न । अश्नीयात् । अब्राह्मणः[११] । यः । आऽशंसेत । भूत्याम् ॥ ४४ ॥

नमस्ते अस्तु नारदानुष्ठु[१२] विदुषे वशा ।
कतमासां भीमतमा यामदत्त्वा पराभवेत् ॥ ४५ ॥

---

१. स्यात् B,B^h,D,Cs; अस्याः पै १७,१९,१०. २. स्यात् P,Cp. ३. विलिप्ती D,K,K^m,S^m,V,Cs,P^3,M,W,I,E^2,R^2; °प्त्यं > °प्तीं A,Dc. ४. विलिप्तीम् > विलिप्त्यम् Cp. ५. °वशेति इति प्लुतस्याप्लुतवद्भावश्छान्दसः (तु. पा ६,१,१२९); वशेयामव° पै १७,२०,२. ६. °शा WI. ७. यास्तं B. ८. कतमासां भीमतमा पै १७,२०,३. ९. वेत्थ P. १०. तासां पै १७,२०,४. १२. अब्रह्मणः P. १३. °नुष्टु A,B^h,C, D,K,R,S^m,V,Dc,Cs.

नमः । ते । अस्तु । नारद । अनुष्ठु[1] । विदुषे । वशा ।
कतमा । आसाम् । भीमऽतमा । याम् । अदत्त्वा । पराऽभवेत् ॥ ४५ ॥

विलिप्ती या बृहस्पतेथो[2] सूतवशा वशा ।
तस्या[3] नाश्नीयादब्राह्मणो य आशंसेत भूत्याम् ॥ ४६ ॥

विऽलिप्ती । या । बृहस्पते । अथो इति । सूतऽवशा । वशा ।
तस्याः । न । अश्नीयात् । अब्राह्मणः । यः । आऽशंसेत । भूत्याम् ॥ ४६ ॥

त्रीणि वै वशाजातानि विलिप्ती सूतवशा वशा ।
ताः[4] प्र यच्छेद् ब्रह्मभ्यः सोनाव्रस्कः[5] प्रजापतौ ॥ ४७ ॥

त्रीणि । वै । वशाऽजातानि । विऽलिप्ती । सूतऽवशा । वशा ।
ताः । प्र । यच्छेत् । ब्रह्मऽभ्यः । सः । अनाव्रस्कः । प्रजाऽपतौ ॥ ४७ ॥

एतद् वो ब्राह्मणा[6] हविरिति मन्वीत याचितः ।
वशां चेदेनं याचेयुर्या भीमाददुषो गृहे ॥ ४८ ॥

एतत् । वः । ब्राह्मणाः[7] । हविः । इति । मन्वीत । याचितः ।
वशाम् । च । इत् । एनम् । याचेयुः । या । भीमा । अददुषः । गृहे ॥ ४८ ॥

देवा वशां [8]पर्यवदन् न नोऽदादिति हीडिताः[8] ।
एताभिर्ऋग्भिर्भेदं[9] तस्माद् वै स पराभवत् ॥ ४९ ॥

देवाः । वशाम् । परि । अवदन् । न । नः । अदात् । इति । हीडिताः ।
एताभिः । ऋक्ऽभिः । भेदम् । तस्मात् । वै । सः । परा । अभवत् ॥ ४९ ॥

उतैनां[10] भेदो नाददाद् वशामिन्द्रेण याचितः ।
तस्मात् तं देवा [11]आगसोवृश्चन्नहमुत्तरे[11] ॥ ५० ॥

---

१. अनुष्टु P,J; अनुष्टें Cp. २. °पते या च पै १७,२०,६. ३. तासां पै. ४. ता B. ५. सोना° A,Bʰ,C,D,E,K,R,WM. ६. ब्राह्मणा C,Kᵐ. ७. ब्राह्मणाः P,Cp. ८. उपावदन् स नो ? हेडिताः पै १७,२०,९. ९. °र्भेदस्य पै. १०. उतैतां E², K² पै १७,२०,१०. ११. आंगसो° A,B,Bʰ,C,D,E,Kᵐ,Sᵐ,Cs,WM.; आंगसो° > आगसो° Dc; अंगसो° K,R; एनसो° नृष्छिन्नादह° ? पै.

उत । एनाम्[१] । भेदः । न । अददात् । वशाम् । इन्द्रेण । याचितः ।
तस्मात् । तम् । देवाः । आगसः[२] । अवृश्चन् । अहम्ऽउत्तरे ॥ ५० ॥

**ये वशाया अदानाय वदन्ति परिरापिणः ।**
**इन्द्रस्य मन्यवे जाल्मा आ वृश्चन्ते अचित्त्या ॥ ५१ ॥**

ये । वशायाः । अदानाय । वदन्ति । परिऽरापिणः ।
इन्द्रस्य । मन्यवे । जाल्माः । आ । वृश्चन्ते । अचित्त्या ॥ ५१ ॥

**ये गोपतिं पराणीयाथाहुर्मा[३] ददा इति ।**
**रुद्रस्यास्तां ते[४] हेतिं परि यन्त्यचित्त्या[५] ॥ ५२ ॥**

ये । गोऽपतिम् । पराऽनीय । अथ । आहुः[६] । मा । ददाः । इति ।
रुद्रस्य । अस्ताम्[७] । ते[८] । हेतिम् । परि । यन्ति । अचित्त्या ॥ ५२ ॥

**यदि हुतां यदहुताममा च[९] पचते वशाम् ।**
**देवान्त्सब्राह्मणानृत्वा[९] जिह्मो लोकान्निर्ऋच्छति[१०] ॥ ५३ ॥**

यदि । हुताम् । यदि । अहुताम् । अमा । च । पचते । वशाम् ।
देवान् । सऽब्राह्मणान् । ऋत्वा । जिह्मः । लोकात् । निः । ऋच्छति[११] ॥ ५३ ॥

इति चतुर्थेऽनुवाके प्रथमं सूक्तम् ।

इति चतुर्थोऽनुवाकः ।

ऋ· कश्यप :, दे· ब्रह्मगवी

ब्रह्मगवीविषयमेतत् सूक्तम् । ब्राह्मणस्य गौर्ब्रह्मगवी । तां क्षत्रियो नाददीत । आददीत चेद् वाग् वीर्यं लक्ष्मीस्तं हास्यति । ओजआदि नशिष्यति । तां क्षत्रियो न हन्यात् न पचेत् न भक्षेत् । सा हि हता सती नानाविधा आपदो नानाविधान् मृत्यून् नानाविधानि च दुःखानि ऐहिकान्यामुष्मिकाणि आवहतीत्याह ।

---

१. एताम् Bp², D², P, P², J. २. आगसः P, J, V; आगसः > आगसः Cp. ३. °थाहु° R², K². ४. तु. W; वैतु. मूको. तें (पपा. ते). ५. यन्त्यचेतसः पै १७, २०, १२. ६. आहुः Bp². ७. अस्ताम् P; अस्ताम् P². ८. वा पै १७, २०, १३. ९. °णान्नृत्वा (°णांनृत्वा O) WM. १०. °र्ऋच्छति A, C, D, E, K, Km, V, Dc, Cs. ११. ऋच्छति P², J, Cp.

संप्रदायानुसारेणास्य सूक्तस्य विनियोगस्तु 'नैतां ते देवाः' (अ ५,१८) इत्यत्र द्रष्टव्यः।

श्रमेण तपसा सृष्टा[1] ब्रह्मणा वित्तर्ते[2] श्रिता ॥ १ ॥

श्रमेण । तपसा । सृष्टा । ब्रह्मणा । वित्ता । ऋते । श्रिता ॥ १ ॥

सत्येनावृता श्रिया प्रावृता यशसा परीवृता[3] ॥ २ ॥

सत्येन । आऽवृता । श्रिया । प्रावृता । यशसा । परिऽवृता ॥ २ ॥

स्वधया परिहिता श्रद्धया पर्यूढा दीक्षया गुप्ता यज्ञे प्रतिष्ठिता लोको निधनम् ॥ ३ ॥

स्वधया । परिऽहिता । श्रद्धया । परिऽऊढा । दीक्षया । गुप्ता । यज्ञे । प्रतिऽस्थिता[4] । लोकः । निऽधनम् ॥ ३ ॥

ब्रह्म पदवायं ब्राह्मणोऽधिपतिः[5] ॥ ४ ॥

ब्रह्म । पदऽवायम् । ब्राह्मणः । अधिऽपतिः ॥ ४ ॥

तामाददानस्य ब्रह्मगवीं जिनतो ब्राह्मणं क्षत्रियस्य ॥ ५ ॥

ताम् । आऽददानस्य । ब्रह्मऽगवीम् । जिनतः । ब्राह्मणम्[6] । क्षत्रियस्य ॥ ५ ॥

अप क्रामति[7] सूनृता वीर्यं[8] ३ पुण्या लक्ष्मीः ॥ ६ ॥

अप । क्रामति । सूनृता । वीर्यम् । पुण्या । लक्ष्मीः ॥ ६ ॥

इति पञ्चमेऽनुवाके प्रथमं पर्यायसूक्तम्।

ओजश्च तेजश्च सहश्च बलं च वाक् चेन्द्रियं च श्रीश्च धर्मश्च ॥ १ ॥ [७]

ओजः । च । तेजः । च । सहः । च । बलम् । च । वाक् । च । इन्द्रियम् । च । श्रीः । च । धर्मः । च ॥ १ ॥

ब्रह्म च क्षत्रं च राष्ट्रं च विशश्च त्विषिश्च यशश्च वर्चश्च द्रविणं च ॥२॥ [८]

ब्रह्म । च । क्षत्रम् । च । राष्ट्रम् । च । विशः । च । त्विषिः । च । यशः । च । वर्चः । च । द्रविणम् । च ॥ २ ॥

---

१. दृष्टा Bh. २. वित्त ऋते RW. पै १६,१४०,१. ३. परिवृता पै १६,१४०,२. ४. °ताः P,P2,J. ५. °णो अधि° पै १६,१४०,४. ६. ब्राह्मणम् P. ७. क्रामतु पै १६,१४०,६. ८. वीर्यं ३ A,B,Bh,D,E,R,Sm,Dc,Cs.

आयुश्च रूपं च नाम च कीर्तिश्च प्राणश्चापानश्च चक्षुश्च श्रोत्रं च ॥३॥ [९]

आयुः । च । रूपम् । च । नाम । च । कीर्तिः । च । प्राणः । च । अपानः । च । चक्षुः । च । श्रोत्रम् । च ॥ ३ ॥

पयश्च रसश्चान्नं चान्नाद्यं चर्तं[1] च सत्यं चेष्टं च पूर्तं च प्रजा च पशवश्च ॥४॥

पयः । च । रसः । च । अन्नम् । च । अन्नऽअद्यम् । च । ऋतम् । च । सत्यम् । च । इष्टम् । च । पूर्तम् । च । प्रऽजा । च । पशवः । च ॥ ४ ॥ [१०]

तानि सर्वाण्यप क्रामन्ति[2] ब्रह्मगवीमाददानस्य जिनतो ब्राह्मणं क्षत्रियस्य ।५ ।[११]

तानि । सर्वाणि । अप । क्रामन्ति । ब्रह्मऽगवीम् । आऽददानस्य । जिनतः । ब्राह्मणम्[3] । क्षत्रियस्य ॥

इति पञ्चमेनुवाके द्वितीयं पर्यायसूक्तम् ।

ऋ. कश्यप, दे. ब्रह्मगवी

सैषा भीमा ब्रह्मगव्य्[4] घविषा साक्षात् कृत्या कूल्बजमावृता[5] ॥ १ ॥ [१२]

सा । एषा । भीमा । ब्रह्मऽगवी । अघऽविषा । सऽअक्षात् । कृत्या । कूल्बजम् । आऽवृता[6] ॥

सर्वाण्यस्यां घोराणि सर्वे च मृत्यवः ॥ २ ॥ [१३]

सर्वाणि । अस्याम् । घोराणि । सर्वे । च । मृत्यवः ॥ २ ॥

सर्वाण्यस्यां क्रूराणि सर्वे पुरुषवधाः ॥ ३ ॥ [१४]

सर्वाणि । अस्याम् । क्रूराणि । सर्वे । पुरुषऽवधाः ॥ ३ ॥

सा ब्रह्मज्यं देवपीयुं[7] ब्रह्मगव्यादीयमाना[8] मृत्योः पड्वीश[9] आ द्यति ।४। [१५]

सा । ब्रह्मऽज्यम् । देवऽपीयुम्[10] । ब्रह्मऽगवी । आऽदीयमाना । मृत्योः । पड्वीशे । आ । द्यति ॥

मेनिः शतवधा हि सा ब्रह्मज्यस्य क्षितिर्हि सा ॥ ५ ॥[१६]

मेनिः । शतऽवधा । हि । सा । ब्रह्मऽज्यस्य । क्षितिः । हि । सा ॥ ५ ॥

---

१. च ऋतं RW. पै १६,१४१,४. २. क्रामति A,B. ३. ब्रह्मणम् P. ४. °व्यू३° B,Bh,C,D,K,Km,Sm,V,Dc,Cs; °व्या३° A,E. ५. पूलपाण्यज ? आवृता पै १६,१४२,१. ६. आवृता P. ७. °पीयू D,Sm,Cs. ८. °गव्या३दीय° B², P³, M, W, E²; °गव्यानीय° पै १६,१४२,४. ९. °वीश B; °वीश C,K,Km; °विश V,Dc; °बीष पै. १०. °पीयूम् P.

तस्माद् वै ब्राह्मणानां गौर्दुराधर्षा विजानता ॥ ६ ॥ [१७]

तस्मात् । वै । ब्राह्मणानाम् । गौः । दुःऽआधर्षा । विऽजानता ॥ ६ ॥

वज्रो धावन्ती वैश्वानर उद्वीता[1] ॥ ७ ॥ [१८]

वज्रः । धावन्ती । वैश्वानरः । उत्ऽवीता ॥ ७ ॥

हेतिः शफानुत्खिदन्ती[2] महादेवो३ऽपेक्षमाणा[3] ॥ ८ ॥ [१९]

हेतिः । शफान् । उत्ऽखिदन्ती । महाऽदेवः । अपऽईक्षमाणा ॥ ८ ॥

क्षुरपविरीक्षमाणा [4]वाश्यमानाभि स्फूर्जति[4] ॥ ९ ॥ [२०]

क्षुरऽपविः । ईक्षमाणा । वाश्यमाना[5] । अभि । स्फूर्जति[6] ॥ ९ ॥

[7]मृत्युर्हिङ्कृण्वत्यु१ग्रो[7] देवः पुच्छं पर्यस्यन्ती ॥ १० ॥ [२१]

मृत्युः । हिङ्ऽकृण्वती[8] । उग्रः । देवः । पुच्छम् । परिऽअस्यन्ती ॥ १० ॥

सर्वज्यानिः कर्णौ वरीवर्जयन्ती राजयक्ष्मो मेहन्ती ॥ ११ ॥ [२२]

सर्वऽज्यानिः । कर्णौ । वरीवर्जयन्ती । राजऽयक्ष्मः । मेहन्ती ॥ ११ ॥

मेनिर्दुह्यमाना शीर्षक्तिर्दुग्धा ॥ १२ ॥ [२३]

मेनिः । दुह्यमाना । शीर्षक्तिः । दुग्धा ॥ १२ ॥

सेदिरुपतिष्ठन्ती मिथोयोधः[9] परामृष्टा ॥ १३ ॥ [२४]

सेदिः । उपऽतिष्ठन्ती । मिथःऽयोधः । पराऽमृष्टा ॥ १३ ॥

शरव्या३ [10]मुखेऽपिनह्यमान ऋतिर्हन्यमाना[10] ॥ १४ ॥ [२५]

शरव्या । मुखे । अपिऽनह्यमाने[10] । ऋतिः । हन्यमाना ॥ १४ ॥

---

१. उद्वीता E. २. °दंतिं A,Bh; शफान् निरूहन्ती पै १६,१४२,७. ३. °देवो१° D; °देवो नापेक्षमाणा पै १६,१४२,६. ४. °स्पूर्जति C; °मानानु स्फूर्जयति पै १६,१४२,४. ५. वास्यमाना Bp². ६. स्फुर्जति P². ७. °त्यू३° A,Bh,C,E,K,Km,V,Dc,WM.; °कृण्वत्यूग्रो D,R,Cs; °कृण्वत्यूग्रो > °कृण्वत्यू३ग्रो Sm. ८. हिङ्कृ° P,P². ९. °योनः K. १०. °ने ऋतिं° A,Bh,E,R; °न ऋतिं° C; °नेरतिं° °नेरितिं° Cl; K,Km,Sm,V,Cs; °न ऋतिं° > °नेरितिं° Dc; °नह्यमाने P,P²,J,Cp; °हुव्यमाना K.

अघविषा निपतन्ती[1] तमो निपतिता ॥ १५ ॥ [२६]

अघऽविषा । निऽपतन्ती । तमः । निऽपतिता ॥ १५ ॥

अनुगच्छन्ती प्राणानुप दासयति ब्रह्मगवी ब्रह्मज्यस्य ॥ १६ ॥ [२७]

अनुऽगच्छन्ती । प्राणान् । उप । दासयति । ब्रह्मऽगवी । ब्रह्मऽज्यस्य ॥ १६ ॥

इति पञ्चमेऽनुवाके तृतीयं पर्यायसूक्तम् ।

ऋ॰ कश्यपः, दे॰ ब्रह्मगवी

वैरं विकृत्यमाना पौत्राद्यं विभाज्यमाना ॥ १ ॥ [२८]

वैरम् । विऽकृत्यमाना । पौत्रऽआद्यम् । विऽभाज्यमाना ॥ १ ॥

देवहेतिर्ह्रियमाणा[2] व्यृद्धिर्हृता[3] ॥ २ ॥ [२९]

देवऽहेतिः[4] । ह्रियमाणा । विऽऋद्धिः । हृता[5] ॥ २ ॥

पाप्माधिधीयमाना[6] पारुष्यमवधीयमाना ॥ ३ ॥ [३०]

पाप्मा । अधिऽधीयमाना । पारुष्यम् । अवऽधीयमाना ॥ ३ ॥

विषं प्रयस्यन्ती[7] तक्मा प्रयस्ता ॥ ४ ॥ [३१]

विषम् । प्रऽयस्यन्ती[7] । तक्मा । प्रऽयस्ता ॥ ४ ॥

अघं पच्यमाना दुष्वप्न्यं पक्वा ॥ ५ ॥ [३२]

अघम् । पच्यमाना । दुःऽस्वप्न्यम् । पक्वा ॥ ५ ॥

मूलबर्हणी पर्याक्रियमाणा क्षितिः पर्याकृता ॥ ६ ॥ [३३]

मूलऽबर्हणी । परिऽआक्रियमाणा । क्षितिः । परिऽआकृता ॥ ६ ॥

असंज्ञा गन्धेन 'शुगुद्ध्रियमाणाशीविष' उद्धृता[9] ॥ ७ ॥ [३४]

असम्ऽज्ञा । गन्धेन । शुक् । उद्ध्रियमाणा[10] । आशीविषः । उद्धृता ॥ ७ ॥

---

१. व्यथन्ती पै १६,१४३,६.  २. °हृय° A,C,D,E,R,S^m,Cs,WM; ह्रीय° ह्रिय° WM.  ३. व्यृद्धिर्हृता E,R; वृद्धिर्हृता B^h.  ४. देवाऽहेतिः P.  ५. ऋता P,Bp². ६. पाप्मा निधी° पै १६,१४३,३.  ७. प्रयछन्ती B^h,E; °यछं° > °यस्यं° B²,M; °यस्यंछंती P³,W; °यछंती Bp².  ८. शकुंध्रि° A; शनुकुध्रि° B; शगुंध्रि° D,K,K^m,S^m,V,Dc,Cs. ९. उद्दृता B.  १०. उध्रिय° P,P²,J,Cp,Bp².

अभूतिरुपह्रियमाणा[1] पराभूतिरुपहता[2] ॥ ८ ॥ [३५]

अभूतिः । उपऽह्रियमाणा । पराऽभूतिः । उपऽहता[3] ॥ ८ ॥

शर्वः क्रुद्धः पिश्यमाना शिमिदा पिशिता ॥ ९ ॥ [३६]

शर्वः । क्रुद्धः । पिश्यमाना । शिमिदा । पिशिता ॥ ९ ॥

अवर्तिरश्यमाना निर्ऋतिराशिता ॥ १० ॥ [३७]

अवर्तिः । अश्यमाना[4] । निःऽऋतिः । आशिता ॥ १० ॥

अशिता लोकाच्छिनत्ति[5] ब्रह्मगवी[6] ब्रह्मज्यमस्माच्चामुष्माच्च ॥ ११ ॥ [३८]

अशिता । लोकात्[7] । छिनत्ति । ब्रह्मऽगवी । ब्रह्मऽज्यम् । अस्मात् । च । अमुष्मात् । च ॥ ११ ॥

इति पञ्चमेऽनुवाके चतुर्थं पर्यायसूक्तम् ।

ऋ. कश्यपः, दे. ब्रह्मगवी

तस्या आहननं कृत्या मेनिराशसनं वलग[8] ऊबध्यम् ॥ १ ॥ [३९]

तस्याः । आऽहननम् । कृत्या । मेनिः । आऽशसनम् । वलगः । ऊबध्यम् ॥ १ ॥

अस्वगता परिह्णुता[9] ॥ २ ॥ [४०]

अस्वगता । परिऽह्णुता ॥ २ ॥

अग्निः क्रव्याद् भूत्वा ब्रह्मगवी ब्रह्मज्यं प्रविश्यात्ति ॥ ३ ॥ [४१]

अग्निः । क्रव्यऽअत् । भूत्वा । ब्रह्मऽगवी । ब्रह्मऽज्यम् । प्रऽविश्य । अत्ति ॥ ३ ॥

सर्वास्याङ्गा पर्वा मूलानि वृश्चति ॥ ४ ॥ [४२]

सर्वा । अस्य । अङ्गा । पर्वा । मूलानि । वृश्चति ॥ ४ ॥

छिनत्त्यस्य[10] पितृबन्धु परा भावयति[11] मातृबन्धु ॥ ५ ॥ [४३]

छिनत्ति । अस्य । पितृऽबन्धु । परा । भावयति । मातृऽबन्धु ॥ ५ ॥

---

१. ह्रीय°, ह्रिय° WM. २. °पहता P³,M,W. ३. उपऽहूता D². ४. °नाः P.
५. लोकांछि° Bʰ,C K,Kᵐ,Sᵐ,V,M,R²,T; लोकात् छि° O; लोका ( च् ? ) छि° MW.
६. ब्रह्मचारी पै १६,१४४,१०. ७. लोकान् Bp². ८. वलगहनम् पै १६,१४५,१.
९. परिह्नुता (ह्नु ?) Bʰ,Sᵐ; मलिन्वता ? पै १६,१४५,२. १०. छिनत्त्वस्य पै १६,१४५,५.
११. °यतु पै.

**विवाहां ज्ञातीन्त्सर्वानपि क्षापयति[1] ब्रह्मगवी ब्रह्मज्यस्य [2]क्षत्रियेणापुनर्दीयमाना[2] ।६।**

विऽवाहान् । ज्ञातीन् । सर्वान् । अपि । क्षापयति । ब्रह्मऽगवी । ब्रह्मऽज्यस्य । क्षत्रियेण । अपुनःऽदीयमाना[3] ॥ ६ ॥ [४४]

**अवास्तुमेनमस्वगमप्रजसं करोत्यपरापरणो भवति[4] क्षीयते ॥ ७ ॥ [४५]**

अवास्तुम् । एनम् । अस्वगम् । अप्रजसम् । करोति । अपराऽपरणः । भवति । क्षीयते ॥

**य एवं विदुषो ब्राह्मणस्य क्षत्रियो गामादत्ते ॥ ८ ॥ [४६]**

यः । एवम् । विदुषः । ब्राह्मणस्य । क्षत्रियः । गाम् । आऽदत्ते ॥ ८ ॥

**इति पञ्चमेऽनुवाके पञ्चमं पर्यायसूक्तम् ।**

ऋ: कश्यपः, दे: ब्रह्मगवी

**क्षिप्रं वै तस्याहनने गृध्राः कुर्वत ऐलबम्[5] ॥ १ ॥ [४७]**

क्षिप्रम् । वै । तस्य । आऽहनने । गृध्राः । कुर्वते । ऐलबम्[6] ॥ १ ॥

**क्षिप्रं वै तस्यादहनं परि नृत्यन्ति केशिनीराघ्नानाः**
**पाणिनोरसि कुर्वाणाः पापमैलबम्[5] ॥ २ ॥ [४८]**

क्षिप्रम् । वै । तस्य । आऽदहनम् । परि । नृत्यन्ति । केशिनीः । आऽघ्नानाः । पाणिना । उरसि । कुर्वाणाः । पापम् । ऐलबम्[6] ॥ २ ॥

**क्षिप्रं वै तस्य[7] वास्तुषु वृकाः कुर्वत ऐलबम् ॥ ३ ॥ [४९]**

क्षिप्रम् । वै । तस्य । वास्तुषु । वृकाः । कुर्वते । ऐलबम् ॥ ३ ॥

**क्षिप्रं वै तस्य पृच्छन्ति यत् तदासी३दिदं[8] नु ता३दिति[9] ॥ ४ ॥ [५०]**

क्षिप्रम् । वै । तस्य । पृच्छन्ति । यत् । तत् । आसी३त्[10] । इदम् । नु । ता३त्[11] । इति ॥४॥

**छिन्ध्या च्छिन्धि प्र च्छिन्ध्यपि क्षापय क्षापय ॥ ५ ॥ [५१]**

---

१. °यतु पै १६,१४५,६. २. क्षत्रियस्यापु° पै.; °पुनर्दीयमाना A,B,Bh,D,K,Km,V,Dc, O,T,R२; °पुनर्दीयमाना Cs. ३. अपुनःऽद्रीयमाना D२,P२; अपुनः । द्रीयमाना V,Cp. ४. भवति B; भवतु पै १६,१४५,७. ५. °लवम् पै १६,१४५,१०. ६. एलबम् P. ७. तस्या B. ८. तदासीदिदं K,Km,V; तदासी१दिदं D,Cs; तदासीदिदं C; तदासी३ दिदं Sm,O. ९. ता१दिति D,Cs,Sm. १०. आसीत्३ P; आसी३त् D२,P२,R२; आसीत् > आसीत् Cp. ११. तात्३ P; ता३त् P२; तात् > तात्३ Cp.

छिन्धि । आ । छिन्धि । प्र । छिन्धि । अपि । क्षापय । क्षापय ॥ ५ ॥

**'आददानमाङ्गिरसि ब्रह्मज्यमुप' दासय ॥ ६ ॥ [५२]**

आऽददानम् । आङ्गिरसि[२] । ब्रह्मऽज्यम् । उप । दासय ॥ ६ ॥

**वैश्वदेवी ह्यु१च्यसे[३] कृत्या कूल्बजमावृता[४] ॥ ७ ॥ [५३]**

वैश्वऽदेवी । हि । उच्यसे । कृत्या । कूल्बजम्[५] । आऽवृता ॥ ७ ॥

**ओषन्ती समोषन्ती ब्रह्मणो वज्रः ॥ ८ ॥ [५४]**

ओषन्ती । समऽओषन्ती । ब्रह्मणः । वज्रः ॥ ८ ॥

**क्षुरपविर्मृत्युर्भूत्वा वि धाव त्वम् ॥ ९ ॥ [५५]**

क्षुरऽपविः । मृत्युः । भूत्वा । वि । धाव । त्वम् ॥ ९ ॥

**आ दत्से जिनतां वर्च इष्टं पूर्तं चाशिषः ॥ १० ॥ [५६]**

आ । दत्से । जिनताम् । वर्चः । इष्टम् । पूर्तम् । च । आऽशिषः ॥ १० ॥

**आदाय जीतं जीताय लोके३ऽमुष्मिन्[६] प्र यच्छसि ॥ ११ ॥ [५७]**

आऽदाय । जीतम् । जीताय । लोके । अमुष्मिन् । प्र । यच्छसि ॥ ११ ॥

**अघ्न्ये[७] पदवीर्भव ब्राह्मणस्याभिशस्त्या ॥ १२ ॥ [५८]**

अघ्न्ये । पदऽवीः । भव । ब्राह्मणस्य । अभिऽशस्त्या ॥ १२ ॥

**मेनिः शरव्या३ भवाघादघविषा भव ॥ १३ ॥ [५९]**

मेनिः । शरव्या३ । भव । अघात् । अघऽविषा । भव ॥ १३ ॥

**अघ्न्ये[८] प्र शिरो जहि ब्रह्मज्यस्य कृतागसो देवपीयोरराधसः ॥१४॥ [६०]**

अघ्न्ये । प्र । शिरः । जहि । ब्रह्मऽज्यस्य । कृतऽआगसः । देवऽपीयोः । अराधसः ॥१४॥

---

१. °रसिब्र° B,K^m; °ज्यमति पै १६,१४६,२. २. °रसि P. ३. ह्यूच्य° D,Cs; ह्यु३° E,R; ह्यू१° K; ह्यु१° V; ह्यु१° Dc; ह्यू३° A,B^h,C. ४. पूल्पजामा° पै १६,१४६,३. ५. कूल्वजम् P². ६. लोके१° B; लोके अमु° पै १६,१४६,७. ७. अघ्न्ये३ R,S^m. ८. अघ्न्ये R.

**त्वया प्रमूर्णं मृदितमग्निर्दहतु दुश्चितम् ॥ १५ ॥ [६१]**

त्वया । प्रऽमूर्णम् । मृदितम् । अग्निः । दहतु । दुःऽचितम् ॥ १५ ॥

**इति पञ्चमेनुवाके षष्ठं पर्यायसूक्तम् ।**

ऋ० कश्यपः, दे० ब्रह्मगवी

**वृश्च प्र वृश्च सं वृश्च दह प्र दह सं दह ॥ १ ॥ [६२]**

वृश्च । प्र । वृश्च । सम् । वृश्च । दह । प्र । दह । सम् । दह ॥ १ ॥

**ब्रह्मज्यं देव्यघ्न्य आ मूलादनुसंदह[1] ॥ २ ॥ [६३]**

ब्रह्मऽज्यम् । देवि । अघ्न्ये । आ । मूलात् । अनुऽसंदह ॥ २ ॥

**यथायाद्[2] यमसादनात् पापलोकान् परावतः ॥ ३ ॥ [६४]**

यथा । अयात्[2] । यमऽसदनात् । पापऽलोकान् । पराऽवतः ॥ ३ ॥

**एवा त्वं देव्यघ्न्ये ब्रह्मज्यस्य कृतागसो देवपीयोरराधसः ॥ ४ ॥ [६५]**

एव । त्वम् । देवि । अघ्न्ये । ब्रह्मऽज्यस्य । कृतऽआगसः । देवऽपीयोः । अराधसः ॥४॥

**वज्रेण शतपर्वणा तीक्ष्णेन क्षुरभृष्टिना ॥ ५ ॥ [६६]**

वज्रेण । शतऽपर्वणा । तीक्ष्णेन । क्षुरऽभृष्टिना ॥ ५ ॥

**प्र स्कन्धान् प्र शिरो जहि ॥ ६ ॥ [६७]**

प्र । स्कन्धान् । प्र । शिरः । जहि ॥ ६ ॥

**लोमान्यस्य सं छिन्धि त्वचमस्य वि वेष्टय ॥ ७ ॥[६८]**

लोमानि । अस्य । सम् । छिन्धि । त्वचम् । अस्य । वि । वेष्टय ॥ ७ ॥

**मांसान्यस्य शातय स्नावान्यस्य सं वृह[3] ॥ ८ ॥ [६९]**

मांसानि । अस्य । शातय । स्नावानि । अस्य । सम् । वृह[4] ॥ ८ ॥

**अस्थीन्यस्य पीडय मज्जानमस्य निर्जहि ॥ ९ ॥ [७०]**

---

१. मूलाननु° B¹,P³,M. २. मूको. तथैव. ३. बृंह D,E,Kᵐ,Sᵐ. ४. बृह Cp.

अस्थीनि । अस्य । पीडय । मज्जानम् । अस्य । निः । जहि ॥ ९ ॥

सर्वास्याङ्गा पर्वाणि वि श्रथय ॥ १० ॥

सर्वा । अस्य । अङ्गा । पर्वाणि । [1]वि । श्रथय[1] ॥ १० ॥

अग्निरेनं क्रव्यात् पृथिव्या नुदतामुदोषतु वायुरन्तरिक्षान्महतो वरिम्णः ॥११॥

अग्निः । एनम् । क्रव्यऽअत् । पृथिव्याः । नुदताम् । उत् । ओषतु । वायुः । अन्तरिक्षात् । महतः । वरिम्णः ॥ ११ ॥

सूर्य एनं दिवः प्र णुदतां न्योषतु ॥ १२ ॥

सूर्यः । एनम् । दिवः । प्र । नुदताम् । नि । ओषतु ॥ १२ ॥

इति पञ्चमेऽनुवाके सप्तमं पर्यायसूक्तम् ।

इति पञ्चमोऽनुवाकः ।

इति द्वादशं काण्डं समाप्तम् ।



---

१. विश्र° J,V,Cp; वि । श्रथय P[2]; विश्रथय P.

अथ

# त्रयोदशं काण्डम्

'उदेहि वाजिन्' इति सूक्तं रोहितदेवताकम् । रोहितः कश्चिद् देवः । उद्यन् यः सूर्यस्तदात्मक इति ज्ञेयम् । रोहितसाहचर्येण मरुतः इन्द्रः अज एकपादः अग्निः सविता मित्रावरुणौ क्रव्याद् अग्निः सूर्य इत्यादयो देवा अप्याहूता वर्णिताश्च । रोहितस्य तथा तत्संबन्धिदेवानामत्र वर्णने प्रयोजनं राज्ञो राष्ट्रस्य भरणम् इति सूक्त इतस्ततो द्रष्टव्यम् ।

क्वचिन्मन्त्रेषु रोहितपदस्य निर्वचनं रुहो रुरोह प्ररुहो रुरोह द्यावापृथिवीभ्यां रुरोहेति रोहित इति ध्वनितम् ।

याज्ञिकास्तु वक्ष्यमाणप्रकारेण विनियुञ्जते । तद्यथा —

अर्थकामः 'उदेहि वाजिन्' इत्यादिविंशत्यृग्भिरुद्यन्तम् आदित्यम् उपतिष्ठते ।

तथा अर्थोत्थापनकामः उक्तविंशत्यृग्भिः स्नानं कृत्वा उपतिष्ठते ।

तथा अर्थसिद्धिकामः अहतवस्त्रपरिधानं कृत्वा उक्ताभिर्ऋग्भिरुपतिष्ठते ।

तथा अर्थो मम सिध्येद् एवंकामस्ताभिर्ऋग्भिर्वस्त्रम् अभिमन्त्र्य परिधापयति ।

तथा विद्रावणादिविषये शमनकामः उक्ताभिर्ऋग्भिर्वस्त्रम् अभिमन्त्र्य ददाति ।

सूत्रितं हि — " 'उत्तमेन' ( अ ६,९२ ) वाचस्पतिलिङ्गाभिरुद्यन्तमुपतिष्ठते । स्नातोऽहतवसनो निक्त्वाहतमाच्छादयते[1] । ददाति" ( कौसू ४१,१५-१७ ) इति । उदेहि वाजिन्निति विंशत्यृचो वाचस्पतिलिङ्गा इति केशवः ।

'यो रोहितः' ( २५,२६ ) इति द्वयोर्ऋचोः सलिलगणे पाठः । अतः 'सलिलैः क्षीरौदनम् अश्नाति । मन्थान्तानि' ( कौसू १८,२५;२६ ), 'सलिलैः सर्वकामः' ( कौसू २४,४६ ) इत्यादौ चास्य विनियोगः । सलिलगणश्च 'आपो हि ष्ठा' ( अ १,५ ) इति सूक्ते द्रष्टव्यः ।

'समिद्धो अग्निः समिधानो घृतवृद्धः' ( २८-३२ ) इति पञ्चर्चस्य विनियोगो 'य इमे द्यावापृथिवी' ( अ १३,३ ) इत्यत्र द्रष्टव्यः ।

---

१. °यति Bl.

उदेहि वाजिन् यो अप्स्व१न्तरिदं[1] राष्ट्रं प्र[2] विश सूनृतावत् ।
यो रोहितो विश्वमिदं जजान स[3] त्वा राष्ट्राय सुभृतं[4] बिभर्तु[3] ॥ १ ॥

उत्ऽएहि । वाजिन् । यः । अप्ऽसु । अन्तः । इदम् । राष्ट्रम् । प्र । विश । सूनृताऽवत् ।
यः । रोहितः । विश्वम् । इदम् । जजान । सः । त्वा । राष्ट्राय । सुऽभृतम् । बिभर्तु ॥ १ ॥

उद्वाज आ गन् यो अप्स्व१न्तर्विश आ रोह त्वद्योनयो याः ।
सोमं दधानोप ओषधीर्गाश्चतुष्पदो द्विपद आ वेशयेह ॥ २ ॥

उत् । वाजः । आ । गन् । यः । अप्ऽसु । अन्तः । विशः । आ । रोह । त्वत्ऽयोनयः । याः ।
सोमम् । दधानः । अपः । ओषधीः । गाः । चतुःऽपदः । द्विऽपदः । आ । वेशय । इह ॥ २ ॥

यूयमुग्रा[5] मरुतः पृश्निमातर इन्द्रेण[6] युजा प्र मृणीत[5] शत्रून् ।
आ वो[6] रोहितः शृणवत् सुदानवस्त्रिषप्तासो[6] मरुतः स्वादुसंमुदः ॥ ३ ॥

यूयम् । उग्राः । मरुतः । पृश्निऽमातरः । इन्द्रेण । युजा । प्र । मृणीत । शत्रून् ।
आ । वः । रोहितः । शृणवत् । सुऽदानवः । त्रिऽसप्तासः । मरुतः । स्वादुऽसंमुदः ॥ ३ ॥

[7]रुहो रुरोह[7] रोहित आ रुरोह[8] गर्भो जनीनां[8] जनुषामुपस्थम् ।
ताभिः[9] संरब्धमन्वविन्दन्[9] षडुर्वीर्गातुं प्रपश्यन्निह राष्ट्रमाहाः ॥ ४ ॥

रुहः । रुरोह । रोहितः । आ । रुरोह । गर्भः । जनीनाम् । जनुषाम् । उपऽस्थम् । ताभिः ।
सम्ऽरब्धम् । अनु । अविन्दन् । षट् । उर्वीः । गातुम् । प्रऽपश्यन् । इह । राष्ट्रम् । आ । अहाः ॥

आ ते राष्ट्रमिह रोहितोऽहार्षीद्[10] व्यास्थन्मृधो[11] अभयं[12] ते अभूत्[12] ।
तस्मै ते द्यावापृथिवी[13] रेवतीभिः कामं[14] दुहातामिह[15] शक्वरीभिः ॥ ५ ॥

आ । ते । राष्ट्रम् । इह । रोहितः । अहार्षीत् । वि । आस्थत् । मृधः । अभयम् । ते ।

---

१. °स्वर्३° B, B^h, C, D, E, R, S^m, Cs. २. आ तैब्रा २,५,२,१. ३. नो राष्ट्रेषु सुधितान् दधातु तैब्रा. ४. पिपर्तु पै १८,१५,१. ४. °मुग्रा तैब्रा २,५,२,३. ५. सयुजा प्रमृणीथ तैब्रा. ६. °वस्त्रिषप्तासो शंपा. सात.; °तो अश्रृणोदभियवः । त्रिसप्तासो तैब्रा. ७. रोह९ रोह९ तैब्रा. ८. प्रजाभिर्वृद्धिं तैब्रा. ९. संरभध्वम्° K, K^m, V, Dc; °ब्धो अन्वविन्दत् पै १८,१५,४; °ब्धो अविदत् तैब्रा. १०. °तो अहा° A, D, S^m, Cs; °तो अहार् पै १८,१५,५; आहार्षीद् तैब्रा. ११. व्यास्थ° B^h, C, E, R, S^m; व्यस्थाद्° पै. १२. नो अस्तु तैब्रा. १३. द्यावापृथिवी तैब्रा २,५,२,२. १४. राष्ट्रं तैब्रा. १५. तु. P^3, M, W, E, RW. पै.; वैतु. शंपा. सात. दुहाथा°, तैब्रा. दुहाथा°.

अभूत् । तस्मै । ते । द्यावापृथिवी इति । रेवतीभिः[1] । कामम् । दुहाताम्[2] । इह । शक्वरीभिः ॥

रोहितो द्यावापृथिवी जजान तत्र[3] तन्तुं परमेष्ठी ततान ।
तत्र[3] शिश्रियेज[4] एकपादोदृंहद्[5] द्यावापृथिवी बलेन ॥ ६ ॥

रोहितः । द्यावापृथिवी इति । जजान । तत्र । तन्तुम् । परमेऽस्थी । ततान ।
तत्र । शिश्रिये । अजः । एकऽपादः । अदृंहत् । द्यावापृथिवी इति । बलेन ॥ ६ ॥

रोहितो द्यावापृथिवी अदृंहत् तेन स्व[6] स्तभितं तेन नाकः ।
[7]तेनान्तरिक्षं विमिता रजांसि[7] तेन देवा अमृतमन्वविन्दन्[8] ॥ ७ ॥

रोहितः । द्यावापृथिवी इति । अदृंहत् । तेन । स्वः । स्तभितम् । तेन । नाकः ।
तेन । अन्तरिक्षम् । विऽमिता । रजांसि । तेन । देवाः । अमृतम् । अनु । अविन्दन् ॥७॥

[9]वि रोहितो अमृशद् विश्वरूपं †समाकुर्वाणः[9] प्ररुहो रुहश्च ।
दिवं रूढ्वा[10] महता महिम्ना [11]सं ते राष्ट्रमनक्तु पयसा घृतेन[11] ॥ ८ ॥

वि । रोहितः । अमृशत् । विश्वऽरूपम् । समऽआकुर्वाणः । प्रऽरुहः । रुहः । च ।
दिवम् । रूढ्वा । महता । महिम्ना । सम् । ते । राष्ट्रम् । अनक्तु । पयसा । घृतेन ॥ ८ ॥

यास्ते रुहः प्ररुहो यास्त आरुहो याभिरापृणासि दिवमन्तरिक्षम् ।
तासां ब्रह्मणा पयसा वावृधानो विशि राष्ट्रे जागृहि रोहितस्य ॥ ८ ॥

याः । ते । रुहः । प्रऽरुहः । याः । ते । आऽरुहः । याभिः । आऽपृणासि । दिवम् । अन्तरिक्षम् ।
तासाम् । ब्रह्मणा । पयसा । ववृधानः । विशि । राष्ट्रे । जागृहि । रोहितस्य ॥ ९ ॥

यास्ते विशस्तपसः[12] संबभूवुर्वत्सं [13]गायत्रीमनु [14]ता इहागुः[14] ।
तास्त्वा विशन्तु मनसा[15] शिवेन[16] संमाता वत्सो[17] अभ्येतु रोहितः ॥ १० ॥

---

१. रेवतिभिः P. २. तु. मंपा.; वैतु. शंपा. दुहाथाम्. ३. तस्मिन् तैब्रा २,५,२,३. ४. °ये अज पै १८,१५,६ तैब्रा. ५. °पादर्हं° पै. तैब्रा. ६. स्व B,B^h,D,E,R,S^m; सुवः तैब्रा. ७. सो अन्तरिक्षे रजसो विमानः तैब्रा २,५,२,४. ८. सुवरन्व° तैब्रा. ९. विमर्मर्श रोहितो विश्वरूपः । समाचक्राणः तैब्रा २,५,२,२. † समाकृण्वानः पै १८,१५,८. १०. रूढ्वा R; गत्वाय तैब्रा. ११. वि नो राष्ट्रमुनत्तु पयसा स्वेन तैब्रा. १२. तपसा पै. तैब्रा. १३. गायत्रम् तैब्रा. १४. तास्त आगुः तैब्रा. १५. महसा तैब्रा. १६. स्वेन तैब्रा. १७. पुत्रो तैब्रा.

याः । ते । विशः । तपसः । सम्ऽबभूवुः । वत्सम् । गायत्रीम् । अनु । ताः । इह । आ । अगुः ।
ताः । त्वा । आ विशन्तु । मनसा । शिवेन । सम्ऽमाता । वत्सः । अभि । एतु । रोहितः ॥१०॥

ऊर्ध्वो रोहितो[1] अधि नाके अस्थाद् विश्वा रूपाणि जनयन् युवा कविः ।
तिग्मेनाग्निर्ज्योतिषा वि भाति तृतीये चक्रे रजसि प्रियाणि ॥ ११ ॥

ऊर्ध्वः । रोहितः । अधि । नाके । अस्थात् । विश्वा । रूपाणि । जनयन् । युवा । कविः ।
तिग्मेन । अग्निः । ज्योतिषा । वि । भाति । तृतीये । चक्रे । रजसि । प्रियाणि ॥ ११ ॥

सहस्रशृङ्गो वृषभो जातवेदा [2]घृताहुतः† सोमपृष्ठः‡ सुवीरः[2] ।
मा मा हासीन्नाथितो नेत् त्वा जहानि [3]गोपोषं च मे† वीरपोषं च ‡धेहि[3] ॥१२॥

सहस्रऽशृङ्गः । वृषभः । जातऽवेदाः । घृतऽआहुतः । सोमऽपृष्ठः । सुऽवीरः[4] । मा । मा ।
हासीत् । नाथितः । न । इत् । त्वा । जहानि । गोऽपोषम् । च । मे । वीरऽपोषम् । च । धेहि ॥

रोहितो यज्ञस्य जनिता मुखं च रोहिताय वाचा श्रोत्रेण मनसा जुहोमि ।
रोहितं देवा यन्ति[5] सुमनस्यमानाः[6] स[7] मा रोहैः सामित्यै रोहयतु[8] ॥ १३ ॥

रोहितः । यज्ञस्य । जनिता । मुखम् । च । रोहिताय । वाचा । श्रोत्रेण । मनसा । जुहोमि ।
रोहितम् । देवाः । यन्ति । सुऽमनस्यमानाः । सः । मा । रोहैः । साम्ऽइत्यै । रोहयतु ॥१३॥

रोहितो यज्ञं व्यदधाद् विश्वकर्मणे तस्मात् तेजांस्युप मेमान्यागुः ।
वोचेयं ते नाभिं भुवनस्याधि मज्मनि[9] ॥ १४ ॥

रोहितः । यज्ञम् । वि । अदधात् । विश्वऽकर्मणे । तस्मात् । तेजांसि । उप । मा । इमानि । आ ।
अगुः । वोचेयम् । ते । नाभिम् । भुवनस्य । अधि । मज्मनि ॥ १४ ॥

आ त्वा रुरोह बृहत्यू३त[10] पङ्क्तिरा ककुब्[11] वर्चसा जातवेदः[12] ।

---

१. गन्धर्वो ऋ १०,१२३,७. २. स्तोमपृष्ठो घृतवान् सुप्रतीकः काठ ३५,१८. † °हुतिः° पै १८,१६,२. ‡ स्तोमपृष्ठः° माश्रौ ३,१,२८. ३. सहस्रपोषः सं गोपोषं च यच्छ काठ. † नो माश्रौ. आपश्रौ ९,३,१. ‡ यच्छ आपश्रौ. आश्रौ १,१२,३७. ४. सुऽवीराः P. ५. यन्तु पै १८,१६,३. ६. तु. RW; वैतु. शंपा. सात. °ना. ७. सं R. ८. रोहयाति पै. ९. मय्मनि B,C,D,E,R,$S^m$,Cs,P,$P^2$,J,Cp; मय्मनि > मज्मनि Dc. १०. °हत्यू३त C,Dc,D,Cs; °हत्यु ३ त्त E,WM; °हत्युत्त R; °हत्यू३त $S^m$. ११. ककुद् पै १८,१६,५. १२. विश्ववेदः पै.

आ त्वा रुरोहोष्णिहाक्षरो[1] वषट्कार आ त्वा रुरोह रोहितो रेतसा सह ॥१५॥

आ । त्वा । रुरोह । बृहती । उत । पङ्क्तिः । आ । ककुप् । वर्चसा । जातऽवेदः । आ । त्वा । रुरोह । उष्णिहाऽअक्षरः । वषट्ऽकारः । आ । त्वा । रुरोह । रोहितः । रेतसा । सह ॥ १५ ॥

अयं वस्ते गर्भं पृथिव्या दिवं[2] वस्तेयमन्तरिक्षम् ।
अयं ब्रध्नस्य विष्टपि[3] स्वर्लोकान् व्यानशे[4] ॥ १६ ॥

अयम् । वस्ते । गर्भम् । पृथिव्याः । दिवम् । वस्ते । अयम् । अन्तरिक्षम् । अयम् । ब्रध्नस्य । विष्टपि । स्वः । लोकान् । वि । आनशे ॥ १६ ॥

वाचस्पते पृथिवी नः[5] स्योना स्योना योनिस्तल्पा नः सुशेवा[6] ।
इहैव प्राणः सख्ये नो अस्तु तं त्वा परमेष्ठिन् [7]पर्यग्निरायुषा वर्चसा दधातु[7] ॥१७॥

वाचः । पते । पृथिवी । नः । स्योना । स्योना । योनिः । तल्पा । नः । सुऽशेवा । इह । एव । प्राणः । सख्ये । नः । अस्तु । तम् । त्वा । परमेऽस्थिन् । परि । अग्निः । आयुषा । वर्चसा । दधातु ॥ १७ ॥

वाचस्पत ऋतवः पञ्च [8]ये नौ[8] वैश्वकर्मणाः परि ये संबभूवुः ।
इहैव प्राणः सख्ये नो अस्तु तं त्वा परमेष्ठिन् परि रोहित आयुषा
वर्चसा दधातु ॥ १८ ॥

वाचः । पते । ऋतवः । पञ्च । ये । नौ । वैश्वऽकर्मणाः । परि । ये । सम्ऽबभूवुः । ० । परि । रोहितः । आयुषा । वर्चसा । दधातु ॥ १८ ॥

वाचस्पते सौमनसं मनश्च गोष्ठे नो गा जनय[9] योनिषु प्रजाः[10] ।
इहैव प्राणः सख्ये नो अस्तु तं त्वा परमेष्ठिन् पर्यहमायुषा वर्चसा दधामि ॥ १९ ॥

वाचः । पते । सौमनसम् । मनः । च । गोऽस्थे । नः । गाः । जनय । योनिषु । प्रऽजाः । ० । परि । अहम् । आयुषा । वर्चसा । दधामि ॥ १९ ॥

परि त्वा धात् सविता देवो अग्निर्वर्चसा मित्रावरुणावभि त्वा ।

---

१. रुरोह रोहिताक्ष° पै. २. दिवं च Bb. ३. विष्टपः पै १८,१६,६. ४. समानशे पै. ५. नं D,E,Sm,Cs. ६. °वाः B,E,K,Km,R. ७. पर्यहं वर्चसा दधामि पै १८,१६,७. ८. योनौ B,Km,I,R. ९. रमय पै १८,१६,९. १०. प्रजाम् पै.

सर्वा अरातीरवक्रामन्नेहीदं[1] राष्ट्रमकरः[2] सूनृतावत् ॥ २० ॥

परि । त्वा । धात् । सविता । देवः । अग्निः । वर्चसा । मित्रावरुणौ । अभि । त्वा ।
सर्वाः । अरातीः । अवऽक्रामन् । आ । इहि । इदम् । राष्ट्रम् । अकरः । सूनृताऽवत् ॥ २० ॥

[3]यं त्वा[3] पृषती रथे [4]प्रष्टिर्वहति रोहित[5] । शुभा[6] [7]यासि रिणन्नपः[7] ॥ २१ ॥

यम् । त्वा । पृषती । रथे । प्रष्टिः[8] । वहति । रोहित[9] । शुभा । यासि । रिणन्[7] । अपः ॥

अनुव्रता रोहिणी रोहितस्य सूरिः सुवर्णा बृहती सुवर्चाः ।
तया वाजान् विश्वरूपां जयेम तया विश्वाः पृतना अभि ष्याम[10] ॥२२॥

अनुऽव्रता । रोहिणी । रोहितस्य । सूरिः । सुऽवर्णा । बृहती । सुऽवर्चाः ।
तया । वाजान् । विश्वऽरूपान्[11] । जयेम । तया । विश्वाः । पृतनाः । अभि । स्याम ॥२२॥

इदं सदो रोहिणी रोहितस्यासौ पन्थाः पृषती येन याति ।
तां[12] गन्धर्वाः[13] कश्यपा उन्नयन्ति[14] तां रक्षन्ति कवयोऽप्रमादम् ॥२३॥

इदम् । सदः । रोहिणी[15] । रोहितस्य । असौ । पन्थाः । पृषती । येन । याति ।
ताम् । गन्धर्वाः[16] । कश्यपाः । उत् । नयन्ति । ताम् । रक्षन्ति । कवयः । अप्रऽमादम् ॥२३॥

सूर्यस्याश्वा हरयः केतुमन्तः सदा वहन्त्यमृताः[17] सुखं रथम् ।
घृतपावा रोहितो भ्राजमानो दिवं देवः पृषतीमा विवेश ॥ २४ ॥

सूर्यस्य । अश्वाः । हरयः । केतुऽमन्तः । सदा । वहन्ति । अमृताः । सुऽखम् । रथम् ।
घृतऽपावा । रोहितः । भ्राजमानः । दिवम् । देवः । पृषतीम् । आ । विवेश ॥ २४ ॥

यो रोहितो वृषभस्तिग्मशृङ्गः पर्यग्निं परि सूर्यं बभूव ।

---

१. °रपक्रा° पै १८,१६,१०. २. राष्ट्रं कृणुहि पै. ३. यदेषां ऋ ८,७,२८. ४. प्रष्ठि° A; पृष्टि° Bh,C.K,Km,V,Dc,WM ; प्रष्टि°>प्रष्ठि° Sm; पृश्नि° पै १८,१७,१. ५. रोहि-तः Bh,R,Sm,Cs,WM.; रोहितः ऋ. ६. शुभ्रा ऋ. ७. यान्ति° ऋ; °ऋण° B,E,K,R,P, P²,J,WM.; यासि रि°>यास्यृ° Sm. ८. पृष्टिः P,P²,Cp. ९. रोहितः P,Cp. १०. स्याम C,M. ११. °रूपाम् P,P²,J,WM; °रूपां Cp. १२. तान् D,Cs. १३. गंधर्वाः A,B,Bh,C,D,E,K,Km,R,Sm,Cs,WM.; गंधर्वाः>गंधर्वाः Dc. १४. °यन्तु पै १८,१७,३. १५. °णीः P,P²J. १६. गन्धर्वाः P,P²,Cp,J. १७. °मृतास् B²,E².

**यो विष्टभ्नाति[1] पृथिवीं दिवं च तस्माद् देवा अधि सृष्टीः सृजन्ते ॥२५॥**

यः । रोहितः । वृषभः । तिग्मऽशृङ्गः । परि । अग्निम् । परि । सूर्यम् । बभूव ।
यः । विऽस्तभ्नाति । पृथिवीम् । दिवम् । च । तस्मात् । देवाः । अधि । सृष्टीः । सृजन्ते ॥२५॥

**रोहितो दिवमारुहन्महतः पर्यर्णवात् । सर्वा रुरोह रोहितो रुहः ॥ २६ ॥**

रोहितः । दिवम् । आ । अरुहत् । महतः । परि । अर्णवात् ।
सर्वाः । रुरोह । रोहितः । रुहः ॥ २६ ॥

**वि मिमीष्व पयस्वतीं घृताचीं देवानां धेनुरनपस्पृगेषा ।**
**इन्द्रः सोमं पिबतु क्षेमो अस्त्वग्निः प्र स्तौतु वि मृधो नुदस्व ॥ २७ ॥**

वि । मिमीष्व । पयस्वतीम् । घृताचीम् । देवानाम् । धेनुः । अनपऽस्पृक् । एषा ।
इन्द्रः । सोमम् । पिबतु । क्षेमः । अस्तु । अग्निः । प्र । स्तौतु । वि । मृधः । नुदस्व ॥२७॥

**समिद्धो अग्निः समिधानो घृतवृद्धो घृताहुतः ।**
**अभीषाड् विश्वाषाडग्निः सपत्नान् हन्तु ये मम ॥ २८ ॥**

सम्ऽइद्धः । अग्निः । सम्ऽइधानः । घृतऽवृद्धः । घृतऽआहुतः ।
अभीषाट् । विश्वाषाट् । अग्निः । सऽपत्नान् । हन्तु । ये । मम ॥ २८ ॥

**हन्त्वेनान् प्र दहत्वरिर्यो[2] नः पृतन्यति[3] ।**
**क्रव्यादाग्निना वयं सपत्नान् प्र दहामसि ॥ २९ ॥**

हन्तु । एनान्[4] । प्र । दहतु । अरिः । यः । नः । पृतन्यति ।
क्रव्यऽअदा । अग्निना । वयम् । सऽपत्नान् । प्र । दहामसि ॥ २९ ॥

**अवाचीनानव[5] जहीन्द्र वज्रेण बाहुमान् ।**
**अधा सपत्नान् मामकानग्नेस्तेजोभिरादिषि[6] ॥ ३० ॥**

अवाचीनान् । अव । जहि । इन्द्र । वज्रेण । बाहुऽमान् ।
अध । सऽपत्नान् । मामकान् । अग्नेः । तेजःऽभिः । आ । अदिषि ॥ ३० ॥

**अग्ने [7]सपत्नानधरान्[7] पादयास्मद् व्यथया सजातमुत्पिपानं बृहस्पते ।**

---

१. °भ्नात् पै १८,१७,५. २. दहत्वग्निर्यो K, पै १८,१७,९. ३. °न्यतु पै. ४. एनाम् P². ५. अर्वाची° B. ६. °रादधे पै १८,१८,१. ७. सपत्नमधरं पै १८,१७,१०.

इन्द्राग्नी मित्रावरुणावधरे पद्यन्तामप्रतिमन्यूयमानाः ॥ ३१ ॥

अग्ने। सऽपत्नान्। अधरान्। पादय। अस्मत्। व्यथय। सऽजातम्। उत्ऽपिपानम्। बृहस्पते। इन्द्राग्नी इति। मित्रावरुणौ। अधरे। पद्यन्ताम्। अप्रतिऽमन्यूयमानाः ॥३१॥

उद्यंस्त्वं देव सूर्य सपत्नानव मे जहि ।
[1]अवैनानश्मना जहि[1] ते यन्त्वधमं तमः॥ ३२ ॥

उत्ऽयन्। त्वम्। देव। सूर्य। सपत्नान्। अव। मे। जहि।
अव। एनान्। अश्मना। जहि। ते। यन्तु। अधमम्। तमः ॥ ३२ ॥

वत्सो विराजो वृषभो मतीनामा रुरोह शुक्रपृष्ठोन्तरिक्षम्[2] ।
घृतेनार्कमभ्यर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा वर्धयन्ति[3] ॥ ३३ ॥

वत्सः। विऽराजः। वृषभः। मतीनाम्। आ। रुरोह। शुक्रऽपृष्ठः[4]। अन्तरिक्षम्।
घृतेन। अर्कम्। अभि। अर्चन्ति। वत्सम्। ब्रह्म। सन्तम्। ब्रह्मणा। वर्धयन्ति ॥३३॥

दिवं च रोह पृथिवीं च रोह राष्ट्रं च रोह द्रविणं च रोह ।
प्रजां च रोहामृतं च रोह रोहितेन तन्वं१[5] सं स्पृशस्व ॥ ३४ ॥

दिवम्। च। रोह। पृथिवीम्। च। रोह। राष्ट्रम्। च। रोह। द्रविणम्। च। रोह।
प्रऽजाम्। च। रोह। अमृतम्। च। रोह। रोहितेन। तन्वम्। सम्। स्पृशस्व ॥३४॥

ये देवा राष्ट्रभृतोऽभितो यन्ति[3] सूर्यम्[6] ।
तैष्टे[7] रोहितः संविदानो राष्ट्रं दधातु सुमनस्यमानः ॥ ३५ ॥

ये। देवाः। राष्ट्रऽभृतः। अभितः। यन्ति। सूर्यम्।
तैः। ते। रोहितः। सम्ऽविदानः। राष्ट्रम्। दधातु। सुऽमनस्यमानः ॥ ३५ ॥

उत् त्वा यज्ञा ब्रह्मपूता वहन्त्यध्वगतो[8] हरयस्त्वा वहन्ति ।
तिरः समुद्रमति रोचसेर्णवम्[9] ॥ ३६ ॥

---

१. दिवैनान् रश्मिभिर्जहि रात्र्यैनान् तपसा वधीस् पै १८,१८,२.　२. शुक्लपृष्ठो अन्त° पै १८,१८,३; °पृष्टो° B,Bh,R,Cs.　३. °न्तु पै.　४. °पृष्टः P[2].　५. तन्वं३ B,Bh,C,D,Sm,Cs.　६. सूर्यस्य पै १८,१८,५.　७. तेभिष्टे पै.　८. °त्यभ्यक्तु? पै १८,१८,६.　९. रोचसे अर्णवम् A,R,Sm, पै.

उत् । त्वा । युज्ञाः । ब्रह्मऽपूताः । वहन्ति । अध्वऽगतः । हरयः । त्वा । वहन्ति । तिरः । समुद्रम् । अति । रोचसे । अर्णवम् ॥ ३६ ॥

रोहिते द्यावापृथिवी अधि श्रिते वसुजिति गोजिति संधनाजिति ।
सहस्रं यस्य जनिमानि सप्त च[1] वोचेयं ते नाभिं भुवनस्याधि मज्मनि[2] ॥३७॥

रोहिते । द्यावापृथिवी इति । अधि । श्रिते इति । वसुऽजिति । गोऽजिति । संधनऽजिति । सहस्रम् । यस्य । जनिमानि । सप्त । च । वोचेयम् । ते । नाभिम् । भुवनस्य । अधि । मज्मनि[2] ॥

यशा यासि प्रदिशो दिशश्च[3] यशाः पशूनामुत चर्षणीनाम् ।
यशाः पृथिव्या अदित्या उपस्थेहं[4] भूयासं सवितेव चारुः ॥ ३८ ॥

यशाः । यासि । प्रऽदिशः । दिशः । च । यशाः । पशूनाम् । उत । चर्षणीनाम् । यशाः । पृथिव्याः । अदित्याः । उपऽस्थे । अहम् । भूयासम् । सविताऽइव । चारुः ॥३८॥

अमुत्र सन्निह वेत्थेतः संस्तानि पश्यसि[5] ।
इतः पश्यन्ति रोचनं दिवि सूर्यं विपश्चितम् ॥ ३९ ॥

अमुत्र । सन् । इह । वेत्थ । इतः । सन् । तानि । पश्यसि । इतः । पश्यन्ति । रोचनम् । दिवि । सूर्यम् । विपःऽचितम् ॥ ३९ ॥

देवो देवान् मर्चयस्यन्तश्चरस्यर्णवे[6] ।
समानमग्निमिन्धते तं विदुः कवयः परे ॥ ४० ॥

देवः । देवान् । मर्चयसि । अन्तः । चरसि । अर्णवे । समानम् । अग्निम् । इन्धते । तम् । विदुः । कवयः । परे ॥ ४० ॥

अवः परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात् ।
सा कद्रीची कं स्विदर्धं परागात् क्व स्वित् सूते नहि यूथे अस्मिन्[7] ॥४१॥

---

१. द्रविणानि सप्ततिर् पै १८,१८,७.  २. मह्मनि B,D,E,R,S[m],Cs,P,P[2],J,Cp.
३. अनु पै १८,१८,८.  ४. उपस्थे अस्मि पै.  ५. पश्यति पै १८,१८,९.
६. °यत्यन्तश्चरत्यर्णवे पै १८,१८,१०.  ७. अन्तः ऋ १,१६४,१७.

अवः । परेण । पुरः । एना । अवरेण । पदा । वत्सम् । बिभ्रती । गौः । उत् । अस्थात् ।
सा । कद्रीची । कम् । स्वित् । अर्धम् । परा । अगात् । क्व । स्वित् । सूते । नहि । यूथे । अस्मिन् ॥

एकपदी द्विपदी सा चतुष्पद्यष्टापदी नवपदी बभूवुषी ।
सहस्राक्षरा [1]भुवनस्य पङ्क्तिस्तस्याः[1] समुद्रा अधि वि क्षरन्ति ॥ ४२ ॥

एकऽपदी । द्विऽपदी । सा । चतुःऽपदी । अष्टाऽपदी । नवऽपदी । बभूवुषी ।
सहस्रऽअक्षरा । भुवनस्य । पङ्क्तिः । तस्याः । समुद्राः । अधि । वि । क्षरन्ति ॥ ४२ ॥

आरोहन् द्यामुमृतः प्राव मे वचः ।
उत् त्वा यज्ञा ब्रह्मपूता [2]वहन्त्यध्वगतो[2] हरयस्त्वा वहन्ति ॥ ४३ ॥

आऽरोहन्[3] । द्याम् । अमृतः । प्र । अव[4] । मे । वचः ।
उत् । त्वा । यज्ञाः । ब्रह्मऽपूताः । वहन्ति । अध्वऽगतः । हरयः । त्वा । वहन्ति ॥ ४३ ॥

वेद तत् ते अमर्त्य यत् त आक्रमणं दिवि ।
यत् ते सधस्थं परमे व्योमन् ॥ ४४ ॥

वेद । तत् । ते । अमर्त्य । यत् । ते । आऽक्रमणम् । दिवि ।
यत् । ते । सधऽस्थम् । परमे । विऽओमन् ॥ ४४ ॥

सूर्यो द्यां सूर्यः पृथिवीं सूर्य आपोऽति पश्यति ।
सूर्यो भूतस्यैकं चक्षुरा रुरोह दिवं महीम् ॥ ४५ ॥

सूर्यः । द्याम् । सूर्यः । पृथिवीम् । सूर्यः । आपः । अति । पश्यति ।
सूर्यः । भूतस्य । एकम् । चक्षुः । आ । रुरोह । दिवम् । महीम् ॥ ४५ ॥

उर्वीरासन् परिधयो वेदिर्भूमिरकल्पत ।
तत्रैतावग्नी आधत्त हिमं घ्रंसं च रोहितः ॥ ४६ ॥

उर्वीः । आसन् । परिऽधयः । वेदिः । भूमिः । अकल्पत ।
तत्र । एतौ । अग्नी इति । आ । अधत्त । हिमम् । घ्रंसम् । च । रोहितः ॥ ४६ ॥

---

१. परमे व्योमन् तस्याः ऋ १,१६४,४१. २. वहन्ति घृतं पिबन्तं पै १८,१९,५.
३. °रोहम् J. ४. अव P,J,Cp.

हिमं घ्रंसं चाधाय यूपान् कृत्वा पर्वतान् ।
वर्षाज्यावग्नी ईजाते रोहितस्य स्वर्विदः ॥ ४७ ॥

हिमम् । घ्रंसम् । च । आऽधाय । यूपान् । कृत्वा । पर्वतान् ।
वर्षऽआज्यौ । अग्नी इति । ईजाते इति । रोहितस्य । स्वःऽविदः ॥ ४७ ॥

स्वर्विदो रोहितस्य ब्रह्मणाग्निः समिध्यते[1] ।
तस्माद् घ्रंसस्तस्माद्धिमस्तस्माद् यज्ञोजायत[2] ॥ ४८ ॥

स्वःऽविदः । रोहितस्य । ब्रह्मणा । अग्निः । सम् । इध्यते ।
तस्मात् । घ्रंसः । तस्मात् । हिमः । तस्मात् । यज्ञः । अजायत ॥ ४८ ॥

ब्रह्मणाग्नी वावृधानौ[3] ब्रह्मवृद्धौ ब्रह्माहुतौ ।
ब्रह्मेद्धावग्नी ईजाते रोहितस्य स्वर्विदः ॥ ४९ ॥

ब्रह्मणा । अग्नी इति । वावृधानौ । ब्रह्मऽवृद्धौ । ब्रह्मऽआहुतौ ।
ब्रह्मऽइद्धौ[4] । अग्नी इति । ईजाते इति । रोहितस्य । स्वःऽविदः ॥ ४९ ॥

सत्ये अन्यः समाहितोऽप्स्व१न्यः[5] समिध्यते[6] ।
ब्रह्मेद्धावग्नी ईजाते रोहितस्य स्वर्विदः ॥ ५० ॥

सत्ये । अन्यः । सम्ऽआहितः । अप्ऽसु । अन्यः । सम् । इध्यते ।
ब्रह्मऽइद्धौ । अग्नी इति । ईजाते इति । रोहितस्य । स्वःऽविदः ॥ ५० ॥

यं वातः परिशुम्भति यं वेन्द्रो ब्रह्मणस्पतिः ।
ब्रह्मेद्धावग्नी ईजाते रोहितस्य स्वर्विदः ॥ ५१ ॥

यम् । वातः । परिऽशुम्भति । यम् । वा । इन्द्रः । ब्रह्मणः । पतिः ।
ब्रह्मऽइद्धौ[7] । अग्नी इति । ईजाते इति । रोहितस्य । स्वःऽविदः ॥ ५१ ॥

वेदिं भूमिं कल्पयित्वा दिवं कृत्वा दक्षिणाम् ।

---

१. समाहितः पै १८,१९,८. २. यज्ञोजायत E; यज्ञो अजा° पै. ३. संविदानौ पै १८,१९,९. ४. °इधौ P,Cp. ५. °स्व३न्यः B,Bh,C,E. ६. समाहितः पै १८,१९,१०. ७. ब्रह्मइधौ P; ब्रह्मऽइधौ Cp.

घ्रंसं तद॒ग्निं कृ॒त्वा च॒कार॒ विश्व॑मात्म॒न्वद् व॒र्षेणाज्येन॒ रोहि॑तः ॥ ५२ ॥

वेदि॑म् । भूमि॑म् । क॒ल्प॒यि॒त्वा । दिव॑म् । कृ॒त्वा । दक्षि॑णाम् ।
घ्रंसम् । तत् । अ॒ग्निम् । कृ॒त्वा । च॒कार॑[1] । विश्व॑म् । आ॒त्म॒न्ऽवत् । व॒र्षेण॑ । आज्ये॑न । रोहि॑तः ॥

व॒र्षमाज्यं॑ घ्रंसो [2]अ॒ग्निर्वेदि॒र्भूमि॑रकल्पत ।
तत्रै॒तान् पर्व॑ताना॒ग्निर्गी॒र्भिरू॒र्ध्वाँ अ॑कल्पयत् ॥ ५३ ॥

व॒र्षम् । आज्य॑म् । घ्रं॒सः । अ॒ग्निः । वेदिः॑ । भूमिः॑ । अ॒क॒ल्प॒त ।
तत्र॑ । ए॒तान् । पर्व॑तान् । अ॒ग्निः । गी॒ःऽभिः । ऊ॒र्ध्वान् । अ॒क॒ल्प॒य॒त् ॥ ५३ ॥

गी॒र्भिरू॒र्ध्वान् क॑ल्पयि॒त्वा रोहि॑तो भूमि॑मब्रवीत् ।
त्वयी॒दं॑[3] सर्वं॑ जायतां॒ यद् भू॒तं [4]यच्च॑ भाव्य॒म्[4] ॥ ५४ ॥

गी॒ःऽभिः । ऊ॒र्ध्वान् । क॒ल्प॒यि॒त्वा । रोहि॑तः । भूमि॑म् । अ॒ब्र॒वी॒त् ।
त्वयि॑ । इ॒दम् । सर्व॑म् । जा॒य॒ताम् । यत् । भू॒तम् । यत् । च॒ । भा॒व्य॒म् ॥ ५४ ॥

स य॒ज्ञः प्र॑थ॒मो भू॒तो भव्यो॑ अजायत ।
तस्मा॑द्ध ज॒ज्ञ[5] इ॒दं सर्वं॒ यत् किं चे॒दं वि॒रोच॑ते॒ रोहि॑तेन॒ ऋषि॒णाभृ॑तम् ॥५५॥

सः । य॒ज्ञः । प्र॒थ॒मः । भू॒तः । भव्यः॑ । अ॒जा॒य॒त । तस्मा॑त् । ह॒ । ज॒ज्ञे । इ॒दम् । सर्व॑म् ।
यत् । किम् । च॒ । इ॒दम् । वि॒ऽरोच॑ते । रोहि॑तेन । ऋषि॑णा[6] । आऽभृ॑तम् ॥ ५५ ॥

यश्च॒ गां प॒दा स्फुर॑ति प्र॒त्यङ् सूर्यं॑ च॒ मेह॑ति ।
तस्य॑ वृश्चामि ते॒ मूलं॒ न च्छा॒यां क॑र॒वोऽप॑रम्[7] ॥ ५६ ॥

यः । च॒ । गाम् । प॒दा । स्फुर॑ति । प्र॒त्यङ् । सूर्य॑म् । च॒ । मेह॑ति ।
तस्य॑ । वृ॒श्चा॒मि॒ । ते॒ । मूल॑म् । न । छा॒याम् । क॒र॒वः॒ । अप॑रम् ॥ ५६ ॥

यो [8]मा॑भिच्छायम॒त्येषि॒† मां चा॒ग्निं चान्त॒रा[8] ।

---

१. च॒कर॑ P. २. ऽग्नि॰ P³,M,W. ३. तदिदं पै १८,२०,३. ४. यच्च॒ भाव्य॑म् D; यच्च भव्यम् पै. ५. यज्ञ A,Bʰ,D,Sᵐ,Cs. ६. ऋषी॑णा P. ७. कुरवोऽपराम् पाम ६,१,७६. ८. नोभिच्छायमत्येत्यग्निं तिष्ठत्यन्तरा पै २०,२७,३.
† म॒त्येति॒॰ K.

**तस्य वृश्चामि ते मूलं न च्छायां करवोऽपरम्[1] ॥ ५७ ॥**

यः । मा । अभिऽछायम् । अतिऽएषि । माम् । च । अग्निम् । च । अन्तरा ।
तस्य । वृश्चामि । ते । मूलम् । न । छायाम् । करवः[2] । अपरम् ॥ ५७ ॥

**यो अद्य[3] देव सूर्य त्वां च मां चान्तरायति ।**
**[4]दुष्वप्न्यं[†] तस्मिञ्छमलं[4] दुरितानि च मृज्महे[5] ॥ ५८ ॥**

यः । अद्य । देव । सूर्य । त्वाम् । च । माम् । च । अन्तरा । अयति ।
दुःऽस्वप्न्यम् । तस्मिन् । शमलम् । दुःऽइतानि । च । मृज्महे[6] ॥ ५८ ॥

**मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः ।**
**मान्त स्थुर्नो अरातयः ॥ ५९ ॥**

मा । प्र । गाम[7] । पथः । वयम् । मा । यज्ञात् । इन्द्र । सोमिनः ।
मा । अन्तः । स्थुः । नः । अरातयः ॥ ५९ ॥

**यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः । तमाहुतमशीमहि[8] ॥ ६० ॥**

यः । यज्ञस्य । प्रऽसाधनः । तन्तुः । देवेषु । आऽततः । तम् । आऽहुतम् । अशीमहि ॥

**इति प्रथमेऽनुवाके प्रथमं सूक्तम् ।**

**इति प्रथमोऽनुवाकः ।**

ऋ· ब्रह्मा, दे· अध्यात्मम्, रोहितः, आदित्यः

'उदस्य केतवः' **इति सवितृदेवताकम् ।**

**याज्ञिका वक्ष्यमाणप्रकारेण विनियुञ्जते—**

'उदस्य केतवः' **इत्यनुवाकस्य सलिलगणे पाठः । अतस्तस्य गणप्रयुक्तो विनियोगो द्रष्टव्यः** ( अ १,५ ) ।

**तथा उपनयने आयुरभिवृद्ध्यर्थम् अनेनानुवाकेन माणवकस्त्रिकालम् आदित्यम् उपतिष्ठेत । सूत्रितं हि—**" 'उदस्य केतवः' ( अ १३,२ ), 'मूर्धाहम्' ( अ १६,३ ), 'विषासहिम्' ( अ १७,१ ) इत्युद्यन्तमुपतिष्ठते मध्यंदिनेऽस्तं यन्तम्" ( कौसू ५८,२२;२३ ) **इति ।**

---

१. पृ. १५०९ टि. ७ द्र. २. करवः P,Cp. ३. ऽद्य पै २०,२७,२. ४. अस्मिन् दुःष्वप्न्यं सर्वं पै. † दुःष्व° B. ५. मृज्महे B,C,D,E,R,S^m,Cs. ६. मृज्महे P,P²,J,Cp. ७. गाम P. ८. °तं नशीमहि ऋ १०,५७,२.

तथा चातुर्मास्ये साकमेधपर्वणि पित्र्येष्टौ जातायाम् आदित्योपस्थाने इदं विनियुक्तम्। तद् उक्तं वैताने—"प्राञ्चोऽभ्युत्क्रम्य 'उदस्य केतवः' इत्यादित्यमुपतिष्ठन्ते" (वैताश्रौ ९,१६) इति।

उद॑स्य के॒तवो॑ दि॒वि शु॒क्रा भ्राज॑न्त ईरते ।
आ॒दि॒त्यस्य॑ नृ॒चक्ष॑सो॒ महि॑व्रतस्य मी॒ढुषः॑[1] ॥ १ ॥

उत् । अ॒स्य॒ । के॒तवः॑ । दि॒वि । शु॒क्राः । भ्राज॑न्तः । ई॒र॒ते॒ ।
आ॒दि॒त्यस्य॑ । नृ॒ऽचक्ष॑सः । महि॑ऽव्रतस्य । मी॒ढुषः॑[1] ॥ १ ॥

दि॒शां प्र॒ज्ञानां॑[2] स्व॒रय॑न्तम॒र्चिषा॑[3] सुप॒क्षमा॒शुं प॒तय॑न्तमर्ण॒वे ।
स्तवा॑म॒ सूर्यं॑ भुव॑नस्य गो॒पां यो र॒श्मिभि॒र्दिश॑ आ॒भाति॒ सर्वाः॑ ॥ २ ॥

दि॒शाम् । प्र॒ऽज्ञाना॑म्[4] । स्व॒रय॑न्तम् । अ॒र्चिषा॑ । सु॒ऽप॒क्षम् । आ॒शुम् । प॒तय॑न्तम् । अ॒र्ण॒वे ।
स्तवा॑म । सूर्य॑म् । भुव॑नस्य । गो॒पाम् । यः । र॒श्मिऽभिः॑[5] । दिशः॑ । आ॒ऽभाति॑ । सर्वाः॑ ॥ २ ॥

यत् प्राङ् प्र॒त्यङ् स्व॒धया॒ यासि॒ शीभं॒ नाना॑रूपे अह॑नी॒ कर्षि॑ मा॒यया॑ ।
तदा॑दित्य॒ महि॒ तत् ते॒ महि॒ श्रवो॒ यदेको॒ विश्वं॒ परि॒ भूम॒ जाय॑से ॥ ३ ॥

यत् । प्राङ् । प्र॒त्यङ् । स्व॒धया॑ । यासि॑ । शीभ॑म् । नाना॑रूपे॒ इति॒ नाना॑ऽरूपे । अह॑नी॒ इति॑ ।
कर्षि॑ । मा॒यया॑ । तत् । आ॒दि॒त्य॒ । महि॑ । तत् । ते॒ । महि॑ । श्रवः॑ । यत् । एकः॑ । विश्व॑म् ।
परि॑ । भूम॑[6] । जाय॑से ॥ ३ ॥

वि॒प॒श्चितं॑ त॒रणिं॒ भ्राज॑मानं॒ वह॑न्ति॒ यं ह॒रितः॑ स॒प्त ब॒ह्वीः ।
स्रु॒ताद्॒[7] यमत्त्रि॒र्दिव॑मुन्नि॒नाय॒ तं त्वा॑ पश्यन्ति॑[8] परि॒यान्त॑मा॒जिम् ॥ ४ ॥

वि॒पः॒ऽचित॑म् । त॒रणि॑म् । भ्राज॑मानम् । वह॑न्ति । यम् । ह॒रितः॑ । स॒प्त । ब॒ह्वीः ।
स्रु॒तात्[7] । यम् । अत्त्रिः॑ । दिव॑म् । उ॒त्ऽनि॒नाय॑ । तम् । त्वा॒ । प॒श्य॒न्ति॒ । प॒रि॒ऽयान्त॑म् । आ॒जिम् ॥

---

१. मीडुषः A,B,E,R,Dc,P²,J. २. प्रज्ञानं K,Km,Sm,V,Pw. पै १८,२०,६; प्रज्ञानां > प्रज्ञानं Dc. वैप १,२१३५ e द्र. ३. °यन्तो अर्चिषा पै. ४. प्रऽज्ञानम् P². ५. रश्मि° P. ६. भूम P. ७. स्तुता° A,B,Bh,C,D,E,K,Km,R Sm,V,Dc, P,P²,J,Cp. ८. पश्येम पै १८,२०,८.

**मा त्वा दभन् परियान्तमाजिं [1]स्वस्ति दुर्गाँ[1] अति याहि शीभम् ।**
**दिवं च सूर्य पृथिवीं च देवीमहोरात्रे विमिमानो यदेषि ॥ ५ ॥**

मा । त्वा । दभन् । परिऽयान्तम् । आजिम् । स्वस्ति । दुःऽगान् । अति । याहि । शीभम् ।
दिवम् । च । सूर्य । पृथिवीम् । च । देवीम् । अहोरात्रे इति । विऽमिमानः । यत् । एषि ॥ ५॥

**स्वस्ति ते सूर्य [2]चरसे रथाय[2] येनोभावन्तौ[3] परियासि सद्यः ।**
**यं ते वहन्ति हरितो वहिष्ठाः[4] [5]शतमश्वा यदि वा सप्त बह्वीः[5] ॥ ६ ॥**

स्वस्ति । ते । सूर्य । चरसे । रथाय । येन । उभौ । अन्तौ । परिऽयासि । सद्यः ।
यम् । ते । वहन्ति । हरितः । वहिष्ठाः[4] । शतम् । अश्वाः । यदि । वा । सप्त । बह्वीः ॥६॥

**सुखं सूर्य[6] रथमंशुमन्तं स्योनं सुवह्निमधि[7] तिष्ठ वाजिनम् ।**
**यं ते वहन्ति हरितो वहिष्ठाः[4] शतमश्वा यदि वा सप्त बह्वीः ॥ ७ ॥**

सुऽखम् । सूर्य[8] । रथम् । अंशुऽमन्तम् । स्योनम् । सुऽवह्निम् । अधि । तिष्ठ । वाजिनम् ।
यम् । ते । वहन्ति । हरितः । वहिष्ठाः[4] । शतम् । अश्वाः । यदि । वा । सप्त । बह्वीः ॥ ७॥

**सप्त सूर्यो हरितो यातवे रथे हिरण्यत्वचसो बृहतीरयुक्त[9] ।**
**अमोचि शुक्रो रजसः परस्ताद् विधूय देवस्तमो दिवमारुहत् ॥ ८ ॥**

सप्त । सूर्यः । हरितः । यातवे । रथे । हिरण्यऽत्वचसः । बृहतीः । अयुक्त ।
अमोचि । शुक्रः । रजसः । परस्तात् । विऽधूय । देवः । तमः । दिवम् । आ । अरुहत् ॥८॥

**उत् केतुना बृहता देव [10]आगन्नपावृक् तमोऽभि[10] ज्योतिरश्रैत् ।**
**दिव्यः सुपर्णः [11]स वीरो[11] [12]व्यख्यददितेः पुत्रो भुवनानि विश्वा[12] ॥ ९ ॥**

उत् । केतुना । बृहता । देवः । आ । अगन् । [13]अप । अवृक्[13] । तमः । अभि । ज्योतिः । अश्रैत् ।
दिव्यः । सुऽपर्णः । सः । वीरः । वि । अख्यत् । अदितेः । पुत्रः । भुवनानि । विश्वा ॥ ९ ॥

---

१. सुगेन दुर्गम् पै १८,२०,९. २. चरतो रथस्य पै १८,२०,१०. ३. °भावंतौ B,E. ४. मूको. प्रायः बर्हिष्ठाः. ५. तमारोह सुखमा स्वश्व्यम् पै. ६. तु. RW,WI; वैतु. मूको. शंपा. सूर्य. ७. सुवर्णमधि Bh. ८. तु. मंपा.; वैतु. मूको. शंपा. सूर्यं, Cp सूर्यम्. ९. °रयुङ्क्त पै १८,२१,२. १०. °पायुवन् तमो अभि पै १८,२१,३. ११. स्थविरो? पै. १२. °ख्यददित्याः पुत्रं नाथकामोऽभियामि भीतः पै. १३. अपः । अवृक् P.

[1]उद्यन् रश्मीना[1] तनुषे [2]विश्वा रूपाणि पुष्यसि[2] ।
उभा समुद्रौ क्रतुना वि भासि सर्वांल्लोकान् परिभूर्भ्राजमानः ॥१०॥

उत्ऽयन् । रश्मीन् । आ । तनुषे । विश्वा । रूपाणि । पुष्यसि ।
उभा । समुद्रौ । क्रतुना । वि । भासि । सर्वान् । लोकान् । परिऽभूः । भ्राजमानः ॥१०॥

पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि [3]यातोऽर्णवम्[3] ।
विश्वान्यो[4] भुवना विचष्टे[5] हैरण्यैरन्यं[6] हरितो वहन्ति ॥ ११ ॥

पूर्वऽअपरम् । चरतः । मायया । एतौ । शिशू इति । क्रीडन्तौ । परि । यातः । अर्णवम् ।
विश्वा । अन्यः । भुवना । विऽचष्टे । हैरण्यैः । अन्यम् । हरितः । वहन्ति ॥ ११ ॥

दिवि त्वात्रिरधारयत्[7] सूर्या[8] मासाय कर्तवे ।
स एषि[9] सुधृतस्तपन् विश्वा[10] भूतावचाकशत् ॥ १२ ॥

दिवि । त्वा । अत्रिः । अधारयत् । सूर्य[11] । मासाय । कर्तवे ।
सः । एषि । सुऽधृतः । तपन् । विश्वा । भूता । अवऽचाकशत् ॥ १२ ॥

उभावन्तौ समर्षसि वत्सः संमातराविव[12] ।
नन्वे३तदितः[13] पुरा ब्रह्म देवा अमी विदुः ॥ १३ ॥

उभौ । अन्तौ । सम् । अर्षसि । वत्सः । संमातरौऽइव ।
ननु । एतत् । इतः । पुरा । ब्रह्म । देवाः । अमी इति । विदुः[14] ॥ १३ ॥

यत् समुद्रमनु[15] श्रितं तत् सिषासति सूर्यः ।
अध्वास्य वितंतो महान् पूर्वश्चापरश्च यः ॥ १४ ॥

यत् । समुद्रम् । अनु । श्रितम् । तत् । सिसासति । सूर्यः ।
अध्वा । अस्य । विऽततः । महान् । पूर्वः । च । अपरः । च । यः ॥ १४ ॥

तं समाप्नोति जूतिभिस्ततो[16] नाप चिकित्सति ।

---

१. उद्यन्नश्मीना B,B^h,S^m. २. प्रजास्सर्वा वि पश्यसि पै १८,२१,४. ३. यातो अर्णवम् A,B,B², E²; यातो अध्वरम् ऋ १०,८५,१८ मै ४,१२,२ पै १८,२१,५ तैब्रा २,७,१२,२. ४. विश्वान्यन्यो ऋ. मं. पै. तैब्रा. ५. °भिचष्टे ऋ. तैब्रा. ६. रण्यं A,B,E. ७. °धारयत् B. ८. तु. मूको. पै १८,२१,६; वैतु. RW. सूर्य. ९. एकः पै. १० सर्वा पै. ११. सूर्यां P,P²,J,Cp. १२. °तरमिव पै १८,२१,७. १३, नन्वै३त° A. १४. विदुः P. १५. °मधि पै १८,२१,८. १६. तस्मान् पै १८,२१,९.

तेनामृतस्य भक्षं[1] देवानां नाव रुन्धते ॥ १५ ॥

तम् । सम् । आप्नोति । जूतिऽभिः । ततः । न । अप । चिकित्सति ।
तेन । अमृतस्य । भक्षम् । देवानाम् । न । अव । रुन्धते ॥ १५ ॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ १६ ॥

उत् । ऊं इति । त्यम् । जातऽवेदसम् । देवम् । वहन्ति । केतवः । दृशे । विश्वाय । सूर्यम् ॥

अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥ १७ ॥

अप । त्ये । तायवः । यथा । नक्षत्रा । यन्ति । अक्तुऽभिः । सूराय । विश्वऽचक्षसे ॥१७॥

अदृश्रन्नस्य[2] केतवो वि रश्मयो जनाँ[3] अनु । भ्राजन्तो अग्नयो यथा ॥१८॥

अदृश्रन् । अस्य । केतवः । वि । रश्मयः । जनान् । अनु । भ्राजन्तः । अग्नयः । यथा ॥

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि[4] सूर्य । विश्वमा भासि रोचन[5] ॥ १९ ॥

तरणिः । विश्वऽदर्शतः । ज्योतिःऽकृत् । असि । सूर्य । विश्वम् । आ । भासि । रोचन ॥

प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि[6] मानुषीः[7] । प्रत्यङ् विश्वं स्वर्दृशे ॥ २० ॥

प्रत्यङ् । देवानाम् । विशः । प्रत्यङ् । उत् । एषि । मानुषीः । प्रत्यङ् । विश्वम् । स्वः । दृशे ॥

येना पावक चक्षसा भुरण्यन्तं जनाँ[3] अनु । त्वं वरुण पश्यसि ॥ २१ ॥

येन । पावक । चक्षसा । भुरण्यन्तम् । जनान् । अनु । त्वम् । वरुण । पश्यसि ॥ २१ ॥

वि[8] द्यामेषि[9] रजस्पृथ्वहर्मिमानो[9] अक्तुभिः । पश्यन्[10] जन्मानि सूर्य ।२२।

वि । द्याम् । एषि । रजः । पृथु । अहः । मिमानः । अक्तुऽभिः । पश्यन् । जन्मानि । सूर्य ॥

सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं[11] विचक्षणम्[12] ॥२३॥

---

१. भंक्षणं पै १८,२१,९. २. अदृंश्रमस्य ऋ १,५०,३. ३. जनँ E,R. ४. ज्योतिःकृ° B,B^h,C,D,E,Cs. ५. रोचनम् B²; रोचनम् M, ऋ १,५०,४ मा ३३,३६ तै १,४,३१,१ मै ४,१०,६ कौ ३,५,९ तैआ ३,१६,१; रोचना पै १८,२२,४ [मूको.]. ६. प्रत्यङ्ङुदेषि B^h,C,D,E,R,S^m; °गुदेषि K^m. ७. मानुषान् ऋ १,५०,५ कौ ३,५,११ नि १२,२४. ८. उद् कौ ३,५,१२. ९. रजः पृ° कौ.; °पृथ्वहा मि° ऋ १,५०,७ कौ. पै १८,२२,७. १०. पश्यं A,E,K,R,Dc. ११. शोचिःकेशं A,B,D,S^m,Cs. मै ४,१०,६. १२. विचक्षण ऋ १,५०,८ कौ ३,५,१४ तै २,४,१४,४ पै १८,२२,८; पुरुप्रिय मै.

स॒प्त । त्वा॒ । ह॒रित॑: । रथे॑ । वह॑न्ति । दे॒व॒ । सू॒र्य॒ । शो॒चिः॑ऽकेशम् । वि॒ऽच॒क्ष॒णम् ॥२३॥

**अयु॑क्त स॒प्त शु॒न्ध्युव॒: सूरो॒ रथ॑स्य न॒प्त्य॒:[1] । ताभि॑र्याति॒ स्वयु॑क्तिभिः ॥२४॥**

अयु॑क्त । स॒प्त । शु॒न्ध्युव॑: । सूर॑: । रथ॑स्य । न॒प्त्य॑: । ताभि॑: । या॒ति॒ । स्वयु॑क्तिऽभिः ॥२४

**रोहि॑तो दि॒वमारु॑ह॒त् तप॑सा तप॒स्वी ।**
**स योनि॒मैति॒ स उ॑ जायते॒ पुन॒: स दे॒वाना॒मधि॑पतिर्बभूव ॥ २५ ॥**

रोहि॑तः । दिव॑म् । आ । अ॒रु॒ह॒त् । तप॑सा । त॒प॒स्वी ।
सः । योनि॑म् । आ । ए॒ति॒ । सः । ऊं॒ इति॑ । जा॒य॒ते॒ । पुन॑: । सः । दे॒वाना॑म् । अधि॑ऽपतिः । ब॒भू॒व॒ ॥

**यो वि॒श्वच॑र्षणिरु॒त[2] वि॒श्वतो॑मुखो॒ यो वि॒श्वत॑स्पाणिरु॒त[3] वि॒श्वत॑स्पृथः[4] ।**
**सं बा॒हुभ्यां॒ भर॑ति[5] सं पत॑त्रै॒र्द्यावा॑पृथि॒वी[6] ज॒नय॑न् दे॒व एक॑: ॥ २६ ॥**

यः । वि॒श्वऽच॑र्षणिः । उ॒त । वि॒श्वत॑:ऽमुखः । यः । वि॒श्वत॑:ऽपाणिः । उ॒त । वि॒श्वत॑:ऽपृथः ।
सम् । बा॒हुऽभ्या॑म् । भर॑ति । सम् । पत॑त्रैः । द्यावा॑पृथि॒वी इति॑ । ज॒नय॑न् । दे॒वः । एक॑: ॥२६ ॥

**एक॑पाद्[7] द्वि॒प॑दो[8] भूयो॒ वि च॑क्रमे॒ [9]द्वि॒पात् त्रि॒पाद॑म॒भ्ये॒ति[9] प॒श्चात् ।**
**द्वि॒पाद्ध॒ षट्प॑दो॒ भूयो॒ वि च॑क्रमे॒ त एक॑पदस्त॒न्वं१[10] समा॑सते ॥ २७ ॥**

एक॑ऽपात् । द्वि॒ऽप॑दः । भूय॑: । वि । च॒क्र॒मे॒ । द्वि॒ऽपा॑त् । त्रि॒ऽपा॑दम् । अ॒भि । ए॒ति॒ । प॒श्चात् ।
द्वि॒ऽपा॑त् । ह॒ । षट्ऽप॑दः । भूय॑: । वि । च॒क्र॒मे॒ । ते । एक॑ऽपदः । त॒न्व॑म् । सम् । आ॒स॒ते॒ ॥ २७ ॥

**अत॑न्द्रो या॒स्यन् ह॒रितो॒ यदास्था॒द्[11] [12]द्वे रू॒पे[12] कृ॑णुते॒ रोच॑मानः ।**
**के॒तु॒मानु॒द्यन्त्सह॑माना॒ रजां॑सि॒ विश्वा॑ आदित्य प्र॒वतो॒ वि भा॑सि ॥ २८ ॥**

अत॑न्द्रः । या॒स्यन् । ह॒रित॑: । यत् । आ॒ऽअस्था॑त् । द्वे इति॑ । रू॒पे इति॑ । कृ॒णु॒ते॒ । रोच॑मानः ।
के॒तु॒ऽमान् । उ॒त्ऽयन् । सह॑मानः । रजां॑सि । विश्वा॑: । आ॒दि॒त्य॒ । प्र॒ऽवत॑: । वि । भा॒सि॒ ॥२८॥

---

१. न॒प्त्र्य॑: (उक्ऽर) कौ ३,५,१३; न॒प्त्रिय॑: तैब्रा २,४,५,४. २. वि॒श्वत॑श्चक्षुरु॒त ऋ १०,८१,३ मा १७, १९ तै ४,६,२,४ तैआ १०,१,३; वि॒श्वच॑क्षुरु॒त॑ मै २,१०,२ काठ १८,२. ३. वि॒श्वतो॑बाहुरु॒त ऋ. मा. पै १८,२३,३; वि॒श्वतो॑हस्त उ॒त तै. मै. काठ.तैआ. ४. °त॑स्पात् ऋ. मा. तै. मै. काठ. पै. ५. धम॑ति॒ ऋ. मा. पै.; नम॑ति॒ तै. तैआ.; नं॑मते काठ.; अ॑धमत् मै. ६. °पृथिवी R; द्यावा॒भूमी॑ ऋ. मा. मै. पै. यं॑जत्रैर्द्या॑° काठ. ७. एकपद् पै १८,२३,४. ८. द्वि॒पदो॒ ऋ १०,११७,८. ९. द्वि॒पात् त्रि॒पाद॑° ऋ. १०. त॒न्वां॑३ D²; त॒न्वं॑ ३ A,B,Bʰ,C,E. ११. °स्था॒न् R. १२. दिवि रूपं पै १८,२३,५.

बण्महाँ[1] असि सूर्य बडादित्य महाँ[2] असि ।
[3]महांस्ते महतो महिमा त्वमादित्य[3] महाँ असि ॥ २९ ॥

बट् । महान् । असि । सूर्य । बट् । आदित्य । महान् । असि ।
महान् । ते । महतः । महिमा । त्वम् । आदित्य । महान् । असि ॥ २९ ॥

रोचसे दिवि रोचसे[4] अन्तरिक्षे पतङ्ग पृथिव्यां रोचसे[5] रोचसे अप्स्व१न्तः[6] ।
उभा समुद्रौ रुच्या[7] व्यापिथ[8] देवो देवासि महिषः स्वर्जित्[9] ॥ ३० ॥

रोचसे । दिवि । रोचसे । अन्तरिक्षे । पतङ्ग । पृथिव्याम् । रोचसे[10] । रोचसे । अप्ऽसु । अन्तः ।
उभा । समुद्रौ । रुच्या । वि । आपिथ । देवः । देव । असि । महिषः । स्वःऽजित् ॥ ३० ॥

अर्वाङ् परस्तात् प्रयतो व्यध्व आशुर्विपश्चित् पतयन् पतङ्गः ।
विष्णुर्विचित्तः शवसाधितिष्ठन् प्र केतुना सहते विश्वमेजत् ॥ ३१ ॥

अर्वाङ् । परस्तात् । प्रऽयतः । विऽअध्वे । आशुः । विपःऽचित् । पतयन् । पतङ्गः ।
विष्णुः । विऽचित्तः । शवसा । अधिऽतिष्ठन् । प्र । केतुना । सहते । विश्वम् । एजत् ॥ ३१ ॥

चित्रश्चिकित्वान् महिषः सुपर्ण आरोचयन् रोदसी अन्तरिक्षम् ।
अहोरात्रे परि सूर्यं वसाने प्रास्य विश्वा तिरतो वीर्याणि ॥ ३२ ॥

चित्रः । चिकित्वान् । महिषः । सुऽपर्णः । आऽरोचयन् । रोदसी इति । अन्तरिक्षम् ।
अहोरात्रे इति । परि । सूर्यम् । वसाने इति । प्र । अस्य । विश्वा । तिरतः । वीर्याणि ॥ ३२ ॥

तिग्मो विभ्राजन् तन्व१[11] शिशानोऽरंगमासः[12] प्रवतो रराणः ।
ज्योतिष्मान् पक्षी महिषो वयोधा विश्वा आस्थात्[13] प्रदिशः कल्पमानः ॥ ३३ ॥

तिग्मः । विऽभ्राजन् । तन्वम् । शिशानः । अरम्ऽगमासः । प्रऽवतः । रराणः ।
ज्योतिष्मान् । पक्षी । महिषः । वयःऽधाः । विश्वाः । आ । अस्थात् । प्रऽदिशः । कल्पमानः ॥

चित्रं देवानां केतुरनीकं ज्योतिष्मान् प्रदिशः सूर्य उद्यन् ।

---

१. °महँ E,R. २. महँ E. ३. महस्ते सतो महिमा पनस्यतेऽद्धा देव (पनिष्टम मह्ना देव कौ.) ऋ ८,१०१,११ मा ३३,३९ कौ १,२७६. ४. रोचसे R. ५. रोचसे इति शंपा. प्रभृ. चिन्त्याः, अपादादित्वेन निघातस्यावश्यकत्वात्। रोचसे पृथि° इति पाठस्तु सर्वतो भद्रः स्यात्. ६. अप्स्व३न्तः A,Bʰ,C,E,R. ७. रुचा पै १८,२३,७. ८. व्यापिथ D,E,Cs. ९. स्वर्वित् पै. १०. तु. मंपा.; वैतु. शंपा. प्रभृ. रोचसे. ११. तन्वं३ B,Bʰ,C,D,E, Sᵐ,Cs. १२. °नोअरं° Bʰ. १३. अस्थात् B,Cs.

दिवाकरोऽति द्युम्नैस्तमांसि विश्वातारीद् दुरितानि शुक्रः ॥ ३४ ॥

चित्रम् । देवानाम् । केतुः । अनीकम् । ज्योतिष्मान् । प्रऽदिशः । सूर्यः । उत्ऽयन् ।
दिवाऽकरः । अति । द्युम्नैः । तमांसि । विश्वा । अतारीत् । दुःऽइतानि । शुक्रः ॥ ३४ ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्राद्[1] द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ ३५ ॥

चित्रम् । देवानाम् । उत्[2] । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः ।
आ । अप्रात् । द्यावापृथिवी इति । अन्तरिक्षम् । सूर्यः । आत्मा । जगतः । तस्थुषः । च ॥

उच्चा पतन्तमरुणं सुपर्णं मध्ये दिवस्तरणिं भ्राजमानम् ।
पश्याम[3] त्वा सवितारं यमाहुरजस्रं ज्योतिर्यदविन्ददत्रिः ॥ ३६ ॥

उच्चा । पतन्तम् । अरुणम् । सुऽपर्णम् । मध्ये । दिवः । तरणिम् । भ्राजमानम् ।
पश्याम । त्वा । सवितारम् । यम् । आहुः । अजस्रम् । ज्योतिः । यत् । अविन्दत् । अत्रिः ॥

दिवस्पृष्ठे धावमानं सुपर्णमदित्याः पुत्रं [4]नाथकाम उप[4] यामि भीतः ।
स नः सूर्य प्र तिर दीर्घमायुर्मा रिषाम सुमतौ ते स्याम ॥ ३७ ॥

दिवः । पृष्ठे । धावमानम् । सुऽपर्णम् । अदित्याः[5] । पुत्रम् । नाथऽकामः । उप । यामि । भीतः ।
सः । नः । सूर्य । प्र । तिर । दीर्घम् । आयुः । मा । रिषाम । सुऽमतौ । ते । स्याम ॥ ३७ ॥

सहस्राह्ण्यं वियतावस्य[6] पक्षौ हरेर्हंसस्य पततः[7] स्वर्गम् ।
स [8]देवान्त्सर्वानुरस्युपदद्य[8] संपश्यन् याति भुवनानि विश्वा ॥ ३८ ॥

सहस्रऽअह्न्यम् । विऽयतौ । अस्य । पक्षौ । हरेः । हंसस्य । पततः । स्वःऽगम् ।
सः । देवान् । सर्वान् । उरसि । उपऽदद्य । सम्ऽपश्यन् । याति । भुवनानि । विश्वा ॥

रोहितः कालो अभवद् रोहितोऽग्रे प्रजापतिः ।
रोहितो यज्ञानां मुखं रोहितः[9] स्व१राभरत्[10] ॥ ३९ ॥

---

१. आप्रा ऋ १,११५,१ मा ७,४२ तै १,४,४३,१ मै १,३,३७ काठ ४,९ कौ ३,५,२ शब्रा ४,३,४,१० तैब्रा २,८,७,४ ऐआ ३,२,३,१० तैआ १,७,६ नि १२,१६ मागृ ६,१,७.
२. उत् P. ३. पश्येम पै १८,२४,३. ४. °कामोऽभि पै १८,२४,४. ५. आदित्याः P. ६. युतावस्य पै १८,२४,६. ७. हरतः पै. ८. विश्वान् देवान् तिनस्? सप्तथुस्? पै. ९. रोहित A,D,E,K,Km,Sm. १०. स्व३रा° A,Bh,C,D,E,Sm,Cs; °भरन् R; ज्योतिरुच्यते पै १८,२४,७.

रोहि॑तः । का॒लः । अ॒भ॒व॒त् । रोहि॑तः । अग्रे॑ । प्र॒जाऽप॑तिः ।
रोहि॑तः । य॒ज्ञाना॑म् । मु॒खम् । रोहि॑तः । स्वः॑ । आ । अ॒भ॒र॒त्[1] ॥ ३९ ॥

**रोहि॑तो [2]लो॒को अ॑भव॒द्[2] रोहि॒तोऽत्य॑तप॒द् दिव॑म् ।**
**रोहि॑तो र॒श्मिभि॒र्भूमिं॑ समु॒द्रमनु॒ सं च॑रत् ॥ ४० ॥**

रोहि॑तः । लो॒कः । अ॒भ॒व॒त् । रोहि॑तः । अति॑ । अ॒त॒प॒त् । दिव॑म् ।
रोहि॑तः । र॒श्मिऽभिः॑ । भूमि॑म् । स॒मु॒द्रम् । अनु॑ । सम् । च॒र॒त् ॥ ४० ॥

**सर्वा॒ दिश॒ः सम॑चर॒द्[3] रोहि॒तोऽधि॑पतिर्दि॒वः[4] ।**
**दिवं॑ समु॒द्रमाद् भूमिं॒ [5]सर्वं॑ भू॒तं[5] वि र॑क्षति ॥ ४१ ॥**

सर्वाः॑ । दिशः॑ । सम् । अ॒च॒र॒त् । रोहि॑तः । अधि॑ऽपतिः । दि॒वः ।
दिव॑म् । स॒मु॒द्रम् । आत् । भूमि॑म् । सर्व॑म् । भू॒तम् । वि । र॒क्ष॒ति॒ ॥ ४१ ॥

**आ॒रोह॑ञ्छु॒क्रो[6] बृ॑ह॒तीरत॑न्द्रो द्वे रू॒पे कृ॑णु॒ते रोच॑मानः ।**
**चि॒त्रश्चि॑कि॒त्वान् म॑हि॒षो वात॑माया[7] याव॑तो लो॒काँन॒भि यद् वि॒भाति॑ ॥४२॥**

आ॒ऽरोह॑न्[8] । शु॒क्रः । बृ॒ह॒तीः । अत॑न्द्रः । द्वे इति॑ । रू॒पे इति॑ । कृ॒णु॒ते । रोच॑मानः । चि॒त्रः ।
चि॒कि॒त्वान् । म॒हि॒षः । वात॑म्ऽआयाः । याव॑तः । लो॒कान् । अ॒भि । यत् । वि॒ऽभाति॑ ॥

**[9]अ॒भ्य॑१॒न्यदे॑ति॒[9] [10]पर्य॒न्यद॑स्यतेऽहोरा॒त्राभ्यां॑[10] महि॒षः कल्प॑मानः ।**
**सूर्यं॑ व॒यं रज॑सि क्षि॒यन्तं॑ गातु॒विदं॑ हवामहे॒ नाध॑मानाः[11] ॥ ४३ ॥**

अ॒भि । अ॒न्यत् । ए॒ति॒[12] । परि॑ । अ॒न्यत् । अ॒स्य॒ते॒ । अ॒हो॒रा॒त्राभ्या॑म् । म॒हि॒षः । कल्प॑मानः ।
सूर्य॑म् । व॒यम् । रज॑सि । क्षि॒यन्त॑म् । गा॒तु॒ऽविद॑म् । ह॒वा॒म॒हे॒ । नाध॑मानाः ॥ ४३ ॥

**पृ॒थि॒वी॒प्रो म॑हि॒षो नाध॑मानस्य[13] गा॒तुरद॑ब्धचक्षुः॒ परि॒ विश्वं॑[14] बभूव[15] ।**
**विश्वं॑ सं॒पश्य॑न्त्सुवि॒दत्रो॒ यज॑त्र इ॒दं शृ॑णोतु॒ यद॒हं ब्रवी॑मि[16] ॥ ४४ ॥**

---

१. अ॒भ॒व॒त् P. २. भूतोऽभ॑ पै १८,२४,८. ३. सं चरति १८,२४,९. ४. °तो अधि° पै. ५. सर्वाँल्लोकान् पै. ६. आ॒रोह॑ञ्छु॒क्रो A,Bʰ,C,E,R,Dc; °ह॑च्छु॒° Kᵐ; °ह॑न्छु॒° Cs. ७. वातरंहा पै.; वैप १,२८१९ j द्र. ८. °रोह॑म् P². ९. अ॒भ्या॒३॑° K,Kᵐ; अ॒भ्य॒३° A,Bʰ,C,D,E,R,Sᵐ,Dc,Cs; °दे॑ति॑ Kᵐ; °दे॑ति॒ K,V. १०. सद्योऽयं वसावमहो°? पै १८,२५,३; °ते अहो° A. ११. नाथमानाः पै. १२. ए॒ति॑ P². १३. नाथमानस्य पै १८,२५,४. १४. सर्वं पै. १५. तु. K,Kᵐ,V,Dc; वैतु. शंपा. प्रभृ. ब॒भूव॑. १६. ब्रवी॑मि Bʰ,E.

पृथिवीऽग्रः । महिषः । नाधमानस्य । गातुः । अदब्धऽचक्षुः । परि । विश्वम् । बभूव[1] । विश्वम् । सम्ऽपश्यन् । सुऽविदत्रः । यजत्रः । इदम् । शृणोतु । यत् । अहम् । ब्रवीमि ॥

**पर्यस्य महिमा पृथिवीं समुद्रं ज्योतिषा विभ्राजन् परि द्यामन्तरिक्षम् ।**
**सर्वं संपश्यन्त्सुविदत्रो यजत्र इदं शृणोतु यदहं ब्रवीमि ॥ ४५ ॥**

परि । अस्य । महिमा । पृथिवीम् । समुद्रम् । ज्योतिषा । विऽभ्राजन् । परि । द्याम् । अन्तरिक्षम् । सर्वम् । सम्ऽपश्यन्[2] । सुऽविदत्रः । यजत्रः । इदम् । शृणोतु । यत् । अहम् । ब्रवीमि ॥

**अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।**
**यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते[3] नाकमच्छ ॥ ४६ ॥**

अबोधि । अग्निः । सम्ऽइधा । जनानाम् । प्रति । धेनुम्ऽइव । आऽयतीम् । उषसम्[4] । यह्वाःऽइव । प्र । वयाम् । उत्ऽजिहानाः । प्र । भानवः । सिस्रते । नाकम् । अच्छ ॥ ४६ ॥

इति द्वितीयेऽनुवाके प्रथमं सूक्तम् ।

इति द्वितीयोऽनुवाकः ।

ऋ. ब्रह्मा, दे. अध्यात्मम्, रोहितः, आदित्यः

रोहितदेवताकम् एतत् सूक्तम् । रोहितः कश्चिद् देव उद्यत्सूर्यरूपः सूर्यस्य रोहितनामको यः प्रधानोऽश्वस्तद्रूपेण वा कल्पितः । तस्य परमार्थं रूपं त्रयोदश-चतुर्दशपञ्चदशषोडशसप्तदशाष्टादशैकोनविंशेषु मन्त्रेषु द्रष्टव्यम् ।

सांप्रदायिकास्तु एवं विनियुञ्जते । तद्यथा—

आभिचारिके कर्मणि 'य इमे द्यावापृथिवी' इत्यनुवाकेन पाशान् पदे बध्नाति विधानेन ।

तथा तत्रैव कर्मणि अनेनानुवाकेन रक्तशालिक्षीरौदनं संपात्याभिमन्त्र्य द्वेष्याय ददाति ।

तस्मिन्नेव कर्मणि अनेनानुवाकेन आमपात्रस्योपरि द्वेष्याय हस्तप्रक्षालनं ददाति ।

तथा तस्मिन्नेव कर्मणि अनेनानुवाकेन वृषभं संपातवन्तं कृत्वा शत्रोरभिमुखं विसृजति ।

तथा उक्त एव कर्मणि अनेनानुवाकेन शत्रुप्रतिकृतिं मृन्मयीं कृत्वा

---

१. तु. मंपा. $D^2$,$P^3$; वैतु. शंपा. बभूव. २. सुत्र । P. ३. ससृज्रे पै १८,२५,६; सस्रते[3] कौ १,७३. ४. उषासम् P.

पश्चाद् अग्नेः स्थाणौ बद्ध्वा तस्या मूर्ध्नि संपातान् आनयति । 'यस्मिन् षडुर्वीः पञ्च' (६) इत्यृचा उदवज्रान् प्रहरति उक्तेन विधानेन । 'यो अन्नादो अन्नपतिः' (७) इत्यृचा उदकम् अभिमन्त्र्य द्वेष्यं मनसा चाध्यायन्नाचामति ।

तद् उक्तं कौशिकेन—" 'समिद्धो अग्निः' (अ १३,१,२८-३२), 'य इमे द्यावापृथिवी' (अ १३,३), 'अजैष्म' (अ १६,६) इत्यधिपाशान् आदधाति । पदेपदे पाशान् वृश्चति । अधिपाशान् बाधकान् छङ्कूंस्तान् संक्षुद्य संनह्य भ्राष्ट्रेऽभ्यस्यति । अशिशिषोः क्षीरौदनादीनि त्रीणि । गर्तेध्मावन्तरेणावलेखनीं स्थाणौ निबध्य द्वादशरात्रं संपातान् अभ्यतिनयति[1] । षष्ठ्योदवज्रान् प्रहरति । सप्तम्याचामति" (कौसू ४९,१९-२५) इति ।

य इमे द्यावापृथिवी जजान यो द्रापिं[2] कृत्वा भुवनानि वस्ते ।
यस्मिन् क्षियन्ति प्रदिशः षडुर्वीर्याः पतङ्गो अनु विचाकशीति[3] ।
तस्य देवस्य क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति ।
उद् वेपय रोहित प्र क्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान् ॥ १ ॥

यः । इमे इति । द्यावापृथिवी इति । जजान । यः । द्रापिम् । कृत्वा । भुवनानि । वस्ते । यस्मिन् । क्षियन्ति । प्रऽदिशः । षट् । उर्वीः । याः । पतङ्गः । अनु । विऽचाकशीति । तस्य । देवस्य । क्रुद्धस्य । एतत् । आगः । यः । एवम् । विद्वांसम् । ब्राह्मणम् । जिनाति । उत् । वेपय । रोहित । प्र । क्षिणीहि । ब्रह्मऽज्यस्य । प्रति । मुञ्च । पाशान् ॥ १ ॥

यस्माद् वाता ऋतुथा पवन्ते यस्मात् समुद्रा अधि विक्षरन्ति[3] । तस्य देवस्य ।०।०।२

यस्मात् । वाताः[4] । ऋतुऽथा । पवन्ते । यस्मात् । समुद्राः । अधि । विऽक्षरन्ति । तस्य ।० ॥ २ ॥

यो मारयति प्राणयति यस्मात् प्राणन्ति भुवनानि विश्वा[3] । तस्य ०।०।० ॥३॥

यः । मारयति । प्राणयति । यस्मात् । प्राणन्ति । भुवनानि । विश्वा । तस्य ।० ॥ ३ ॥

यः प्राणेन द्यावापृथिवी तर्पयत्यपानेन समुद्रस्य जठरं यः पिपर्ति[3] । तस्य०।०।० ।४।

यः । प्राणेन । द्यावापृथिवी इति । तर्पयति । अपानेन । समुद्रस्य । जठरम् । यः । पिपर्ति । तस्य ।०॥

---

१. °तिनिनयति Bl. २. वैतु. MW. द्रापिम् इति. ३. वु. RW.; वैतु. शंपा. देवस्य इत्यत्र विरमति. ४. वातः P.

यस्मिन् विराट् परमेष्ठी प्रजापतिरग्निर्वैश्वानरः सह पङ्क्त्या श्रितः ।
यः परस्य प्राणं परमस्य तेज आददे[1] । तस्य०।० ॥ ५ ॥

यस्मिन् । विऽराट् । परमेऽस्थी । प्रजाऽपतिः । अग्निः । वैश्वानरः । सह । पङ्क्त्या । श्रितः ।
यः । परस्य । प्राणम् । परमस्य । तेजः । आऽददे । तस्य ।० ॥ ५ ॥

यस्मिन् षडुर्वीः पञ्च दिशो अधि श्रिताश्चतस्र आपो यज्ञस्य त्रयोक्षराः[2] ।
यो अन्तरा रोदसी क्रुद्धश्चक्षुषैक्षत[1] । तस्य०।० ॥ ६ ॥

यस्मिन् । षट् । उर्वीः । पञ्च । दिशः । अधि । श्रिताः । चतस्रः । आपः । यज्ञस्य । त्रयः ।
अक्षराः । यः । अन्तरा । रोदसी इति । क्रुद्धः । चक्षुषा[3] । ऐक्षत । तस्य ।० ॥ ६ ॥

यो अन्नादो[4] अन्नपतिर्बभूव[5] ब्रह्मणस्पतिरुत यः ।
भूतो भविष्यत्[6] भुवनस्य यस्पतिः[1] । तस्य०।०॥ ७ ॥

यः । अन्नऽअदः[7] । अन्नऽपतिः[8] । बभूव । ब्रह्मणः । पतिः । उत । यः ।
भूतः । भविष्यत् । भुवनस्य । यः । पतिः । तस्य । ० ॥ ७ ॥

अहोरात्रैर्विमितं[9] त्रिंशदङ्गं त्रयोदशं मासं यो निर्मिमीते[1] । तस्य०।०॥८॥

अहोरात्रैः । विऽमितम् । त्रिंशत्ऽअङ्गम् । त्रयःऽदशम् । मासम् । यः । निःऽमिमीते[10] । तस्य ।०॥

[11]कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत् पतन्ति ।
त आववृत्रन्त्सदनादृतस्य[1] । तस्य०।०॥ ९ ॥

कृष्णम् । निऽयानम् । हरयः । सुऽपर्णाः । अपः । वसानाः । दिवम् । उत् । पतन्ति ।
ते । आ । अववृत्रन् । सदनात् । ऋतस्य । तस्य । ० ॥ ९ ॥

यत् ते चन्द्रं[12] कश्यप रोचनावद् [13]यत् संहितं[13] पुष्कलं[14] चित्रभानु ।
यस्मिन्त्सूर्या आर्पिताः[15] सप्त साकम्[1] । तस्य०।० ॥ १० ॥

यत् । ते । चन्द्रम् । कश्यप । रोचनऽवत्[16] । यत् । सम्ऽहितम् । पुष्कलम्[17] । चित्रऽभानु ।

---

१. पृ १५२० टि ३ द्र. २. °क्षरा मूको. (तु. शंपा. WM.). ३. चक्षुषा > चक्षुषा J; चक्षुषा P². ४. अं नास्ति A. ५. °दोव° B,K,Kᵐ,R,V,Dc,WM. ६. °ष्यन् W. ७. °अदः P. ८. अन्नऽपतिः P. ९. °त्रैर्निमितं K. १०. निःऽमिं° P. ११. पृ ६७२ टि ३-५ द्र. १२. शिल्पं काठ ३७,९. १३. इन्द्रियावत् काठ. १४. पुष्कुरं K; पुष्कलं T,M. १५. अर्पिताः काठ. १६. रोचनवत् Bp². १७. पुष्कुरम् K; पुष्कलम् P.

यस्मिन् । सूर्याः । आर्पिताः । सप्त । साकम् । तस्य । ० ॥ १० ॥

बृहदेनमनु वस्ते पुरस्ताद् रथंतरं प्रति गृह्णाति पश्चात् ।
ज्योतिर्वसाने सदमप्रमादम् । तस्य०।०॥ ११ ॥

बृहत् । एनम् । अनु । वस्ते । पुरस्तात् । रथम्ऽतरम् । प्रति । गृह्णाति । पश्चात् ।
ज्योतिः । वसाने इति । सदम् । अप्रऽमादम् । तस्य ।०॥ ११ ॥

बृहदन्यतः पक्ष आसीद् रथंतरमन्यतः सबले सध्रीची ।
यद् रोहितमजनयन्त देवाः[१] । तस्य०।० ॥ १२ ॥

बृहत् । अन्यतः । पक्षः । आसीत् । रथम्ऽतरम् । अन्यतः । सबले इति सऽबले ।
सध्रीची इति । यत् । रोहितम् । अजनयन्त । देवाः । तस्य ।० ॥ १२ ॥

स वरुणः सायमग्निर्भवति स मित्रो भवति प्रातरुद्यन् ।
स सविता भूत्वान्तरिक्षेण याति स इन्द्रो भूत्वा तपति मध्यतो दिवम्[१] ।
तस्य०।० ॥ १३ ॥

सः । वरुणः । सायम् । अग्निः । भवति । सः । मित्रः । भवति । प्रातः । उत्ऽयन् । सः ।
सविता । भूत्वा । अन्तरिक्षेण । याति । सः । इन्द्रः । भूत्वा । तपति । मध्यतः । दिवम् ।
तस्य ।० ॥ १३ ॥

सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम् ।
स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा[१] । तस्य ०।०॥१४॥

सहस्रऽअह्न्यम् । विऽयतौ । अस्य । पक्षौ । हरेः । हंसस्य । पततः । स्वःऽगम् । सः ।
देवान् । सर्वान् । उरसि । उपऽदद्य । सम्ऽपश्यन् । याति । भुवनानि । विश्वा । तस्य ।०॥

अयं स देवो अप्स्व१न्तः[२] सहस्रमूलः पुरुशाको अत्त्रिः[३] ।
य इदं विश्वं भुवनं जजान[१] । तस्य०।० ॥ १५ ॥

अयम् । सः । देवः । अप्ऽसु । अन्तः । सहस्रऽमूलः[४] । पुरुऽशाकः । अत्त्रिः ।
यः । इदम् । विश्वम् । भुवनम् । जजान । तस्य ।०॥ १५ ॥

---

१. पृ १५२० टि ३ द्र. २. °स्व३न्तः A,B^b,C,E·R· ३. अद्रिः K,K^m,V,
Dc· ४. °मूलम् P.

शुक्रं वहन्ति हरयो रघुष्यदो देवं दिवि वर्चसा भ्राजमानम् ।
यस्योर्ध्वा दिवं [1]तन्वः[1]स्तपन्त्यर्वाङ् सुवर्णैः पटरैर्वि भाति[2] । तस्य०।० ॥१६॥

शुक्रम् । वहन्ति । हरयः । रघुऽस्यदः । देवम् । दिवि । वर्चसा । भ्राजमानम् ।
यस्य । ऊर्ध्वाः । दिवम् । तन्वः । तपन्ति । अर्वाङ् । सुऽवर्णैः । पटरैः । वि । भाति । तस्य ।० ॥१६॥

येनादित्यान् हरितः संवहन्ति येन यज्ञेन बहवो यन्ति[3] प्रजानन्तः ।
यदेकं ज्योतिर्बहुधा [4]विभाति[2] । तस्य०।० ॥ १७ ॥

येन । आदित्यान् । हरितः । सम्ऽवहन्ति । येन । यज्ञेन । बहवः । यन्ति । प्रऽजानन्तः ।
यत् । एकम् । ज्योतिः । बहुऽधा । विऽभाति[5] । तस्य ।० ॥ १७ ॥

[6]सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः[2] । तस्य ०।० ॥१८॥

सप्त । युञ्जन्ति । रथम् । एकऽचक्रम् । एकः । अश्वः । वहति । सप्तऽनामा ।
त्रिऽनाभि । चक्रम् । अजरम् । अनर्वम् । यत्र । इमा । विश्वा । भुवना । अधि । तस्थुः । तस्य ।० ॥

अष्टधा युक्तो वहति वह्निरुग्रः पिता देवानां जनिता मतीनाम् ।
ऋतस्य तन्तुं [7]मनसा मिमानः[7] सर्वा दिशः पवते मातरिश्वा[2] । तस्य०।० ॥१९॥

अष्टऽधा । युक्तः । वहति । वह्निः । उग्रः । पिता । देवानाम् । जनिता । मतीनाम् ।
ऋतस्य । तन्तुम् । मनसा । मिमानः । सर्वाः । दिशः । पवते । मातरिश्वा । तस्य ।० ॥ १९ ॥

सम्यञ्चं तन्तुं प्रदिशोनु[8] सर्वा अन्तर्गायत्र्याममृतस्य गर्भे[2] । तस्य०।० ॥२०॥

सम्यञ्चम् । तन्तुम् । प्रऽदिशः । अनु । सर्वाः । अन्तः । गायत्र्याम्[9] । अमृतस्य । गर्भे । तस्य ।० ॥

निम्रुचस्तिस्रो व्युषो ह तिस्रस्त्रीणि रजांसि दिवो अङ्ग तिस्रः ।
विद्मा ते अग्ने त्रेधा जनित्रं त्रेधा देवानां जनिमानि[10] विद्म[2] । तस्य०।० ॥२१॥

निऽम्रुचः[11] । तिस्रः । विऽउषः । ह । तिस्रः । त्रीणि । रजांसि । दिवः[12] । अङ्ग । तिस्रः ।

---

१. °न्वा१° K,K^m,V; °न्व१° D; °न्वा३° > °न्व१° Dc; तन्वा१त° E,Cs; तन्वा३स्त° C; तन्वा३स्त° R, तन्त्रास्त° S^m. २. पृ १५२० टि ३ द्र. ३. यांति S^m. ४. तु. P²; वैतु. अन्ये मूको. विभाति. ५. तु. P²; वैतु. अन्ये मूको. विऽभाति. ६. पृ १२०४ टि ४-६ द्र. ७. मनसा मिमानः D². ८. प्रदिशो B,D. ९. गायत्र्यम् P. १०. जनिमानि A,S^m. ११. निम्रुचः P. १२. दिवः P.

वि॒द्म । ते॒ । अ॒ग्ने॒ । त्रे॒धा । ज॒नित्र॑म् । त्रे॒धा । दे॒वाना॑म् । जनि॑मानि । वि॒द्म॒ । तस्य॑ । ० ॥२१॥

**वि य और्णो॑त् पृ॒थि॒वीं जाय॑मान॒ आ स॑मु॒द्रमद॑धाद॒न्तरि॑क्षे[१] । तस्य॑ ० । ० । ० । २२ ॥**

वि । यः । और्णो॑त् । पृ॒थि॒वीम् । जाय॑मानः । आ । स॒मु॒द्रम् । अद॑धात् । अ॒न्तरि॑क्षे । तस्य॑ । ० ॥

**त्वम॑ग्ने॒ क्रतु॑भिः के॒तुभि॑र्हि॒तो३॒॑र्कः[२] समि॑द्ध॒ उद॑रोचथा दि॒वि ।**

**किम॒भ्या॑र्च॒न्म॒रुतः॒ पृश्नि॑मातरो॒ यद् रोहि॑त॒मज॑नयन्त दे॒वाः[१] । तस्य॑ ० । ० ॥२३॥**

त्वम् । अ॒ग्ने॒ । क्रतु॑ऽभिः । के॒तुऽभिः॑ । हि॒तः । अ॒र्कः । सम्ऽइ॑द्धः । उत् । अरो॑च॒थाः । दि॒वि । किम् । अ॒भि । आर्च॑न् । म॒रुतः॑ । पृश्नि॑ऽमातरः । यत् । रोहि॑तम् । अज॑नयन्त । दे॒वाः । तस्य॑ । ० ॥ २३ ॥

**[३]य आ॑त्म॒दा ब॑ल॒दा यस्य॒ विश्व॑ उ॒पास॑ते प्र॒शिषं॒ यस्य॑ दे॒वाः ।**

**यो३॒॑स्येशे[४] द्वि॒पदो॒ यश्चतु॑ष्पदः[१] । तस्य॑ ० । ०॥ २४ ॥**

यः । आ॒त्म॒ऽदाः । ब॒ल॒ऽदाः । यस्य॑ । विश्वे॑ । उ॒प॒ऽआस॑ते । प्र॒ऽशिष॑म् । यस्य॑ । दे॒वाः । यः । अ॒स्य[५] । ईशे॑ । द्वि॒ऽपदः॑ । यः । चतुः॑ऽपदः । तस्य॑ । ० ॥ २४ ॥

**[६]एक॑पा॒द् द्विप॑दो॒ भूयो॒ वि च॑क्रमे॒ द्विपा॑त् त्रिपा॑दम॒भ्ये॑ति प॒श्चात्[६] ।**

**[७]चतु॑ष्पाच्चक्रे॒ द्विप॑दामभिस्व॒रे[७] सं॑पश्यन् [८]प॒ङ्क्तिमु॑प॒तिष्ठ॑मानः[१] ।**

**तस्य॑ दे॒वस्य॑ क्रु॒द्धस्यै॒तदा॒गो॒ य ए॒वं वि॒द्वांसं॑ ब्राह्म॒णं जि॒नाति॑ ।**

**उद् वे॑पय रोहित॒ प्र क्षि॑णीहि ब्रह्म॒ज्यस्य॒ प्रति॑ मु॒ञ्च पाशा॑न् ॥ २५ ॥**

एक॑ऽपात् । द्वि॒ऽप॑दः । भूयः॑ । वि । च॒क्र॒मे॒ । द्वि॒ऽपा॑त् । त्रि॒ऽपा॑दम् । अ॒भि । ए॒ति॒ । प॒श्चात् । चतुः॑ऽपात् । च॒क्रे॒ । द्वि॒ऽप॑दाम् । अ॒भि॒ऽस्व॒रे । स॒म्ऽपश्य॑न् । प॒ङ्क्तिम् । उ॒प॒ऽतिष्ठ॑मानः । तस्य॑ । दे॒वस्य॑ । क्रु॒द्धस्य॑ । ए॒तत् । आगः॑ । यः । ए॒वम् । वि॒द्वांस॑म् । ब्रा॒ह्म॒णम् । जि॒नाति॑ । उत् । वे॒प॒य॒ । रो॒हि॒त॒ । प्र । क्षि॒णी॒हि॒ । ब्र॒ह्म॒ऽज्यस्य॑ । प्रति॑ । मु॒ञ्च॒ । पाशा॑न् ॥ २५ ॥

---

१. पृ १५२० टि ३ द्र. २. °ते १र्कः A,D,S^m,V,Cs. ३. पृ ४०८ टि १,२ द्र. ४. यो१स्येशे K,K^m,V,Dc; कम्पाभावः Cs. ५. अ॒स्य॒ Bp[२]. ६. पृ १५१५ टि ७–९ द्र. ७. °पादेति द्वि॒पदा॑मभिस्व॒रे ऋ १०,११७,८; °म॒भिस्व॒रे R. ८. प॒ङ्क्तीरु॑प॒° ऋ.

कृष्णायाः पुत्रो अर्जुनो रात्र्या वत्सोऽजायत ।
स ह द्यामधि रोहति रुहो रुरोह रोहितः ॥ २६ ॥

कृष्णायाः । पुत्रः । अर्जुनः । रात्र्याः । वत्सः । अजायत ।
सः । ह । द्याम् । अधि । रोहति । रुहः । रुरोह । रोहितः ॥ २६ ॥

इति तृतीयेऽनुवाके प्रथमं सूक्तम् ।

इति तृतीयोऽनुवाकः ।

ऋ॰ ब्रह्मा, दे॰ अध्यात्मम्

एतदपि रोहितदेवताकम् । विनियोगस्तु 'स एति' इत्यनुवाकं जपति स्वर्गकाम इति विनियोगमालायाम् ।

स एति सविता 'स्वर्दिवस्पृष्ठेऽवचाकशत्' ॥ १ ॥

सः । एति । सविता । स्वः । दिवः । पृष्ठे । अवऽचाकशत् ॥ १ ॥

रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ॥ २ ॥

रश्मिऽभिः । नभः । आऽभृतम् । महाऽइन्द्रः । एति । आऽवृतः ॥ २ ॥

स धाता स विधर्ता स वायुर्नभ उच्छ्रितम्' । रश्मिभि॰ ॥ ३ ॥

सः । धाता । सः । विऽधर्ता । सः । वायुः । नभः । उत्ऽश्रितम् । रश्मिऽभिः ।॰ ॥३॥

सोऽर्यमा स वरुणः स रुद्रः स महादेवः । रश्मिभि॰ ॥ ४ ॥

सः । अर्यमा । सः । वरुणः । सः । रुद्रः । सः । महाऽदेवः । रश्मिऽभिः ।॰ ॥४॥

सो अग्निः स उ सूर्यः स उ एव महायमः । रश्मिभि॰ ॥ ५ ॥

सः । अग्निः । सः । ऊं इति । सूर्यः । सः । ऊं इति । एव । महाऽयमः । रश्मिऽभिः ।॰ ॥५॥

तं वत्सा उप तिष्ठन्त्येकशीर्षाणो युता दश । रश्मिभि ॰ ॥ ६ ॥

तम् । वत्साः । उप । तिष्ठन्ति । एकऽशीर्षाणः । युताः । दश । रश्मिऽभिः ।॰॥६॥

---

१. स्वर्दिवः पृ॰ K; ॰पृष्ठेव A,B,B[b],C,D,E,K,K[m],R,V,Dc,Cs. २. उच्छ्रितम् S[m].

**पश्चात् प्राङ् आ तन्वन्ति यदुदेति वि भासति । रश्मिभि० ॥ ७ ॥**

पश्चात् । प्राङ्ः । आ । तन्वन्ति । यत् । उत्ऽएति । वि । भासति । रश्मिऽभिः।० ॥७॥

**तस्यैष मारुतो गणः स एति शिक्याकृतः ॥ ८ ॥**

तस्य । एषः । मारुतः । गणः । सः । एति । शिक्याऽकृतः ॥ ८ ॥

**रश्मिभिर्नभ आभृतं महेन्द्र एत्यावृतः ॥ ९ ॥**

रश्मिऽभिः । नभः । आऽभृतम् । महाऽइन्द्रः । एति । आऽवृतः ॥ ९ ॥

**तस्येमे नव कोशा विष्टम्भा नवधा हिताः ॥ १० ॥**

तस्य । इमे । नव । कोशाः । विऽस्तम्भाः । नवऽधा । हिताः ॥ १० ॥

**स प्रजाभ्यो वि पश्यति यच्च प्राणति यच्च न ॥ ११ ॥**

सः । प्रऽजाभ्यः । वि । पश्यति । यत् । च । प्राणति । यत् । च । न ॥११ ॥

**तमिदं निगतं सहः स एष एक एकवृदेक एव ॥ १२ ॥**

तम् । इदम् । निऽगतम् । सहः । सः । एषः । एकः । एकऽवृत् । एकः । एव ॥ १२ ॥

**एते अस्मिन् देवा एकवृतो भवन्ति ॥ १३ ॥**

एते । अस्मिन् । देवाः । एकऽवृतः । भवन्ति ॥ १३ ॥

**इति चतुर्थेऽनुवाके प्रथमं पर्यायसूक्तम् ।**

ऋ· ब्रह्मा, दे· अध्यात्मम्

**कीर्तिश्च यशश्चाम्भश्च नभश्च ब्राह्मणवर्चसं चान्नं चान्नाद्यं च ॥ १ ॥ [१४]**

कीर्तिः । च । यशः । च । अम्भः । च । नभः । च । ब्राह्मणऽवर्चसम् । च । अन्नम् । च । अन्नऽअद्यम् । च ॥ १ ॥

**य एतं देवमेकवृतं वेद ॥ २ ॥ [१५]**

यः । एतम् । देवम् । एकऽवृतम् । वेद ॥ २ ॥

**न द्वितीयो न तृतीयश्चतुर्थो नाप्युच्यते । य एतं ० ॥ ३ ॥ [१६]**

न । द्वितीयः । न । तृतीयः । चतुर्थः । न । अपि । उच्यते । यः । एतम् ।० ॥३॥

न पञ्चमो न षष्ठः सप्तमो नाप्युच्यते । य एतं० ॥ ४ ॥ [१७]

न । पञ्चमः । न । षष्ठः । सप्तमः । न । यः । एतम् ।० ॥ ४ ॥

नाष्टमो[1] न नवमो दशमो नाप्युच्यते । य एतं० ॥ ५ ॥ [१८]

न । अष्टमः । न । नवमः । दशमः । न । अपि । उच्यते । यः । एतम् ।० ॥७॥

स सर्वस्मै वि पश्यति यच्च प्राणति यच्च न । य एतं० ॥ ६ ॥ [१९]

सः । सर्वस्मै । वि । पश्यति । यत् । च । प्राणति । यत् । च । न । यः । एतम् ।० ॥६॥

तमिदं निगतं सहः स एष एक एकवृदेक एव । य एतं० ॥ ७ ॥ [२०]

तम् । इदम् । निऽगतम् । सहः । सः । एषः । एकः । एकऽवृत् । एकः । एव । यः । एतम् ।० ॥

सर्वे[2] अस्मिन् देवा एकवृतो भवन्ति । य एतं० ॥ ८ ॥ [२१]

सर्वे[2] । अस्मिन् । देवाः । एकऽवृतः । भवन्ति । यः । एतम् ।० ॥८॥

इति चतुर्थेऽनुवाके द्वितीयं पर्यायसूक्तम् ।

ऋ. ब्रह्मा, दे. अध्यात्मम्

ब्रह्म च तपश्च कीर्तिश्च यशश्चाम्भश्च नभश्च ब्राह्मणवर्चसं चान्नं चान्नाद्यं च । य एतं० ।१।

ब्रह्म । च । तपः । च । कीर्तिः । च । यशः । च । अम्भः । च । नभः । च । ब्राह्मण-ऽवर्चसम् । च । अन्नम् । च । अन्नऽअद्यम् । च । यः । एतम् ।० ॥१॥ [२२]

भूतं[3] च भव्यं च[3] श्रद्धा च रुचिश्च स्वर्गश्च स्वधा च ॥ २ ॥ [२३]

भूतम् । च । भव्यम्[4] । च[5] । श्रद्धा । च । रुचिः । च । स्वःऽगः । च । स्वधा । च ॥२॥

य एतं देवमेकवृतं वेद ॥ ३ ॥ [२४]

यः । एतम् । देवम् । एकऽवृतम् । वेद ॥ ३ ॥

स एव मृत्युः सोऽमृतं सोऽभ्वं[6] स रक्षः ॥ ४ ॥ [२५]

---

१. नाष्टमो K,Km,R,V,Dc. २. तु. D¹,P²; वैतु. अन्ये मूको. सर्वे. ३. चं भव्यं च Km; चं भव्यं चं B,Bh,D,E,K,R,Sm,Cs; च भव्यं च > चं भव्यं चं B²; भव्यं च इत्यतः परं सर्वं च इति प्रक्षिप्य लुम्पतः R,Dc. ४. भव्यम् P,Cp; भव्यम् Bp²; भव्यम् > भव्यम् J. ५. P,J अतः परं सर्वम् । च इति प्रक्षिपतः; P² तदेव उदात्तहीनं प्रक्षिपति. ६. °भ्वां३ A; °भ्वं३ Bh,C,D,E,R,Sm,Cs.

सः । एव । मृत्युः । सः । अमृतम् । सः । अभ्वम् । सः । रक्षः ॥ ४ ॥

**स रुद्रो वसुवनिर्वसुदेये नमोवाके वषट्कारोनु संहितः ॥ ५ ॥ [२६]**

सः । रुद्रः । वसुऽवनिः[1] । वसुऽदेये । नमःऽवाके । वषट्ऽकारः । अनु । सम्ऽहितः ॥५॥

**तस्येमे सर्वे यातव उप प्रशिषमासते ॥ ६ ॥ [२७]**

तस्य । इमे । सर्वे । यातवः । उप । प्रऽशिषम्[2] । आसते ॥ ६ ॥

**तस्यामू सर्वा नक्षत्रा वशे चन्द्रमसा सह ॥ ७ ॥ [२८]**

तस्य । अमू । सर्वा । नक्षत्रा । वशे । चन्द्रमसा । सह ॥ ७ ॥

इति चतुर्थेऽनुवाके तृतीयं पर्यायसूक्तम् ।

ऋ· ब्रह्मा, दे· अध्यात्मम्

**स वा अह्नोऽजायत[3] तस्मादहरजायत ॥ १ ॥ [२९]**

सः । वै । अह्नः । अजायत । तस्मात् । अहः । अजायत ॥ १ ॥

**स वै रात्र्या अजायत तस्माद् रात्रिरजायत ॥ २ ॥ [३०]**

सः । वै । रात्र्याः । अजायत । तस्मात् । रात्रिः । अजायत ॥ २ ॥

**स वा अन्तरिक्षादजायत तस्मादन्तरिक्षमजायत ॥ ३ ॥ [३१]**

सः । वै । अन्तरिक्षात् । अजायत । तस्मात् । अन्तरिक्षम् । अजायत ॥ ३ ॥

**स वै वायोरजायत तस्माद् वायुरजायत ॥ ४ ॥ [३२]**

सः । वै । वायोः । अजायत । तस्मात् । वायुः । अजायत ॥ ४ ॥

**स वै दिवोऽजायत तस्माद् द्यौरध्यजायत ॥ ५ ॥ [३३]**

सः । वै । दिवः । अजायत । तस्मात् । द्यौः । अधि । अजायत ॥ ५ ॥

**स वै दिग्भ्योऽजायत तस्माद् दिशोऽजायन्त ॥ ६ ॥ [३४]**

सः । वै । दिक्ऽभ्यः । अजायत । तस्मात् । दिशः । अजायन्त ॥ ६ ॥

---

१. °वने P,P², J. २. प्रऽशिषम् P. ३. अ नास्ति C,D.

स वै भूमेरजायत[1] तस्माद् भूमिरजायत[2] ॥ ७ ॥ [३५]

सः । वै । भूमेः[3] । अजायत । तस्मात् । भूमिः[4] । अजायत ॥ ७ ॥

स वा अग्नेरजायत तस्मादग्निरजायत ॥ ८ ॥ [३६]

सः । वै । अग्नेः । अजायत । तस्मात् । अग्निः । अजायत ॥ ८ ॥

स वा अद्भ्योऽजायत तस्मादापोऽजायन्त ॥ ९ ॥ [३७]

सः । वै । अत्ऽभ्यः । अजायत । तस्मात् । आपः । अजायन्त ॥ ९ ॥

स वा ऋग्भ्योऽजायत तस्मादृचोऽजायन्त ॥ १० ॥ [३८]

सः । वै । ऋक्ऽभ्यः । अजायत । तस्मात् । ऋचः । अजायन्त ॥ १० ॥

स वै यज्ञादजायत तस्माद् यज्ञोऽजायत ॥ ११ ॥ [३९]

सः । वै । यज्ञात् । अजायत । तस्मात् । यज्ञः । अजायत ॥ ११ ॥

स यज्ञस्तस्य यज्ञः स यज्ञस्य शिरस्कृतम् ॥ १२ ॥ [४०]

सः । यज्ञः । तस्य । यज्ञः । सः । यज्ञस्य । शिरः । कृतम् ॥ १२ ॥

स स्तनयति स वि द्योतते स उ अश्मानमस्यति ॥ १३ ॥ [४१]

सः । स्तनयति । सः । वि । द्योतते । सः । ऊं इति । अश्मानम् । अस्यति ॥ १३ ॥

पापाय वा भद्राय वा पुरुषायासुराय वा ॥ १४ ॥ [४२]

पापाय । वा । भद्राय । वा । पुरुषाय । असुराय । वा ॥ १४ ॥

यद्वा कृणोष्योषधीर्यद्वा वर्षसि भद्रया यद्वा जन्यमवीवृधः[5] ॥१५॥ [४३]

यत् । वा । कृणोषि । ओषधीः । यत् । वा । वर्षसि । भद्रया । यत् । वा । जन्यम् । अवीवृधः[5] ॥

तावांस्ते मघवन् महिमोपो ते तन्वः शतम् ॥ १६ ॥ [४४]

तावान् । ते । मघऽवन् । महिमा । उपो इति । ते । तन्वः । शतम् ॥ १६ ॥

---

१. भूमेर॰ A,B,Bʰ,C,D,E,R,Sᵐ,Cs,WM.; भूमेर॰ > भूमेर॰ Dc. २. भूमिर॰ A,B,Bʰ,C,D,E,R,Sᵐ,Cs,WM.; भूमिर॰ > भूमिर॰ Dc. ३. भूमेः P,J,Cp,WM. ४. भूमिः P,J,Cp,WM. ५. ॰मवीवृधः = पपा. अवीवृधः च मूको. (तु. शंपा. WM.).

उपो ते 'बद्धे बद्धानि' यदि वासि न्यर्बुदम् ॥ १७ ॥ [४५]

उपो इति । ते । 'बद्धे । बद्धानि' । यदि । वा । असि । निऽअर्बुदम् ॥ १७ ॥

इति चतुर्थेऽनुवाके चतुर्थं पर्यायसूक्तम् ।

ऋ. ब्रह्मा, दे. अध्यात्मम्

भूयानिन्द्रो नमुराद् भूयानिन्द्रासि मृत्युभ्यः ॥ १ ॥ [४६]

भूयान् । इन्द्रः । नमुरात् । भूयान् । इन्द्र । असि । मृत्युऽभ्यः ॥ १ ॥

भूयानरात्याः शच्याः पतिस्त्वमिन्द्रासि विभूः प्रभूरिति त्वोपास्महे वयम् ॥२॥

भूयान् । अरात्याः । शच्याः । पतिः । त्वम् । इन्द्र । असि । विऽभूः । प्रऽभूः । इति । त्वा । उप । आस्महे । वयम् ॥ २ ॥ [४७]

नमस्ते अस्तु पश्यत पश्य मा पश्यत ॥ ३ ॥ [४८]

नमः । ते । अस्तु । पश्यत । पश्य । मा । पश्यत ॥ ३ ॥

अन्नाद्येन यशसा तेजसा ब्राह्मणवर्चसेन ॥ ४ ॥ [४९]

अन्नऽअद्येन । यशसा । तेजसा । ब्राह्मणऽवर्चसेन ॥ ४ ॥

अम्भो अमो महः सह इति त्वोपास्महे वयम् । नमस्ते० । अन्ना० ॥५॥[५०]

अम्भः । अमः । महः । सहः । इति । ० ॥ ५ ॥

अम्भो अरुणं रजतं रजः सह इति त्वोपास्महे वयम् । नमस्ते० । अन्ना०॥६॥ [५१]

अम्भः । अरुणम् । रजतम् । रजः । सहः । इति ।० ॥ ६ ॥

इति चतुर्थेऽनुवाके पञ्चमं पर्यायसूक्तम् ।

ऋ. ब्रह्मा, दे. अध्यात्मम्

उरुः पृथुः सुभूर्भुव इति त्वोपास्महे वयम् । नमस्ते० । अन्ना० ॥१॥ [५२]

उरुः । पृथुः । सुऽभूः । भुवः । इति ।० ॥ १ ॥

---

१. तु. वैप १,२२६०c,e W. प्रभृ. च; वैतु. R बद्ध्वे वद्व्रां°; Cs बध्वे बधां°; E बद्ध्वे बद्धां°; Bh,C बद्धे बद्धां°; K² बद्ध्वे वद्धां°; K,Km,V बध्वें बद्धा°; RW. बद्धे बद्धानि; Dc बद्धे बद्धां° > वध्वें वद्धा°. २. तु. मंपा.; वैतु. Cp बद्धें । बद्धानि > बद्धें । बद्धानि; P² बद्धें बद्धानि; P,J बद्धें बद्धानि; D² बद्ध्वें । बद्ध्वानि.

प्रथो वरो व्यचो लोक इति त्वोपास्महे वयम्। नमस्ते०। अन्ना० ॥२॥ [५३]

प्रथः[1]। वरः। व्यचः। लोकः। इति।० ॥ २ ॥

भवद्वसुरिदद्वसुः संयद्वसुरायद्वसुरिति[2] त्वोपास्महे वयम् ॥ ३ ॥ [५४]

भवत्ऽवसुः। इदत्ऽवसुः। संयत्ऽवसुः। आयत्ऽवसुः। इति। त्वा। उप। आस्महे। वयम् ॥

नमस्ते अस्तु पश्यत पश्य मा पश्यत ॥ ४ ॥ [५५]

नमः। ते। अस्तु। पश्यत। पश्य। मा। पश्यत ॥ ४ ॥

अन्नाद्येन यशसा तेजसा ब्राह्मणवर्चसेन ॥ ५ ॥ [५६]

अन्नऽअद्येन। यशसा। तेजसा। ब्राह्मणऽवर्चसेन ॥ ५ ॥

इति चतुर्थेऽनुवाके षष्ठं पर्यायसूक्तम्।

इति चतुर्थोनुवाकः।

इति त्रयोदशं काण्डं समाप्तम्।



---

१. पृथः P², J.  २. °राजद्वसु° K.

अथ

# चतुर्दशं काण्डम्

विवाहपरमेतत् काण्डम् । तत्र वक्ष्यमाणानि कर्माणि भवन्ति । तेषु तत्तन्मन्त्रविनियोगाः सूत्रकारेण प्रायोऽन्वर्थमेव कृतास्ते कौशिके दशमेऽध्याये विस्तरेण प्रपञ्चितास्तत्रैव द्रष्टव्याः । अत्र तु कर्मक्रमस्य मन्त्रवद् दिग्दर्शनम् ।

सूक्तारम्भे सूर्या नाम या सूर्यरूपा सवितृपुत्री देवी तस्या विवाहस्य कथा वर्णिता ।

कर्मक्रमस्तु यथा वक्ष्यते ।

विवाहः । स कुमार्याः पितृगृहे । 'सत्येनोत्तभिता' इति षोडश 'पूर्वापरम्' (अ १४,१, २३;२४ ) इति द्वे इत्यष्टादशभिराज्यहोमः । आगमकृशरं कुमारीमाशयति (अ २,३६)। हस्तगृहीतशरावसंपुटं सानुचरं कंचिद् वरं प्रति प्रेषयति ( अ १४,१,३१ )। ब्राह्मणप्रेषणम् (अ १४,१,३१ ) । कुमारीरक्षार्थं पालप्रेषणम् ( अ १४,१,३४ ) । उदकग्रहणार्थं व्रजनम् । अप्सु लोष्टं प्रक्षिपति (अ १४,१,३७) । अवगाहनम् ( अ १४,१,३८)। उदकघटपूरणम् ( अ १४,१,३८ ) । उदकघटम् उदाहाराय प्रयच्छति ( अ १४,१,३९)। शाखायां घटनिधानम् । तेनोदकेन सर्वोदकार्थकरणम् । आज्यहोमः (अ १४,१,१७) । कुमारीकेशविचर्तनम् ( अ १४,१,५८ ) । ईशानकोणे तिष्ठन्त्याः कुमार्या उष्णोदकेन आप्लावनम् (अ१४,२,६५ ) । शीतोदकेन सेचनम् ( अ १४,१;३५;४३ ) । वाससाङ्गानि प्रमार्ष्टि । तत् कुमारी पालाय प्रयच्छति ( अ १४,२,६६;६७ ) । तद्वासस्तुम्बरदण्डेन गृहीत्वा गोपाटे प्रक्षिपति । अहतेन वाससा तामाच्छादयति ( अ १४, १,४५;५३ ) । यज्ञोपवीतवद्वाधूयं वस्त्रं बध्नाति । केशप्रलेखनम् ( अ १४,२,६८ ) । योक्त्रस्य कटिप्रदेशे बन्धनम् (अ १४,१,४२;२,७०) । ज्येष्ठीमधुमणे रक्तसूत्रेण बन्धनम् अनामिकायाम् ( अ १,३४ ) । कन्यादानाद् अनन्तरम् उपाध्यायः कुमारीं हस्ते गृहीत्वा कौतुकगृहान्निर्णयति । शाखायां युगं धारयति ( अ १४,१,४० ) । दक्षिणतस्तत् पुरुषो धारयति । कन्याया ललाटप्रदेशे हिरण्यबन्धनम् ( अ १४,१,४०;४१ ) । तदुपरि युगच्छिद्रादुदकनिनयनम् । कुमार्या अश्मारोहणम् ( अ १४,१,४७ ) । तया लाजहोमः ( अ १४,२,६३ ) । वरेण पाणिग्रहणम् ( अ १४,१,४८-५२ ) । वरः कन्याम् अग्निं त्रिः परिणयति ( अ १४,१,३९ ) । सप्तलेखालेखनम् ( अ ५,१,६ ) । तासु वधूमुत्क्रामयति । तल्प उपवेशयति ( अ १४,२,३१;१,६० ) । उपविष्टायास्तस्याः पादौ सुहृत् प्रक्षालयति । कुमारीकटिवेष्टितं योक्त्रं मोचयति ( अ १४,१,५७;५८ ) ।

तद्योक्त्रे भृत्याः संरभन्ते । ये जयन्ति ते बलीयांसो मन्यन्ते । वधूः सर्वौषधीर्वरमूर्ध्नि पलाशपत्रेणावपति ( अ १४,२,५३-५८ ) । कुमारीं तल्पाद् उत्थापयति ( अ १४,१,५९; ६०;६२ ) । इति विवाहः ।

अथोद्वाहः । तत्र वरस्य गृहे वधूनयनम् । तद्यथा । वधूवरौ यानमारोयति ( अ १४,१,६१;२,३० ) । कर्ता अग्रे व्रजति ( अ १४,२,८;१,६४ ) । दक्षिणेन पादेन प्रक्रामति अध्वानम् ( अ १४,२,११;१,३४ ) । तेनैवाह्ना यद्यन्याप्यूढा तर्हि वधूवस्त्रस्य दशाखण्डं गृहीत्वा चतुष्पथे क्षिप्त्वा दक्षिणेन पादेन तदुपरि तिष्ठति तत् प्रायश्चित्तम् (अ १४,२,७४) । उभयो रूढयोः शुभकाकः सन् जपं कुर्यात् (अ १४,२,४६)। अन्तरा ब्रह्माणम् अतिक्रमयतः । यानस्य विनिष्करणम् ( अ १४,२,४७ ) । अध्वनि तीर्थ आयाते लोष्टं प्रक्षिप्य तत उत्तरति ( अ १४,२,६ ) । महावृक्षेषु दृष्टेषु जपति ( अ १४,२,९ ) । वध्वीक्षणार्थं कुदृक्षु स्त्रीष्वागतासु ताः प्रति जपति ( अ १४,२,२८ ) । द्वैभेदं (सिन्धुसंगमं) दृष्ट्वा जपति ( अ १४,२,७ ) । ओषधीनदीक्षेत्रवनेषु दृष्टेषु जपति (अ १४,२,७) । श्मशाने दृष्टे जपति (अ १४,२,७३) । अध्वनि सुप्तायां वध्वां प्रबोधयति मन्त्रेण (अ १४,२,७५ ) । वरपितृगृह आसन्नागते जपति ( अ १४,२,१२ ) । गृहमागते याने तद् अद्भिः संप्रोक्ष्य बलीवर्दौ विमोचयति ( अ १४,२,१६ ) । निर्ऋत्यपनोदाय पत्नीशालां प्रोक्षति (अ १४,२,१९) । दक्षिणतो गृहपार्श्वे गोमयपिण्डेऽश्मानं स्थापयति ( अ १४,१,४७ ) । तस्योपरि पलाशस्य यत्पर्णत्रितयं तस्माद् मध्यमपर्णं गृहीत्वा स्थापयति तस्योपरि घृतं घृतस्योपरि चत्वारि दूर्वाग्राणि तदुपरि वधूं स्थापयति (अ १४,१,४७) । तस्माद् वधूं प्रपाद्य वरगृहे प्रवेशयति ( अ १४,२,२६;१,२१;६३;६४ ) । पूर्णपात्रेण कुम्भफलेन अक्षतसहितेन प्रवेशः । अग्निं प्रज्वाल्य ततो हस्तग्रहणं कृत्वा वरो वधूं परिणयति ( अ १४,२,१७;१८ ) । अग्निसरस्वतीपितृसूर्यदेवमित्रवरुणेभ्यो नमस्कुर्वतीम् अनुमन्त्रयते ( अ १४,२,२०;४६ ) । कश्चिद् रोहितचर्म आहरति ( अ १४,२,२१ ) । उपस्तृतस्य तस्योपरि बल्बजम् उपस्तृणीते तस्योपरि वधूमारोहयति उपवेशयति च ( अ १४,२,२३ ) । दक्षिणोत्तरम् उपस्थं कुरुते वधूः । ब्राह्मणायनं कुमारं शुभनामकं तस्या उपस्थ उपवेशयति ( अ १४,२, २४) । कुमाराय फलमोदकादि दत्त्वा तम् उत्थापयति (अ १४,२,२५) । 'तेन भूतेन' ( ६, ७८) इत्यादिना वरवध्वौ क्रमेण जुहुतः (अ ५,२४;६,७८;८२;१४,२,१-५;४५) । संपातान् आनयति । उदपात्रे उत्तरान् संपातान् आनयति । उदपात्रं वरवध्वोरञ्जल्योर्निनयति ( अ १४,२,४५ ) । 'तेन भूतेन' ( अ ६,७८ ) इति रसान् संपात्य तान् स्थालीपाकं च जायापती उपसर्पयति । तत एकस्मिन् स्थाने स्वजनैः सह उपविश्य मिष्टान्नस्य सहाशनं कुर्यात् पतिः । तेनैव सूक्तेन ( ६,७८ ) यवानाम् आज्यमिश्राणां पूर्णाञ्जलिं जुहोति । इत्युद्वाहः ।

अथ चतुर्थिकाकर्म । तद्यथा । 'सप्त मर्यादाः' (अ ५,१,६) इति वरो व्रीहीन् जुहोति विवाहाग्नौ । 'अक्ष्यौ नौ' (अ ७,३७) इति परस्परं वरवध्वावक्षिणी अञ्जाते । 'महीमू षु' (अ ७,६,२) इति वरवध्वौ खट्वामालम्भयति आचार्यः । आरोहयति (अ १४,२,३१) । तत्र च तामुपवेशयति (अ १४,२,२३) । संवेशयति च (अ १४,२,३२) । तौ वस्त्रेणाच्छादयति (अ ७,३८) । तावभिमुखौ करोति (अ १४, २,३७) । 'इहेमौ' (१४,२,६४) इति वरवध्वौ त्रिः संनुदति । मदुघमणिं पिष्ट्वा औक्षे प्रक्षिप्य वधूवरौ परस्परं संगच्छेते (अ १,३४;१४,२,७१;७२) । 'ब्रह्म जज्ञानम्' (अ ४,१) इति अङ्गुष्ठेन वरः प्रजननदेशं स्पृशति । खट्वाया उत्थापयति वरो वधूम् (अ १४,२,४३) । अहतवस्त्रं वरवध्वौ परिधापयति आचार्यः (अ १४ १,४५;५३;५५) । वधूसीमन्ते शष्पं निदधाति वरः (अ १४,१,५५;५६) । व्रीहियवौ सीमन्ते निदधाति अमन्त्रकम् । दर्भपिञ्जूल्या सीमन्तं विचृतति । शणशकलेन वधूकेशान् परिवेष्टयति । सर्वेण काण्डेन आज्यं जुहोति वरः । प्रायश्चित्तमेतत् शुल्कद्रव्यं पृथक् करोति इदं तव इदं मामकीनमिति (अ १४,१,३२) । वाधूयं वस्त्रं ददतं वरमनुमन्त्रयते (अ १४,१,२५-३०) । आचार्यस्तत् प्रतिगृह्णाति (अ १४, २,४१;४२) । तत् स्थाणावासजति (अ १४,२,४८) । तद् गृहीत्वा गच्छति (अ १४,२,४९) । तद् वृक्षं प्रतिच्छादयति (अ १४,२,५०) । सर्वे स्नानं कुर्वन्ति (अ १४,२,४५) । तेन वाधूयेनाच्छादयत्यात्मानमाचार्यः (अ १४,२,५१) । 'नवं वसानः' (अ १४,२,४४) इति जपित्वा आचार्यो गृहं गच्छति । कुमार्यां नीयमानायां पितृगृहे रोदने सति 'जीवं रुदन्ति' (अ १४,१,४६) इत्यनया 'यदीमे केशिनः' (१४,२,५९-६२) इति चतसृभिश्चाज्यं जुहोति । तत् प्रायश्चित्तम् । इति चतुर्थिकाकर्म ।

सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः ।
ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधि श्रितः ॥ १ ॥

सत्येन । उत्तभिता । भूमिः । सूर्येण । उत्तभिता । द्यौः ।
ऋतेन । आदित्याः । तिष्ठन्ति । दिवि । सोमः । अधि । श्रितः ॥ १ ॥

सोमेनादित्या बलिनः सोमेन पृथिवी मही ।
अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥ २ ॥

सोमेन । आदित्याः । बलिनः । सोमेन । पृथिवी । मही ।
अथो इति । नक्षत्राणाम् । एषाम् । उपऽस्थे । सोमः । आऽहितः ॥ २ ॥

सोमं॑ मन्यते पपि॒वान् यत् सं॑पि॒षन्त्योष॑धिम्[1] ।
सोमं॒ यं ब्र॒ह्माणो॑ वि॒दुर्न तस्या॑श्नाति॒ पार्थि॑वः[2] ॥ ३ ॥

सोम॑म् । म॒न्य॒ते॒ । प॒पि॒ऽवान् । यत् । स॒म्ऽपि॑ष॒न्ति॑[3] । ओष॑धिम् ।
सोम॑म् । यम् । ब्र॒ह्माण॑ः । वि॒दुः । न । तस्य॑ । अ॒श्ना॒ति॒ । पार्थि॑वः ॥ ३ ॥

यत् त्वा॑ सोम॑[4] प्र॒पिब॑न्ति॒ तत॒ आ प्या॑यसे॒ पुन॑ः ।
वा॒युः सोम॑स्य रक्षि॒ता समा॑ना॒ं मास॒ आकृ॑तिः ॥ ४ ॥

यत् । त्वा॒ । सो॒म॒ । प्र॒ऽपिब॑न्ति । तत॑ः । आ । प्या॒य॒से॒ । पुन॑ः ।
वा॒युः । सोम॑स्य । र॒क्षि॒ता । समा॑नाम् । मास॑ः । आऽकृ॑तिः ॥ ४ ॥

आ॒च्छद्वि॑धानैर्गुपि॒तो बार्ह॑तैः सोम रक्षि॒तः ।
ग्राव्णा॒मिच्छृ॒ण्वन् ति॑ष्ठसि॒ न ते॑ अश्नाति॒ पार्थि॑वः ॥ ५ ॥

आ॒च्छ॒त्ऽवि॑धानैः । गु॒पि॒तः । बार्ह॑तैः । सो॒म॒ । र॒क्षि॒तः ।
ग्राव्णा॑म् । इत् । शृ॒ण्वन् । ति॒ष्ठ॒सि॒ । न । ते॒ । अ॒श्ना॒ति॒ । पार्थि॑वः ॥ ५ ॥

चित्ति॑रा उप॒बर्ह॑णं॒ चक्षु॑रा[5] अ॒भ्यञ्ज॑नम् ।
द्यौर्भूमि॒ः कोश॑ आसी॒द् यदया॑त् सू॒र्या पति॑म् ॥ ६ ॥

चित्ति॑ः । आ॒ः[6] । उ॒प॒ऽबर्ह॑णम् । चक्षु॑ः । आ॒ः । अ॒भि॒ऽअञ्ज॑नम् ।
द्यौः । भूमि॑ः । कोश॑ः । आ॒सी॒त् । यत् । अया॑त् । सू॒र्या । पति॑म् ॥ ६ ॥

रैभ्या॑सीदनु॒देयी॑ नाराशं॒सी न्योच॑नी ।
सू॒र्याया॑ भ॒द्रमिद् वासो॑ गाथ॑यैति॒[7] परि॑ष्कृता[8] ॥ ७ ॥

रैभी॑ । आ॒सी॒त् । अ॒नु॒ऽदेयी॑ । ना॒रा॒शंसी॑ । नि॒ऽओच॑नी ।
सू॒र्याया॑ः । भ॒द्रम् । इत् । वास॑ः । गाथ॑या । ए॒ति॒ । परि॑ष्कृता ॥ ७ ॥

स्तोमा॑ आसन् प्रति॒धय॑ः[9] कु॒रीर॒ं छन्द॑ ओप॒शः ।

---

१. °पि॒षं° C,B[2],P[3],M,W,T; °पी॒षं° D; °पी॒षं° A,S[m]; °पिंशन्त्यो° पै १८,१,३ [मूको.].
२. कश्चन ऋ १०,८५,३. ३. °पी॒ष॒न्ति॒ D[2]; °पी॒षन्ति॑ P,P[2]J; °पि॒ंशन्ति॑ Cp. ४. देव १०,८५,५. ५. °रावद्? पै १८,१,६. ६. आ॒ P[2]. ७. °यै॒धि॒ E; °यैतु पै १८,१,७.
८. °कृतम् (पपा. परि॑ऽकृतम्) ऋ १०,८५,६. ९. परिधयः पै १८,१,८.

सूर्याया अश्विना वराग्निरासीत् पुरोगवः ॥ ८ ॥

स्तोमाः । आसन् । प्रतिऽधयः । कुरीरम् । छन्दः । ओपशः ।
सूर्यायाः । अश्विना । वरा । अग्निः । आसीत् । पुरःऽगवः ॥ ८ ॥

सोमो वधूयुरभवदश्विनास्तामुभा वरा ।
सूर्यां यत् पत्ये शंसन्तीं मनसा सविताददात् ॥ ९ ॥

सोमः । वधूऽयुः । अभवत् । अश्विना । आस्ताम् । उभा । वरा ।
सूर्याम् । यत् । पत्ये । शंसन्तीम् । मनसा । सविता । अददात्[1] ॥ ९ ॥

मनो अस्या अन आसीद् द्यौरासीदुत च्छदिः ।
शुक्रावनड्वाहावास्तां यदयात् सूर्या पतिम्[2] ॥ १० ॥

मनः । अस्याः । अनः । आसीत् । द्यौः । आसीत् । उत । छदिः ।
शुक्रौ । अनड्वाहौ । आस्ताम् । यत् । अयात् । सूर्या । पतिम् ॥ १० ॥

ऋक्सामाभ्यामभिहितौ[3] गावौ ते सामनावैताम्[4] ।
श्रोत्रे[5] ते चक्रे आस्तां दिवि पन्थाश्चराचरः ॥ ११ ॥

ऋक्ऽसामाभ्याम् । अभिऽहितौ । गावौ । ते । सामनौ । ऐताम् ।
श्रोत्रे इति । ते । चक्रे इति । आस्ताम् । दिवि । पन्थाः[6] । चराचरः ॥ ११ ॥

शुची ते चक्रे यात्या व्यानो अक्ष आहतः ।
अनो मनस्मयं सूर्यारोहत् प्रयती[7] पतिम् ॥ १२ ॥

शुची इति । ते । चक्रे इति । यात्याः । विऽआनः । अक्षः । आऽहतः ।
अनः । मनस्मयम् । सूर्या । आ । अरोहत् । प्रऽयती । पतिम् ॥ १२ ॥

सूर्याया वहतुः प्रागात् सविता यमवासृजत् ।
मघासु[8] हन्यन्ते गावः फल्गुनीषु व्युह्यते[9] ॥ १३ ॥

---

१. तु. ऋ. पपा १०,८५,९; वैतु. शंपा. अददात्. २. गृहम् ऋ १०,८५,१०.
३. °भ्यामुपहितौ पै १८,१,११. ४. °नावितः Km, ऋ १०,८५,११. ५. श्रोत्रं ऋ. पै.
६. पथाः P. ७. प्रयुंती E. ८. अघासु ऋ १०,८५,१३ पै १८,२,२. ९. हन्यन्ते गावोऽर्जुन्योः पर्युह्यते ऋ. † विं वह्यते पै.

सूर्यायाः । वहतुः । प्र । अगात् । सविता । यम् । अवऽअसृजत् ।
मघासु । हन्यन्ते । गावः । फल्गुनीषु । वि । उह्यते ॥ १३ ॥

यदश्विना पृच्छमानावयातं त्रिचक्रेण वहतुं सूर्यायाः ।
क्वैकं चक्रं वामासीत् क्व देष्ट्राय तस्थथु[1]: ॥ १४ ॥

यत् । अश्विना । पृच्छमानौ । अयातम् । त्रिऽचक्रेण । वहतुम् । सूर्यायाः ।
क्व । एकम् । चक्रम् । वाम् । आसीत् । क्व । देष्ट्राय । तस्थथुः[2] ॥ १४ ॥

यदयातं शुभस्पती वरेयं सूर्यामुप ।
विश्वे देवा अनु तद् वामजानन् पुत्रः पितरमवृणीत[3] पूषा ॥ १५ ॥

यत् । अयातम् । शुभः । पती इति । वरेऽयम् । सूर्याम् । उप ।
विश्वे । देवाः । अनु । तत् । वाम् । अजानन् । पुत्रः । पितरम् । अवृणीत । पूषा ॥ १५ ॥

द्वे ते चक्रे सूर्ये[4] ब्रह्माण ऋतुथा विदुः ।
अथैकं चक्रं यद् गुहा तदद्धातय इद् विदुः[5] ॥ १६ ॥

द्वे इति । ते । चक्रे इति । सूर्ये[4] । ब्रह्माणः । ऋतुऽथा । विदुः ।
अथ । एकम्[6] । चक्रम् । यत् । गुहा । तत् । अद्धातयः । इत् । विदुः[7] ॥ १६ ॥

अर्यमणं[8] यजामहे सुबन्धुं[9] पतिवेदनम्[10] ।
उर्वारुकमिव बन्धनात् प्रेतो[11] मुञ्चामि[12] नामुतः[13] ॥ १७ ॥

अर्यमणम् । यजामहे । सुऽबन्धुम् । पतिऽवेदनम् ।
उर्वारुकम्ऽइव । बन्धनात् । प्र । इतः । मुञ्चामि । न । अमुतः ॥ १७ ॥

---

१. तस्थतुः D,E,$K^{m}$,Cs. २. तस्थथुः P. ३. पितरावृणीत $K^{m}$, ऋ १०,८५,१४ पै १८,२,४. ४. तु. RW. ऋ १०,८५,१६; वैतु. शंपा. सात. सूर्ये. ५. विदुः $K^{m}$,R W. ऋ.; विदुः > विदुः Dc. ६. ऐकम् P. ७. विदुः $P^{2}$. ८. त्र्यम्बकं ऋ ७,५९,१२ मा ३,६० तै १,८,६,२ मै १,१०,४ काठ ९,७. ९. सुगन्धिं ऋ.; सुगन्धिं मा. तै. मै. काठ. पै १८,२,७. १०. पुष्टिवर्धनम् ऋ.; पुष्टिवर्धनम् मा. तै.मै.; रयिपोषणम् काठ. ११. मृत्योर् ऋ.तै. मै. काठ.; इतो मा. १२. मुक्षीय ऋ. मा. तै. मै. काठ. १३. मामुतः मा. पै.; मामृतात् ऋ. तै. मै. काठ.

प्रेतो मुञ्चामि[1] नामुतः सुबद्धाममुतस्करम् ।
यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति ॥ १८ ॥

प्र । इतः । मुञ्चामि । न । अमुतः । सुऽबद्धाम् । अमुतः । करम् ।
यथा । इयम् । इन्द्र । मीढ्वः । सुऽपुत्रा । सुऽभगा । असति ॥ १८ ॥

[2]प्र त्वा मुञ्चामि† वरुणस्य पाशाद् येन त्वाबध्नात् सविता ‡सुशेवाः[2] ।
ऋतस्य[3] योनौ सुकृतस्य लोके [4]स्योनं ते अस्तु सहसंभलायै[4] ॥ १९ ॥

प्र । त्वा । मुञ्चामि[5] । वरुणस्य । पाशात् । येन । त्वा । अबध्नात् । सविता । सुऽशेवाः ।
ऋतस्य । योनौ । सुऽकृतस्य । लोके । स्योनम् । ते । अस्तु । सहऽसंभलायै ॥ १९ ॥

[6]भगस्त्वेतो[6] नयतु हस्तगृह्याश्विना त्वा प्र वहतां रथेन ।
गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदासि ॥ २० ॥

भगः[7] । त्वा । इतः । नयतु । हस्तऽगृह्य । अश्विना । त्वा । प्र । वहताम् । रथेन ।
गृहान् । गच्छ । गृहऽपत्नी । यथा । असः । वशिनी । त्वम् । विदथम् । आ । वदासि ॥२०॥

इह प्रियं प्रजायै[8] ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि ।
एना पत्या तन्वं१[9] सं स्पृशस्वाथ[10] जिर्विर्विदथमा[11] वदासि[12] ॥ २१ ॥

इह । प्रियम् । प्रऽजायै । ते । सम् । ऋध्यताम् । अस्मिन् । गृहे । गार्हऽपत्याय । जागृहि ।
एना । पत्या । तन्वम् । सम् । स्पृशस्व । अथ । जिर्विः । विदथम् । आ । वदासि ॥ २१ ॥

इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम्[13] ।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वस्तकौ[14] ॥ २२ ॥

इह । एव । स्तम् । मा । वि । यौष्टम् । विश्वम् । आयुः । वि । अश्नुतम्[15] ।

---

१. मुञ्चामि ऋ १०,८५,२५; मुञ्चति पै १८,२,८; मुञ्चाति आपमं १,४,५. २. इमं वि ष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः तै १,१,१०,२. † मुचामि D. ‡ सुशेवः ऋ १०,८५,२४ पै १८,२,६ [मूको.]. ३. धातुश्च तै. ४. ऽरिष्टां त्वा सह पत्या दधामि ऋ.; स्योनं मे सह पत्या करोमि तै. ५. मुचामि P², Cp. ६. पूषा त्वेतो ऋ १०,८५, २६. ७. भगः P. ८. प्रजया ऋ १०,८५,२७. ९. तन्वं३ Bʰ, C, E. १०. सं सृजस्वाधा ऋ.; सं स्पृशस्वाथा पै १८,२,१०. ११. जिर्विर् B², I; जिव्री ऋ.; जीव्री आपमं १,९,४. १२. वदाथः ऋ. १३. दीर्घमायु° पै १८,३,१. १४. स्वे गृहे ऋ १०,८५,४२ पै. १५. अश्नुतम् P, P².

क्रीडन्तौ । पुत्रैः । नप्तृऽभिः । मोदमानौ । सुऽअस्तकौ ॥ २२ ॥

[1]पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि यातोऽर्णवम् ।
विश्वान्यो भुवना विचष्ट ऋतूँरन्यो विदधज्जायसे नवः ॥ २३ ॥

पूर्वऽअपरम् । चरतः । मायया । एतौ । शिशू इति । क्रीडन्तौ । परि । यातः । अर्णवम् ।
विश्वा । अन्यः । भुवना । विऽचष्टे । ऋतून् । अन्यः । विऽदधत् । जायसे । नवः ॥ २३ ॥

[2]नवोनवो भवसि जायमानोऽह्नां केतुरुषसामेष्यग्रम् ।
भागं देवेभ्यो वि दधास्यायन् प्र चन्द्रमस्तिरसे दीर्घमायुः ॥ २४ ॥

नवःऽनवः । भवसि । जायमानः । अह्नाम् । केतुः । उषसाम् । एषि । अग्रम् ।
भागम् । देवेभ्यः । वि । दधासि । आऽयन् । प्र । चन्द्रमः । तिरसे । दीर्घम् । आयुः ॥ २४ ॥

परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु ।
कृत्यैषा पद्वती भूत्वा[3] जाया विशते पतिम् ॥ २५ ॥

परा । देहि । शामुल्यम् । ब्रह्मऽभ्यः । वि । भज । वसु ।
कृत्या । एषा । पत्ऽवती । भूत्वा । आ । जाया । विशते । पतिम् ॥ २५ ॥

नीललोहितं भवति कृत्यासक्तिर्व्यज्यते ।
एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु[4] बध्यते ॥ २६ ॥

नीलऽलोहितम् । भवति । कृत्या । आसक्तिः । वि । अज्यते ।
एधन्ते । अस्याः । ज्ञातयः । पतिः । बन्धेषु । बध्यते ॥ २६ ॥

अश्लीला[5] तनूर्भवति रुशती पापयामुया ।
पतिर्यद्[6] वध्वो३ वाससः[7] स्वमङ्गमभ्यूर्णुते[8] ॥ २७ ॥

अश्लीला । तनूः । भवति । रुशती । पापया । अमुया ।
पतिः । यत् । वध्वः । वाससः । स्वम् । अङ्गम् । अभिऽऊर्णुते ॥ २७ ॥

---

१. पृ १००५ टि ७-१२ द्र.　२. पृ १००६ टि २-५ द्र.　३. भूत्व्या ऋ १०,८५,२९.　४. °बन्धेषु B.　५. अश्रीरा ऋ १०,८५,३० पै १८,३,६.　६. °र्य Cs.　७. वाससा P³,M,W, ऋ.　८. °मभिधित्सते ऋ.

आशसनं विशसनमथो अधिविकर्तनम् ।
सूर्यायाः पश्य रूपाणि तानि [१]ब्रह्मोत शुम्भति[१] ॥ २८ ॥

आऽशसनम् । विऽशसनम् । अथो इति । अधिऽविकर्तनम् ।
सूर्यायाः । पश्य । रूपाणि । तानि । ब्रह्मा । उत । शुम्भति ॥ २८ ॥

तृष्टमेतत् कटुकमपाष्ठवद् विषवन्नैतदत्तवे ।
सूर्यां यो ब्रह्मा वेद[२] स इद् वाधूयमर्हति ॥ २९ ॥

तृष्टम् । एतत् । कटुकम् । अपाष्ठऽवत् । विषऽवत्[३] । न । एतत् । अत्तवे ।
सूर्याम् । यः । ब्रह्मा । वेद । सः । इत् । वाधूऽयम् । अर्हति ॥ २९ ॥

स [४]इत् तत् स्योनं[४] हरति ब्रह्मा वासः सुमङ्गलम् ।
प्रायश्चित्तिं[५] यो अध्येति येन जाया न रिष्यति ॥ ३० ॥

सः । इत् । तत् । स्योनम् । हरति । ब्रह्मा । वासः । सुऽमङ्गलम् ।
प्रायश्चित्तिम् । यः । अधिऽएति । येन । जाया । न । रिष्यति ॥ ३० ॥

युवं भगं सं भरतं[६] समृद्धमृतं वदन्तावृतोद्येषु[७] ।
ब्रह्मणस्पते पतिमस्यै रोचय चारु संभलो[८] वदतु वाचमेताम् ॥ ३१ ॥

युवम् । भगम् । सम् । भरतम् । समऽऋद्धम् । ऋतम् । वदन्तौ । ऋतऽउद्येषु ।
ब्रह्मणः । पते । पतिम् । अस्यै[९] । रोचय । चारु । सम्ऽभलः । वदतु । वाचम् । एताम् ॥

इहेदसाथ न परो गमाथेमं गावः प्रजया वर्धयाथ[१०] ।
[११]शुभं यतीरुस्रियाः[११] सोमवर्चसो विश्वे देवाः [१२]क्रन्निह वो मनांसि ॥ ३२ ॥

इह । इत् । असाथ । न । परः । गमाथ । इमम् । गावः । प्रऽजया । वर्धयाथ ।
शुभम् । यतीः । उस्रियाः । सोमऽवर्चसः । विश्वे । देवाः । क्रन्[१२] । इह । वः । मनांसि ॥ ३२ ॥

इमं गावः प्रजया सं विशाथायं[१३] देवानां न[१४] मिनाति भागम् ।

---

१. ब्रह्मा तु शुन्धति ऋ १०,८५,३५. २. विद्यात् ऋ १०,८५,३४. ३. विषऽवन् P; विष० वत् Cp. ४. वै तत् स्योनो पै १८,३,९. ५. °श्चित्तं पै. ६. भरथः पै १८,३,१०. ७. वृताद्येषु Km; °तोद्येन पै. ८. पुम्भलो? पै. ९. अस्य P². १०. संवर्धयाथ B. ११. वैप १, ३१२८ s द्र. १२. वैप १,११४९ i द्र. १३. विशाथायं Sm; विशध्वमयं पै १८,४,२. १४. नि A.

अस्मै वः पूषा मरुतश्च सर्वे अस्मै वो धाता सविता सुवाति ॥ ३३ ॥

इमम् । गावः । प्रऽजया । सम् । विशाथ । अयम् । देवानाम् । न[1] । मिनाति । भागम् ।
अस्मै । वः । पूषा । मरुतः । च । सर्वे । अस्मै । वः । धाता । सविता । सुवाति ॥३३॥

अनृक्षरा ऋजवः सन्तु पन्थानो[2] येभिः सखायो यन्ति नो वरेयम्[3] ।
सं भगेन समर्यम्णा सं धाता सृजतु वर्चसा ॥ ३४ ॥

अनृक्षराः । ऋजवः । सन्तु । पन्थानः । येभिः । सखायः । यन्ति । नः । वरेऽयम् ।
सम् । भगेन । सम् । अर्यम्णा[4] । सम् । धाता । सृजतु । वर्चसा ॥ ३४ ॥

यच्च वर्चो अक्षेषु सुरायां च यदाहितम् ।
यद् गोष्वश्विना[5] वर्चस्तेनेमां वर्चसावतम् ॥ ३५ ॥

यत् । च । वर्चः । अक्षेषु । सुरायाम् । च । यत् । आऽहितम् ।
यत् । गोषु । अश्विना[5] । वर्चः । तेन । इमाम् । वर्चसा । अवतम्[6] ॥ ३५ ॥

येन महानघ्न्या[7] जघनमश्विना येन वा सुरा ।
येनाक्षा अभ्यषिच्यन्त तेनेमां वर्चसावतम् ॥ ३६ ॥

येन । महाऽनघ्न्याः । जघनम् । अश्विना । येन । वा । सुरा ।
येन । अक्षाः । अभिऽअसिच्यन्त । तेन । इमाम् । वर्चसा । अवतम् ॥ ३६ ॥

यो अनिध्मो दीदयदप्स्व१न्तर्यं[8] विप्रास ईडते अध्वरेषु ।
अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्यावान्[9] ॥ ३७ ॥

यः । अनिध्मः । दीदयत् । अप्ऽसु । अन्तः । यम् । विप्रासः । ईडते । अध्वरेषु ।
अपाम् । नपात् । मधुऽमतीः । अपः । दाः । याभिः । इन्द्रः । ववृधे । वीर्यऽवान् ॥३७॥

इदमहं रुशन्तं ग्राभं तनूदूषिमपोहामि[10] ।

---

१. नि P. २. पन्थाः ऋ १०,८५,२३. ३. वरेण्यम् आग्निगृ १,५,१:२; वैप १,२९८१ o द्र.
४. अर्यं° P. ५. तु. RW.; वैतु. शंपा. ष्वश्विना ( पपा. अश्विना ). ६. अवतरम् P². ७. महानग्न्या पै १८,४,४; वैप १,२४६८ s द्र. ८. दीदय° ऋ १०,३०,४; दीदायाप्स्व° पै १८,४,६; °स्व३° A,Bʰ,E,R. ९. वीर्यऽवान् Sᵐ; वीर्याय ऋ.
१०. °मपिनुदामि पै १८,४,७.

यो भद्रो रोचनस्तमुदचामि[1] ॥ ३८ ॥

इदम् । अहम् । रुशन्तम् । ग्राभम् । तनूऽदूषिम् । अप । ऊहामि ।
यः । भद्रः । रोचनः । तम् । उत् । अचामि ॥ ३८ ॥

आस्यै ब्राह्मणाः [2]स्नपनीर्हरन्त्ववीरघ्नीरुदजन्त्वापः[2] ।
अर्यम्णो अग्निं पर्येतु[3] पूषन्[4] [5]प्रतीक्षन्ते [†]श्वशुरो देवरश्च[5] ॥ ३९ ॥

आ । अस्यै । ब्राह्मणाः । स्नपनीः । हरन्तु । अवीरऽघ्नीः । उत् । अजन्तु । आपः ।
अर्यम्णः । अग्निम् । परि । एतु । पूषन्[6] । प्रति । ईक्षन्ते । श्वशुरः । देवरः । च ॥ ३९ ॥

शं ते हिरण्यं शमु सन्त्वापः शं मेथिर्भवतु शं युगस्य तर्द्म ।
शं त आपः शतपवित्रा भवन्तु शमु पत्या तन्वं१[7] सं स्पृशस्व ॥ ४० ॥

शम् । ते । हिरण्यम् । शम् । ऊं इति । सन्तु । आपः । शम् । मेथिः । भवतु । शम् ।
युगस्य । तर्द्म । शम् । ते । आपः । शतऽपवित्राः । भवन्तु । शम् । ऊं इति । पत्या ।
तन्वम् । सम् । स्पृशस्व ॥ ४० ॥

खे रथस्य खेनसः खे युगस्य शतक्रतो ।
अपालामिन्द्र त्रिष्पूत्वाकृणोः[8] सूर्यत्वचम् ॥ ४१ ॥

खे । रथस्य । खे । अनसः । खे । युगस्य । शतक्रतो इति शतऽक्रतो ।
अपालाम् । इन्द्र । त्रिः । पूत्वा । अकृणोः । सूर्यऽत्वचम् ॥ ४१ ॥

आशासाना सौमनसं प्रजां सौभाग्यं रयिम् ।
पत्युरनुव्रता भूत्वा सं नह्यस्वामृताय कम् ॥ ४२ ॥

आऽशासाना । सौमनसम् । प्रऽजाम् । सौभाग्यम् । रयिम् ।
पत्युः । अनुऽव्रता । भूत्वा । सम् । नह्यस्व । अमृताय । कम् ॥ ४२ ॥

---

१. रोचनस्त्वमुदचामि E,K; रोचनस्त्यमपि नुदामि पै १८,४,७. २. स्नपनं ह°, °दचन्त्वा° आपमं १,१,७;८; °दचन्त्वा° W. ३. पर्यैति $K^m$, पै १८,४,८; परि यन्तु आपमं. ४. क्षिप्रं पै. आपमं. ५. °क्षन्तां श्वश्रुवो देवरांश्च आपमं. † श्वशुरा पै. ६. पूषम् $P^2$. ७. तन्वं३ $B^h$,C,D,E,R,$S^m$. ८. त्रिः पू° B,E,$K^m$,R,V,Dc,C,$R^2$,$K^2$; पूत्व्यकृणोः ऋ ८,९१,७.

यथा सिन्धुर्नदीनां साम्राज्यं सुषुवे वृषा ।
एवा त्वं सम्राज्ञ्येधि पत्युरस्तं परेत्य ॥ ४३ ॥

यथा । सिन्धुः । नदीनाम् । साम्ऽराज्यम् । सुसुवे । वृषा ।
एव । त्वम् । सम्ऽराज्ञी । एधि । पत्युः । अस्तम् । पराऽइत्य ॥ ४३ ॥

सम्राज्ञ्येधि[1] श्वशुरेषु[2] सम्राज्ञ्युत[3] देवृषु ।
ननान्दुः[4] सम्राज्ञ्येधि[1] सम्राज्ञ्युत श्वश्र्वाः[5] ॥ ४४ ॥

सम्ऽराज्ञी । एधि । श्वशुरेषु । सम्ऽराज्ञी । उत । देवृषु ।
ननान्दुः । सम्ऽराज्ञी । एधि । सम्ऽराज्ञी । उत । श्वश्र्वाः ॥ ४४ ॥

या अकृन्तन्नवयन्[6] याश्च तत्निरे या देवीरन्ताँ[7] अभितोऽददन्त[8] ।
तास्त्वा जरसे[9] सं व्ययन्त्वायुष्मतीदं[10] परि धत्स्व वासः ॥ ४५ ॥

याः । अकृन्तन् । अवयन् । याः । च । तत्निरे । याः । देवीः । अन्तान् । अभितः । अददन्त ।
ताः । त्वा । जरसे । सम् । व्ययन्तु । आयुष्मती । इदम् । परि । धत्स्व । वासः ॥ ४५ ॥

जीवं[11] रुदन्ति वि नयन्त्यध्वरं[12] दीर्घामनु प्रसितिं दीध्युर्नरः[13] ।
वामं पितृभ्यो य इदं समीरिरे[14] मयः पतिभ्यो जनये[15] परिष्वजे ॥ ४६ ॥

जीवम् । रुदन्ति । वि । नयन्ति । अध्वरम् । दीर्घाम् । अनु । प्रऽसितिम् । दीध्युः । नरः ।
वामम् । पितृऽभ्यः । ये । इदम् । सम्ऽईरिरे । मयः । पतिऽभ्यः । जनये । परिऽस्वजे ॥ ४६ ॥

स्योनं ध्रुवं प्रजायै[16] धारयामि[17] तेऽश्मानं[18] देव्याः पृथिव्या उपस्थे ।
तमा तिष्ठानुमाद्या[19] सुवर्चा[20] दीर्घं त आयुः सविता कृणोतु ॥ ४७ ॥

---

१. °ज्ञी भव ऋ १०,८५,४६ मंत्रा १,२,२० आपमं १,६,६. २. श्वशुरे ऋ. मंत्रा. आपमं. ३. °ज्ञी अधि ऋ. आपमं. मंत्रा. ४. ननान्दरि ऋ. मंत्रा. आपमं. ५. श्वश्रुवाम् पै १८,५,१ आपमं.; श्वश्र्वां ऋ. मंत्रा. ६. अतन्वतावयन् मंत्रा १,१,५ पागृ १,४,१३ हिगृ १,४,२; °यं A,B,C,D; °यन् Sm. ७. °रन्तं E R; देवी तन्तून् पागृ. ८. अभितः ततन्थ मंत्रा. पागृ. ९. जरसा मंत्रा. हिगृ. १०. °यस्वायु° पागृ.; यन्त्यायु° पै १८,५,२; °आयुष्मान्° हिगृ. ११. जीवां आपमं १,१,६. १२. मयन्ते अध्वरे ऋ १०,४०,१०. १३. दीधियु° ऋ. पै १८,५,३. १४. समेरिरे ऋ. पै. [मूको.]. १५. जनयः ऋ. पै [मूको.]. १६. प्रजायते पै १८,५,४. १७. °यामः पै १८. °श्मानं B. १९. रोहानु° पै.; °नुमाद्या Sm. २०. सुवीरा पै.

स्योनम् । ध्रुवम् । प्रऽजायै । धारयामि । ते । अश्मानम् । देव्याः । पृथिव्याः । उपऽस्थे ।
तम् । आ । तिष्ठ । अनुऽमाद्या । सुऽवर्चाः । दीर्घम् । ते । आयुः । सविता । कृणोतु ॥४७॥

**येनाग्निरस्या भूम्या हस्तं जग्राह दक्षिणम् ।**
**तेन गृह्णामि ते हस्तं मा व्यथिष्ठा मया सह प्रजया च धनेन च ॥४८॥**

येन । अग्निः । अस्याः । भूम्याः । हस्तम् । जग्राह । दक्षिणम् ।
तेन । गृह्णामि । ते । हस्तम् । मा । व्यथिष्ठाः । मया । सह । प्रऽजया । च । धनेन । च ॥४८॥

**देवस्ते सविता हस्तं गृह्णातु सोमो राजा सुप्रजसं कृणोतु ।**
**अग्निः सुभगां जातवेदाः पत्ये पत्नीं जरदष्टिं कृणोतु ॥ ४९ ॥**

देवः । ते । सविता । हस्तम् । गृह्णातु । सोमः । राजा । सुऽप्रजसम्[1] । कृणोतु ।
अग्निः । सुऽभगाम् । जातऽवेदाः । पत्ये । पत्नीम् । जरत्ऽअष्टिम् । कृणोतु ॥ ४९ ॥

**गृह्णामि[2] ते सौभगत्वाय[3] हस्तं मया पत्या जरदष्टिर्यथासः[4] ।**
**भगो अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥ ५० ॥**

गृह्णामि । ते । सौभगऽत्वाय । हस्तम् । मया । पत्या । जरत्ऽअष्टिः । यथा । असः ।
भगः । अर्यमा । सविता । पुरम्ऽधिः । मह्यम् । त्वा । अदुः । गार्हऽपत्याय । देवाः ॥ ५० ॥

**भगस्ते हस्तमग्रहीत्[5] सविता[6] हस्तमग्रहीत्[5] ।**
**पत्नी त्वमसि धर्मणाहं गृहपतिस्तव ॥ ५१ ॥**

भगः । ते । हस्तम् । अग्रहीत् । सविता । हस्तम् । अग्रहीत् ।
पत्नी । त्वम् । असि । धर्मणा । अहम् । गृहऽपतिः । तव ॥ ५१ ॥

**[7]ममेयमस्तु पोष्या[7] मह्यं त्वादाद् बृहस्पतिः ।**
**मया पत्या प्रजावति[8] सं जीव शरदः शतम् ॥ ५२ ॥**

---

१. °प्रजसम् P. २. गृभ्णामि ऋ १०,८५,३६ मंत्रा १,२,१६. ३. सुप्रजास्त्वाय आपमं १,३,३ हिगृ १,२०,१. ४. °थासत् Bh,D,K,Km,Sm,V,Cs, हिगृ.; °थासः>थासत् Dc. ५. °ग्रभीत् आपमं २,३,१० शांगृ २,३,१. ६. अर्यमा पै १८,५,८. ७. ध्रुवैधि पोष्या मयि खि ३,१७,१ शांगृ १,१७,३ पागृ १,१८,१९. ८. प्रजावति C,E, R,Sm,I,K[2]; प्रजावती A,B,Bh,Cs,B[2],W., खि. आपमं १,८,९ पागृ.

मम॑ । इ॒यम् । अ॒स्तु॒ । पोष्या॑ । मह्य॑म् । त्वा॒ । अ॒दा॒त् । बृ॒ह॒स्पति॑ः ।
मया॑ । पत्या॑ । प्र॒जाऽव॑ति[१] । सम् । जी॒व॒ । श॒रद॑ः । श॒तम् ॥ ५२ ॥

त्वष्टा॒ वासो॒ व्य॑द॒धाच्छु॒भे[२] कं बृह॒स्पते॑ः प्र॒शिषा॑ क॒वीना॑म् ।
तेने॒मां नारीं॑ सवि॒ता भग॑श्च सू॒र्यामि॑व॒ परि॑ धत्तां प्र॒जया॑ ॥ ५३ ॥

त्वष्टा॑ । वास॑ः । वि । अ॒द॒धा॒त् । शु॒भे । कम् । बृ॒ह॒स्पते॑ः । प्र॒ऽशिषा॑ । क॒वीना॑म् ।
तेन॑ । इ॒माम् । नारी॑म् । स॒वि॒ता । भग॑ः । च॒ । सू॒र्याम्ऽइ॑व । परि॑ । ध॒त्ता॒म् । प्र॒ऽजया॑ ॥५३॥

इ॒न्द्रा॒ग्नी द्यावा॑पृथि॒वी मा॑त॒रिश्वा॑ मि॒त्रावरु॑णा॒ भगो॑ अ॒श्विनो॒भा ।
बृ॒ह॒स्पति॑र्म॒रुतो॒ ब्रह्म॒ सोम॑ इ॒मां नारीं॑ प्र॒जया॑ वर्धयन्तु ॥ ५४ ॥

इ॒न्द्रा॒ग्नी इति॑ । द्यावा॑पृथि॒वी इति॑ । मा॒त॒रिश्वा॑ । मि॒त्रावरु॑णा । भग॑ः । अ॒श्विना॑ । उ॒भा ।
बृ॒ह॒स्पति॑ः । म॒रुत॑ः । ब्रह्म॑ । सोम॑ः । इ॒माम् । नारी॑म् । प्र॒ऽजया॑ । व॒र्ध॒य॒न्तु॒ ॥ ५४ ॥

बृ॒ह॒स्पति॑ः प्रथ॒मः सू॒र्याया॑ः शी॒र्षे केशाँ॑[३] अकल्पयत् ।
तेने॒माम॑श्वि॒ना नारीं॑ पत्ये॒ सं शो॑भयामसि ॥ ५५ ॥

बृ॒ह॒स्पति॑ः । प्र॒थ॒मः । सू॒र्याया॑ः । शी॒र्षे । केशा॑न् । अ॒क॒ल्प॒य॒त् ।
तेन॑ । इ॒माम् । अ॒श्वि॒ना॒ । नारी॑म् । पत्ये॑ । सम् । शो॒भ॒या॒म॒सि॒ ॥ ५५ ॥

इ॒दं तद्रू॒पं यदव॑स्त॒ योषा॑ जा॒यां जि॑ज्ञा॒से मन॑सा॒ चर॑न्तीम् ।
ताम॒न्वर्ति॑ष्ये॒ सखि॑भि॒र्नव॑ग्वैः क इ॒मान्[४] वि॒द्वान् वि च॑चर्त॒ पाशा॑न् ॥ ५६ ॥

इ॒दम् । तत् । रू॒पम् । यत् । अव॑स्त । योषा॑ । जा॒याम् । जि॒ज्ञा॒से॒ । मन॑सा । चर॑न्तीम् ।
ताम् । अनु॑ । अ॒र्ति॒ष्ये॒ । सखि॑ऽभिः । नव॑ऽग्वैः । कः । इ॒मान् । वि॒द्वान् । वि । च॒च॒र्त॒ । पाशा॑न् ॥

अ॒हं वि ष्या॑मि॒ मयि॑ रू॒पम॑स्या[५] वेद॒दित् पश्य॒न् मन॑सः कु॒लाय॑म्[६] ।
न स्तेय॑मद्मि॒ मन॒सोद॑मुच्ये स्व॒यं श्र॑थ्ना॒नो[७] वरु॑णस्य॒ पाशा॑न्[८] ॥ ५७ ॥

अ॒हम् । वि । स्या॒मि॒ । मयि॑ । रू॒पम् । अ॒स्याः॒ । वेद॑त् । इत् । पश्य॑न्[९] । मन॑सः । कु॒लाय॑म् ।

---

१. प्र॒जाऽव॑ति P,J,Cp; प्र॒जाऽव॑ती Bp². २. °छुंभे Km. ३. कशाँ Km; केशँ E,R. ४. इमं पै १८,६,४. ५. °म॑स्य॒ BVC. ६. °यंन् A,E. ७. श्रंथा॒नो Km; श्रंध्नानो K. ८. पाशम् पै १८,६,५. ९. पश्यंत् P.

न । स्तेयम् । अद्मि । मनसा । उत् । अमुच्ये । स्वयम् । श्रथ्नानः । वरुणस्य । पाशान् ॥ ५७ ॥

प्र त्वा मुञ्चामि वरुणस्य पाशाद् येन त्वाबध्नात् सविता सुशेवाः ।
उरुं लोकं सुगमत्र पन्थां कृणोमि तुभ्यं सहपत्न्यै वधु ॥ ५८ ॥

प्र । त्वा । मुञ्चामि । वरुणस्य । पाशात् । येन । त्वा । अबध्नात् । सविता । सुऽशेवाः ।
उरुम् । लोकम् । सुऽगम् । अत्र । पन्थाम् । कृणोमि । तुभ्यम् । सहऽपत्न्यै । वधु ॥ ५८ ॥

उद्यच्छध्वमप रक्षो हनाथेमां नारीं सुकृते दधात ।
धाता विपश्चित् पतिमस्यै विवेद भगो राजा पुर एतु प्रजानन् ॥ ५९ ॥

उत् । यच्छध्वम् । अप । रक्षः । हनाथ । इमाम् । नारीम् । सुऽकृते । दधात ।
धाता । विपःऽचित् । पतिम् । अस्यै । विवेद । भगः । राजा । पुरः । एतु । प्रऽजानन् ॥ ५९ ॥

भगस्ततक्ष चतुरः पादान्[2] भगस्ततक्ष चत्वार्युष्पलानि[3] ।
त्वष्टा पिपेश[4] मध्यतोनु वर्ध्रान्त्सा[5] नो अस्तु सुमङ्गली ॥ ६० ॥

भगः । ततक्ष । चतुरः । पादान् । भगः । ततक्ष । चत्वारि । उष्पलानि ।
त्वष्टा । पिपेश । मध्यतः । अनु । वर्ध्रान् । सा । नः । अस्तु । सुऽमङ्गली ॥ ६० ॥

सुकिंशुकं[6] वहतुं विश्वरूपं हिरण्यवर्णं[7] सुवृतं[8] सुचक्रम् ।
आ रोह सूर्ये[9] अमृतस्य[†] लोकं[10] स्योनं पतिभ्यो[11] वहतुं[12] कृणु त्वम्[12] ॥ ६१ ॥

सुऽकिंशुकम् । वहतुम् । विश्वऽरूपम् । हिरण्यऽवर्णम् । सुऽवृतम् । सुऽचक्रम् ।
आ । रोह । सूर्ये[13] । अमृतस्य । लोकम् । स्योनम् । पतिऽभ्यः । वहतुम् । कृणु । त्वम् ॥ ६१ ॥

अभ्रातृघ्नीं[14] वरुणापशुघ्नीं बृहस्पते ।
इन्द्रापतिघ्नीं पुत्रिणीमास्मभ्यं सवितर्वह[15] ॥ ६२ ॥

---

१. पृ १५३८ टि १-३ द्र. २. पदो पै १८,६,८. ३. °ष्यलानि RW.
४. पिपेष पै. ५. वध्रान्त्सा A; °र्ध्रा° K, Km; °द्ध्रा° Bh; °र्ध्रा° > °र्ध्री° B.
६. शल्मलिं ऋ १०,८५,२० आपमं १,६,४ मंब्रा १,३,११. ७. सुवर्णवर्णं मंब्रा. ८. सुकृतं मंब्रा. ९. वध्वमृ° आपमं. † सुकृतस्य पै १८,६,१०. १०. नाभिं मंब्रा.
११. पत्ये ऋ. मंब्रा. १२. कृणुष्व ऋ. आपमं. मंब्रा. १३. सूर्ये P. १४. °तुघ्नी Sm. १५. संशोध्य सवितुर्वह B.

अभ्रातृऽघ्नीम् । वरुण । अपशुऽघ्नीम् । बृहस्पते ।
इन्द्र । अपतिऽघ्नीम् । पुत्रिणीम् । आ । अस्मभ्यम् । सवितः । वह ॥ ६२ ॥

**मा हिंसिष्टं कुमार्य१[1] स्थूणे देवकृते पथि ।**
**शालाया देव्या द्वारं स्योनं कृण्मो वधूपथम् ॥ ६३ ॥**

मा । हिंसिष्टम् । कुमार्यम्[2] । स्थूणे इति । देवऽकृते । पथि ।
शालायाः । देव्याः । द्वारम् । स्योनम् । कृण्मः । वधूऽपथम् ॥ ६३ ॥

**ब्रह्मापरं युज्यतां ब्रह्म पूर्वं ब्रह्मान्ततो मध्यतो ब्रह्म सर्वतः ।**
**अनाव्याधां देवपुरां प्रपद्य शिवा[3] स्योना पतिलोके वि राज ॥ ६४ ॥**

ब्रह्म । अपरम् । युज्यताम् । ब्रह्म । पूर्वम् । ब्रह्म । अन्ततः । मध्यतः । ब्रह्म । सर्वतः ।
अनाव्याधाम् । देवऽपुराम् । प्रऽपद्य । शिवा । स्योना । पतिऽलोके । वि । राज ॥६४॥

**इति प्रथमेऽनुवाके प्रथमं सूक्तम् ।**

३६. देवाः

**इति प्रथमोऽनुवाकः ।**

ऋ. सावित्री सूर्या. दे. आत्मा, १० यक्ष्मनाशनी, ११. दम्पत्योः परिपन्थिनाशनी,

**तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह ।**
**[4]स नः[4] पतिभ्यो जायां [5]दा अग्ने[5] प्रजया सह ॥ १ ॥**

तुभ्यम् । अग्ने । परि । अवहन् । सूर्याम् । वहतुना । सह ।
सः । नः । पतिऽभ्यः । जायाम्[6] । दाः[7] । अग्ने[7] । प्रऽजया । सह ॥ १ ॥

**पुनः पत्नीमग्निरदादायुषा सह वर्चसा ।**
**दीर्घायुरस्या यः पतिर्जीवाति[8] शरदः शतम् ॥ २ ॥**

पुनः । पत्नीम् । अग्निः । अदात् । आयुषा । सह । वर्चसा ।
दीर्घऽआयुः । अस्याः । यः । पतिः । जीवाति । शरदः । शतम् ॥ २ ॥

---

१. कुमार्यं३ B,B^h,D,K^m,R,S^m,Cs. २. °याम् P; °यै P². ३. शिवां A,B,B^h,Cs. ४. पुनः ऋ १०,८५,३८ पै १८,७,१ [मूको.]. ५. दा इत्यस्य पादादित्वादनिघातः अग्ने इत्यस्य च निघातः तु. ऋ. पै. पागृ १,७,३; आपमं १,५,३; वैतु. शंपा. दा अग्ने; अग्ने>अग्ने Dc. ६. जाया P. ७. दाः । अग्ने P. ८. °वातु पै १८,७,२.

[1]सोम॑स्य जा॒या प्र॑थ॒मं ग॑न्ध॒र्वस्तेऽप॑रः[1] पति॑ः[1] ।
तृ॒तीयो॑ अ॒ग्निष्टे॒ पति॑स्तु॒रीय॑स्ते[2] मनु॒ष्य॒जाः ॥ ३ ॥

सोम॑स्य । जा॒या । प्र॒थ॒मम् । ग॒न्ध॒र्वः । ते॒ । अप॑रः । पति॑ः ।
तृ॒तीय॑ः । अ॒ग्निः । ते॒ । पति॑ः । तु॒रीय॑ः । ते॒ । म॒नु॒ष्य॒ऽजाः ॥ ३ ॥

सोमो॑ ददद् ग॒न्ध॒र्वाय॑ ग॒न्ध॒र्वो द॑दद॒ग्नये॑ ।
र॒यिं च॑ पु॒त्रांश्चा॑दाद॒ग्निर्म॒ह्यमथो॑ इ॒माम् ॥ ४ ॥

सोम॑ः । द॒द॒त् । ग॒न्ध॒र्वाय॑ । ग॒न्ध॒र्वः । द॒द॒त् । अ॒ग्नये॑ ।
र॒यिम् । च॒ । पु॒त्रान् । च॒ । अ॒दा॒त् । अ॒ग्निः । मह्य॑म् । अथो॒ इति॑ । इ॒माम् ॥ ४ ॥

आ वा॑मगन्त्सुम॒तिर्वा॑जिनीवसू न्य॑श्विना[3] हृ॒त्सु कामा॑[4] अरंसत[5] ।
अभू॑तं गो॒पा मि॑थु॒ना शु॑भस्पती प्रि॒या अ॑र्य॒म्णो दुर्यां॑ अशीमहि ॥ ५ ॥

आ । वा॒म् । अ॒ग॒न् । सु॒ऽम॒तिः । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू । नि । अ॒श्वि॒ना । हृ॒त्ऽसु । कामा॑ः । अ॒रं॒स॒त । अभू॑तम् । गो॒पा । मि॒थु॒ना । शु॒भ॒ः । प॒ती॒ इति॑ । प्रि॒याः । अ॒र्य॒म्णः । दु॒र्यान् । अ॒शी॒म॒हि॒ ॥ ५ ॥

[6]सा म॑न्द॒साना[7] मन॑सा शि॒वेन॑[8] र॒यिं धे॑हि॒[9] सर्व॑वीरं[9] व॒च॒स्य॒म्[10] ।
सु॒गं[11] ती॒र्थं सु॑प्रपा॒णं शु॑भस्पती स्था॒णुं प॑थि॒ष्ठामप॑[12] दु॒र्म॒तिं ह॑तम् ॥ ६ ॥

सा । म॒न्द॒साना । मन॑सा । शि॒वेन॑ । र॒यिम् । धे॒हि॒ । सर्व॑ऽवीरम् । व॒च॒स्य॒म् । सु॒ऽगम् । ती॒र्थम् । सु॒ऽप्र॒पा॒नम् । शु॒भ॒ः । प॒ती॒ इति॑ । स्था॒णुम् । प॒थि॒ऽस्थाम्[12] । अप॑ । दुः॒ऽम॒तिम् । ह॒तम् ॥

या ओष॑धयो॒ या न॒द्यो॒३॒॑ यानि॒ [13]क्षेत्रा॑णि॒ या वना॑[13] ।
तास्त्वा॑[14] वधु प्र॒जाव॑तीं[15]पत्ये॑ रक्षन्तु र॒क्षस॑ः[15] ॥ ७ ॥

---

१. सोम॑ः प्र॒थ॒मो वि॑विदे ग॒न्ध॒र्वो वि॑विद॒ उत्त॑रः ऋ १०,८५,८० पागृ १,४,१६. ¦ ते अ॑परः पै १८,७,३. २. °तुरीयोऽहं हिगृ १,२०,२. ३. न्याश्विना Bh. ४. कामाँ॑ आपमं १,७,११. ५. अयंसत ऋ १०,४०,१२ आपमं. ६. ता ऋ. आपमं. १,६,१२. ७. मनु॑षो दु॒रोण आ ऋ १०,४०,१३ आपमं. ८. ध॒त्तं ऋ. आपमं. ९. सु॒हवी॑रं ऋ.; द॒शवी॑रं आपमं. १०. व॒च॒स्यवै॑ ऋ. आपमं. ११. कृ॒तं ऋ. आपमं. १२. तु. PW. ऋ. प्रभृ.; वैतु शंपा. सात. पपा. RW. WI. पथि॑ष्ठाम°; प॑थे॒ष्ठा° ऋ. आपमं. १३. धन्वा॑नि॒ ये वना॑ आपमं १,७,९.. १४. ते त्वा॑ आपमं. १५. प्र त्वे मु॒ञ्चन्त्वंह॑सः आपमं.

याः । ओषधयः । याः । नद्यः । यानि । क्षेत्राणि । या । वना ।
ताः । त्वा । वधु । प्रजाऽवतीम् । पत्ये । रक्षन्तु । रक्षसः ॥ ७ ॥

[1]एमं पन्थामरुक्षाम सुगं[1] स्वस्तिवाहनम् ।
यस्मिन्[2] वीरो न रिष्यत्यन्येषां विन्दते वसु ॥ ८ ॥

आ । इमम् । पन्थाम्[3] । अरुक्षाम । सुऽगम् । स्वस्तिऽवाहनम् ।
यस्मिन् । वीरः । न । रिष्यति । अन्येषाम् । विन्दते । वसु ॥ ८ ॥

इदं सु मे नरः शृणुत ययाशिषा दंपती वाममश्नुतः ।
ये गन्धर्वा अप्सरसश्च देवीरेषु [4]वानस्पत्येषु येऽधि तस्थुः[4] ।
स्योनास्ते[5] अस्यै वध्वै[6] भवन्तु मा हिंसिषुर्वहतुमुह्यमानम्[7] ॥ ९ ॥

इदम् । सु । मे । नरः । शृणुत । यया । आऽशिषा । दंपती इति दम्ऽपती । वामम् । अश्नुतः ।
ये । गन्धर्वाः । अप्सरसः । च । देवीः । एषु । वानस्पत्येषु । ये । अधि । तस्थुः ।
स्योनाः । ते[8] । अस्यै । वध्वै[6] । भवन्तु । मा । हिंसिषुः । वहतुम् । उह्यमानम् ॥९॥

ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति[9] जनाँ[10] अनु ।
पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ॥ १० ॥

ये । वध्वः । चन्द्रम् । वहतुम् । यक्ष्माः । यन्ति । जनान् । अनु ।
पुनः । तान् । यज्ञियाः[11] । देवाः । नयन्तु । यतः । आऽगताः ॥ १० ॥

मा विदन् परिपन्थिनो[12] य आसीदन्ति दंपती ।
सुगेन[13] दुर्गमतीतामप द्रान्त्वरातयः ॥ ११ ॥

मा । विदन् । परिऽपन्थिनः । ये । आऽसीदन्ति । दंपती इति दम्ऽपती ।

---

१. ऋ ६,५१,१६ मा ४,२९ प्रभृ. विशिष्टः पाभे. मन्त्रस्य द्र.; य इमं पन्थामगात् सुगं पै १८,७,९; सुगं पन्थानमारुक्षमरिष्टं आपमं १,६,११. २. यत्र पै. ३. पथाम् P,P². ४. वृक्षेषु वानस्पत्येष्वासते आपमं १,७,८. ५. तु. RW., WI आपमं.; वैतु. शंपा. पपा. °स्ते; शिवास्ते° आपमं. ६. तु. आपमं.; वैतु. शंपा. RW. WI. प्रभृ. वध्वे. ७. °मुह्य° B,C.; °मानाम् आपमं. ८. तु. मंपा.; वैतु. शंपा. ते. ९. यन्तु पै १८,८,१. १०. जनँ E,R; जनाद् ऋ १०,८५,३१. ११. °या P,P²J. १२. पर्यायणो ? पै १८,८,२. १३. सुगेभिर् ऋ १०,८५,३२ आपमं १,६,१० मंब्रा १,३,१२.

सुऽगेन । दुःऽगम् । अति । इताम् । अप । द्रान्तु । अरातयः ॥ ११ ॥

**सं काशयामि वहतुं ब्रह्मणा गृहैरघोरेण चक्षुषा मित्रियेण[1] ।**
**पर्याणद्धं[2] विश्वरूपं यदस्ति[3] स्योनं पतिभ्यः सविता तत् कृणोतु ॥ १२ ॥**

सम् । काशयामि । वहतुम् । ब्रह्मणा । गृहैः । अघोरेण । चक्षुषा । मित्रियेण । परिऽआनद्धम् । विश्वऽरूपम् । यत् । अस्ति । स्योनम् । पतिऽभ्यः । सविता । तत् । कृणोतु ॥१२॥

**शिवा नारीयमस्तमागन्निमं धाता लोकमस्यै दिदेश[4] ।**
**तामर्यमा भगो अश्विनोभा प्रजापतिः प्रजया वर्धयन्तु ॥ १३ ॥**

शिवा । नारी । इयम् । अस्तम् । आ । अगन् । इमम् । धाता । लोकम् । अस्यै । दिदेश । ताम् । अर्यमा । भगः । अश्विना । उभा । प्रजाऽपतिः । प्रऽजया । वर्धयन्तु[5] ॥ १३ ॥

**आत्मन्वत्युर्वरा नारीयमागन् तस्यां[6] नरो वपत बीजमस्याम्[7] ।**
**सा वः प्रजां जनयद् वक्षणाभ्यो बिभ्रती [8]दुग्धमृषभस्य रेतः[8] ॥१४॥**

आत्मन्ऽवती । उर्वरा[9] । नारी । इयम् । आ । अगन् । तस्याम् । नरः । वपत । बीजम् । अस्याम्[10] । सा । वः । प्रऽजाम् । जनयत् । वक्षणाभ्यः । बिभ्रती । दुग्धम् । ऋषभस्य । रेतः ॥ १४ ॥

**प्रति तिष्ठ विराडसि विष्णुरिवेह सरस्वति ।**
**सिनीवालि प्र जायतां भगस्य सुमतावसत् ॥ १५ ॥**

प्रति । तिष्ठ । विऽराट् । असि । विष्णुःऽइव । इह । सरस्वति । सिनीवालि । प्र । जायताम् । भगस्य । सुऽमतौ । असत् ॥ १५ ॥

**उद् व[11] ऊर्मिः शम्या[12] हन्त्वापो योक्त्राणि मुञ्चत[13] ।**
**मादुष्कृतौ[14] [15]व्येनसावघ्न्यावशुनमारताम्[15] ॥ १६ ॥**

---

१. मैत्रेण आपमं १,७,१०. २. °र्ण° > °न° B; °न° A,Bh,K,R.V,Dc,Cs. ३. यदस्यां आपमं. ४. विवेद पै १८,८,४. ५. °यतु P. ६. यस्यां पै १८,८,५. ७. °मस्याम् K,Km,V,E; °मस्यां > °मस्यां Dc. ८. दुद्रमृषदूर्वेवेन्द्रः? पै. ९. उर्वरी P. १०. अस्य/म् K,V,P,P², D². ११. वातीद्? पै १८,८,७. १२. शम्या/ Sm; शम्ये पै. १३. मुञ्चन्तु पै. १४. °दुःकृतौ B; दुःष्कृतौ Cs. १५. व्येन° D; व्येनसाघ्न्यौ शून ऋ ३,३३,१३ पै. [मूको.].

उत् । वः । ऊर्मिः । शम्याः । हन्तु । आपः । योक्त्राणि । मुञ्चत ।
मा । अदुःऽकृतौ । विऽएनसौ । अघ्न्यौ । अशुनम् । आ । अरताम् ॥ १६ ॥

अघोरचक्षुरपतिघ्नी स्योना शग्मा सुशेवा सुयमा गृहेभ्यः[1] ।
वीरसूर्देवृकामा[2] सं त्वयैधिषीमहि सुमनस्यमाना[3] ॥ १७ ॥

अघोरऽचक्षुः । अपतिऽघ्नी । स्योना । शग्मा । सुऽशेवा । सुऽयमा । गृहेभ्यः ।
वीरऽसूः । देवृऽकामा । सम् । त्वया । एधिषीमहि । सुऽमनस्यमाना[3] ॥ १७ ॥

अदेवृघ्न्यपतिघ्नीहैधि शिवा[4] पशुभ्यः सुयमा[5] सुवर्चाः[6] ।
[7]प्रजावती वीरसूर्देवृकामा[8] स्योनेममग्निं गार्हपत्यं सपर्य ॥ १८ ॥

अदेवृऽघ्नी । अपतिऽघ्नी । इह । एधि । शिवा । पशुऽभ्यः । सुऽयमा । सुऽवर्चाः ।
प्रजाऽवती । वीरऽसूः । देवृऽकामा । स्योना । इमम् । अग्निम् । गार्हऽपत्यम् । सपर्य ॥ १८ ॥

उत्तिष्ठेतः किमिच्छन्तीदमागा अहं त्वेडे अभिभूः स्वाद् गृहात् ।
शून्यैषी निर्ऋते 'याजगन्थोत्तिष्ठाराते' प्र पत मेह रंस्थाः ॥ १९ ॥

उत् । तिष्ठ । इतः । किम् । इच्छन्ती । इदम् । आ । अगाः । अहम् । त्वा । ईडे[9] ।
अभिऽभूः । स्वात् । गृहात् । शून्यऽएषी । निःऽऋते । या । आऽजगन्थ[10] । उत् । तिष्ठ ।
अराते । प्र । पत । मा । इह । रंस्थाः ॥ १९ ॥

यदा गार्हपत्यमसपर्यैत्[11] पूर्वमग्निं वधूरियम् ।
अधा सरस्वत्यै नारि पितृभ्यश्च नमस्कुरु ॥ २० ॥

यदा । गार्हऽपत्यम् । असपर्यैत् । पूर्वम् । अग्निम् । वधूः । इयम् ।
अध । सरस्वत्यै । नारि । पितृऽभ्यः । च । नमः । कुरु ॥ २० ॥

शर्म [12]वर्मैतदा हरास्यै[12] नार्या उपस्तिरे[13] ।

---

१. गृहेषु पै १८,८,८. २. °देवकामा WM. ऋ १०,८५,४४ पै १८,८,९ मंब्रा १,२,१७. ३. W. °मानाः ४. स्योना पै. ५. सुमनाः ऋ ; सुमना पै. ६. सुवीरा पै. ७. °वतीर्वीरसूर्दे° C,K[m]; °देवकामा MW. ऋ. ८. तु. RW.; वैतु. शंपा. °गन्धो°; याचग° E. ९. वैतु. W.,WI. इडे [सं १]. १०. आऽजगन्धं शंपा. ११. °पर्यैतत् C. १२. °वर्मैदमा भरास्यै आपमं १,८,१. १३. तु. W. आपमं; वैतु. शंपा. °स्तरे; उपस्थिरे ( उपस्तिरे ? ) पै १८,९,२ [मूको.].

सिनीवालि प्र जायतां भगस्य सुमतावसत् ॥ २१ ॥

शर्म । वर्म । एतत् । आ । हर । अस्यै । नार्यै । उपऽस्तिरे ।

सिनीवालि । प्र । जायताम् । भगस्य । सुऽमतौ । असत् ॥ २१ ॥

यं बल्बजं न्यस्यथ चर्म चोपस्तृणीथन ।

तदा रोहतु सुप्रजा या कन्या विन्दते पतिम् ॥ २२ ॥

यम् । बल्बजम । निऽअस्यथ । चर्म । च । उपऽस्तृणीथन ।

तत् । आ । रोहतु । सुऽप्रजाः । या । कन्या । विन्दते । पतिम् ॥ २२ ॥

उप स्तृणीहि बल्बजमधि चर्मणि रोहिते ।

तत्रोपविश्य सुप्रजा इममग्निं सपर्यतु[1] ॥ २३ ॥

उप । स्तृणीहि । बल्बजम् । अधि । चर्मणि । रोहिते ।

तत्र । उपऽविश्य । सुऽप्रजाः । इमम् । अग्निम् । सपर्यतु[2] ॥ २३ ॥

आ रोह चर्मोप सीदाग्निमेष देवो हन्ति[3] रक्षांसि सर्वा ।

इह प्रजां जनय[4] पत्ये अस्मै[5] सुज्यैष्ठ्यो भवत्[6] पुत्रस्त एषः ॥ २४ ॥

आ । रोह । चर्म । उप । सीद । अग्निम् । एषः । देवः । हन्ति । रक्षांसि । सर्वा[7] ।

इह । प्रऽजाम् । जनय । पत्ये । अस्मै । सुऽज्यैष्ठ्यः । भवत् । पुत्रः । ते । एषः ॥२४॥

'वि तिष्ठन्तां[8] मातुरस्या उपस्थान्नानारूपाः पशवो जायमानाः ।

सुमङ्गल्युप सीदेममग्निं संपत्नी प्रति भूषेह देवान् ॥ २५ ॥

वि । तिष्ठन्ताम् । मातुः । अस्याः[9] । उपऽस्थात् । नानाऽरूपाः । पशवः । जायमानाः ।

सुऽमङ्गली । उप । सीद । इमम् । अग्निम् । समऽपत्नी । प्रति । भूष । इह । देवान् ॥२५॥

सुमङ्गली प्रतरणी गृहाणां सुशेवा पत्ये श्वशुराय शंभूः ।

स्योना श्वश्र्वै प्र गृहान् विशेमान् ॥ २६ ॥

---

१. °र्यंत C,E[२]. २. °र्यंत Bp[२]. ३. हन्तु पै १८,९,५. ४. संजनो? पै १८,९,६. ५. अस्यै Km; ऽस्मै पै. ६. भवतु पै. ७. सर्वाः P,P[२]. ८. प्रजायन्तां पै. ९. अस्याः P.

सुऽमङ्गली । प्रऽतरणी । गृहाणाम् । सुऽशेवा । पत्ये । श्वशुराय । शम्ऽभूः ।
स्योना । श्वश्र्वै । प्र । गृहान् । विश । इमान् ॥ २६ ॥

स्योना भव श्वशुरेभ्यः स्योना पत्ये गृहेभ्यः ।
स्योनास्यै सर्वस्यै विशे स्योना पुष्टायैषां भव ॥ २७ ॥

स्योना । भव । श्वशुरेभ्यः । स्योना । पत्ये । गृहेभ्यः ।
स्योना । अस्यै । सर्वस्यै । विशे । स्योना । पुष्टाय । एषाम् । भव ॥ २७ ॥

सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै 'दत्त्वा दौर्भाग्यैर्विपरेतन'[1] ॥ २८ ॥

सुऽमङ्गलीः । इयम् । वधूः । इमाम् । सम्ऽएत । पश्यत ।
सौभाग्यम् । अस्यै । दत्त्वा । दौःऽभाग्यैः । विऽपरेतन ॥ २८ ॥

या दुर्हार्दो युवतयो याश्चेह जरतीरपि[2] ।
वर्चो न्व१स्यै[3] 'सं दत्ताथास्तं विपरेतन'[4] ॥ २९ ॥

याः । दुःऽहार्दः । युवतयः । याः । च । इह । जरतीः[5] । अपि ।
वर्चः । नु । अस्यै[6] । सम् । दत्त । अथ । अस्तम्[7] । विऽपरेतन ॥ २९ ॥

रुक्मप्रस्तरणं[8] वह्यं विश्वा रूपाणि बिभ्रतम् ।
आरोहत् सूर्या सावित्री बृहते सौभगाय कम् ॥ ३० ॥

रुक्मऽप्रस्तरणम्[9] । वह्यम् । विश्वा । रूपाणि । बिभ्रतम् ।
आ । अरोहत् । सूर्या । सावित्री । बृहते । सौभगाय । कम् ॥ ३० ॥

आ रोह तल्पं सुमनस्यमानेह प्रजां जनय पत्ये अस्मै ।

---

१. °दौर्भाग्येन परेतना पै १८,९,८; दत्त्वायाथास्तं वि परेतन ऋ १०,८५,३३ मंब्रा १,२, १४ पागृ १,८,९. २. तु. RW. WI; वैतु. शंपा. जरती°. ३. न्व३स्यै A,B[h],D,E, K[m],R,S[m],Dc,Cs. ४. °स्थं विप° S[m]; संदत्त्वायाथास्तं वि परेतन पै १८,९,९. ५. तु. मंग्रा.; वैतु. शंपा. जरतीः. ६. अस्यै P. ७. अस्तम् P. ८. तु. PW. RW. प्रभृ.; वैतु. शंपा. रुक्मप्रस्त° ( पपा. रुक्मऽप्रस्त° ); रुक्मप्रस्तरणं C,D,S[m],WM. ९. रुक्मऽप्रस्तरणम् P[2],MW.

इन्द्राणीव सुबुधा[1] बुध्यमाना ज्योतिरग्रा उषसः प्रति जागरासि[2] ॥३१॥

आ । रोह । तल्पम् । सुऽमनस्यमाना । इह । प्रऽजाम् । जनय । पत्ये । अस्मै ।
इन्द्राणीऽइव । सुऽबुधा । बुध्यमाना । ज्योतिःऽअग्राः । उषसः । प्रति । जागरासि[3] ॥३१॥

देवा अग्रे न्यपद्यन्त पत्नीः समस्पृशन्त तन्वस्तनूभिः ।
सूर्येव नारि विश्वरूपा महित्वा प्रजावती पत्या सं भवेह[4] ॥ ३२ ॥

देवाः । अग्रे । नि । अपद्यन्त । पत्नीः । सम् । अस्पृशन्त । तन्वः । तनूभिः ।
सूर्याऽइव । नारि । विश्वऽरूपा । महिऽत्वा । प्रजाऽवती । पत्या । सम् । भव । इह ॥३२॥

उत्तिष्ठेतो[5] विश्वावसो नमसेडामहे त्वा[6] ।
जामिमिच्छ[7] पितृषदं न्यक्तां[8] स ते भागो जनुषा तस्य विद्धि ॥३३॥

उत् । तिष्ठ । इतः । विश्वावसो इति विश्वऽवसो । नमसा । ईडामहे । त्वा ।
जामिम् । इच्छ । पितृऽसदम् । निऽअक्ताम् । सः । ते । भागः । जनुषा । तस्य । विद्धि ॥

अप्सरसः सधमादं मदन्ति हविर्धानमन्तरा सूर्यं च ।
तास्ते जनित्रमभि ताः परेहि नमस्ते गन्धर्वर्तुना कृणोमि ॥ ३४ ॥

अप्सरसः । सधऽमादम् । मदन्ति । हविःऽधानम् । अन्तरा । सूर्यम् । च । ताः । ते ।
जनित्रम् । अभि । ताः । परा । इहि । नमः । ते । गन्धर्वऽऋतुना । कृणोमि ॥ ३४ ॥

नमो गन्धर्वस्य नमसे[9] नमो भामाय चक्षुषे च कृण्मः ।
विश्वावसो ब्रह्मणा ते नमोऽभि[10] जाया अप्सरसः परेहि ॥ ३५ ॥

नमः । गन्धर्वस्य । नमसे । नमः । भामाय । चक्षुषे । च । कृण्मः ।
विश्वावसो इति विश्वऽवसो । ब्रह्मणा । ते । नमः । अभि । जायाः । अप्सरसः । परा । इहि ॥

राया वयं सुमनसः स्यामोदितो गन्धर्वमावीवृताम ।

---

१. सुषा पै १८,१०,१. २. जागरः पै. ३. जागरसि P. ४. भवासि पै.
५. उदीर्ष्वातो ऋ १,८५,२२ आपमं १,१०,१ पै १८,१०,३. ६. पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीडे पै. ७. अन्यामिच्छ ऋ १०,८५,२१ आपमं. ८. न्यर्क्तां C,WM·RW.; वित्ताम् आपमं १,१०,१; व्यक्तां ऋ. ९. मनसे W· पै १८,१०,५. १०. नमोभिद् Km; नमोभि B·

अगन्त्स देवः परमं सधस्थमगन्म यत्र[1] प्रतिरन्त आयुः ॥ ३६ ॥

राया । वयम् । सुऽमनसः । स्याम । उत् । इतः । गन्धर्वम् । आ । अवीवृताम ।
अगन् । सः । देवः । परमम् । सधऽस्थम् । अगन्म । यत्र । प्रऽतिरन्ते । आयुः ॥ ३६ ॥

सं पितरावृत्विये सृजेथां माता पिता च रेतसो भवाथः ।
मर्य[2] इव योषामधिरोहयैनां प्रजां कृण्वाथामिह [3]पुष्यतं† रयिम्[3] ॥३७॥

सम् । पितरौ । ऋत्विये इति । सृजेथाम् । माता । पिता । च । रेतसः । भवाथः । मर्यःऽइव ।
योषाम् । अधि । रोहय । एनाम्[4] । प्रऽजाम् । कृण्वाथाम् । इह । पुष्यतम्[5] । रयिम् ॥३७॥

तां पूषं[6] छिवतमामेरयस्व यस्यां बीजं मनुष्या३ वपन्ति ।
या न ऊरू उशती विश्रयाति[7] यस्यामुशन्तः प्रहरेम[8] शेपः[9] ॥ ३८ ॥

ताम् । पूषन्[10] । शिवऽतमाम् । आ । ईरयस्व । यस्याम् । बीजम् । मनुष्याः । वपन्ति ।
या[11] । नः । ऊरू इति । उशती । विऽश्रयाति । यस्याम् । उशन्तः । प्रऽहरेम । शेपः ॥३८॥

आ रोहोरुमुप [12]धत्स्व हस्तं[12] परि ष्वजस्व जायां सुमनस्यमानः ।
प्रजां कृण्वाथामिह मोदमानौ[13] दीर्घं वामायुः[14] सविता कृणोतु ॥३९॥

आ । रोह । ऊरुम् । उप । धत्स्व । हस्तम् । परि । स्वजस्व । जायाम् । सुऽमनस्यमानः ।
प्रऽजाम् । कृण्वाथाम् । इह । मोदमानौ । दीर्घम् । वाम् । आयुः । सविता । कृणोतु ॥३९॥

आ वां[15] प्रजां जनयतु प्रजापतिरहोरात्राभ्यां[16] समनक्त्वर्यमा ।
अदुर्मङ्गली[17] पतिलोकमा विशेमं शं नो भव[18] द्विपदे शं चतुष्पदे ॥४०॥

आ । वाम् । प्रऽजाम् । जनयतु । प्रजाऽपतिः । अहोरात्राभ्याम् । सम् । अनक्तु । अर्यमा ।

---

१. वयं? पै १८,१०,६. २. वर पै १८,१०,७. ३. मोदमानौ पै. † पुष्यतां A,Cs. ४. एनाम् P. ५. पुष्यताम् > पुष्यतम् Cp. ६. तु. RW. ऋ १०,८५,३७ आपमं १,११,६; वैतु. शंपा. पूषं; पागृ १,४,१६ मन्त्रे पाभे. द्र. ७. °तीमुश्र याति K; विश्रयाते ऋ. पै १८,१०,९; विश्रयातै आपमं. हिगृ १,२०,२. ८. प्रहराम ऋ. ९. शेपम् ऋ. आपमं. हिगृ. १०. तु. मंपा.; वैतु. शंपा. पूषन्; P² पूषम्; J पूषन् > पूषन्. ११. याः Bp². १२. बर्हस्व बाहुम् आपमं १,११,७. १३. पुष्यतं रयिं पै १८,१०,१०. १४. त आयुः पै. १५. नः ऋ १०,८५,४३ आपमं १,११,५ मंब्रा १,२,१८. १६. °तिरा-जरसाय ऋ. आपमं. मंब्रा. १७. °ली: ऋ. आपमं. मंब्रा. पै १८,१०,८. १८. अस्तु पै.; एधि आपमं.

अदुःऽमङ्गली । पतिऽलोकम् । आ । विश । इमम् । शम् । नः । भव । द्विऽपदे[1] । शम् । चतुःऽपदे ॥

देवैर्दत्तं मनुना साकमेतद् वाधूयं [2]वासो वध्वश्च वस्त्रम्[2] ।
यो ब्रह्मणे चिकितुषे ददाति स इद् रक्षांसि तल्पानि[3] हन्ति ॥४१॥

देवैः । दत्तम् । मनुना । साकम् । एतत् । वाधूऽयम् । वासः । वध्वः । च । वस्त्रम् ।
यः । ब्रह्मणे । चिकितुषे । ददाति । सः । इत् । रक्षांसि । तल्पानि । हन्ति ॥ ४१ ॥

यं[4] [5]मे दत्तो[5] ब्रह्मभागं वधूयोर्वाधूयं वासो वध्वश्च वस्त्रम् ।
युवं ब्रह्मणेनुमन्यमानौ[6] बृहस्पते साकमिन्द्रश्च दत्तम् ॥ ४२ ॥

यम् । मे । दत्तः । ब्रह्मऽभागम् । वधूऽयोः । वाधूऽयम् । वासः । वध्वः । च । वस्त्रम् ।
युवम् । ब्रह्मणे । अनुऽमन्यमानौ । बृहस्पते । साकम् । इन्द्रः । च । दत्तम् ॥ ४२ ॥

स्योनाद्योनेरधि बुध्यमानौ हसामुदौ महसा मोदमानौ ।
[7]सुगू सुपुत्रौ सुगृहौ[7] तराथो[8] जीवावुषसो विभातीः ॥ ४३ ॥

स्योनात् । योनेः । अधि । बुध्यमानौ । हसामुदौ । महसा । मोदमानौ ।
सुगू इति सुऽगू । सुऽपुत्रौ । सुऽगृहौ । तराथः । जीवौ । उषसः । विऽभातीः ॥ ४३ ॥

नवं वसानः सुरभिः सुवासा उदागां जीव उषसो विभातीः ।
आण्डात् पतत्रीवामुक्षि विश्वस्मादेनसस्परि ॥ ४४ ॥

नवम् । वसानः । सुरभिः । सुऽवासाः । उत्ऽआगाम् । जीवः । उषसः । विऽभातीः ।
आण्डात् । पतत्रीऽइव । अमुक्षि । विश्वस्मात् । एनसः । परि ॥ ४४ ॥

शुम्भनी द्यावापृथिवी अन्तिसुम्ने महिव्रते ।
आपः सप्त [9]सुस्रुवुर्देवीस्ता[9] नो मुञ्चन्त्वंहसः ॥ ४५ ॥

शुम्भनी इति । द्यावापृथिवी इति । अन्तिसुम्ने इत्यन्तिऽसुम्ने । महिव्रते इति महिऽव्रते ।

---

१. द्विपदे P. २. वध्वो वासोऽस्याः पै १८,११,२. ३. तल्प्यानि W. पै.; वैप १,१४७१ g द्र. ४. यन् Km,Cs; यन् > यं Dc. ५. नो दितिः पै १८,११,१. ६. ब्रह्मण इदं मन्य° पै. ७. शुभौ सुपुत्रौ सुकृतौ पै १८,११,३. ८. चराथो D,E,K, Dc,P[3],M,W, पै.; तरथो Cs. ९. स्रवन्तीस्ता पै १८,११,५.

आर्पः । सुप्त । सुस्रुवुः । देवीः । ताः । नः । मुञ्चन्तु । अंहसः ॥ ४५ ॥

सूर्यायै देवेभ्यो मित्राय वरुणाय च ।
ये भूतस्य प्रचेतसस्तेभ्य[1] इदमकरं[2] नमः ॥ ४६ ॥

सूर्यायै । देवेभ्यः । मित्राय । वरुणाय । च ।
ये । भूतस्य । प्रऽचेतसः । तेभ्यः । इदम् । अकरम् । नमः ॥ ४६ ॥

[2]य ऋते चिदभिश्रिषः[2] पुरा जत्रुभ्य[3] आतृदः[4] ।
संधाता संधिं[5] मघवा पुरूवसुर्निष्कर्ता[6] विहुतं[7] पुनः ॥ ४७ ॥

यः । ऋते । चित् । अभिऽश्रिषः । पुरा । जत्रुऽभ्यः[3] । आऽतृदः ।
सम्ऽधाता[8] । सम्ऽधिम् । मघऽवा । पुरुऽवसुः । निःऽकर्ता । विऽहुतम् । पुनः ॥४७॥

अपास्मत् तम उच्छतु नीलं पिशङ्गमुत लोहितं यत् ।
निर्दहनी या [9]पृषातक्य[9]स्मिन्[9] तां स्थाणावध्या संजामि[10] ॥ ४८ ॥

अप । अस्मत् । तमः । उच्छतु[11] । नीलम् । पिशङ्गम् । उत । लोहितम् । यत् ।
निःऽदहनी । या । पृषातकी । अस्मिन् । ताम् । स्थाणौ । अधि । आ । सजामि ॥४८॥

यावतीः कृत्या उपवासने[12] यावन्तो राज्ञो वरुणस्य पाशाः ।
व्यृद्धयो या असमृद्धयो या अस्मिन् ता[13] [14]स्थाणावधि सादयामि[14] ॥४९॥

यावतीः । कृत्याः । उपऽवासने । यावन्तः । राज्ञः । वरुणस्य । पाशाः ।
विऽऋद्धयः । याः । असम्ऽऋद्धयः । याः । अस्मिन् । ताः । स्थाणौ । अधि । सादयामि ॥४९॥

---

१. तेभ्योऽहमकरं पै १८,११,६. २. यदृते° आपमं १,७,१ पै १८,११,७ तैआ ४, २०,१; जरि चेतीदभिशिषः मै ४,९,१२; °श्रषः E. ३. जरुभ्य Cs; जत्रु° > जतृ° Dc; जतृभ्य K,Km,D,C,Sm,V,Cp; जर्तृभ्य आपमं. तैआ.; जत्तु° P; चक्रुभ्य मै. ४. आतृद मै. ५. संधिर् मै. ६. पुरोवसु° पै. आपमं. तैआ.; पुरुवसु° Bh,Km,R, मै.; °र्निःकर्त्ता C; °सुरिष्कर्त्ता ऋ ८,१,१२ काश्रौ २५,५,३०. ७. विहृतं पै. आपमं. तैआ. ८. °धत्ता P. ९. प्रघात° पै १८,११,८; °क्यु३° A,C D,E,K,Km,R,Sm,V,Dc; क्या३° Bh,Cs. १०. सृजामि पै. ११. उच्छंतु P. १२. पश्चाचाने ? पै १८,११,९. १३. ताः B,D,R,Sm,Dc,WM.; तां A,C,P3,M,W. १४. स्थाणौ मुञ्चामि सर्वाः पै.

या मे॑ प्रि॒यत॑मा त॒नूः सा मे॑ बिभाय॒ वास॑सः ।
तस्याग्रे॒ त्वं व॑नस्पते नी॒विं कृ॑णुष्व॒ मा व॒यं रि॑षाम[1] ॥ ५० ॥

या । मे॒ । प्रि॒यऽत॑मा । त॒नूः । सा । मे॒ । बि॒भा॒य॒ । वास॑सः ।
तस्य॑ । अग्रे॑ । त्वम् । व॒न॒स्प॒ते॒ । नी॒विम् । कृ॒णु॒ष्व॒ । मा । व॒यम् । रि॒षा॒म॒ ॥ ५० ॥

ये अन्ता॒ याव॑ती॒ः सिचो॒ य ओत॑वो॒ ये च॒ तन्त॑वः ।
वासो॒ यत् पत्नी॑भिरु॒तं तन्नः॑[2] स्यो॒नमुप॑ स्पृशात्[3] ॥ ५१ ॥

ये । अन्ताः॑ । याव॑तीः । सिचः॑ । ये । ओत॑वः । ये । च॒ । तन्त॑वः ।
वासः॑ । यत् । पत्नी॑भिः । उ॒तम् । तत् । नः॒ । स्यो॒नम् । उप॑ । स्पृ॒शा॒त् ॥ ५१ ॥

[4]उ॒श॒तीः क॒न्यला॑ इ॒माः पि॑तृलो॒कात् पति॑ं [†]य॒तीः[4] ।
[5]अव॑ दी॒क्षाम॑सृक्षत[5] स्वाहा॑ ॥ ५२ ॥

उ॒श॒तीः । क॒न्यलाः॑ । इ॒माः । पि॒तृ॒ऽलो॒कात् । पति॑म् । य॒तीः[†] ।
अव॑ । दी॒क्षाम् । अ॒सृ॒क्ष॒त॒ । स्वाहा॑ ॥ ५२ ॥

बृह॒स्पति॒नाव॑सृष्टां॒ विश्वे॑ दे॒वा अ॑धारयन् ।
वर्चो॒ गोषु॒ प्रवि॑ष्टं॒ यत् तेने॒मां सं सृ॑जामसि ॥ ५३ ॥

बृ॒ह॒स्पति॑ना । अव॑ऽसृष्टाम् । विश्वे॑ । दे॒वाः । अ॒धा॒र॒य॒न् ।
वर्चः॑ । गोषु॑ । प्र॒ऽवि॑ष्टम् । यत् । तेन॑ । इ॒माम् । सम् । सृ॒जा॒म॒सि॒ ॥ ५३ ॥

बृह॒स्पति॒नाव॑सृष्टां॒ विश्वे॑ दे॒वा अ॑धारयन् ।
तेजो॒ गोषु॒ प्रवि॑ष्टं॒ यत् तेने॒मां सं सृ॑जामसि ॥ ५४ ॥

बृ॒ह॒स्पति॑ना ।० । तेजः॑ । गोषु॑ । प्र॒ऽवि॑ष्टम् । यत् । तेन॑ ।० ॥ ५४ ॥

बृह॒स्पति॒नाव॑सृष्टां॒ विश्वे॑ दे॒वा अ॑धारयन् ।
भगो॒ गोषु॒ प्रवि॑ष्टो॒ यस्तेने॒मां सं सृ॑जामसि ॥ ५५ ॥

---

१. रिंशाम E. २. तन्वा पै १८,११,१०. ३. स्पृशः पै. ४. क॒न्यला॑ पि॒तृभ्यो॑ य॒ती पति॒लो॒कम् आपमं १,४,४; कन्यला पितृभ्यः पतिलोकं यतीयम् मंब्रा १,२,५. † तु. RW. आपमं.; वैतु. मूको. ( तु. शंपा. WM. ) यतीः (पपा. य॒तीः ). ५. °मं॑दास्थ॒ आपमं.; अप दीक्षामयष्ट मंब्रा.; °सयक्षत जैगृ १,२१,२१.

बृहस्पतिना । ० । भगः । गोषु । प्रऽविष्टः । यः । तेन ।० ॥ ५५ ॥

बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् ।
यशो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ॥ ५६ ॥

बृहस्पतिना । ०। यशः । गोषु । प्रविष्टम् । यत् । तेन ।० ॥ ५६ ॥

बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् ।
पयो गोषु प्रविष्टं यत् तेनेमां सं सृजामसि ॥ ५७ ॥

बृहस्पतिना ।० । पयः । गोषु । प्रऽविष्टम् । यत् । तेन ।० ॥ ५७ ॥

बृहस्पतिनावसृष्टां विश्वे देवा अधारयन् ।
रसो गोषु प्रविष्टो यस्तेनेमां सं सृजामसि ॥ ५८ ॥

बृहस्पतिना[1] । अवऽसृष्टाम् । विश्वे । देवाः । अधारयन् ।
रसः । गोषु । प्रऽविष्टः । यः । तेन । इमाम् । सम् । सृजामसि ॥ ५८ ॥

यदीमे[2] केशिनो जना गृहे ते समनर्तिषू रोदेन कृण्वन्तोऽघम्[3] ।
अग्निष्ट्वा तस्मादेनसः सविता च प्र मुञ्चताम् ॥ ५९ ॥

यदि । इमे । केशिनः । जनाः । गृहे । ते । सम्ऽअनर्तिषुः । रोदेन । कृण्वन्तः[4] । अघम् ।
अग्निः । त्वा । तस्मात् । एनसः । सविता । च । प्र । मुञ्चताम् ॥ ५९ ॥

यदीयं[5] दुहिता तव विकेश्यरुदद् गृहे[6] रोदेन कृण्वत्य१घम्[7] ।
अग्निष्ट्वा० ॥ ६० ॥

यदि । इयम् । दुहिता । तव । विऽकेशी । अरुदत् । गृहे । रोदेन । कृण्वती । अघम् ॥०॥६०॥

यज्जामयो यद्युवतयो गृहे ते समनर्तिषू रोदेन कृण्वतीरघम् । अग्निष्ट्वा० ॥६१॥

यत् । जामयः । यत् । युवतयः । गृहे । ते । सम्ऽअनर्तिषुः । रोदेन । कृण्वतीः । अघम् ॥० ॥

---

१. °पतिनां P,P². २. यदमी पै १८,१२,८. ३. तु. P²; वैतु. शंपा. RW. प्रभृ. कृण्वन्तो ३ घम्; °तो १ घम् A,K; कृण्वन्तो३घं > कृण्वन्तो३घं Dc. ४. तु. P². मंपा.; वैतु. शंपा. प्रभृ. कृण्वन्तः. ५. यदसौ पै १८,११,७. ६. बहु पै. ७. त्य३घम् A, C,D,E,K^m,R,S^m,Dc,Cs.

यत् ते प्रजायां पशुषु यद्वा गृहेषु[1] निष्ठितमघकृद्भिरघं[2] कृतम् ।
अग्निष्ट्वा तस्मादेनसः सविता च प्र मुञ्चताम् ॥ ६२ ॥

यत् । ते । प्रऽजायाम् । पशुषु । यत् । वा । गृहेषु । निऽस्थितम् । अघकृत्ऽभिः । अघम् ।
कृतम् । अग्निः । त्वा । तस्मात् । एनसः । सविता । च । प्र । मुञ्चताम् ॥ ६२ ॥

इयं नार्युप[3] ब्रूते [4]पूल्यान्यावपन्तिका ।
दीर्घायुरस्तु मे पतिर्जीवाति[5] शरदः शतम् ॥ ६३ ॥

इयम् । नारी । उप । ब्रूते । पूल्यानि । आऽवपन्तिका ।
दीर्घऽआयुः । अस्तु । मे । पतिः । जीवाति । शरदः । शतम् ॥ ६३ ॥

इहेमाविन्द्र सं[6] नुद चक्रवाकेव दंपती ।
प्रजयैनौ[7] स्वस्तकौ [8]विश्वमायुर्व्यश्नुताम्[9] ॥ ६४ ॥

इह । इमौ । इन्द्र । सम् । नुद । चक्रवाकाऽइव[9] । दंपती इति दम्ऽपती ।
प्रऽजया । एनौ । सुऽअस्तकौ । विश्वम् । आयुः । वि । अश्नुताम्[10] ॥ ६४ ॥

यदासन्द्यामुपधाने यद् वोपवासने कृतम् ।
विवाहे कृत्यां यां चक्रुरास्नाने तां नि दध्मसि ॥ ६५ ॥

यत् । आऽसन्द्याम्[11] । उपऽधाने । यत् । वा । उपऽवासने । कृतम् ।
विऽवाहे । कृत्याम् । याम् । चक्रुः । आऽस्नाने[12] । ताम् । नि[13] । दध्मसि ॥ ६५ ॥

यद् दुष्कृतं[14] यच्छमलं विवाहे वहतौ च यत् ।
तत् संभलस्य[15] कम्बले मृज्महे[16] दुरितं वयम् ॥ ६६ ॥

यत् । दुःऽकृतम् । यत् । शमलम् । विऽवाहे । वहतौ । च । यत् ।
तत् । सम्ऽभलस्य । कम्बले । मृज्महे[16] । दुःऽइतम् । वयम् ॥ ६६ ॥

---

१. गृहे पै १८,१३,१. २. निष्ठितमघ° B,R; निष्ठितमघ° > निष्ठितमघ° C. ३. नारिरुप पै १८,१३,२. ४. तु· C; वैतु. अन्ये मूको. पूल्पा°; कुल्पा° आपमं १,५,२; पूल्पाण्याव°? पै.; लाजानाव° मंत्रा १,२,२ शांगृ १,१४,१ पागृ १,६,२ मागृ १,११,१२ हिगृ १,२०, ४. ५· वातु° आपमं.; पतिरेधन्तां ज्ञातयो (पितरो पै.) मम पै. मंत्रा. पागृ. मागृ. हिगृ. ६. सन् B,E. ७. प्रजावन्तौ पै १८,१३,३. ८. दीर्घमा° पै.; °श्नुतम् B,R,E[2],T,K[2]. ९. °वाक° J,Bp[2]. १०. अश्नुतम् P. ११. °सद्याम् P. १२. आस्ना° P,P[2],J. १३. परि P,P[2]. १४. दुःकृ° B,D,Cs; दुःष्कृ° Sm. १५. संभरस्य पै १८,१३,५. १६. मृज्महे B,D,E,R,Sm,Cs,P,P[2],J,Cp.

संभले मलं सादयित्वा कम्बले दुरितं वयम् ।
अभूम यज्ञियाः शुद्धाः प्र ण आयूंषि तारिषत्[1] ॥ ६७ ॥

सम्ऽभले । मलम् । सादयित्वा । कम्बले । दुःऽइतम् । वयम् ।
अभूम । यज्ञियाः । शुद्धाः । प्र । नः । आयूंषि । तारिषत्[2] ॥ ६७ ॥

कृत्रिमः कण्टकः[3] शतदन् य एषः ।
अपास्याः[4] केश्यं मलमप शीर्षण्यं लिखात्[5] ॥ ६८ ॥

कृत्रिमः । कण्टकः[6] । शतऽदन् । यः । एषः ।
अप । अस्याः । केश्यम् । मलम् । अप । शीर्षण्यम् । लिखात्[5] ॥ ६८ ॥

अङ्गादङ्गाद् वयमस्या[7] अप यक्ष्मं नि दध्मसि[8] ।
तन्मा प्रापत् पृथिवीं मोत देवान् दिवं मा प्रापदुर्व१न्तरिक्षम्[9] ।
अपो मा प्रापन्मलमेतदग्ने यमं मा प्रापत्[10] पितृंश्च सर्वान् ॥ ६९ ॥

अङ्गात्ऽअङ्गात् । वयम् । अस्याः[11] । अप । यक्ष्मम्[12] । नि । दध्मसि । तत् । मा[13] ।
प्र । आपत् । पृथिवीम् । मा[13] । उत । देवान् । दिवम् । मा[13] । प्र । आपत् । उरु ।
अन्तरिक्षम् । अपः[14] । मा[13] । प्र । आपत् । मलम् । एतत् । अग्ने । यमम् । मा[13] । प्र । आपत् ।
पितॄन् । च । सर्वान् ॥ ६९ ॥

सं त्वा नह्यामि पयसा पृथिव्याः[15] सं त्वा नह्यामि [16]पयसौषधीनाम्[16] ।
सं त्वा नह्यामि[17] प्रजया धनेन[18] [19]सा संनद्धा सनुहि वाजमेमम्[19] ॥७०॥

सम् । त्वा । नह्यामि । पयसा । पृथिव्याः । सम् । त्वा । नह्यामि । पयसा । ओषधीनाम् । सम् ।
त्वा । नह्यामि । प्रऽजया । धनेन । सा । सम्ऽनद्धा । सनुहि । वाजम् । आ । इमम् ॥७०॥

---

१. तार्षत् D,S^m,Cs,B²,E²,O.　२. तार्षत् P,P²,J,Cp,D².　३. कंकतः > कंटकः S^m; कंटकः > कंकतः Dc; कङ्कतः K,K^m,V,R W.; कङ्कदः पै १८,११,८.　४. अपास्याः D,K,R,S^m.　५. लिखात् K,K^m,V,P²; लिखात् > लिखात् Dc.　६. कटंकः P,P²; कंटकः > कंकतः Cp.　७. यूयम° पै १८,११,९.　८. धत्तन पै.　९. °र्व३न्त° A,D,E,R,S^m,Cs.　१०. प्राप B^h,K^m.　११. अस्याः P.　१२. यक्ष्मन् P.　१३. मा P.　१४. अपः P; आपः P².　१५. घृतेन तै ३,५,६,१.　१६. अद्भिर (अप तै.) ओषधीभिः तै. माश्रौ २,१,२,७ माग्र १,११,६.　१७. सृजामि शांश्रौ २,१०,६.　१८. ऽहमद्य तै.　१९. सा दीक्षिता संनवो वाजमस्मे (वाचमस्मात् माश्रौ.) तै. माश्रौ. † वाजमेमां A,B^h; भागधेयम् माग्र.

अमोहमस्मि[1] सा[2] त्वं सामाहमस्म्यृक्त्वं द्यौरहं पृथिवी त्वम् ।
[3]ताविह[†] [‡]सं भवाव[3] प्रजामा जनयावहै[4] ॥ ७१ ॥

अमः । अहम् । अस्मि । सा । त्वम् । साम । अहम् । अस्मि । ऋक् । त्वम् । द्यौः । अहम् । पृथिवी । त्वम् । तौ । इह । सम् । भवाव । प्रऽजाम् । आ । जनयावहै ॥ ७१ ॥

[5]जनियन्ति नावग्रवः पुत्रियन्ति[5] सुदानवः ।
अरिष्टासू[6] सचेवहि बृहते वाजसातये ॥ ७२ ॥

जनिऽयन्ति । नौ । अग्रवः । पुत्रिऽयन्ति । सुऽदानवः ।
अरिष्टासू इत्यरिष्टऽअसू । सचेवहि । बृहते । वाजऽसातये ॥ ७२ ॥

ये पितरो वधूदर्शा इमं वहतुमागमन्[7] ।
ते अस्यै [8]वध्वै[8] संपत्न्यै[8] प्रजावच्छर्म यच्छन्तु ॥ ७३ ॥

ये । पितरः । वधूऽदर्शाः । इमम् । वहतुम् । [9]आऽअगमन्[9] ।
ते । अस्यै । वध्वै । समऽपत्न्यै[8] । प्रजाऽवत् । शर्म । यच्छन्तु ॥ ७३ ॥

येदं [10]पूर्वागन् रशनायमाना[10] प्रजामस्यै द्रविणं चेह दत्त्वा[11] ।
तां वहन्त्वगतस्यानु[12] पन्थां विराडियं सुप्रजा अत्यजैषीत् ॥ ७४ ॥

या । इदम् । पूर्वा । अगन्[13] । रशनाऽयमाना । प्रऽजाम् । अस्यै । द्रविणम् । च । इह । दत्त्वा ।
ताम् । वहन्तु । अगतस्य । अनु । पन्थाम् । विऽराट् । इयम् । सुऽप्रजाः । अति । अजैषीत् ॥ ७४ ॥

प्र बुध्यस्व सुबुधा[14] बुध्यमाना[15] दीर्घायुत्वाय शतशारदाय ।
गृहान् [16]गच्छ गृहपत्नी यथासो[16] दीर्घं त आयुः सविता कृणोतु ॥७५॥

---

१. अमूह° तैब्रा ३,७,१,९ हिगृ १,२०,२ आपमं १,३,१४. २. स ऐब्रा ८,२७.
३. सा मामनुव्रता भव आपमं. † तावेहि ऐब्रा. तैब्रा.; तां एहि काठ ३५,१८. ‡ सं रभावहै काठ. शब्रा १४,९,४,१९; संवहावहै ऐब्रा.; वि वहावहै आगृ १,७,६ पागृ १,६,६.
४. सह रेतो दधावहै शब्रा. तैब्रा.; पुंसे पुत्राय (वेत्तवै आपमं. हिगृ.) कर्त्तवे काठ. आपमं. हिगृ.; प्रजां प्र जन° आगृ. ५. जनीयन्तो न्वग्रवः पुत्रीयन्तः ऋ ७,९६,४. ६. अरिष्टासः पै १८,१४,२. ७. °गमं A,B[h],D,E,K,K[m],S[m],V,Cs,Dc. ८. °पत्यै A,B,B[h],P[3],M, W,O; वैतु. शंपा. RW. प्रभृ. वध्वै स०. ९. आ । अगमन् शंपा.; °गमम् P,P[2]J; आ । अगमं Cp. १०. °गन्नश° C,K,S[m],V; °गन° K[m],Dc. ११. धत्त्वा पै १८,१४,४. १२. °स्याभि पै. १३ अगन् P. १४. सुवक्षा पै १८,१४,५. १५. बध्य° C.
१६. प्रेहि सुमनस्यमाना पै.

प्र । बुध्यस्व । सुऽबुधा । बुध्यमाना । दीर्घायुऽत्वाय । शतऽशारदाय । गृहान् । गच्छ । गृहऽपत्नी । यथा । असः । दीर्घम् । ते । आयुः । सविता । कृणोतु ॥७५॥

इति द्वितीयेऽनुवाके प्रथमं सूक्तम् ।

इति द्वितीयोऽनुवाकः ।

इति चतुर्दशं काण्डं समाप्तम् ।



अथ

# पञ्चदशं काण्डम्

अत्र काण्डे व्रात्यमहिमा प्रपञ्च्यते। व्रात्यो नाम उपनयनादिसंस्कारहीनः पुरुषः। सोऽर्थाद् वेदविहिताः यज्ञादिक्रियाः कर्तुं नाधिकारी। न स व्यवहारयोग्यश्चेत्यादि जनमतम् अनादृत्य व्रात्योऽधिकारी व्रात्यो महानुभावो व्रात्यो देवप्रियो व्रात्यो ब्राह्मणक्षत्रिययोर्वर्चसो मूलं किंबहुना व्रात्यो देवाधिदेव एवेति प्रतिपाद्यते। यत्र व्रात्यो गच्छति विश्वं जगद् विश्वे च देवास्तत्र तमनुगच्छन्ति तस्मिन् स्थिते तिष्ठन्ति तस्मिंश्चलति ते चलन्ति। यदा स गच्छति राजवत् स गच्छतीत्यादि। न पुनरेतत् सर्वव्रात्यपरं प्रतिपादनम् अपि तु कंचिद्विद्वत्तमं महाधिकारं पुण्यशीलं विश्वसंमान्यं कर्मपरैर्ब्राह्मणैर्विद्विष्टं व्रात्यम् अनुलक्ष्य वचनम् इति मन्तव्यम्।

ऋ· अथर्वा, दे· अध्यात्मम्, व्रात्यः

व्रात्य[1] आसीदीयमान एव स प्रजापतिं समैरयत् ॥ १ ॥

व्रात्यः। आसीत्। ईयमानः। एव। सः। प्रजाऽपतिम्। सम्। ऐरयत् ॥ १ ॥

स प्रजापतिः [2]सुवर्णमात्मन्नपश्यत्[2] तत् प्राजनयत् ॥ २ ॥

सः। प्रजाऽपतिः। सुऽवर्णम्। आत्मन्। अपश्यत्। तत्। प्र। अजनयत् ॥ २ ॥

तदेकमभवत् तल्ललाममभवत् तन्महदभवत् तज्ज्येष्ठमभवत् तद् ब्रह्माभवत् तत् तपोऽभवत् तत् सत्यमभवत् तेन प्राजायत ॥ ३ ॥

तत्। एकम्। अभवत्। तत्। ललामम्। अभवत्। तत्। महत्। अभवत्। तत्। ज्येष्ठम्। अभवत्। तत्। ब्रह्म। अभवत्। तत्। तपः। अभवत्। तत्। सत्यम्। अभवत्। तेन। प्र। अजायत ॥ ३ ॥

सोऽवर्धत स महानभवत् स महादेवोऽभवत् ॥ ४ ॥

सः। अवर्धत। सः। महान्। अभवत्। सः। महाऽदेवः। अभवत् ॥ ४ ॥

---

१. व्रात्यो वा इदमग्र पै १८,२७,१.   २. आत्मनस्सुपर्णमपश्यत् पै.

स देवानामीशां पर्यैत् स ईशानोऽभवत् ॥ ५ ॥

सः । देवानाम् । ईशाम् । परि । ऐत् । सः । ईशानः । अभवत् ॥ ५ ॥

स एकव्रात्योऽभवत् स धनुरादत्त [1]तदेवेन्द्रधनुः[1] ॥ ६ ॥

सः । एकऽव्रात्यः । अभवत् । सः । धनुः । आ । अदत्त । तत् । एव । इन्द्रऽधनुः ॥ ६ ॥

नीलमस्योदरं लोहितं पृष्ठम् ॥ ७ ॥

नीलम् । अस्य । उदरम् । लोहितम् । पृष्ठम् ॥ ७ ॥

नीलेनैवाप्रियं भ्रातृव्यं प्रोर्णोति [2]लोहितेन द्विषन्तं विध्यतीति ब्रह्मवादिनो वदन्ति ॥ ८ ॥

नीलेन । एव । अप्रियम् । भ्रातृव्यम् । प्र । ऊर्णोति । लोहितेन । द्विषन्तम् । विध्यति । इति । ब्रह्मऽवादिनः । वदन्ति ॥ ८ ॥

इति प्रथमेऽनुवाके प्रथमं पर्यायसूक्तम् ।

ऋ. अथर्वा, दे. अध्यात्मम्, व्रात्यः

स उदतिष्ठत् स प्राचीं दिशमनु व्यचलत् ॥ १ ॥

सः । उत् । अतिष्ठत् । सः । प्राचीम् । दिशम् । अनु । वि । अचलत् ॥ १ ॥

तं बृहच्च रथंतरं चादित्याश्च विश्वे च देवा अनुव्यचलन् ॥ २ ॥

तम् । बृहत् । च । रथम्ऽतरम् । च । आदित्याः । च । विश्वे । च । देवाः । अनुऽव्यचलन् ॥२॥

बृहते च वै स रथंतराय चादित्येभ्यश्च विश्वेभ्यश्च देवेभ्य आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥ ३ ॥

बृहते । च । वै । सः । रथम्ऽतराय । च । आदित्येभ्यः । च । विश्वेभ्यः । च । देवेभ्यः । आ । वृश्चते । यः । एवम् । विद्वांसम् । व्रात्यम् । उपऽवदति ॥ ३ ॥

बृहतश्च वै स रथंतरस्य चादित्यानां च विश्वेषां च देवानां प्रियं धाम भवति [3]य एवं वेद[3] ॥ ४ ॥

---

१. तदिन्द्रधनुरभवत् पै १८,२७,६. २. लोकोति? पै १८,२७,८. ३. तु. RW. (तु. अ १५,२,८ प्रभृ.); वैतु. शंपा. प्रभृ. पाठाभावः.

बृहतः । च । वै । सः । रथम्ऽतरस्य । च । आदित्यानाम् । च । विश्वेषाम् । च । देवानाम् । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ ४ ॥

[1]तस्य प्राच्यां दिशि[1] श्रद्धा पुंश्चली [2]मित्रो मागधो[2] विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥ ५ ॥

तस्य । प्राच्याम् । दिशि । श्रद्धा । पुंश्चली । मित्रः[3] । मागधः । विऽज्ञानम् । वासः । अहः । उष्णीषम् । रात्री । केशाः । हरितौ । प्रऽवर्तौ । कल्मलिः । मणिः ॥ ५ ॥

भूतं च भविष्यच्च परिष्कन्दौ[4] मनो विपथम्[5] ॥ ६ ॥

भूतम् । च । भविष्यत् । च । परिऽस्कन्दौ । मनः । विऽपथम् ॥ ६ ॥

मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः[6] कीर्तिश्च यशश्च पुरःसरौ[6] ॥ ७ ॥

मातरिश्वा । च । पवमानः । च । विपथऽवाहौ । वातः । सारथिः । रेष्मा । प्रऽतोदः । कीर्तिः । च । यशः । च । पुरःऽसरौ ॥ ७ ॥

ऐनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥८॥ [१]

आ । एनम् । कीर्तिः । गच्छति । आ । यशः । गच्छति । यः । एवम् । वेद ॥ ८ ॥

स उदतिष्ठत् स दक्षिणां दिशमनु व्यचलत् ॥ ९ ॥

सः । उत् । अतिष्ठत् । सः । दक्षिणाम् । दिशम् । अनु । वि । अचलत् ॥ ९ ॥

तं यज्ञायज्ञियं च वामदेव्यं च यज्ञश्च यजमानश्च पशवश्चानुव्यचलन् ॥१०॥

तम् । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च । यज्ञः । च । यजमानः । च । पशवः । च । अनुऽव्यचलन् ॥ १० ॥

यज्ञायज्ञियाय च वै स वामदेव्याय च यज्ञाय च यजमानाय च पशुभ्यश्चा वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥ ११ ॥

---

१. तु. RW; वैतु. शंपा. प्रभृ. पूर्वमन्त्रस्य अन्ते पठन्ति. २. मित्रो मागधो Bh,C,E,Cs, WM.; मित्रो मागधो R. ३. मित्रः Cp,WM. ४. परिस्कन्दौ D,E,K,Sm,V,Dc,Cs. ५. RW. नेह विरमति. ६. तु. RW. वैतु. शंपा. प्रभृ. प्रतोदः इत्यत्र विरामः, पुरःसरौ इत्यत्र चाविरामः.

यज्ञायज्ञियाय । च । वै । सः । वामऽदेव्याय । च । यज्ञाय । च । यजमानाय । च । पशुऽभ्यः । च । आ । वृश्चते । यः । एवम् । विद्वांसम् । व्रात्यम् । उपऽवदति ॥ ११ ॥

यज्ञायज्ञियस्य च वै स वामदेव्यस्य च यज्ञस्य च यजमानस्य च पशूनां च प्रियं धाम भवति 'य एवं वेद'[1] ॥ १२ ॥

यज्ञायज्ञियस्य । च । वै । सः । वामऽदेव्यस्य । च । यज्ञस्य । च । यजमानस्य । च । पशूनाम्[2] । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ १२ ॥

[3]तस्य दक्षिणायां दिश्युषाः[3] पुंश्चली मन्त्रो मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥ १३ ॥

तस्य । दक्षिणायाम् । दिशि । उषाः । पुंश्चली । मन्त्रः । मागधः । विऽज्ञानम् । वासः । अहः । उष्णीषम् । रात्री । केशाः । हरितौ । प्रऽवर्तौ । कल्मलिः । मणिः ॥ १३ ॥

अमावास्या च पौर्णमासी च परिष्कन्दौ मनो विपथम्[4] । मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः[5] कीर्तिश्च यशश्च पुरःसरौ[5] । ऐनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥ १४ ॥ [२]

अमाऽवास्या । च । पौर्णऽमासी । च ।०।०।० ॥ १४ ॥

स उदतिष्ठत् स प्रतीचीं दिशमनु व्यचलत् ॥ १५ ॥

सः । उत् । अतिष्ठत् । सः । प्रतीचीम् । दिशम् । अनु । वि । अचलत् ॥ १५ ॥

तं वैरूपं च वैराजं चापश्च वरुणश्च राजानुव्यचलन् ॥ १६ ॥

तम् । वैरूपम् । च । वैराजम् । च । आपः । च । वरुणः । च । राजा । अनुऽव्यचलन् ॥

वैरूपाय च वै स वैराजाय चाद्भ्यश्च वरुणाय च राज्ञ आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥ १७ ॥

वैरूपाय । च । वै । सः । वैराजाय । च । अत्ऽभ्यः । च । वरुणाय । च । राज्ञे । आ । वृश्चते । यः । एवम् । विद्वांसम् । व्रात्यम् । उपऽवदति ॥ १७ ॥

---

१. पृ १५६५ टि ३ द्र. २. पशूनाम् P,J. ३. पृ १५६६ टि १ द्र.
४. RW. नेह विरमति. ५. पृ १५६६ टि ६ द्र.

वैरूपस्य च वै स वैराजस्य चापां च वरुणस्य च राज्ञः प्रियं धाम भवति य एवं वेद[1] ॥ १८ ॥

वैरूपस्य । च । वै । सः । वैराजस्य । च । अपाम् । च । वरुणस्य । च । राज्ञः । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ १८ ॥

तस्य प्रतीच्यां दिशीउ रा[3] पुंश्चली[3] हसो मागधो[4] विज्ञानं वासोहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥ १९ ॥

तस्य । प्रतीच्याम् । दिशि । इरा[3] । पुंश्चली[3] । हसः[5] । मागधः । विऽज्ञानम् । वासः । अहः । उष्णीषम् । रात्री । केशाः । हरितौ । प्रऽवर्तौ । कल्मलिः । मणिः ॥ १९ ॥

अहश्च रात्री च परिष्कन्दौ[6] मनो विपथम्[7] । मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः[8] कीर्तिश्च यशश्च पुरस्सरौ[8] । ऐनं कीर्त्ति गच्छत्या यशो गच्छति य एवं वेद ॥ २० ॥ [३]

अहः । च । रात्री । च ।०।०।० ॥ २० ॥

स उदतिष्ठत् स उदीचीं दिशमनु व्यचलत् ॥ २१ ॥

सः । उत् । अतिष्ठत् । सः । उदीचीम् । दिशम् । अनु । वि । अचलत् ॥ २१ ॥

तं श्यैतं[9] च नौधसं च सप्तर्षयश्च[10] सोमश्च राजानुव्यचलन् ॥ २२ ॥

तम् । श्यैतम् । च । नौधसम् । च । सप्तऽऋषयः । च । सोमः । च । राजा । अनुऽव्यचलन् ॥ २२ ॥

श्यैताय[11] च वै स नौधसाय च सप्तर्षिभ्यश्च सोमाय च राज्ञ आ वृश्चते य एवं विद्वांसं व्रात्यमुपवदति ॥ २३ ॥

---

१. पृ १५६५ टि ३ द्र. २. पृ १५६६ टि १ द्र. ३. इरा पुं° > इरां पुं° Dc; इरां पुं° K,K^m,P^2,V,O,D^2,R^2,K^2. ४. हसो मागधो > हसो मांगधो Dc; हसो मांगधो A,D,K,K^m,V,B^2,R^2. ५. हसः P^2,D^2. ६. परिस्कन्दौ D,E,K,S^m,V, Dc,Cs. ७. RW. नेह विरमति. ८. पृ १५६६ टि ६ द्र. ९. शैतं WM. १०. सप्तऋष° A,B,B^h,C,K,K^m,R,I,O,K^2. ११. शैताय WM.

श्यैतार्य । च । वै । सः । नौधसार्य । च । सप्तर्षिऽभ्यः । च । सोमाय । च । राज्ञे ।
आ । वृश्चते । यः । एवम् । विद्वांसम् । व्रात्यम् । उपऽवदति ॥ २३ ॥

**श्यैतस्य[1] च वै स नौधसस्य च सप्तर्षीणां[2] च सोमस्य च राज्ञः प्रियं धाम भवति [3]य एवं वेद[3] ॥ २४ ॥**

श्यैतस्य । च । वै । सः । नौधसस्य । च । सप्तऽऋषीणाम्[2] । च । सोमस्य । च ।
राज्ञः । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ २४ ॥

**[4]तस्योदीच्यां दिशि[4] विद्युत् पुंश्चली स्तनयित्नुर्मागधो विज्ञानं वासोऽहरुष्णीषं रात्री केशा हरितौ प्रवर्तौ कल्मलिर्मणिः ॥ २५ ॥**

तस्य । उदीच्याम् । दिशि । विऽद्युत् । पुंश्चली । स्तनयित्नुः । मागधः । विऽज्ञानम् ।
वासः । अहः । उष्णीषम् । रात्री । केशाः । हरितौ । प्रऽवर्तौ । कल्मलिः[5] । मणिः ॥२५॥

**श्रुतं च विश्रुतं च परिष्कन्दौ[6] मनो विपथम्[7] ॥ २६ ॥**

श्रुतम् । च । विऽश्रुतम्[8] । च । परिऽस्कन्दौ । मनः । विऽपथम् ॥ २६ ॥

**मातरिश्वा च पवमानश्च विपथवाहौ वातः सारथी रेष्मा प्रतोदः[9] कीर्तिश्च यशश्च पुरःसरौ[9] ॥ २७ ॥**

मातरिश्वा । च । पवमानः । च । विपथऽवाहौ । वातः । सारथिः । रेष्मा । प्रऽतोदः ।
कीर्तिः । च । यशः । च । पुरःऽसरौ ॥२७॥

**ऐनं कीर्तिर्गच्छत्या यशो गच्छति य एवं वेद ॥२८॥ [४]**

आ । एनम् । कीर्तिः । गच्छति । आ । यशः । गच्छति । यः । एवम् । वेद ॥ २८ ॥ [४]

**इति प्रथमेऽनुवाके द्वितीयं पर्यायसूक्तम् ।**

ऋ. अथर्वा, दे. अध्यात्मम्, व्रात्यः

**स संवत्सरमूर्ध्वोऽतिष्ठत्[10] तं देवा अब्रुवन् व्रात्य किं नु तिष्ठसीति ॥ १ ॥**

सः । सम्ऽवत्सरम् । ऊर्ध्वः । अतिष्ठत् । तम् । देवाः । अब्रुवन् । व्रात्य । किम् । नु । तिष्ठसि । इति ।

---

१. शैतस्य W M. २. सप्तऋषी° C,P,P², J,Cp. ३. पृ १५६५ टि ३ द्र.
४. पृ १५६६ टि १ द्र. ५. °ली: P. ६. परिस्कन्दौ A,D,E,K,V,Dc,Cs.
७. RW. नेह विरमति. ८. विश्रुतम् P,P²; वि॰श्रुतम् > विश्रुतम् J. ९. पृ १५६६ टि ६ द्र. १०. °ध्वोति° B,Bʰ,C,E,R,O; °मूर्ध्नोति° Cs.

सोऽब्रवीदासन्दीं मे सं भरन्त्विति ॥ २ ॥

सः । अब्रवीत् । आऽसन्दीम् । मे । सम् । भरन्तु । इति ॥ २ ॥

तस्मै व्रात्यायासन्दीं समभरन् ॥ ३ ॥

तस्मै । व्रात्याय । आऽसन्दीम् । सम् । अभरन् ॥ ३ ॥

तस्या ग्रीष्मश्च वसन्तश्च द्वौ पादावास्तां शरच्च वर्षाश्च द्वौ ॥ ४ ॥

तस्याः । ग्रीष्मः । च । वसन्तः । च । द्वौ । पादौ । आस्ताम् । शरत् । च । वर्षाः । च । द्वौ ॥

बृहच्च रथंतरं चानूच्ये३ आस्तां यज्ञायज्ञियं च वामदेव्यं च तिरश्च्ये३[1] ॥ ५ ॥

बृहत् । च । रथम्ऽतरम् । च । अनूच्ये३[2] इति । आस्ताम् । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च । तिरश्च्ये३[1] इति ॥ ५ ॥

ऋचः प्राञ्चस्तन्तवो यजूंषि तिर्यञ्चः ॥ ६ ॥

ऋचः । प्राञ्चः । तन्तवः । यजूंषि । तिर्यञ्चः ॥ ६ ॥

वेद आस्तरणं ब्रह्मोपबर्हणम् ॥ ७ ॥

वेदः । आऽस्तरणम् । ब्रह्म । उपऽबर्हणम् ॥ ७ ॥

सामासाद [3]उद्गीथोऽपश्रयः[3] ॥ ८ ॥

साम[4] । आऽसादः । उत्ऽगीथः । अपऽश्रयः ॥ ८ ॥

तामासन्दीं व्रात्य आरोहत् ॥ ९ ॥

ताम् । आऽसन्दीम् । व्रात्यः । आ । अरोहत् ॥ ९ ॥

तस्य देवजनाः परिष्कन्दा[5] आसन्त्संकल्पाः प्रहाय्या३[6] विश्वानि भूतान्युपसदः ॥ १० ॥

तस्य । देवऽजनाः । परिऽस्कन्दाः । आसन् । समऽकल्पाः । प्रऽहाय्याः[6] । विश्वानि । भूतानि । उपऽसदः ॥ १० ॥

---

१. तिरश्च्यें D; °श्च्ये I; °श्चे WM.; °श्चें A, Bʰ, E, R, Cs, E², O, K², P, P², J, Cp; °श्चे Bp². २. °च्ये Bp². ३. °गीथ उप° W. ४. सामा P. ५. परिस्कन्दा A, D, E, K, Sᵐ, V, Dc, Cs.° ६. प्रहार्य्या° A, B, E, K, O, P, Bp²; °हार्य्या° > °हाय्या° R¹; °हाय्य३ E²; हय्याइन् P³, M, W.

विश्वान्येवास्य भूतान्युपसदो भवन्ति[1] [2]य एवं वेद[2] ॥ ॥११॥

विश्वानि । एव । अस्य । भूतानि । उपऽसदः । भवन्ति[3] । यः । एवम् । वेद ॥ ११ ॥

इति प्रथमेऽनुवाके तृतीयं पर्यायसूक्तम् ।

ऋ. अथर्वा, दे. अध्यात्मम्, व्रात्यः

तस्मै प्राच्या दिशः ॥ १ ॥

तस्मै । प्राच्याः । दिशः ॥ १ ॥

वासन्तौ मासौ गोप्तारावकुर्वन् बृहच्च रथंतरं चानुष्ठातारौ ॥ २ ॥

वासन्तौ । मासौ । गोप्तारौ । अकुर्वन् । बृहत् । च । रथम्ऽतरम् । च । अनुऽस्थातारौ ॥२॥

वासन्तावेनं मासौ प्राच्या दिशो गोपायतो बृहच्च रथंतरं चानु तिष्ठतो य एवं वेद ॥ ३ ॥ [१]

वासन्तौ । एनम् । मासौ । प्राच्याः । दिशः । गोपायतः । बृहत् । च । रथम्ऽतरम् । च । अनु । तिष्ठतः । यः । एवम् । वेद ॥ ३ ॥

तस्मै दक्षिणाया दिशः ॥ ४ ॥

तस्मै । दक्षिणायाः । दिशः[4] ॥ ४ ॥

ग्रैष्मौ मासौ गोप्तारावकुर्वन् यज्ञायज्ञियं च वामदेव्यं चानुष्ठातारौ ॥ ५ ॥

ग्रैष्मौ । मासौ । गोप्तारौ । अकुर्वन् । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च । अनुऽस्थातारौ ॥

ग्रैष्मावेनं मासौ दक्षिणाया दिशो गोपायतो यज्ञायज्ञियं च वामदेव्यं चानु तिष्ठतो य एवं वेद ॥ ६ ॥ [२]

ग्रैष्मौ । एनम् । मासौ । दक्षिणायाः । दिशः । गोपायतः । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च । अनु । तिष्ठतः । यः । एवम् । वेद ॥ ६ ॥

तस्मै प्रतीच्या दिशः ॥ ७ ॥

तस्मै । प्रतीच्याः । दिशः ॥ ७ ॥

---

१. भवति A,B,Cs. २. नास्ति WM. ३. भवति P,P[2]J. ४. दिशि: P.

वार्षिकौ मासौ गोप्तारावकुर्वन् वैरूपं च वैराजं चानुष्ठातारौ ॥ ८ ॥

वार्षिकौ । मासौ । गोप्तारौ । अकुर्वन् । वैरूपम् । च । वैराजम् । च । अनुऽस्थातारौ ॥

वार्षिकावेनं मासौ प्रतीच्या दिशो गोपायतो वैरूपं च वैराजं चानु तिष्ठतो य एवं वेद ॥ ९ ॥ [३]

वार्षिकौ । एनम् । मासौ । प्रतीच्याः । दिशः । गोपायतः । वैरूपम् । च । वैराजम् । च । अनु । तिष्ठतः । यः । एवम् । वेद ॥ ९ ॥

तस्मा उदीच्या दिशः ॥ १० ॥

तस्मै । उदीच्याः । दिशः ॥ १० ॥

शारदौ मासौ गोप्तारावकुर्वञ्छ्यैतं[1] च नौधसं चानुष्ठातारौ ॥ ११ ॥

शारदौ । मासौ । गोप्तारौ । अकुर्वन् । श्यैतम् । च । नौधसम् । च । अनुऽस्थातारौ ।

शारदावेनं मासावुदीच्या दिशो गोपायतः श्यैतं[2] च नौधसं चानु तिष्ठतो य एवं वेद ॥ १२ ॥ [४]

शारदौ । एनम् । मासौ । उदीच्याः । दिशः । गोपायतः । श्यैतम् । च । नौधसम् । च । अनु । तिष्ठतः । यः । एवम् । वेद ॥ १२ ॥

तस्मै ध्रुवाया दिशः ॥ १३ ॥

तस्मै । ध्रुवायाः । दिशः ॥ १३ ॥

हैमनौ मासौ गोप्तारावकुर्वन् भूमिं चाग्निं चानुष्ठातारौ ॥ १४ ॥

हैमनौ । मासौ । गोप्तारौ । अकुर्वन् । भूमिम् । च । अग्निम् । च । अनुऽस्थातारौ ॥१४॥

हैमनावेनं मासौ ध्रुवाया दिशो गोपायतो भूमिश्चाग्निश्चानु तिष्ठतो य एवं वेद ॥ १५ ॥ [५]

---

१. छैतं WM. २. शैतं WM.

हैमनौ । एनम् । मासौ । ध्रुवायाः । दिशः । गोपायतः । भूमिः । च । अग्निः । च । अनु । तिष्ठतः । यः । एवम् । वेद ॥१५॥

**तस्मा ऊर्ध्वाया दिशः ॥ १६ ॥**

तस्मै । ऊर्ध्वायाः । दिशः ॥ १६ ॥

**शैशिरौ मासौ गोप्तारावकुर्वन् दिवं चादित्यं चानुष्ठातारौ ॥ १७ ॥**

शैशिरौ । मासौ । गोप्तारौ । अकुर्वन् । दिवम् । च । आदित्यम् । च । अनुऽस्थातारौ ॥

**शैशिरावेनं मासावूर्ध्वाया दिशो गोपायतो द्यौश्चादित्यश्चानु तिष्ठतो य एवं वेद ॥ १८ ॥ [६]**

शैशिरौ । एनम् । मासौ । ऊर्ध्वायाः । दिशः । गोपायतः । द्यौः । च । आदित्यः । च । अनु । तिष्ठतः । यः । एवम् । वेद ॥ १८ ॥

**इति प्रथमेऽनुवाके चतुर्थं पर्यायसूक्तम् ।**

ऋ. अथर्वा, दे. रुद्रः

**तस्मै प्राच्या दिशो अन्तर्देशाद् भवमिष्वासमनुष्ठातारमकुर्वन् ॥ १ ॥**

तस्मै । प्राच्याः । दिशः[1] । अन्तःऽदेशात् । भवम् । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥

**भव एनमिष्वासः प्राच्या दिशो अन्तर्देशादनुष्ठातानु तिष्ठति[2] ॥ २ ॥**

भवः । एनम् । इषुऽआसः । प्राच्याः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता । अनु । तिष्ठति ॥२॥

**नैनं शर्वो न भवो नेशानो[3] नास्य पशून् न समानान् हिनस्ति य एवं वेद ॥ ३ ॥ [१]**

न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य । पशून् । न । समानान् । हिनस्ति । यः । एवम् । वेद ॥ ३ ॥

**तस्मै दक्षिणाया दिशो अन्तर्देशाच्छर्वमिष्वासमनुष्ठातारमकुर्वन् ॥ ४ ॥**

तस्मै । दक्षिणायाः । दिशः । अन्तःऽदेशात् । शर्वम् । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥

---

१. **दिशिः** P. २. **तिष्ठति** इत्यनन्तरं विरामोऽर्थानुरोधान्न्याय्यः (तु. W. टि.; वैतु. शंपा. RW. प्रभृ. विरामाभावः), एवमग्रेपि. ३. तु. RW.; वैतु. शंपा. प्रभृ. अत्र विरमन्ति.

शर्व एनमिष्वासो दक्षिणाया दिशो अन्तर्देशादनुष्ठातानु तिष्ठति[1] ।
नैनं शर्वो न भवो नेशानो[2] नास्य पशून्० ॥ ५ ॥ [२]

शर्वः । एनम् । इषुऽआसः । दक्षिणायाः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता । अनु । तिष्ठति । न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य ।०॥ ५ ॥

तस्मै प्रतीच्या दिशो अन्तर्देशात् पशुपतिमिष्वासमनुष्ठातारमकुर्वन् ॥६॥

तस्मै । प्रतीच्याः । दिशः । अन्तःऽदेशात् । पशुऽपतिम्[3] । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥ ६ ॥

पशुपतिरेनमिष्वासः प्रतीच्या दिशो अन्तर्देशादनुष्ठातानु तिष्ठति[1] ।
नैनं शर्वो न भवो नेशानो[2] नास्य पशून्० ॥ ७ ॥ [३]

पशुऽपतिः[3] । एनम् । इषुऽआसः । प्रतीच्याः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता । अनु । तिष्ठति । न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य ।०॥७ ॥

तस्मा उदीच्या दिशो अन्तर्देशादुग्रं देवमिष्वासमनुष्ठातारमकुर्वन् ॥ ८ ॥

तस्मै । उदीच्याः । दिशः । अन्तःऽदेशात् । उग्रम् । देवम् । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥ ८ ॥

उग्र एनं देव इष्वास उदीच्या दिशो अन्तर्देशादनुष्ठातानु तिष्ठति[1] ।
नैनं शर्वो न भवो नेशानो[2] नास्य पशून्० ॥ ९ ॥ [४]

उग्रः । एनम् । देवः । इषुऽआसः । उदीच्याः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता । अनु । तिष्ठति । न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य ।०॥ ९ ॥

तस्मै ध्रुवाया दिशो अन्तर्देशाद् रुद्रमिष्वासमनुष्ठातारमकुर्वन् ॥ १० ॥

तस्मै । ध्रुवायाः । दिशः । अन्तःऽदेशात् । रुद्रम् । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥

रुद्र एनमिष्वासो ध्रुवाया दिशो अन्तर्देशादनुष्ठातानु तिष्ठति[1] ।
नैनं शर्वो न भवो नेशानो[2] नास्य पशून्० ॥ ११ ॥ [५]

---

१. पृ १५७३ टि २ द्र. २. पृ १५७३ टि ३ द्र. ३. पशू° P.

रुद्रः । एनम् । इषुऽआसः । ध्रुवायाः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता । अनु । तिष्ठति । न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य ।०। ॥ ११ ॥

तस्मा ऊर्ध्वाया दिशो अन्तर्देशान्महादेवमिष्वासमनुष्ठातारमकुर्वन् ॥ १२ ॥

तस्मै । ऊर्ध्वायाः । दिशः । अन्तःऽदेशात् । महाऽदेवम् । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥

महादेव एनमिष्वास ऊर्ध्वाया दिशो अन्तर्देशादनुष्ठातानु तिष्ठति[1] । नैनं शर्वो न भवो नेशानो[2] नास्य पशून्० ॥ १३ ॥ [६]

महाऽदेवः[3] । एनम् । इषुऽआसः । ऊर्ध्वायाः । दिशः । अन्तःऽदेशात् । अनुऽस्थाता । अनु । तिष्ठति । न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य ।० ॥१३॥

तस्मै 'सर्वेभ्यो अन्तर्देशेभ्य[4] ईशानमिष्वासमनुष्ठातारमकुर्वन् ॥ १४ ॥

तस्मै । सर्वेभ्यः । अन्तःऽदेशेभ्यः । ईशानम् । इषुऽआसम् । अनुऽस्थातारम् । अकुर्वन् ॥१४ ॥

ईशान एनमिष्वासः 'सर्वेभ्यो 'अन्तर्देशेभ्योनुष्ठातानु तिष्ठति[5] ॥१५॥

ईशानः । एनम् । इषुऽआसः । सर्वेभ्यः । अन्तःऽदेशेभ्यः । अनुऽस्थाता । अनु । तिष्ठति ॥

नैनं शर्वो न भवो नेशानो[2] नास्य पशून् न समानान् हिनस्ति य एवं वेद ।१६।[७]

न । एनम् । शर्वः । न । भवः । न । ईशानः । न । अस्य । पशून् । न । समानान्[6] । हिनस्ति । यः । एवम् । वेद ॥ १६ ॥

इति प्रथमेऽनुवाके पञ्चमं पर्यायसूक्तम् ।

ऋ· अथर्वा, दे· अध्यात्मम्, व्रात्यः

स ध्रुवां दिशमनु व्यचलत् ॥ १ ॥

सः । ध्रुवाम् । दिशम् । अनु । वि । अचलत् ॥ १ ॥

तं भूमिश्चाग्निश्चौषधयश्च वनस्पतयश्च वानस्पत्याश्च वीरुधश्चानुव्यचलन् ॥२॥

तम् । भूमिः । च । अग्निः । च । ओषधयः । च । वनस्पतयः । च । वानस्पत्याः । च । वीरुधः । च । अनुऽव्यचलन् ॥ २ ॥

---

१. पृ १५७३ टि २ द्र. २. पृ १५७३ टि ३ द्र. ३. माहा° P. ४. °भ्योन्त° A,B[h],P[3],M,W,E[2]. ५. °भ्योन्त° A,B[h], B[2],E[2]. ६. °नाम् P.

भूमेश्च वै [1]सोऽग्नेश्चौषधीनां च वनस्पतीनां च वानस्पत्यानां च वीरुधां च प्रियं धाम भवति य एवं वेद ॥ ३ ॥ [१]

भूमेः । च । वै । सः । अग्नेः । च । ओषधीनाम् । च । वनस्पतीनाम् । च । वानस्पत्यानाम् । च । वीरुधाम् । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ ३ ॥

स ऊर्ध्वां दिशमनु व्यचलत् ॥ ४ ॥

सः । ऊर्ध्वाम् । दिशम् । अनु । वि । अचलत् ॥ ४ ॥

तमृतं च सत्यं च सूर्यश्च चन्द्रश्च नक्षत्राणि चानुव्यचलन् ॥ ५ ॥

तम् । ऋतम् । च । सत्यम् । च । सूर्यः । च । चन्द्रः । च । नक्षत्राणि । च । अनुऽव्यचलन् ॥

ऋतस्य च वै स सत्यस्य च सूर्यस्य च चन्द्रस्य च नक्षत्राणां च प्रियं धाम भवति य एवं वेद ॥ ६ ॥ [ २ ]

ऋतस्य । च । वै । सः । सत्यस्य । च । सूर्यस्य । च । चन्द्रस्य । च । नक्षत्राणाम् । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ ६ ॥

स उत्तमां दिशमनु व्यचलत् ॥ ७ ॥

सः । उत्ऽतमाम् । दिशम् । अनु । वि । अचलत् ॥ ७ ॥

तमृचश्च सामानि च यजूंषि च ब्रह्म चानुव्यचलन् ॥ ८ ॥

तम् । ऋचः । च । सामानि । च । यजूंषि । च । ब्रह्म । च । अनुऽव्यचलन् ॥ ८ ॥

ऋचां च वै स साम्नां च यजुषां च ब्रह्मणश्च प्रियं धाम भवति य एवं वेद ॥९॥

ऋचाम् । च । वै । सः । साम्नाम् । च । यजुषाम । च । ब्रह्मणः । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ ९ ॥ [३]

स बृहतीं दिशमनुव्यचलत् ॥ १० ॥

सः । बृहतीम् । दिशम् । अनु । वि । अचलत् ॥ १० ॥

---

१. सौऽग्ने° K,V,Dc; सोग्ने° A,D,E,K^m,R,S^m,Cs.

तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् ॥ ११ ॥

तम् । इतिहऽआसः । च । पुराणम् । च । गाथाः । च । नाराशंसीः । च । अनुऽव्यचलन् ॥

इतिहासस्य च वै स पुराणस्य च गाथानां च नाराशंसीनां च प्रियं धाम भवति य एवं वेद ॥ १२ ॥ [४]

इतिहऽआसस्य । च । वै । सः । पुराणस्य । च । गाथानाम् । च । नाराशंसीनाम् । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ १२ ॥

स परमां दिशमनु व्यचलत् ॥ १३ ॥

सः । परमाम् । दिशम् । अनु । वि । अचलत् ॥ १३ ॥

तमाहवनीयश्च गार्हपत्यश्च दक्षिणाग्निश्च यज्ञश्च यजमानश्च पशवश्चानुव्यचलन् ।१४।

तम् । आऽहवनीयः । च । गार्हऽपत्यः । च । दक्षिणऽअग्निः । च । यज्ञः । च । यजमानः । च । पशवः । च । अनुऽव्यचलन् ॥ १४ ॥

आहवनीयस्य च वै स गार्हपत्यस्य च दक्षिणाग्नेश्च यज्ञस्य च यजमानस्य च पशूनां च प्रियं धाम भवति य एवं वेद ॥ १५ ॥ [५]

आऽहवनीयस्य । च । वै । सः । गार्हऽपत्यस्य । च । दक्षिणऽअग्नेः । च । यज्ञस्य । च । यजमानस्य । च । पशूनाम्[1] । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ १५ ॥

सोऽनादिष्टां दिशमनु व्यचलत् ॥ १६ ॥

सः । अनादिष्टाम् । दिशम् । अनु । वि । अचलत् ॥ १६ ॥

तमृतवश्चार्तवाश्च[2] लोकाश्च[2] लौक्याश्च मासाश्चार्धमासाश्चाहोरात्रे चानुव्यचलन् ।।१७।।

तम् । ऋतवः । च । आर्तवाः । च । लोकाः[3] । च । लौक्याः । च । मासाः च । अर्धऽमासाः । च । अहोरात्रे इति । च । अनुऽव्यचलन् ॥ १७ ॥

---

१. पशूनाम् P,J. २. तु. K,V,R², K², RW.; वैतु. A,B,Bʰ,C,D,E,Kᵐ, R,Sᵐ,Cs,WM. °श्च लोकाश्च; Dc °श्च° लोकाश्च > °श्चं लोकाश्चं. ३. तु. D², WM., संपा.; वैतु. P,J,Cp,WM. लोकाः; P² लोकां.

ऋतूनां च वै स आर्तवानां[1] च लोकानां[1] च लौक्यानां च मासानां चार्धमासानां चाहोरात्रयोश्च प्रियं धाम भवति य एवं वेद ॥ १८ ॥ [६]

ऋतूनाम् । च । वै । सः । आर्तवानाम् । च । लोकानाम्[2] । च । लौक्यानाम् । च । मासानाम् । च । अर्धऽमासानाम् । च । अहोरात्रयोः । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ १८ ॥

सोऽनावृत्तां दिशमनु व्यचलत् ततो नावर्त्स्यन्नमन्यत[3] ॥ १९ ॥

सः । अनावृत्ताम् । दिशम् । अनु । वि । अचलत् । ततः । न । आऽवर्त्स्यन्[4] । अमन्यत[5] ॥

तं दितिश्चादितिश्चेडा चेन्द्राणी चानुव्यचलन् ॥ २० ॥

तम् । दितिः । च । अदितिः । च । इडा । च । इन्द्राणी । च । अनुऽव्यचलन् ॥२०॥

दितेश्च वै सोऽदितेश्चेडायाश्चेन्द्राण्याश्च[6] प्रियं धाम भवति य एवं वेद ॥२१॥ [७]

दितेः । च । वै । सः । अदितेः । च । इडायाः । च । इन्द्राण्याः । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ २१ ॥

स दिशोनु व्यचलत् तं विराडनु व्यचलत् सर्वे च देवाः सर्वाश्च देवताः ॥२२॥

सः । दिशः । अनु । वि । अचलत् । तम् । विऽराट् । अनु । वि । अचलत् । सर्वे । च । देवाः । सर्वाः । च । देवताः ॥ २२ ॥

विराजश्च वै स सर्वेषां च देवानां सर्वासां च देवतानां प्रियं धाम भवति य एवं वेद ॥२३ ॥ [८]

विऽराजः । च । वै । सः । सर्वेषाम् । च । देवानाम् । सर्वासाम् । च । देवतानाम् । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ २३ ॥

स सर्वानन्तर्देशाननु व्यचलत् ॥ २४ ॥

सः । सर्वान् । अन्तःऽदेशान् । अनु । वि । अचलत् ॥ २४ ॥

---

१. तु. K,K$^m$,V,R$^2$,RW.; वैतु. A,B,B$^h$,C,D,R,E,S$^m$,Cs,WM. च लोकानां; Dc च लोकानां > च लोकानां. २. तु. मंपा.; वैतु. P,P$^2$,J,Cp लोकानाम्. ३ °मन्यत् S$^m$. ४. आऽव° Bp$^2$. ५. अमन्यत् P. ६. °ण्याऽश्च I.

तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चानुव्यचलन् ॥ २५ ॥

तम् । प्रजाऽपतिः । च । परमेऽस्थी । च । पिता । च । पितामहः । च । अनुऽव्यचलन् ॥

प्रजापतेश्च वै स परमेष्ठिनश्च पितुश्च पितामहस्य च प्रियं धाम भवति य एवं वेद ॥ २६ ॥ [९]

प्रजाऽपतेः । च । वै । सः । परमेऽस्थिनः । च । पितुः । च । पितामहस्य । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ २६ ॥

इति प्रथमेऽनुवाके षष्ठं पर्यायसूक्तम् ।

ऋ. अथर्वा, दे. अध्यात्मम्, व्रात्यः

स महिमा सद्रुर्भूत्वान्तं पृथिव्या अगच्छत् स समुद्रोऽभवत् ॥ १ ॥

सः । महिमा । सद्रुः । भूत्वा । अन्तम् । पृथिव्याः । अगच्छत् । सः । समुद्रः । अभवत् ॥

तं प्रजापतिश्च परमेष्ठी च पिता च पितामहश्चापश्च श्रद्धा च वर्षं भूत्वानुव्यवर्तयन्त ॥ २ ॥

तम् । प्रजाऽपतिः । च । परमेऽस्थी । च । पिता । च । पितामहः । च । आपः । च । श्रद्धा । च । वर्षम् । भूत्वा । अनुऽव्यवर्तयन्त ॥ २ ॥

ऐनमापो गच्छन्त्यैनं[1] श्रद्धा गच्छत्यैनं वर्षं गच्छति य एवं वेद ॥३॥

आ । एनम् । आपः । गच्छन्ति[2] । आ । एनम् । श्रद्धा । गच्छति । आ । एनम् । वर्षम् । गच्छति । यः । एवम् । वेद ॥ ३ ॥

तं श्रद्धा च यज्ञश्च लोकश्चान्नं[3] चान्नाद्यं च भूत्वाभिपर्यावर्तन्त[4] ॥ ४ ॥

तम् । श्रद्धा । च । यज्ञः । च । लोकः[3] । च । अन्नम् । च । अन्नऽअद्यम् । च । भूत्वा । अभिऽपर्यावर्तन्त ॥ ४ ॥

ऐनं श्रद्धा गच्छत्यैनं यज्ञो गच्छत्यैनं[5] लोको गच्छत्यैनमन्नं गच्छत्यैनमन्नाद्यं गच्छति य एवं वेद ॥ ५ ॥

---

१. तु. RW.; वैतु. शंपा. प्रभृ. गच्छत्यैनं. २. तु. मंपा.; वैतु. शंपा. गच्छति.
३. लोका° Sm,P. ४. भूत्वाभिप° E. ५. °त्यैनां Sm.

आ । एनम् । श्रद्धा । गच्छति । आ । एनम् । यज्ञः । गच्छति । आ । एनम् । लोकः[१] । गच्छति । आ । एनम् । अन्नम् । गच्छति । आ । एनम् । अन्नऽअद्यम् । गच्छति । यः । एवम् । वेद ॥ ५ ॥

**इति प्रथमेऽनुवाके सप्तमं पर्यायसूक्तम् ।**

**इति प्रथमोऽनुवाकः ।**

ऋ॰ अथर्वा, दे॰ अध्यात्मम्, व्रात्यः

**सोऽरज्यत ततो राजन्योऽजायत ॥ १ ॥**

सः । अरज्यत । ततः । राजन्यः । अजायत ॥ १ ॥

**स विशः सबन्धूनन्नमन्नाद्यमभ्युदतिष्ठत्[२] ॥ २ ॥**

सः । विशः । सऽबन्धून् । [३]अन्नम् । अन्नऽअद्यम्[३] । अभिऽउदतिष्ठत् ॥ २ ॥

**विशां च वै स सबन्धूनां चान्नस्य चान्नाद्यस्य च प्रियं धाम भवति य एवं वेद ॥ ३ ॥**

विशाम् । च । वै । सः । सऽबन्धूनाम् । च । अन्नस्य । च । अन्नऽअद्यस्य । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ ३ ॥

**इति द्वितीयेनुवाके प्रथमं पर्यायसूक्तम् ।**

ऋ॰ अथर्वा, दे॰ अध्यात्मम्, व्रात्यः

**स विशोनु व्यचलत् ॥ १ ॥**

सः । विशः । अनु । वि । अचलत् ॥ १ ॥

**तं सभा च समितिश्च सेना च सुरा चानुव्यचलन् ॥ २ ॥**

तम् । सभा । च । सम्ऽइतिः । च । सेना । च । सुरा । च । अनुऽव्यचलन्[४] ॥ २ ॥

**सभायाश्च वै स समितेश्च सेनायाश्च सुरायाश्च प्रियं धाम भवति य एवं वेद ॥३॥**

सभायाः । च । वै । सः । सम्ऽइतेः । च । सेनायाः । च । सुरायाः । च । प्रियम् । धाम । भवति । यः । एवम् । वेद ॥ ३ ॥

**इति द्वितीयेनुवाके द्वितीयं पर्यायसूक्तम् ।**

---

१. लोका: P.  २. सबन्धूनन्नाद्य॰ B,Bh,C,E,R,B[२],E[२],O,K[२]; सबंधूनन्नमन्नाद्य॰ Cs.
३. अन्नम् । अन्नऽअद्यम् > अन्नऽअद्यम् Cp; अन्नऽअद्यम् P,P[२],J.  ४. ॰चलत् P.

ऋ. अथर्वा, दे. अध्यात्मम्, व्रात्यः

तद् यस्यैवं विद्वान् व्रात्यो राज्ञोऽतिथिर्गृहानागच्छेत् ॥ १ ॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । राज्ञः । अतिथिः । गृहान् । आऽगच्छेत् ॥ १ ॥

श्रेयांसमेनमात्मनो मानयेत्[1] तथा क्षत्राय ना वृश्चते तथा राष्ट्राय ना वृश्चते ॥२॥

श्रेयांसम् । एनम् । आत्मनः[2] । मानयेत्[1] । तथा । क्षत्राय । न । आ । वृश्चते । तथा । राष्ट्राय । न । आ । वृश्चते ॥ २ ॥

अतो वै ब्रह्म च क्षत्रं चोदतिष्ठतां ते अब्रूतां कं प्र विशावेति ॥ ३ ॥

अतः । वै । ब्रह्म । च । क्षत्रम् । च । उत् । अतिष्ठताम् । ते इति । अब्रूताम् । कम् । प्र । विशाव । इति ॥ ३ ॥

[3]अतो वै[3] बृहस्पतिमेव [4]ब्रह्म †प्र विशत्विन्द्रं[4] क्षत्रं तथा वा इति ॥ ४ ॥

अतः । वै । बृहस्पतिम् । एव । ब्रह्म । [5]प्र । विशतु[5] । इन्द्रम् । क्षत्रम् । तथा । वै । इति ॥४॥

अतो वै बृहस्पतिमेव ब्रह्म प्राविशदिन्द्रं क्षत्रम् ॥ ५ ॥

अतः । वै । बृहस्पतिम् । एव । ब्रह्म । [6]प्र । अविशत्[6] । इन्द्रम् । क्षत्रम् ॥ ५ ॥

इयं वा उ पृथिवी बृहस्पतिर्द्यौरेवेन्द्रः ॥ ६ ॥

इयम् । वै । ऊं इति । पृथिवी । बृहस्पतिः । द्यौः । एव । इन्द्रः ॥ ६ ॥

अयं वा उ[7] अग्निर्ब्रह्मासावादित्यः[8] क्षत्रम् ॥ ७ ॥

अयम् । वै । ऊं इति । अग्निः । ब्रह्म । असौ । आदित्यः । क्षत्रम् ॥ ७ ॥

ऐनं ब्रह्म गच्छति ब्रह्मवर्चसी भवति[9] ॥ ८ ॥

आ । एनम् । ब्रह्म । गच्छति । ब्रह्मऽवर्चसी । भवति ॥ ८ ॥

---

१. °येत् > ये Cp; अन्यत्र °ये. २. आत्मानः P. ३. नास्ति C,E,R, RW. ४. ब्रह्म प्र विश° > ब्रह्म प्रविश° RW.; ब्रह्म प्राविश° R[2]; ब्रह्म प्राविश° > ब्रह्म प्राविश° Dc; ब्रह्म प्रावि° > ब्रह्म प्रावि° B,Bh,Cs; ब्रह्म प्रावि° E; ब्रह्म प्रावि° B[2],P[3],M,O,T, K[2],C,R,Sm. † तु. पपा. W.; वैतु. शंपा. प्रा. ५. प्र० विशतु D[2],P[2]; प्र० विंशतु P; प्र०विशतु Bp[2],Cp; प्र० विंशतु>प्र० विशतु J. ६. प्रऽअविशत् W. ७. ऊं B,E. ८. °ब्रह्मा° A,B. ९. अर्थानुरोधादष्टमनवमयोरेकमन्त्रत्वं न्याय्यम्, एवं दशमैकादशयोरपि.

**यः पृथिवीं बृहस्पतिमग्निं ब्रह्म वेद[1] ॥ ९ ॥**

यः । पृथिवीम् । बृहस्पतिम् । अग्निम् । ब्रह्म । वेद ॥ ९ ॥

**ऐनमिन्द्रियं गच्छतीन्द्रियवान् भवति[1] ॥ १० ॥**

आ । एनम् । इन्द्रियम् । गच्छति । इन्द्रियऽवान् । भवति ॥ १० ॥

**य आदित्यं क्षत्रं दिवमिन्द्रं वेद[1] ॥ ११ ॥**

यः । आदित्यम् । क्षत्रम् । दिवम् । इन्द्रम् । वेद ॥ ११ ॥

इति द्वितीयेऽनुवाके तृतीयं पर्यायसूक्तम् ।

**तद् यस्यैवं विद्वान् व्रात्योऽतिथिर्गृहानागच्छेत् ॥ १ ॥**

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । अतिथिः । गृहान् । आऽगच्छेत् ॥ १ ॥

**स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्य क्वावात्सीर्व्रात्योदकं व्रात्य तर्पयन्तु व्रात्य यथा ते प्रियं तथास्तु व्रात्य यथा ते वशस्तथास्तु व्रात्य यथा ते निकामस्तथास्त्विति ॥ २ ॥**

स्वयम् । एनम् । अभिऽउदेत्य । ब्रूयात् । व्रात्य । क्व । अवात्सीः । व्रात्य । उदकम् । व्रात्य । तर्पयन्तु । व्रात्य । यथा । ते । प्रियम् । तथा । अस्तु । व्रात्य । यथा । ते । वशः । तथा । अस्तु । व्रात्य । यथा । ते । निऽकामः । तथा । अस्तु । इति ॥ २ ॥

**यदेनमाह व्रात्य क्वावात्सीरिति पथ एव तेन देवयानानव रुन्द्धे ॥३॥**

यत् । एनम् । आह । व्रात्य । क्व । अवात्सीः । इति । पथः । एव । तेन । देवऽयानान्[2] । अव । रुन्द्धे ॥ ३ ॥

**यदेनमाह व्रात्योदकमित्यप एव तेनाव रुन्द्धे ॥ ४ ॥**

यत् । एनम् । आह । व्रात्य । उदकम् । इति । अपः । एव । तेन । अव । रुन्द्धे ॥ ४ ॥

**यदेनमाह व्रात्य तर्पयन्त्विति प्राणमेव तेन वर्षीयांसं कुरुते ॥ ५ ॥**

---

१. पृ १५८१ टि ९ द्र.    २. °यानाम् P.

यत् । एनम् । आह । व्रात्य । तर्पयन्तु । इति । प्राणम् । एव । तेन । वर्षीयांसम् । कुरुते ॥५॥

यदेनमाह व्रात्य यथा ते प्रियं तथास्त्विति प्रियमेव तेनाव रुन्द्धे ॥ ६ ॥

यत् । एनम् । आह[1] । व्रात्य । यथा । ते । प्रियम् । तथा । अस्तु । इति । प्रियम् । एव । तेन । अव । रुन्द्धे ॥ ६ ॥

ऐनं प्रियं गच्छति प्रियः प्रियस्य भवति य एवं वेद ॥ ७ ॥

आ । एनम् । प्रियम् । गच्छति । प्रियः । प्रियस्य । भवति । यः । एवम् । वेद ॥ ७ ॥

यदेनमाह व्रात्य यथा ते वशस्तथास्त्विति[2] वशमेव[2] तेनाव रुन्द्धे ॥ ८ ॥

यत् । एनम् । आह । व्रात्य । यथा । ते[3] । वशः । तथा । अस्तु । इति । वशम्[4] । एव । तेन । अव । रुन्द्धे ॥ ८ ॥

[5]ऐनं वशो गच्छति[5] वशी वशिनां[6] भवति य एवं वेद ॥ ९ ॥

आ[7] । एनम् । वशः[8] । गच्छति । वशी । वशिनाम् । भवति । यः । एवम् । वेद ॥९॥

यदेनमाह व्रात्य यथा ते निकामस्तथास्त्विति निकाममेव तेनाव रुन्द्धे ॥१०॥

यत् । एनम् । आह । व्रात्य । यथा । ते । निऽकामः । तथा । अस्तु । इति । निऽकामम् । एव । तेन । अव । रुन्द्धे ॥ १० ॥

ऐनं निकामो गच्छति निकामे निकामस्य भवति य एवं वेद ॥ ११ ॥

आ । एनम् । निऽकामः । गच्छति । निऽकामे । निऽकामस्य । भवति । यः । एवम् । वेद ॥

इति द्वितीयेऽनुवाके चतुर्थं पर्यायसूक्तम् ।

ऋ. अथर्वा, दे. अध्यात्मम्, व्रात्यः

तद् यस्यैवं विद्वान् व्रात्य उद्धृतेष्वग्निष्वधिश्रितेऽग्निहोत्रेऽतिथिर्गृहानागच्छेत् ॥१॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । उद्धृतेषु[10] । अग्निषु । अधिऽश्रिते[11] । अग्निऽहोत्रे । अतिथिः । गृहान् । आऽगच्छेत् ॥ १ ॥

---

१. आसेह P. २. °ति वश° B,C,E,R,S^m,WM.; °ति वशमेव > °ति वशमेव Dc. ३. ते P. ४. वशम् P,J,Cp. ५. ऐनं वशो गं° A,B,B^h,C,D,S^m,WM.; एनं वशो गं° E,R; ऐनं वशो ग° K^m; ऐनं वशो गं° Cs. ६. वशीनां O. ७. नास्ति P,P², J. ८. वशः P J,Cp. ९. उधृते° O. १०. उधृतेषु Bp², Kp. ११. °श्रुते Bp².

स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्याति सृज होष्यामीति ॥ २ ॥

स्वयम् । एनम् । अभिऽउदेत्य । ब्रूयात् । व्रात्य । अति । सृज । होष्यामि । इति ॥२॥

स चातिसृजेज्जुहुयान्न चातिसृजेन्न जुहुयात् ॥ ३ ॥

सः । च । अतिऽसृजेत् । जुहुयात् । न । च । अतिऽसृजेत् । न । जुहुयात् ॥ ३ ॥

स य एवं विदुषा व्रात्येनातिसृष्टो जुहोति[1] ॥ ४ ॥

सः । यः । एवम्[2] । विदुषा । व्रात्येन । अतिऽसृष्टः । जुहोति ॥ ४ ॥

प्र पितृयाणं पन्थां जानाति[3] प्र देवयानम्[1] ॥ ५ ॥

प्र । पितृऽयानम् । पन्थाम्[4] । जानाति[5] । प्र । देवऽयानम् ॥ ५ ॥

न देवेष्वा वृश्चते हुतमस्य भवति[1] ॥ ६ ॥

न । देवेषु । आ । वृश्चते । हुतम् । अस्य । भवति ॥ ६ ॥

पर्यस्यास्मिंल्लोक आयतनं शिष्यते य एवं विदुषा व्रात्येनातिसृष्टो जुहोति ॥७॥

परि । अस्य । अस्मिन् । लोके । आऽयतनम् । शिष्यते । यः । एवम् । विदुषा । व्रात्येन । अतिऽसृष्टः । जुहोति ॥ ७ ॥

अथ य एवं विदुषा व्रात्येनानतिसृष्टो जुहोति[1] ॥ ८ ॥

अथ । यः । एवम् । विदुषा । व्रात्येन । अनतिऽसृष्टः । जुहोति ॥ ८ ॥

न पितृयाणं पन्थां जानाति न देवयानम्[1] ॥ ९ ॥

न । पितृऽयानम् । पन्थाम् । जानाति । न । देवऽयानम् ॥ ९ ॥

आ देवेषु 'वृश्चते अहुतमस्य' भवति[1] ॥ १० ॥

आ । देवेषु । वृश्चते । अहुतम् । अस्य । भवति ॥ १० ॥

---

१. अर्थानुरोधाच्चतुर्थपञ्चमषष्ठानामेकमन्त्रत्वं न्याय्यम्, एवमष्टमनवमदशमानामपि. २. एनम् P. ३. जानाति A,D,K,K$^{m}$,V,Cs,R; जानाति > जानाति Dc. ४. पथाम् P,P$^{2}$. ५. जानाति D$^{2}$,P$^{2}$. ६. वृश्चतेहु B$^{h}$,K,B$^{2}$,E$^{2}$.

नास्यास्मिंल्लोक आयतनं शिष्यते य एवं विदुषा व्रात्येनानतिसृष्टो जुहोति ॥११॥

न । अस्य । अस्मिन् । लोके । आऽयतनम् । शिष्यते । यः । एवम् । विदुषा[2] । व्रात्येन । अनतिऽसृष्टः । जुहोति ॥ ११ ॥

इति द्वितीयेनुवाके पञ्चमं पर्यायसूक्तम् ।

ऋ० अथर्वा, दे० अध्यात्मम्, व्रात्यः

तद् यस्यैवं विद्वान् व्रात्य एकां रात्रिमतिथिर्गृहे वसति ॥ १ ॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । एकाम् । रात्रिम् । अतिथिः । गृहे । वसति ॥१॥

ये पृथिव्यां पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥ २ ॥ [१]

ये । पृथिव्याम् । पुण्याः । लोकाः । तान् । एव । तेन । अव । रुन्द्धे ॥ २ ॥

तद् यस्यैवं विद्वान् व्रात्यो द्वितीयां रात्रिमतिथिर्गृहे वसति ॥ ३ ॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । द्वितीयाम् । रात्रिम् । अतिथिः । गृहे । वसति ॥३॥

येऽन्तरिक्षे[2] पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥ ४ ॥ [२]

ये । अन्तरिक्षे । पुण्याः । लोकाः । तान् । एव । तेन । अव । रुन्द्धे ॥ ४ ॥

तद् यस्यैवं विद्वान् व्रात्यस्तृतीयां रात्रिमतिथिर्गृहे वसति ॥ ५ ॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । तृतीयाम् । रात्रिम् । अतिथिः । गृहे । वसति ॥५॥

ये दिवि पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥ ६ ॥ [३]

ये । दिवि । पुण्याः । लोकाः । तान् । एव । तेन । अव । रुन्द्धे ॥ ६ ॥

तद् यस्यैवं विद्वान् व्रात्यश्चतुर्थीं रात्रिमतिथिर्गृहे वसति ॥ ७ ॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । चतुर्थीम् । रात्रिम् । अतिथिः । गृहे । वसति ॥

ये पुण्यानां पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥ ८ ॥ [४]

ये । पुण्यानाम् । पुण्याः । लोकाः । तान् । एव । तेन । अव । रुन्द्धे ॥ ८ ॥

---

१. विदुषः P. २. येंत॰ C; ये अन्त॰ A, B, D, K, $K^m$, $S^m$, V, Dc, Cs, I, C, $R^2$, T.

तद् यस्यैवं विद्वान् व्रात्योपरिमिता रात्रीरतिथिर्गृहे वसति ॥ ९ ॥

तत् । यस्य । एवम् । विद्वान् । व्रात्यः । अपरिऽमिताः[1] । रात्रीः[2] । अतिथिः । गृहे । वसति ॥

य एवापरिमिताः पुण्या लोकास्तानेव तेनाव रुन्द्धे ॥ १० ॥ [५]

ये । एव । अपरिऽमिताः[1] । पुण्याः । लोकाः । तान् । एव । तेन । अव । रुन्द्धे ॥१०॥

अथ यस्याव्रात्यो व्रात्यब्रुवो नामबिभ्रत्यतिथिर्गृहानागच्छेत् ॥११॥ [६]

अथ । यस्य । अव्रात्यः । व्रात्यऽब्रुवः । नामऽबिभ्रती[3] । अतिथिः । गृहान् । आऽगच्छेत् ॥

कर्षेदेनं न चैनं कर्षेत् ॥ १२ ॥ [७]

कर्षेत् । एनम् । न । च । एनम् । कर्षेत् ॥ १२ ॥

अस्यै देवताया उदकं याचामीमां देवतां वासय इमामिमां[4] देवतां परि वेवेष्मीत्येनं परि वेविष्यात् ॥ १३ ॥ [८]

अस्यै । देवतायै । उदकम् । याचामि । इमाम् । देवताम् । वासये । इमाम् । इमाम् । देवताम् । परि । वेवेष्मि[5] । इति । एनम् । परि । वेविष्यात् ॥ १३ ॥

तस्यामेवास्य तद् देवतायां हुतं भवति य एवं वेद ॥ १४ ॥ [९]

तस्याम् । एव । अस्य । तत् । देवतायाम् । हुतम् । भवति । यः । एवम् । वेद ॥१४॥

इति द्वितीयेऽनुवाके षष्ठं पर्यायसूक्तम् ।

ऋ॰ अथर्वा, दे॰ मरुत्‍सम्, व्रात्यः

स यत् प्राचीं दिशमनु व्यचलन्मारुतं शर्धो भूत्वानुव्यचलन्मनोऽन्नादं[6] कृत्वा ॥१॥

सः । यत् । प्राचीम् । दिशम् । अनु । विऽअचलत् । मारुतम् । शर्धः । भूत्वा । अनुऽव्यचलत् । मनः । अन्नऽअदम् । कृत्वा ॥ १ ॥

मनसान्नादेनान्नमत्ति य एवं वेद ॥ २ ॥ [१]

मनसा । अन्नऽअदेन[7] । अन्नम् । अत्ति । यः । एवम् । वेद ॥ २ ॥

---

१. °रि° P. २. रात्रिः P. ३. वैप १७९३ C द्र. ४. द्वितीयः इमाम् इतिशब्दः ? 'कर्मव्यतिहारे सर्वनाम्नो द्वे समासवच्च बहुलम्' ( पावा ८,१,१२ ) इति वा द्र. ५. वेवेष्मि J. ६. °नो° E. ७. °अदन P.

स यद् दक्षिणां दिशमनु व्यचलदिन्द्रो भूत्वानुव्यचलद् बलमन्नादं कृत्वा ॥३॥

सः । यत् । दक्षिणाम् । दिशम् । अनु । विऽअचलत्[1] । इन्द्रः । भूत्वा । अनुऽव्यचलत् । बलम् । अन्नऽअदम् । कृत्वा ॥ ३ ॥

बलेनान्नादेनान्नमत्ति य एवं वेद ॥ ४ ॥ [२]

बलेन । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ ४ ॥

स यत् प्रतीचीं दिशमनु व्यचलद् वरुणो राजा भूत्वानुव्यचलदपोऽन्नादीः[2] कृत्वा ।५।

सः । यत् । प्रतीचीम् । दिशम्[3] । अनु । विऽअचलत् । वरुणः । राजा । भूत्वा । अनुऽव्यचलत् । अपः । अन्नऽअदीः । कृत्वा ॥ ५ ॥

अद्भिरन्नादीभिरन्नमत्ति य एवं वेद ॥ ६ ॥ [३]

अत्ऽभिः । अन्नऽअदीभिः । अन्नम् । अत्ति । यः । एवम् । वेद ॥ ६ ॥

स यदुदीचीं दिशमनु व्यचलत् सोमो राजा भूत्वानुव्यचलत्
[4]सप्तर्षिभिर्हुत आहुतिमन्नादीं कृत्वा ॥ ७ ॥

सः । यत् । उदीचीम् । दिशम् । अनु । विऽअचलत् । सोमः । राजा । भूत्वा । अनुऽव्यचलत् । सप्तर्षिऽभिः । हुते । आऽहुतिम् । अन्नऽअदीम् । कृत्वा ॥ ७ ॥

आहुत्यान्नाद्यान्नमत्ति य एवं वेद ॥ ८ ॥ [४]

आऽहुत्या । अन्नऽअद्या । अन्नम् । अत्ति । यः । एवम् । वेद ॥ ८ ॥

स यद् ध्रुवां दिशमनु व्यचलद् विष्णुर्भूत्वानुव्यचलद् विराजमन्नादीं कृत्वा ॥९॥

सः । यत् । ध्रुवाम् । दिशम् । अनु । विऽअचलत् । विष्णुः । भूत्वा । अनुऽव्यचलत् । विऽराजम् । अन्नऽअदीम् । कृत्वा ॥ ९ ॥

विराजान्नाद्यान्नमत्ति य एवं वेद ॥ १० ॥ [५]

---

१. वि° P. २. दपो° A,B,C,E,K,K^m,R,W M.; °दपो° > दपो° Dc; °दीष् I,K[१]. ३. दिशिम् P. ४. सप्तऋषि° A,K

विऽराजा । अन्नऽअद्या । अन्नम् । अत्ति । यः । एवम् । वेद ॥ १० ॥

**स यत् पशूननु व्यचलद् रुद्रो भूत्वानुव्यचलदोषधीरन्नादीः कृत्वा ॥ ११ ॥**

सः । यत् । पशून् । अनु । विऽअचलत् । रुद्रः । भूत्वा । अनुऽव्यचलत् । ओषधीः । अन्नऽअदीः । कृत्वा ॥ ११ ॥

**ओषधीभिरन्नादीभिरन्नमत्ति य एवं वेद ॥ १२ ॥ [६]**

ओषधीभिः । अन्नऽअदीभिः । अन्नम् । अत्ति । यः । एवम् । वेद ॥ १२ ॥

**स यत् पितॄननु व्यचलद् यमो राजा भूत्वानुव्यचलत् स्वधाकारमन्नादं कृत्वा ॥ १३ ॥**

सः । यत् । पितॄन् । अनु । विऽअचलत् । यमः । राजा । भूत्वा । अनुऽव्यचलत् । स्वधाऽकारम् । अन्नऽअदम् । कृत्वा ॥ १३ ॥

**स्वधाकारेणान्नादेनान्नमत्ति य एवं वेद ॥ १४ ॥ [७]**

स्वधाऽकारेण । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ १४ ॥

**स यन्मनुष्या३ननु व्यचलदग्निर्भूत्वानुव्यचलत् स्वाहाकारमन्नादं कृत्वा ॥ १५ ॥**

सः । यत् । मनुष्यान् । अनु । विऽअचलत् । अग्निः । भूत्वा । अनुऽव्यचलत् । स्वाहाऽकारम् । अन्नऽअदम् । कृत्वा ॥ १५ ॥

**स्वाहाकारेणान्नादेनान्नमत्ति य एवं वेद ॥ १६ ॥ [८]**

स्वाहाऽकारेण । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ १६ ॥

**स यदूर्ध्वां दिशमनु व्यचलद् बृहस्पतिर्भूत्वानुव्यचलद् वषट्कारमन्नादं कृत्वा ॥ १७ ॥**

सः । यत् । ऊर्ध्वाम् । दिशम् । अनु । विऽअचलत् । बृहस्पतिः । भूत्वा । अनुऽव्यचलत् । वषट्ऽकारम् । अन्नऽअदम् । कृत्वा ॥ १७ ॥

**वषट्कारेणान्नादेनान्नमत्ति य एवं वेद ॥ १८ ॥ [९]**

वषट्ऽकारेण । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ १८ ॥

**स यद् देवाननु व्यचलदीशानो भूत्वानुव्यचलन्मन्युमन्नादं कृत्वा ॥ १९ ॥**

सः । यत् । देवान् । अनु । विऽअचलत् । ईशानः । भूत्वा । अनुऽव्यचलत् । मन्युम् । अन्नऽअदम् । कृत्वा ॥ १९ ॥

**मन्युनान्नादेनान्नमत्ति य एवं वेद ॥ २० ॥ [१०]**

मन्युना । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ २० ॥

**स यत् प्रजा अनु व्यचलत् प्रजापतिर्भूत्वानुव्यचलत् प्राणमन्नादं कृत्वा ॥२१॥**

सः । यत् । प्रऽजाः । अनु । विऽअचलत् । प्रजाऽपतिः । भूत्वा । अनुऽव्यचलत् । प्राणम् । अन्नऽअदम् । कृत्वा ॥ २१ ॥

**प्राणेनान्नादेनान्नमत्ति य एवं वेद ॥ २२ ॥ [११]**

प्राणेन । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ २२ ॥

**स यत् सर्वानन्तर्देशाननु व्यचलत् परमेष्ठी भूत्वानुव्यचलद् ब्रह्मान्नादं कृत्वा ।२३।**

सः । यत् । सर्वान् । अन्तःऽदेशान् । अनु । विऽअचलत् । परमेऽस्थी । भूत्वा । अनुऽव्यचलत् । ब्रह्म । अन्नऽअदम् । कृत्वा ॥ २३ ॥

**ब्रह्मणान्नादेनान्नमत्ति य एवं वेद ॥ २४ ॥ [१२]**

ब्रह्मणा । अन्नऽअदेन । अन्नम् । अत्ति । यः । एवम् । वेद ॥ २४ ॥

**इति द्वितीयेऽनुवाके सप्तमं पर्यायसूक्तम् ।**

७६. अथर्वा, दे. अध्यात्मम्, व्रात्यः

**[1]तस्य व्रात्यस्य ॥ १ ॥**

तस्य । व्रात्यस्य ॥ १ ॥

**[2]सप्त प्राणाः सप्तापानाः सप्त व्यानाः ॥ २ ॥**

सप्त । प्राणाः । सप्त । अपानाः । सप्त । विऽआनाः ॥ २ ॥

**'तस्य व्रात्यस्य[2] । [3]योऽस्य[3] प्रथमः प्राण ऊर्ध्वो नामायं सो अग्निः ॥ ३ ॥**

तस्य । व्रात्यस्य । यः । अस्य । प्रथमः । प्राणः । ऊर्ध्वः । नाम । अयम् । सः । अग्निः ॥ ३ ॥

---

१. Bp² प्रथमद्वितीययोरेकर्चत्वं मत्वा सूक्ते ८ ऋचो मन्यते. २. नास्ति RW. एवमग्रेऽपि आ सप्तदशसूक्तसमाप्तेः. ३. स्य WM ; अस्य K²; यो अस्य R².

तस्य व्रात्यस्य । योऽस्य द्वितीयः प्राणः प्रौढो[१] नामासौ स आदित्यः ॥ ४ ॥

तस्य । व्रात्यस्य । यः । अस्य । द्वितीयः । प्राणः । प्रऽऊढः[२] । नाम । असौ । सः । आदित्यः ॥४॥

तस्य व्रात्यस्य । योऽस्य तृतीयः प्राणोऽभ्यूढो[३] नामासौ स चन्द्रमाः ॥५॥

तस्य । व्रात्यस्य । यः । अस्य । तृतीयः । प्राणः । अभिऽऊढः[४] । नाम । असौ । सः । चन्द्रमाः ॥

तस्य व्रात्यस्य । योऽस्य चतुर्थः प्राणो विभूर्नामायं स पवमानः ॥ ६ ॥

तस्य । व्रात्यस्य । यः । अस्य । चतुर्थः । प्राणः । विऽभूः । नाम । अयम् । सः । पवमानः ॥६॥

तस्य व्रात्यस्य । योऽस्य पञ्चमः प्राणो योनिर्नाम[५] ता इमा आपः ॥ ७ ॥

तस्य । व्रात्यस्य । यः । अस्य । पञ्चमः । प्राणः । योनिः । नाम । ताः । इमाः । आपः ॥ ७ ॥

तस्य व्रात्यस्य । योऽस्य षष्ठः प्राणः प्रियो नाम त इमे पशवः ॥ ८ ॥

तस्य । व्रात्यस्य । यः । अस्य । षष्ठः । प्राणः । प्रियः । नाम । ते[६] । इमे । पशवः[७] ॥८॥

तस्य व्रात्यस्य । योऽस्य सप्तमः प्राणोऽपरिमितो[८] नाम ता इमाः प्रजाः ॥९॥

तस्य । व्रात्यस्य । यः । अस्य । सप्तमः । प्राणः । अपरिऽमितः । नाम । ताः । इमाः । प्रऽजाः ॥९॥

इति द्वितीयेऽनुवाके अष्टमं पर्यायसूक्तम् ।

ऋ· अथर्वा, दे· अध्यात्मम्, व्रात्यः

तस्य व्रात्यस्य । 'योऽस्य' प्रथमोऽपानः[१०] सा पौर्णमासी ॥ १ ॥

तस्य । व्रात्यस्य । यः । अस्य । प्रथमः । अपानः । सा । पौर्णऽमासी ॥ १ ॥

तस्य व्रात्यस्य । योऽस्य द्वितीयोऽपानः साष्टका ॥ २ ॥

तस्य । व्रात्यस्य । यः । अस्य । द्वितीयः । अपानः । सा । अष्टका ॥ २ ॥

तस्य व्रात्यस्य । योऽस्य तृतीयोऽपानः सामावास्या ॥ ३ ॥

तस्य । व्रात्यस्य । यः । अस्य । तृतीयः । अपानः । सा । अमाऽवास्या ॥ ३ ॥

---

१. प्रोढो B², O. २. प्रऽऊढः शंपा.; प्रऽऊर्ढः WM. WI. ३. °भ्यूढो A. Bʰ, C, D, E, R, Sᵐ, Cs, WM.; °भ्यूढो > °भ्यूढो Dc. ४. अभिऽऊढः P, J, Cp, Bp². ५. योनिर्णाम D. ६. त P. ७ पश्वः P. ८. °मितौ B. ९. WM. प्रायेण नास्ति; अंस्य K²; यो अंस्य R², एवमग्रेपि. १०. °मोपानः A, Bʰ, R; °मोपानः C.

तस्य व्रात्यस्य । योऽस्य चतुर्थोऽपानः[1] सा श्रद्धा ॥ ४ ॥

तस्य । व्रात्यस्य । यः । अस्य । चतुर्थः । अपानः । सा । श्रद्धा ॥ ४ ॥

तस्य व्रात्यस्य । योऽस्य पञ्चमोऽपानः[2] सा दीक्षा ॥ ५ ॥

तस्य । व्रात्यस्य । यः । अस्य । पञ्चमः । अपानः । सा । दीक्षा ॥ ५ ॥

तस्य व्रात्यस्य । योऽस्य षष्ठोऽपानः[3] स यज्ञः ॥ ६ ॥

तस्य । व्रात्यस्य । यः । अस्य । षष्ठः । अपानः । सः । यज्ञः ॥ ६ ॥

तस्य व्रात्यस्य । योऽस्य सप्तमोऽपानस्ता[4] इमा दक्षिणाः ॥ ७ ॥

तस्य । व्रात्यस्य । यः । अस्य । सप्तमः । अपानः । ताः । इमाः । दक्षिणाः ॥ ७ ॥

इति द्वितीयेऽनुवाके नवमं पर्यायसूक्तम् ।

ऋ. अथर्वा, दे. अध्यात्मम्, व्रात्यः

तस्य व्रात्यस्य । [6]योऽस्य[6] प्रथमो व्यानः सेयं भूमिः ॥ १ ॥

तस्य । व्रात्यस्य । यः । अस्य । प्रथमः । विऽआनः । सा । इयम् । भूमिः ॥ १ ॥

तस्य व्रात्यस्य । योऽस्य द्वितीयो व्यानस्तदन्तरिक्षम् ॥ २ ॥

तस्य । व्रात्यस्य । यः । अस्य । द्वितीयः । विऽआनः । तत् । अन्तरिक्षम् ॥ २ ॥

तस्य व्रात्यस्य । योऽस्य तृतीयो व्यानः सा द्यौः ॥ ३ ॥

तस्य । व्रात्यस्य । यः । अस्य । तृतीयः । विऽआनः । सा । द्यौः ॥ ३ ॥

तस्य व्रात्यस्य । योऽस्य चतुर्थो व्यानस्तानि नक्षत्राणि ॥ ४ ॥

तस्य । व्रात्यस्य । यः । अस्य । चतुर्थः । विऽआनः । तानि । नक्षत्राणि ॥ ४ ॥

तस्य व्रात्यस्य । योऽस्य पञ्चमो व्यानस्त ऋतवः ॥ ५ ॥

तस्य । व्रात्यस्य । यः । अस्य । पञ्चमः । विऽआनः । ते । ऋतवः ॥ ५ ॥

---

१. °र्थोपानः C,R. २. मोपानः A,B,Bʰ,C,R. ३. षष्ठोपानः A,Bʰ,C,K,Kᵐ,R. ४. °मोपानः A,B,Bʰ,C,K,R. ६. स्य WM.; यो अस्य R², एवमग्रेऽपि.

तस्य व्रात्यस्य । योऽस्य षष्ठो व्यानस्त आर्तवाः ॥ ६ ॥

तस्य । व्रात्यस्य । यः । अस्य । षष्ठः । विऽआनः । [1]ते । आर्तवाः[1] ॥ ६ ॥

तस्य व्रात्यस्य । योऽस्य सप्तमो व्यानः स संवत्सरः ॥ ७ ॥

तस्य । व्रात्यस्य । यः । अस्य । सप्तमः । विऽआनः । सः । सम्ऽवत्सरः ॥ ७ ॥

तस्य व्रात्यस्य । समानमर्थं परि यन्ति देवाः संवत्सरं वा एतदृतवोऽनुपरियन्ति व्रात्यं च ॥ ८ ॥

तस्य । व्रात्यस्य । समानम् । अर्थम् । परि । यन्ति । देवाः । सम्ऽवत्सरम् । वै । एतत् । ऋतवः । अनुऽपरियन्ति । व्रात्यम् । च ॥ ८ ॥

तस्य व्रात्यस्य । यदादित्यमभिसंविशन्त्यमावास्यां चैव तत्पौर्णमासीं च ॥९॥

तस्य । व्रात्यस्य । यत् । आदित्यम् । अभिऽसंविशन्ति । अमाऽवास्याम्[2] । च । एव । तत् । पौर्णऽमासीम् । च ॥ ९ ॥

तस्य व्रात्यस्य । एकं [3]तदेषाममृतत्वमित्याहुतिरेव ॥ १० ॥

तस्य । व्रात्यस्य । एकम् । तत् । एषाम्[4] । अमृतऽत्वम् । इति । आऽहुतिः । एव ॥ १० ॥

इति द्वितीयेऽनुवाके दशमं पर्यायसूक्तम् ।

ऋ. अथर्वा, दे. अध्यात्मम्, व्रात्यः

तस्य व्रात्यस्य ॥ १ ॥

तस्य । व्रात्यस्य ॥ १ ॥

यदस्य दक्षिणमक्ष्यसौ स आदित्यो यदस्य सव्यमक्ष्यसौ स चन्द्रमाः ॥२॥

यत् । अस्य । दक्षिणम् । अक्षि । असौ । सः । आदित्यः । यत् । अस्य । सव्यम् । अक्षि । असौ । सः । चन्द्रमाः ॥ २ ॥

योऽस्य दक्षिणः कर्णोऽयं सो अग्निर्योऽस्य सव्यः कर्णोऽयं स पवमानः ॥३॥

यः । अस्य । दक्षिणः । कर्णः । अयम् । सः । अग्निः । यः । अस्य । सव्यः । कर्णः । अयम् । सः । पवमानः ॥ ३ ॥

---

१. ते । आर्त्तवः P. २. °वास्यां A,B,Bʰ,C,R,P,Cp,WM. ३. तदेषा° Bʰ,C,D,E,R,Sᵐ,Cs,WM. ४. एषांम् P,J,Cp,WM.

अहोरात्रे नासिके दितिश्चादितिश्च शीर्षकपाले संवत्सरः शिरः ॥ ४ ॥

अहोरात्रे इति । नासिके इति । दितिः । च । अदितिः । च । शीर्षकपाले इति शीर्षऽकपाले । सम्ऽवत्सरः । शिरः ॥ ४ ॥

अह्ना प्रत्यङ् व्रात्यो रात्र्या प्राङ् नमो व्रात्याय ॥ ५ ॥

अह्ना । प्रत्यङ् । व्रात्यः । रात्र्या । प्राङ् । नमः । व्रात्याय ॥ ५ ॥

इति द्वितीयेऽनुवाके एकादशं पर्यायसूक्तम् ।

इति द्वितीयोऽनुवाकः ।

इति पञ्चदशं काण्डं समाप्तम् ।

---

अथ

# षोडशं काण्डम्

कतिषुचित् कर्मसु शान्त्युदकं विहितम् । तेन हि आचमनप्रोक्षणाव-सेचनासेचनाप्लावनानि कर्तव्यानि भवन्ति । तच्छान्त्युदकं कतिभिश्चिच्छान्ति-नामकैः सूक्तैः कर्तव्यं भवति । तत् कांस्यपात्रे कर्तव्यम् । तथाकरणात्पूर्वम् 'अतिसृष्टो अपां वृषभः' इति सूक्तेन अपोतिसृज्य अवकरं विसर्जयति । कांस्यपात्रे अपोवसिच्य ताभिस्तन्मध्यगतं मलं निर्गमयतीत्यर्थः । इति सांप्रदायिकाः । सूत्रितं हि— "'अतिसृष्टो अपां वृषभः' इत्यपोतिसृज्य" ( कौसू ९,९ ) इति ।

ऋ. अथर्वा, दे. प्रजापतिः

अतिसृष्टो अपां वृषभोऽतिसृष्टा[1] अग्नयो दिव्याः ॥ १ ॥

अतिऽसृष्टः । अपाम् । वृषभः । अतिऽसृष्टाः । अग्नयः । दिव्याः ॥ १ ॥

रुजन् परिरुजन् मृणन् प्रमृणन् ॥ २ ॥

रुजन् । परिऽरुजन् । मृणन् । प्रऽमृणन् ॥ २ ॥

म्रोको मनोहा खनो निर्दाह आत्मदूषिस्तनूदूषिः ॥ ३ ॥

म्रोकः । मनःऽहा । खनः । निःऽदाहः[2] । आत्मऽदूषिः । तनूऽदूषिः ॥ ३ ॥

इदं तमति[3] सृजामि तं माभ्यवनिक्षि ॥ ४ ॥

इदम् । तम् । अति । सृजामि । तम् । मा । अभिऽअवनिक्षि ॥ ४ ॥

तेन तमभ्यतिसृजामो यो३स्मान्[4] द्वेष्टि यं वयं द्विष्मः ॥ ५ ॥

तेन । तम् । अभिऽअतिसृजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ॥ ५ ॥

अपामग्रमसि समुद्रं वोऽभ्यवसृजामि ॥ ६ ॥

अपाम् । अग्रम् । असि । समुद्रम् । वः । अभिऽअवसृजामि ॥ ६ ॥

[5]यो३प्स्व१ग्निरति तं सृजामि म्रोकं खनिं तनूदूषिम् ॥ ७ ॥

---

१. °भो अति° पै १८,२८,१.   २. °हाः P.   ३. तानति पै १८,२८,४.
४. यो१स्मान् C,D,K,V.   ५. यौ१° B,C,K,V.

यः । अप्ऽसु । अग्निः । अति॑ । तम्[1] । सृजामि । म्रोकम् । खनिम् । तनूऽदूषिम् ॥ ॥७॥

**यो वं आपोग्निराविवेश स एष यद् वो घोरं तदेतत् ॥ ८ ॥**

यः । वः । आपः । अग्निः । आऽविवेश । सः । एषः । यत् । वः । घोरम् । तत् । एतत् ॥८॥

**इन्द्रस्य व इन्द्रियेणाभि षिंञ्चेत् ॥ ९ ॥**

इन्द्रस्य । वः । इन्द्रियेण । अभि । सिञ्चेत् ॥ ९ ॥

**अरिप्रा आपो अप रिप्रमस्मत् ॥ १० ॥**

अरिप्राः । आपः । अप । रिप्रम् । अस्मत् ॥ १० ॥

**प्रास्मदेनो वहन्तु प्र दुष्वप्न्यं वहन्तु ॥ ११ ॥**

प्र । अस्मत् । एनः । वहन्तु । प्र । दुःऽस्वप्न्यम् । वहन्तु ॥ ११ ॥

**शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे ॥ १२ ॥**

शिवेन । मा । चक्षुषा । पश्यत । आपः । शिवया । तन्वा । उप । स्पृशत । त्वचम् । मे ॥

**शिवानग्नीनप्सुषदो हवामहे मयि क्षत्रं वर्च आ धत्त देवीः ॥ १३ ॥**

शिवान् । अग्नीन् । अप्सुऽसदः । हवामहे । मयि । क्षत्रम् । वर्चः । आ । धत्त । देवीः[2] ॥१३॥

**इति प्रथमेऽनुवाके प्रथमं पर्यायसूक्तम् ।**

'मरणं व्यसनं चैव बन्धनं च विशेषतः ।
प्रणिपातोन्मत्तता वा दैवोपहतिरेव च ॥
पुत्रादिधननाशश्च गृहे दोषान् बहूनपि ।'

**एतानि सर्वाणि कानिचिद्वा तेषां मध्ये यथा शत्रोर्भवन्ति तथोद्देशेन यत् कर्म तद् अभिचारकर्म । एतन्नामकः कर्मविशेषः । तादृशस्याभिचारकर्मणः समाप्तौ अवभृथे स्नात्वा** 'निर्दुरर्मण्यः' **इति सूक्तेन सर्वौषधिभिर्नाम कैश्चिदोषधिविशेषैरात्मानम् अभिमृशति । तद् उक्तं कौशिकेन—** "'निर्दुरर्मण्यः' इति संधाव्याभिमृशति" **( कौसू ४९,२७ ) इति । अभिचारं कृत्वा कर्ता शान्तिमिमां करोतीत्यर्थः ।**

**तथा उपनयनकर्मणि अनेन सूक्तेन कुङ्कुमचन्दनसर्वौषध्यादिना शरीरं**

---

1. तत् P[2]. 2. देवीः P[2].

समालभ्य आत्मानम् अभिमन्त्रयते आयुष्कामः । सूत्रितं हि—" 'निर्दुरर्मण्यः' इति संधाव्य" ( कौ १ ५८,१६ ) इति ।

तथा चक्षुरादीन्द्रियदार्ढ्यकामः अरण्ये गत्वा अनेन सूक्तेन सर्वौषधिम् अभिमन्त्र्य अनुलोमं प्रलिम्पति । तथा च सूत्रम्—" 'निर्दुरर्मण्यः' इति सर्वसुरभिचूर्णैररण्येऽप्रतीहारं प्रलिम्पति" ( कौसू ५८,१२ ) इति ।

श्रोत्रं वाग् मनश्चक्षुर्दन्ता नासिका अन्यच्च सर्वं विकलेन्द्रियं दृढं भवति । यो विकलेन्द्रियस्तस्येदं कर्म ।

ऋ. अथर्वा, दे. वाक्

निर्दुरर्मण्य॒[1] ऊ॒र्जा मधु॑मती वाक् ॥ १ ॥

निः । दुः॒ऽअ॒र्म॒ण्यः॑ । ऊ॒र्जा । मधु॑ऽमती । वाक् ॥ १ ॥

मधु॑मती[2] स्थ॒ मधु॑मतीं॒ वाच॑मुदेयम्[3] ॥ २ ॥

मधु॑ऽमतीः[4] । स्थ॒ । मधु॑ऽमतीम् । वाच॑म् । उ॒दे॒य॒म् ॥ २ ॥

उप॑हूतो मे गो॒पा उप॑हूतो गोपी॒थः ॥ ३ ॥

उप॑ऽहूतः । मे॒ । गो॒पाः । उप॑हूतो[5] । गो॒पी॒थः ॥ ३ ॥

सु॒श्रु॒तौ॒ कर्णौ॑ भद्रश्रु॒तौ॒ कर्णौ॑ भ॒द्रं श्लोकं॑ श्रूयासम् ॥ ४ ॥

सु॒ऽश्रु॒तौ । कर्णौ॑ । भ॒द्र॒ऽश्रु॒तौ । कर्णौ॑ । भ॒द्रम् । श्लोक॑म् । श्रू॒या॒स॒म् ॥ ४ ॥

सुश्रु॑तिश्च॒ मोप॑श्रुतिश्च॒ मा हा॑सिष्टां सौप॑र्ण॒ चक्षु॒रज॑स्रं॒ ज्योतिः॑ ॥ ५ ॥

सु॒ऽश्रु॑तिः[6] । च॒ । मा॒ । उप॑ऽश्रुतिः । च॒ । मा । हा॒सि॒ष्टा॒म् । सौप॑र्णम् । चक्षुः॑ । अज॑स्रम् । ज्योतिः॑ ॥

ऋषी॑णां प्रस्त॒रो॒ऽसि॒[7] नमो॑ऽस्तु॒ दैवा॑य प्रस्त॒राय॑ ॥ ६ ॥

ऋषी॑णाम् । प्र॒ऽस्त॒रः । अ॒सि॒ । नमः॑ । अ॒स्तु॒ । दैवा॑य । प्र॒ऽस्त॒राय॑ ॥ ६ ॥

इति प्रथमेऽनुवाके द्वितीयं पर्यायसूक्तम् ।

उपनयने 'मूर्धाहं', 'नाभिरहम्' इति सूक्ताभ्याम् आयुरभिवृद्ध्यर्थं माणवक उद्यन्तम् आदित्यम् उपतिष्ठते । तद् उक्तं कौशिकेन—" 'मूर्धाहम्' (अ १६,३), 'विषासहिम्' ( अ १७,१ ) इत्युद्यन्तम् उपतिष्ठते" ( कौसू ५८,२२ ) ।

---

१. °र्मन्य॒ऽ W.; वैप १,१८२२ e द्र. २. °मतीः Bh. ३. °मुद्यासम् तै ३,३, २,२. ४. °मती P,P²; °मतीः > °मती J. ५. °हुतः Cp. ६. सुश्रुतिः P. ७. °रोसि R,Sm,Cs.

ऋ. अथर्वा, दे. ब्रह्मादित्यौ

मूर्धाहं रयीणां मूर्धा समानानां भूयासम् ॥ १ ॥

मूर्धा । अहम् । रयीणाम् । मूर्धा । समानानाम् । भूयासम् ॥ १ ॥

रुजश्च[1] मा वेनश्च मा हासिष्टां मूर्धा च मा विधर्मा च मा हासिष्टाम् ॥ २ ॥

रुजः । च । मा । वेनः । च । मा । हासिष्टाम् । मूर्धा । च । मा । विऽधर्मा । च । मा । हासिष्टाम् ॥

उर्वश्च[2] मा चमसश्च मा हासिष्टां धर्ता च मा धरुणश्च मा हासिष्टाम् ॥ ३ ॥

उर्वः । च । मा । चमसः । च । मा[3] । हासिष्टाम् । धर्ता । च । मा । धरुणः । च० ॥३॥

विमोकश्च मार्द्रपविश्च मा हासिष्टामार्द्रदानुश्च[4] मा मातरिश्वा च मा हासिष्टाम् ॥ ४ ॥

विऽमोकः । च । मा । आर्द्रऽपविः । च । मा । हासिष्टाम् । आर्द्रऽदानुः । च । मा । मातरिश्वा । च । मा ! हासिष्टाम् ॥४॥

बृहस्पतिर्म आत्मा नृमणा नाम हृद्यः ॥ ५ ॥

बृहस्पतिः । मे । आत्मा । नृऽमनाः[5] । नाम । हृद्यः ॥ ५ ॥

असंतापं मे हृदयमुर्वी गव्यूतिः समुद्रो अस्मि विधर्मणा ॥ ६ ॥

असम्ऽतापम् । मे । हृदयम् । उर्वी । गव्यूतिः । समुद्रः । अस्मि । विऽधर्मणा ॥ ६ ॥

इति प्रथमेऽनुवाके तृतीयं पर्यायसूक्तम् ।

'नाभिरहम्' इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।

ऋ. अथर्वा, दे. ब्रह्मादित्यौ

नाभिरहं रयीणां नाभिः समानानां भूयासम् ॥ १ ॥

नाभिः । अहम् । रयीणाम् । नाभिः । समानानाम् । भूयासम् ॥ १ ॥

स्वासदसि सूषा[6] अमृतो मर्त्येष्वा ॥२॥

सुऽआसत् । असि । सुऽउषाः । अमृतः । मर्त्येषु । आ ॥ २ ॥

---

१. वैप १,२६७४ f द्र. २. उखश्च W.; वैप १,९७३ a द्र ३. मा P.
४. श्च R,Sm. ५. °मनां P²,J. ६. षूषा E; पूषा K.

**मा मां[1] प्राणो हासीन्मो[2] अपानोवहाय[3] परा गात् ॥ ३ ॥**

मा । माम्[4] । प्राणः । हासीत् । मो इति । अपानः । अवऽहाय । परा । गात् ॥ ३ ॥

**सूर्यो माह्नः पात्वग्निः पृथिव्या वायुरन्तरिक्षाद् यमो मनुष्येभ्यः सरस्वती पार्थिवेभ्यः ॥४॥**

सूर्यः । मा । अह्नः । पातु । अग्निः । पृथिव्याः । वायुः । अन्तरिक्षात् । यमः । मनुष्येभ्यः । सरस्वती । पार्थिवेभ्यः ॥ ४ ॥

**प्राणापानौ मा मा हासिष्टं मा जने प्र मेषि ॥ ५ ॥**

प्राणापानौ । मा[5] । मा । हासिष्टम् । मा । जने । प्र । मेषि ॥ ५ ॥

**स्वस्त्य१द्योषसो[6] दोषसश्च सर्व आपः सर्वगणो अशीय ॥६॥**

स्वस्ति । अद्य[7] । उषसः । दोषसः । च । सर्वः । आपः[8] । सर्वऽगणः । अशीय[9] ॥६॥

**शक्वरी[10] स्थ पशवो मोप स्थेषुर्मित्रावरुणौ[11] मे प्राणापानावग्निर्मे दक्षं दधातु ॥७॥**

शक्वरीः । स्थ । पशवः । मा । उप । स्थेषुः[12] । मित्रावरुणौ । मे । प्राणापानौ । अग्निः । मे । दक्षम् । दधातु ॥ ७ ॥

इति प्रथमेऽनुवाके चतुर्थं पर्यायसूक्तम् ।

इति प्रथमोऽनुवाकः ।

दुःस्वप्नदर्शने शान्तावेतत् पर्यायसूक्तं विनियुज्यते । तद्यथा—'विद्म ते स्वप्न' इत्येकेन पर्यायेण दुःस्वप्नं दृष्ट्वा मुखं विमार्ष्टि ।

तथा अतिघोरं दुःस्वप्नं दृष्ट्वा अनेन सूक्तेन मैश्रधान्यं पुरोडाशं जुहोति ।

तथा 'विद्म ते स्वप्न' इति सूक्तेन दुःस्वप्नं दृष्ट्वा पार्श्वेन द्वितीयेन भूयते । येन पार्श्वेन दुःस्वप्नो दृष्टस्ततोन्येन पार्श्वेन शेत इत्यर्थः ।

तथा अनेन सूक्तेन अन्नं स्वप्ने दृष्ट्वा निरीक्षते ।

---

१. मेमं अ ७,५५,४; मा त्वा पै २०,१०,७. † मां A,Bʰ,C,E,R,Cs,WM.
२. मा त्वा पै. ३. °नोवहाय A,Bʰ,C,E,Kᵐ,R,WM. ४. माम् P,J,Cp,WM.
५. मा P. ६. स्त्य३° A,Bʰ,C,D,E,R,Sᵐ,Dc,Cs; स्त्या३° K,Kᵐ,V; °१°C,K; °द्यो° A,D,E,R,Cs. ७. अद्य P,Cp. ८. आपः P. ९. आशीय P. १०. °रीः B,Bʰ. ११. स्थेषुमि° WM. १२. स्थेषु P,P²,J,WM.

तद् उक्तं कौशिकेन— " 'विद्म[1] ते स्वप्न' इति सर्वेषाम् अप्ययः" (कौसू ४६,१३) इति।

ऋ० यमः; दे० दुःस्वप्ननाशनम्

विद्म ते स्वप्न जनित्रं ग्राह्याः पुत्रोऽसि यमस्य करणः ॥ १ ॥

विद्म । ते । स्वप्न । जनित्रम् । ग्राह्याः । पुत्रः । असि । यमस्य । करणः ॥ १ ॥

अन्तकोसि मृत्युरसि ॥ २ ॥

अन्तकः । असि । मृत्युः । असि ॥ २ ॥

तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न †दुष्वप्न्यात्[2] पाहि ॥ ३ ॥ [१]

तम् । त्वा । स्वप्न । तथा । सम् । विद्म । सः । नः । स्वप्न । दुःऽस्वप्न्यात् । पाहि ॥

विद्म ते स्वप्न जनित्रं निर्ऋत्याः पुत्रोऽसि यमस्य करणः ।
अन्तकोसि० । तं त्वा० ॥ ४ ॥ [२]

विद्म । ते । स्वप्न । जनित्रम् । निःऽऋत्याः । पुत्रः ।०। ०॥ ४ ॥

विद्म ते स्वप्न जनित्रमभूत्याः पुत्रोऽसि यमस्य करणः ।
अन्तकोसि० । तं त्वा० ॥ ५ ॥ [३]

विद्म । ते । स्वप्न । जनित्रम् । अभूत्याः । पुत्रः ।० ।०॥ ५ ।

विद्म ते स्वप्न जनित्रं निर्भूत्याः पुत्रोऽसि यमस्य करणः ।
अन्तकोसि० । तं त्वा० ॥ ६ ॥ [४]

विद्म । ते । स्वप्न । जनित्रम् । निःऽभूत्याः । पुत्रः ।० ।०॥ ६ ॥

विद्म ते स्वप्न जनित्रं पराभूत्याः पुत्रोऽसि यमस्य करणः ।
अन्तकोसि० । तं त्वा० ॥ ७ ॥ [५]

विद्म । ते । स्वप्न । जनित्रम् । पराऽभूत्याः । पुत्रः ।० ।०॥ ७ ॥

विद्म ते स्वप्न जनित्रं देवजामीनां पुत्रोऽसि यमस्य करणः ॥ ८ ॥

विद्म । ते । स्वप्न । जनित्रम् । देवऽजामीनाम् । पुत्रः । असि । यमस्य । करणः ॥ ८ ॥

---

१. विद्मा Bl. २. सुष्वप्नान् देहि पै १९,४६,१२. † दुःष्व° A,B,Bb, E,R,Dc,Cs.

अन्त॑कोसि मृ॒त्युर॑सि ॥ ९ ॥

अन्त॑कः । अ॒सि॒ । मृ॒त्युः । अ॒सि॒ ॥ ९ ॥

तं त्वा॑ स्वप्न॒ तथा॒ सं वि॑द्म॒ स नः॑ स्वप्न दु॒ष्वप्न्या॑त् पाहि ॥१०॥ [६]

तम् । त्वा॒ । स्व॒प्न॒ । तथा॑ । सम् । वि॒द्म॒ । सः । न॒ः । स्व॒प्न॒ । दुः॒ऽस्वप्न्या॑त् । पा॒हि॒ ॥

इति द्वितीयेऽनुवाके प्रथमं पर्यायसूक्तम् ।

ऋ. यम:, दे. दुःस्वप्ननाशनम्, [illegible]

अभिचारकर्मणि 'अजैष्म' इत्यादिपर्यायसूक्तचतुष्टयेन शत्रुषु पाशान् बद्ध्वाभिमन्त्र्य निखनति ।

तथा तत्रैव कर्मणि अनेन पर्यायचतुष्टयेन 'अगन्म स्वः' इति अवसानद्वयवर्जितेन पदेपदे पाशान् वृश्चति ।

तथा तत्रैव कर्मणि अनेन अवसानद्वयवर्जितेन अधिपाशान् बाधकान् शङ्कून् संक्षुद्य भ्राष्ट्रेऽभ्यस्यति ।

तथा तत्रैव कर्मणि एतैश्चतुर्भिः पर्यायैः 'अगन्म स्वः' इत्यवसानद्वयवर्जितै रक्तशालिक्षीरौदनम् अभिमन्त्र्य ददाति ।

तथा तत्रैव कर्मणि उक्तैरेव पर्यायैर्वृषभं संपातवन्तं कृत्वा शत्रुगृहान् अभि सृजति ।

तथा तत्रैव कर्मणि उक्तैः पर्यायैर्गर्तेध्मावन्तरेणावलेखनीं स्थाणौ निबध्य द्वादशरात्रं संपातान् आनयति ।

सूत्रितं हि—" 'अजैष्म' इत्यधिपाशान् आदधाति । पदेपदे पाशान् वृश्चति । अधिपाशान् बाधकां छङ्कूंस्तान् संक्षुद्य संनह्य भ्राष्ट्रेऽभ्यस्यति । अशिशिषोः क्षीरौदनादीनि त्रीणि । गर्तेध्मावन्तरेणावलेखनीं स्थाणौ निबध्य द्वादशरात्रं संपातान् अभ्यतिनयति"[२] ( कौसू. ४९,१९-२३ ) इति ।

'अगन्म स्वः' इत्यवसानद्वयेन आदित्यम् ईक्षते सर्वेषु तन्त्रेषु । तदुक्तं कौशिकेन— " 'अगन्म स्वः' इत्यादित्यमीक्षते" ( कौसू. ६,१६ ) इति ।

अजै॑ष्मा॒द्यास॑नामा॒द्याभू॒माना॑गसो[३] व॒यम् ॥ १ ॥

अजै॑ष्म । अ॒द्य । अस॑नाम । अ॒द्य । अभू॑म । अना॑गसः । व॒यम् ॥ १ ॥

उषो॒ यस्मा॑द् दु॒ष्वप्न्या॒दभै॒ष्माप॒[४] तदु॑च्छतु ॥ २ ॥

---

१. दुःष्व° B,Bʰ,D,E,R,Sᵐ,Dc. २. अभ्यतिनिनयति Bl. ३. °नाम॒ भाभू° ऋ ८,४७,१८. ४. दुःष्व° Bʰ,R,Sᵐ,Dc; दु॒ष्व° ऋ.

उर्वः । यस्मात् । दुःऽस्वप्न्यात् । अभैष्म । अप । तत् । उच्छतु ॥ २ ॥

**द्विषते तत् परा वह शपते तत् परा वह ॥ ३ ॥**

द्विषते । तत् । परा । वह । शपते । तत् । परा । वह ॥ ३ ॥

**यं द्विष्मो यश्च[1] नो द्वेष्टि तस्मा एनद् गमयामः ॥ ४ ॥**

यम् । द्विष्मः । यः[2] । च । नः । द्वेष्टि । तस्मै । एनत्[3] । गमयामः ॥ ४ ॥

**उषा देवी वाचा संविदाना वाग् देव्युषसा[4] संविदाना ॥ ५ ॥**

उषाः । देवी । वाचा । सम्ऽविदाना । वाक् । देवी । उषसा । सम्ऽविदाना ॥ ५ ॥

**उषस्पतिर्वाचस्पतिना संविदानो वाचस्पतिरुषस्पतिना संविदानः ॥ ६ ॥**

उषः । पतिः । वाचः । पतिना । सम्ऽविदानः । वाचः । पतिः । उषः । पतिना । सम्ऽविदानः ॥

**तेऽमुष्मै[5] परा वहन्त्वरायान् दुर्णाम्नः सदान्वाः ॥ ७ ॥**

ते । अमुष्मै । परा । वहन्तु । अरायान् । दुःऽनाम्नः । सदान्वाः ॥ ७ ॥

**कुम्भीका दूषीकाः पीयकान् ॥ ८ ॥**

कुम्भीकाः । दूषीकाः । पीयकान् ॥ ८ ॥

**जाग्रद्दुष्वप्न्यं[6] स्वप्नेदुष्वप्न्यम्[6] ॥ ९ ॥**

जाग्रत्ऽदुस्वप्न्यम्[6] । स्वप्नेऽदुस्वप्न्यम्[6] ॥ ९ ॥

**अनागमिष्यतो वरानवित्तेः संकल्पानमुच्या द्रुहः पाशान् ॥ १० ॥**

अनागमिष्यतः । वरान् । अवित्तेः । सम्ऽकल्पान् । अमुच्याः[7] । द्रुहः । पाशान् ॥१०॥

**तदमुष्मा अग्ने देवाः परा वहन्तु वध्रिर्यथासद्[8] विथुरो[8] न साधुः ॥११॥**

तत् । अमुष्मै । अग्ने । देवाः । परा । वहन्तु । वध्रिः । यथा । असत् । विथुरः[9] । न । साधुः ॥

इति द्वितीयेऽनुवाके द्वितीयं पर्यायसूक्तम् ।

---

१. तु. RW. [ तु. सप्र. मा १६,६४ प्रभृ.]; वैतु. मूको. शंपा. प्रभृ. यच्चं. २. तु. मंपा.; वैतु. शंपा. यत्. ३. एनम् P². ४. °व्यूरु° C,E,K,K^m,S^m,V,WM. ५. तेंऽमु° B^h,V. ६. °दुःष्व° B,E,R,Dc.; पपा. °दुस्व° इत्यत्र विसर्गाभावः? ७. °चाः P. ८. तु. RW. अ ७,१००,१ प्रभृ. च; वैतु. शंपा. °सद् विथुरो. ९. तु. मंपा.; वैतु. शंपा. विथुरः

तेनैनं विध्याम्यभूत्यैनं विध्यामि निर्भूत्यैनं विध्यामि पराभूत्यैनं विध्यामि ग्राह्यैनं विध्यामि तमसैनं विध्यामि ॥ १ ॥

तेन । एनम् । विध्यामि । अभूत्या । एनम् । विध्यामि । निःऽभूत्या । एनम् । विध्यामि । पराऽभूत्या । एनम् । विध्यामि । ग्राह्या । एनम् । विध्यामि । तमसा । एनम् । विध्यामि ॥ १ ॥

देवानामेनं घोरैः क्रूरैः प्रैषैरभिप्रेष्यामि ॥ २ ॥

देवानाम् । एनम् । घोरैः । क्रूरैः । प्रऽएषैः । अभिऽप्रेष्यामि ॥ २ ॥

वैश्वानरस्यैनं दंष्ट्रयोरपि दधामि ॥ ३ ॥

वैश्वानरस्य । एनम् । दंष्ट्रयोः । अपि । दधामि ॥ ३ ॥

एवानेवाव सा गरत् ॥ ४ ॥

एव । अनेव । अव । सा । गरत् ॥ ४ ॥

योऽस्मान्[1] द्वेष्टि तमात्मा द्वेष्टु यं वयं द्विष्मः स आत्मानं द्वेष्टु ॥५॥

यः । अस्मान् । द्वेष्टि । तम् । आत्मा । द्वेष्टु । यम् । वयम् । द्विष्मः । सः । आत्मानम् । द्वेष्टु ॥

निर्द्विषन्तं दिवो निः पृथिव्या निरन्तरिक्षाद् भजाम ॥ ६ ॥

निः । द्विषन्तम् । दिवः । निः । पृथिव्याः । निः । अन्तरिक्षात् । भजाम ॥ ६ ॥

सुयामंश्चाक्षुष[2] ॥ ७ ॥

सुऽयामन्[3] । चाक्षुष ॥ ७ ॥

इदमहमामुष्यायणेऽमुष्याः पुत्रे दुष्वप्न्यं[4] मृजे ॥ ८ ॥

इदम् । अहम् । आमुष्यायणे । अमुष्याः । पुत्रे । दुःऽस्वप्न्यम् । मृजे ॥ ८ ॥

यददोअदो अभ्यगच्छं[5] यद् दोषा यत् पूर्वां रात्रिम् ॥ ९ ॥

यत् । अदःऽअदः । अभिऽअगच्छम्[5] । यत् । दोषा । यत् । पूर्वाम् । रात्रिम् ॥ ९ ॥

---

१. योऽ१° C,V. २. °षः Bh,Sm,P3,M,W. टि. च. ३. °यांमम् P. ४. दुःष्व° B,C,E·Km,R,Dc,Cs. ५. तु. RW. अ १६,७,११ च; वैतु. शंपा. च्छन् (पपा. च्छन्).

यज्जाग्रद् यत् सुप्तो यद् दिवा[1] यन्नक्तम् ॥ १० ॥

यत् । जाग्रत् । यत् । सुप्तः । यत् । दिवा । यत् । नक्तम् ॥ १० ॥

यदहरहरभिगच्छामि तस्मादेनमव दये[2] ॥ ११ ॥

यत् । अहःऽअहः । अभिऽगच्छामि । तस्मात् । एनम् । अव । दये ॥ ११ ॥

तं जहि तेन मन्दस्व तस्य पृष्टीरपि[3] शृणीहि ॥ १२ ॥

तम् । जहि । तेन । मन्दस्व । तस्य । पृष्टीः[3] । अपि । शृणीहि ॥ १२ ॥

स मा जीवीत् तं प्राणो जहातु ॥ १३ ॥

सः । मा । जीवीत् । तम् । प्राणः । जहातु ॥ १३ ॥

इति द्वितीयेऽनुवाके तृतीयं पर्यायसूक्तम् ।

ऋ· यमः, दे· दुःस्वप्ननाशनम्

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं स्वरस्माकं यज्ञो३ऽस्माकं पशवोस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥ १ ॥

जितम् । अस्माकम् । उत्ऽभिन्नम् । अस्माकम् । ऋतम् । अस्माकम् । तेजः । अस्माकम् । ब्रह्म । अस्माकम् । स्वः । अस्माकम् । यज्ञः । अस्माकम् । पशवः । अस्माकम् । प्रऽजाः । अस्माकम् । वीराः । अस्माकम् ॥ १ ॥

तस्मादमुं निर्भजामोमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥ २ ॥

तस्मात् । अमुम् । निः । भजामः । अमुम् । आमुष्यायणम् । अमुष्याः । पुत्रम् । असौ । यः ॥

स ग्राह्याः पाशान्मा मोचि ॥ ३ ॥

सः । ग्राह्याः । पाशात् । मा[4] । मोचि ॥ ३ ॥

तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥४॥ [१]

तस्य । इदम् । वर्चः । तेजः । प्राणम् । आयुः । नि । वेष्टयामि । इदम् । एनम् । अधराञ्चम् । पादयामि ॥ ४ ॥

---

१. दिवा B,Bh E. २. दयेत् R,Sm,Cs. ३. °ष्ठी° C,K,Km,V,Cs, P,J,Cp. ४. मा P.

जितम् ०। तस्मादमुं० । स निर्ऋत्याः पाशान्मा मोचि । तस्येदं० ॥५॥ [२]

०।०। सः । निःऽऋत्याः । पाशात् ।० ॥ ५ ॥

जितम् ०। तस्मादमुं० । सोभूत्याः पाशान्मा मोचि । तस्येदं० ॥६॥ [३]

०।०। सः । अभूत्याः । पाशात् । ० ॥ ६ ॥

जितम् ०। तस्मादमुं० । स निर्भूत्याः पाशान्मा मोचि । तस्येदं० ॥७॥ [४]

०।० । सः । निःऽभूत्याः । पाशात् ।० ॥ ७ ॥

जितम् ०। तस्मादमुं० । स पराभूत्याः पाशान्मा मोचि । तस्येदं० ॥८॥ [५]

०।० । सः । पराऽभूत्याः । पाशात् ।० ॥ ८ ॥

जितम् ०। तस्मादमुं० । स देवजामीनां पाशान्मा मोचि । तस्येदं० ॥९॥ [६]

०।० । सः । देवऽजामीनाम् । पाशात् ।० ॥ ९ ॥

जितम् ०। तस्मादमुं० । स बृहस्पतेः पाशान्मा मोचि । तस्येदं० ॥ १० ॥ [७]

०।० । सः । बृहस्पतेः । पाशात् ।० ॥ १० ॥

जितम् ०। तस्मादमुं० । स प्रजापतेः पाशान्मा मोचि । तस्येदं० ॥११॥ [८]

०।० । सः । प्रजाऽपतेः । पाशात् ।० ॥११॥

जितम् ०। तस्मादमुं० । 'स ऋषीणां[१] पाशान्मा मोचि । तस्येदं० ॥१२॥ [९]

०।० । सः । ऋषीणाम्[२] । पाशात् ।० ॥ १२ ॥

जितम् ०। तस्मादमुं० । स आर्षेयाणां पाशान्मा मोचि । तस्येदं० ॥१३॥[१०]

०।० । सः । आर्षेयाणाम् । पाशात् ।० ॥ १३ ॥

जितम् ०। तस्मादमुं ०। सोङ्गिरसां पाशान्मा मोचि । तस्येदं० ॥१४॥ [११]

०।० । सः । अङ्गिरसाम् । पाशात् ।० ॥ १४ ॥

---

१. स ऋषीणां A,B,B[h],C,D,E,K,K[m],R,S[m],W.M.; स ऋषीणां > सर्षीणां Dc.
२. ऋषीणाम् P,J.

जितम्० । तस्मादमुं ० । स आङ्गिरसानां पाशान्मा मोचि । तस्येदं० ।१५। [१२]

०।० । सः । आङ्गिरसानाम् । पाशात् ।० ॥ १५ ॥

जितम् ०। तस्मादमुं० । सोऽथर्वणां पाशान्मा मोचि । तस्येदं० ॥१६॥ [१३]

०।० । सः । अथर्वणाम् । पाशात् ।० ॥ १६ ॥

जितम् ०। तस्मादमुं ०। स आथर्वणानां पाशान्मा मोचि । तस्येदं० ।१७। [१४]

०।० । सः । आथर्वणानाम् । पाशात् ।० ॥ १७ ॥

जितम् ०। तस्मादमुं ०। स वनस्पतीनां पाशान्मा मोचि । तस्येदं० ।१८।[१५]

०।० । सः । वनस्पतीनाम् । पाशात् ।० ॥ १८ ॥

जितम् ०। तस्मादमुं० । स वानस्पत्यानां पाशान्मा मोचि । तस्येदं० ।१९। [१६]

०।०। सः । वानस्पत्यानाम् । पाशात् ।० ॥ १९ ॥

जितम् ।० तस्मादमुं० । स ऋतूनां पाशान्मा मोचि । तस्येदं० ॥२०॥ [१७]

०।० । सः । ऋतूनाम् । पाशात् । ० ॥ २० ॥

जितम् ० । तस्मादमुं० । स आर्तवानां पाशान्मा मोचि । तस्येदं० ॥२१॥ [१८]

०।०। सः । आर्तवानाम् । पाशात् ।० ॥ २१ ॥

जितम् ० । तस्मादमुं० । स मासानां पाशान्मा मोचि । तस्येदं०॥२२॥ [१९]

०।०। सः । मासानाम् । पाशात् ।० ॥ २२ ॥

जितम् ० । तस्मादमुं ० । सोऽर्धमासानां पाशान्मा मोचि । तस्येदं० ॥२३॥ [२०]

०।०। सः । अर्धऽमासानाम् । पाशात् ।० ॥ २३ ॥

जितम् ० । तस्मादमुं० । सोऽहोरात्रयोः पाशान्मा मोचि । तस्येदं० ॥२४॥ [२१]

०।०। सः । अहोरात्रयोः । पाशात् ।० ॥ २४ ॥

जितम् ० । तस्मादमुं० । सोऽह्नोः संयतोः पाशान्मा मोचि । तस्येदं० ॥२५॥ [२२]

०।०। सः । अह्नोः । सम्ऽयतोः । पाशात् ।० ॥ २५ ॥

जितम् ० । तस्मादमुं० । स द्यावापृथिव्योः पाशान्मा मोचि । तस्येदं० ॥२६॥ [२३]

०।०। सः । द्यावापृथिव्योः । पाशात् ।० ॥ २६ ॥

जितम् ० । तस्मादमुं० । स इन्द्राग्न्योः पाशान्मा मोचि । तस्येदं० ॥२७॥ [२४]

०।०। सः । इन्द्राग्न्योः । पाशात् ।० ॥ २७ ॥

जितम् ० । तस्मादमुं० । स मित्रावरुणयोः पाशान्मा मोचि । तस्येदं० ।२८। [२५]

०।०। सः । मित्रावरुणयोः । पाशात् ।० ॥ २८ ॥

जितम् ० । तस्मादमुं० । स राज्ञो वरुणस्य पाशान्मा मोचि । तस्येदं० ।२९। [२६]

०।०। सः । राज्ञः । वरुणस्य । पाशात् ।० ॥ २९ ॥

जितमस्माकमुद्भिन्नमस्माकमृतमस्माकं तेजोस्माकं ब्रह्मास्माकं स्वरस्माकं
यज्ञो३स्माकं पशवोस्माकं प्रजा अस्माकं वीरा अस्माकम् ॥ ३० ॥

जितम् । अस्माकम् । ऋतम् । अस्माकम् । तेजः । अस्माकम् । ब्रह्म । अस्माकम् । स्वः । अस्माकम् । यज्ञः । अस्माकम् । पशवः । अस्माकम् । प्रऽजाः । अस्माकम् । वीराः । अस्माकम् ॥ ३० ॥

तस्मादमुं निर्भजामोमुमामुष्यायणममुष्याः पुत्रमसौ यः ॥ ३१ ॥

तस्मात् । अमुम् । निः । भजामः । अमुम् । आमुष्यायणम् । अमुष्याः । पुत्रम् । असौ । यः ॥

स मृत्योः पड्वींशात्[1] पाशान्मा मोचि ॥ ३२ ॥

सः । मृत्योः । पड्वींशात् । पाशात् । मा । मोचि ॥ ३२ ॥

तस्येदं वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥ ३३ ॥ [२७]

तस्य । इदम् । वर्चः । तेजः । प्राणम् । आयुः । नि । वेष्टयामि । इदम् । एनम् । अधराञ्चम् । पादयामि ॥ ३३ ॥

इति द्वितीयेऽनुवाके चतुर्थं पर्यायसूक्तम् ।

ऋ० पत्र:, दे० १. प्रजापति:, २. मन्त्रोक्ता:, ३,४- सूर्य:

जितमस्माकमुद्भिन्नमस्माकमभ्यष्ठां[2] विश्वाः पृतना अरातीः ॥ १ ॥

---

१. पड्वीं C,WM ; पड्वीं॰ V,Dç. २. ॰भ्यस्था॰ मै १,५,३,

जितम् । अस्माकम् । उत्ऽभिन्नम् । अस्माकम् । अभि । अस्थाम् । विश्वाः । पृतनाः । अरातीः ॥

**तदग्निराह तदु सोम आह पूषा [1]मा धात्[1] सुकृतस्य लोके ॥ २ ॥**

तत् । अग्निः । आह । तत् । ऊं इति । सोमः । आह । पूषा । मा । धात् । सुऽकृतस्य । लोके ॥२॥

**अगन्म स्वः[2] स्वरगन्म सं सूर्यस्य ज्योतिषागन्म ॥ ३ ॥**

अगन्म । स्वः । स्वः । अगन्म । सम् । सूर्यस्य । ज्योतिषा । अगन्म ॥ ३ ॥

**वस्योभूयाय वसुमान् यज्ञो वसु वंसिषीय[3] वसुमान् भूयासं वसु मयि धेहि ॥४॥**

वस्यःऽभूयाय । वसुऽमान् । यज्ञः । वसु । वंसिषीय[3] । वसुऽमान् । भूयासम् । वसु । मयि । धेहि ॥

**इति द्वितीयेऽनुवाके पञ्चमं पर्यायसूक्तम् ।**

**इति द्वितीयोऽनुवाकः ।**

**इति षोडशं काण्डं समाप्तम् ।**



१. न आधात् मं १,५,३. २. स्वः३ः A,B,B^h,R,E,Dc. ३. तु. अ ९,१,१४; वैतु. शंपा. °शिषीय (पपा.° शिषीय).

अथ

# सप्तदशं काण्डम्

श्रीगणाधिपतये नमः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

सप्तदशे काण्डे एकोऽनुवाकः । तत्र त्रीणि सूक्तानि । अयं 'विषासहिम्' इत्यनुवाकः सलिलगणमध्ये[1] पठितः । अतः 'सलिलैः क्षीरौदनम् अश्नाति । मन्थान्तानि' ( कौसू १८,२५;२६ ) इति, 'सलिलैः सर्वकामः' ( कौसू २४,२६) इत्यादौ चास्य[2] विनियोगः ।

उपनयनकर्मणि आचार्यः ब्रह्मचारिणो नाभिदेशं संस्पृश्य अमुम् अनुवाकं जपेत् । तद् उक्तं कौशिकेन — "दक्षिणेन पाणिना [3]नाभिदेशं संस्तभ्य[3] जपति 'अस्मिन् वसु वसवो धारयन्तु' " ( अ १,९ ) इत्यादि " 'प्राणाय नमः' ( अ ११,६ ), 'विषासहिम्' ( अ १७,१ ) [4]इत्यनुमन्त्रयते' " ( कौसू ५५,१६;१७ ) इत्यन्तम्[5] ।

उपनयनकर्मण्येव ऋषिहस्ते 'कर्मणे वाम्' ( कौसू १,३६ ) इति हस्तप्रक्षालनानन्तरम् आचार्यो माणवकम् अनेनानुवाकेन अभिमन्त्रयते । "ऋषिहस्तश्च[6] । 'कर्मणे वां वेषाय[7] वां सुकृताय वाम्' इति प्रक्रम्य सूत्रितम्— 'आ रभस्व' ( अ ८,२ ), 'प्राणाय नमः' (अ ११,६), 'विषासहिम्' (अ १७,१) इत्यभिमन्त्रयते" । (कौसू ५८,४;५;११) इति ।

उपनयन एव आयुरभिवृद्ध्यर्थम् अनेनानुवाकेन माणवकस्त्रिकालम् आदित्यम् उपतिष्ठेत । सूत्रितं हि — " 'उदस्य केतवः' ( अ १३,२ ), मूर्धाहम्' ( अ १६,३ ), 'विषासहिम्' (अ १७,१) इत्युद्यन्तम् उपतिष्ठते । मध्यंदिने अस्तं यन्तम्" (कौसू ५८,२२,२३) इति ।

तथा आदित्यग्रहणरूपाद्भुते तच्छान्त्यर्थम् अनेनानुवाकेन आज्यं जुहुयात् । 'अथ यत्रैतद् आदित्यं तमो गृह्णाति तत्र जुहुयात्' इति प्रक्रम्य सूत्रितम् – " 'विषासहिं सहमानम्' इत्येतेन सूक्तेन जुहुयात् । ××× । सा तत्र प्रायश्चित्तिः" (कौसू ९९;१;३;५) इति । सूक्तेन । अर्थसूक्तेनेत्यर्थः । अतः कृत्स्नस्याप्यनुवाकस्य ग्रहणशान्तौ विनियोग इत्यवसीयते ।

तथा चन्द्रग्रहणरूपाद्भुते तच्छान्त्यर्थम् अनेनानुवाकेन उपस्थानं कुर्यात् । 'अथ [8]यत्रैतच्चन्द्रमसमुपप्लवति' ( कौसू १००,१ ) इति प्रक्रम्य सूत्रितम् 'रोहितैरुपतिष्ठते' ( कौसू १००,३ )[9] इति ।

---

१. °गणे S'. २. च नास्ति S'. ३. °देशेऽभिसंस्तभ्य Bl. ४. इत्यभिमन्त्रयते Bl.
५. इति S'. ६. हस्तस्य S'. ७. वेशाय° S'. ८. यदेत° शंपा. ९. तु. केशवः; वैतु. Bl. भिन्नक्रमः.

**अस्यानुवाकस्य आयुष्यगणे पाठाद् उपाकर्मणि अनेनानुवाकेन आज्यं जुहुयात् ।** 'अभिजिति शिष्यान् उपनीय' **इति प्रक्रम्य कौशिकेन सूत्रितम्** — 'विश्वकर्मभिरायुष्यैः स्वस्त्ययनैराज्यं जुहुयात्' ( कौसू १३९,१;७) **इति ।**

**अस्य सूक्तस्य सलिलगणे पाठात्** 'आदित्यां [1]श्रुततेजोधनायुष्कामस्य' ( शांक १७,३ ) **इति विहितायाम् आदित्याख्यायां महाशान्तौ अस्यानुवाकस्य विनियोगः । तद् उक्तं शान्तिकल्पे** — 'सलिलगण आदित्यायाम्' ( शांक १८,५ ) **इति ।**

**तथा कोटिहोमे अस्यानुवाकस्य विनियोगः । कोटिहोमं प्रक्रम्य उक्तम् अथर्वपरिशिष्टे** —

'जुहुयुः शान्तवृक्षस्य समिधो घृतसंयुताः ।
स्वयं चापि[2] यजेद्[3] ब्रह्मा सवितारं दिनेदिने ॥
पाकयज्ञविधानेन [4]मन्त्रांश्चात्र विषासहिम्[4] ।
[5]शान्तिकामो यवैः[5] कुर्यात् तिलैः पापापनुत्तये ॥' ( अप ३१,६,२-४ ) **इत्यादि ।**

**तथा भास्करप्रीत्यर्थं क्रियमाणे आदित्यमण्डलदाने अस्यानुवाकस्य मण्डलाकारापूपाभिमन्त्रणे विनियोगः । तद् उक्तम् अथर्वपरिशिष्टे** — 'अथ यः कामयेत सर्वेषां नृणाम् उत्तमः स्याम् इति स भास्करायापूपं दद्यात् । तस्य कल्पः ।'' **इत्यादि** ''सुवर्णशकलं चोपरिष्टान्निधायार्चयेद् [6]रक्तकुसुमैः 'विषासहिम्' इत्यभिमन्त्र्य ब्राह्मणाय निवेदयेत्'' ( अप १२,१,१-६ ) **इति ।**

**अत्र** 'त्वमिन्द्रस्त्वं महेन्द्रः' (अ १७,१८) **इत्यनेन मन्त्रेण दर्शेष्टौ माहेन्द्रं हविरनुमन्त्रयेत । तद् उक्तं वैताने** — ''सांनाय्यस्यैन्द्रं माहेन्द्रं वा 'इन्द्रेमम्' ( अ ६,५,२ ), 'त्वमिन्द्रस्त्वं महेन्द्रः' इति ।'' ( वैताश्रौ ३,३ ) **इति ।** ऋ. ब्रह्मा. दे. आदित्यः

**[7]विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं[8] स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व[9] इन्द्रमायुष्मान् भूयासम् ॥ १ ॥**

विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् ।
सहमानम् । सहःऽजितम् । स्वःऽजितम्[10] । गोऽजितम् । संधनऽजितम् ।
ईड्यम् । नाम । ह्वे । इन्द्रम् । आयुष्मान् । भूयासम् ॥ १ ॥

---

[1] श्रीतेजो° Bol. [2] वापि BN. [3] जपेद् S'. [4] मन्त्राश्च स्युर्विषासहिः शंपा. [5] कामाय वै S'. [6] दिक्षुकुसुमै° S'. [7] आद्याः ७ मन्त्रा न सन्ति E. [8] इह विरमति पै १८,३०,१, एवमग्रेऽपि. [9] ह्वय? पै., एवमग्रेऽपि. [10] जितम् P.

अत्र सूर्यादित्यादिपदलिङ्गानाम्[1] अश्रवणेऽपि कृत्स्नस्याप्यनुवाकस्य उक्तप्रकारेण कृत्स्नेषु[2] सौर्येषु कर्मसु प्रायेण विनियोगात् सूर्यपरतया मन्त्रा व्याख्येयाः । अथवा परमैश्वर्ययोगात् 'इन्द्र इरां दृणातीति वा इरां दारयतीति वा इरां धारयतीति वा' ( नि१०,८ ) इत्यादिनिरुक्तकारोक्तानाम् अवयवार्थानां वृष्टिद्वारा सर्वेषां भूतानाम् आत्मत्वात् सूर्ये संभवाच्च ईड्यं नाम हु इन्द्रम् इति इन्द्रशब्द आदित्यम् अभिधत्ते । अथवा 'विवस्वदिन्द्रयुताः' ( पृ १३७७ पं १५ द्र. ) इति, 'इन्द्रश्च विवस्वांश्चेत्येते'[3] ( तैआ १,१३,३ ) इति च द्वादशादित्यमध्ये इन्द्रस्यापि श्रुतत्वात् स्मृतत्वाच्च इन्द्रः साक्षाद् आदित्य एव । तथा तैत्तिरीयश्रुतिः 'ऐन्द्रीम् आवृतम् अन्वावर्त इत्याहासौ वा आदित्य इन्द्रः । तस्यैवावृतमनु पर्यावर्तते' ( तै १,७,६,३ ) इति । अतः उक्तरीत्या आदित्येन्द्रयोरेकत्वेन 'सपत्नानां विषासहिम्' ( ऋ १०,१६६,१ ), 'अषाढम् उग्रं सहमानम्' ( तैब्रा २,८,५,८ ) इत्यादिषु इन्द्रविशेषणतया प्रसिद्धानि विषासहिम् इत्यादीनि सूर्येऽपि अविरुद्धानि । ईड्यम् स्तुत्यम् आरोग्याद्यर्थिभिः सर्वैः प्राणिभिः सर्वदा स्तोतव्यं नाम सर्वेषां नामकम् । अथवा नामेति प्रसिद्धौ । ईड्यत्वेन प्रसिद्धम् इन्द्रम् आदित्यं हुवे इति संग्रहार्थः । ह्वयतेर्लेटि 'बहुलं छन्दसि' ( पा ६,१,३४ ) इति संप्रसारणम् । छान्दसो यण् । कीदृशम् इन्द्रम् इति तं विशिनष्टि विषासहिम् इत्यादिना । विषासहिम् विशेषेण सोढारम् । यथा शत्रवो न पुनरुद्भवन्ति तथा नाशयितारम् इत्यर्थः । षह अभिभवे । अस्माद् यङन्तात् 'सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ' ( पावा ३,२,१७१ ) इति किप्रत्ययः । तदेव उपपादयति सहमानम् इति । सहनशीलम् । 'इन्द्रो यातूनाम् अभवत् पराशरः' ( अ ८,४,२१ ) इत्यादिश्रुतिभ्य इन्द्रस्य सहनशीलत्वं प्रसिद्धम् । यस्य यादृक् स्वभावः स तादृशं करोतीति प्रसिद्धम् । अतः शत्रुहननस्वाभाव्याद् विषासहित्वं तस्य युक्तम् इत्यर्थः । सहेर्लटश्शानश्[4] । न केवलम् इदानीमेव तच्छीलत्वं प्रागपि तथेत्याह— सासहानम् पूर्वमपि अभिभवितारम् । अतः शत्रुहननस्वभावता सिद्धा । लिटः कानच् । एत्वाभ्यासलोपयोरभावश्छान्दसः । ननु सन्त्यन्ये सोढारः कोऽस्यातिशय इति तत्राह— सहीयांसम् इति । सोढॄणां मध्ये अतिशयेन सोढारम् । सोढृशब्दात् 'तुश्छन्दसि' ( पा ५,३,५९ ) इति ईयसुन् । 'तुरिष्ठेमेयःसु' ( पा ६,४,१५४ ) इति तृलोपः । उक्तविशेषणचतुष्टयसिद्धम् अर्थं पुनरनुवदति क्रियासंबन्धाय सहमानम्[5] इति । उक्तोऽस्यार्थः । सहेश्शानश्[4,6] । एवंमहानुभावम् इन्द्रशब्दाभिधेयम् आदित्यं हुवे । इत्थं शत्रुसहनद्वारेण इन्द्रं प्रशस्य अथ शत्रूणां सहआदिजेतृत्वद्वारेणापि प्रशंसति— सहोजितम् सहः परेषाम् अभिभावुकं तेजः । तस्य जेतारं शत्रुबलापहर्तारम् स्वर्जितम् । स्वर् इति सुखनाम । शत्रूणां यत् सुखं तस्य जेतारं नाशयितारं स्वर्गस्य वा जेतारम् । तथा गोजितम् गोशब्दो महिष्यजाविकरितुरगोष्ट्रादेरुपलक्षकः । शत्रूणां ये गवाद्याः

---

१. °दिपाद° S'. २. °त्स्नेषु नास्ति S'. ३. °श्चैते S'. ४. एवं स्वरो न सिध्यति । शानच् इति न्याय्यम्. ५. सासहानम् S'. ६. सहेः शानन् S'.

सन्ति तेषां जेतारम् । यद्वा गावः उदकानि तेषां जेतारम् । तथा संधनजितम् सम्यग्धनस्य सुवर्णरजतमणिमुक्तादिलक्षणस्य जेतारम् । यद्वा सह-आदिजयः स्वोपासकार्थो द्रष्टव्यः । स्वभक्तेभ्यः सहःस्वर्गगोधनानां लम्भकम् इत्यर्थः । 'अर्वाञ्चम् इन्द्रम् अमुतो हवामहे यो गोजिद् धनजिद् अश्वजिद् यः' ( अ २०,३,११ ) इत्यादिमन्त्रान्तरेषु इन्द्रस्य गवादिजेतृत्वं प्रसिद्धम् । संधनाजितम् इति । सांहितिको दीर्घः । उक्तगुणविशिष्टस्येन्द्रस्य आह्वाने प्रयोजनम् आह—आयुष्मान् भूयासम् इति । आह्वानोपलक्षितैस्त्रैकालिकोपस्थानादिलक्षणैः कर्मभिः परितुष्टस्य इन्द्रशब्दवाच्यस्य भगवतः सूर्यस्य प्रसादाद् अहम् आयुष्मान् शतसंवत्सर-लक्षणेन आयुष्येण उपेतो भवेयम् । अत एव आयुष्मत्प्रार्थनालिङ्गाद् अस्यानुवाकस्य आयुरभिवृद्ध्यर्थं माणवकस्य त्रिकालम् आदित्योपस्थाने विनियोग उक्तः ।

विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रं प्रियो देवानां भूयासम् ॥ २ ॥

विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् ।
सहमानम् । सहःऽजितम् । स्वःऽजितम् । गोऽजितम् । संधनऽजितम् ।
ईड्यम् । नाम । ह्वे । इन्द्रम् । प्रियः । देवानाम् । भूयासम् ॥ २ ॥

पूर्ववद् व्याख्येयम् । आयुष्मान् इत्यस्य स्थाने प्रियो देवानाम् इति विशेषः । इन्द्रस्य सर्वदेवाधिपतित्वात् तदात्मकस्य सूर्यस्यापि 'एकैव वा महान् आत्मा देवता । स सूर्य इत्याचक्षते सर्वभूतात्मा' इति प्रतिज्ञाय अनुक्रमणिकाकारेण (ऋअ १,२,१४-२०) स्वोक्तेर्थे 'सूर्य आत्मा जगतस्तस्थुषश्च' ( ऋ १,११५,१ ) इति उदाहृतत्वात्, तथा 'तद्विभूतयोऽन्या देवताः' इति प्रतिज्ञाय "तदप्येतद् ऋषिणोक्तम्—'इन्द्रं मित्रं वरुणम् अग्निम् आहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानम् आहुः' " ( ऋ १,१६४,४६ ) इति प्रदर्शितत्वाच्च एकस्यैव[1] भगवतः सूर्यस्य सर्वदेवतामयत्वात् तस्मिन् एकस्मिन् प्रीते इतरेषां देवानां प्रियो भवतीत्यभिप्रायः । इतरथा येषां प्रियभावः प्रार्थनीयस्त एव पृथक्पृथग् उपास्याः स्युः । न च वाच्यम् एकेनैव प्रीतेनादित्येनालम् किम् इतरदेवानां प्रियभावप्रार्थनयेति । फलानभिघाताय इतरेषां स्वाधीनीकरणस्यापि अपेक्षितत्वात् । यथा लोके प्रीतेपि राजनि तत्परतन्त्राणामपि अमात्यादीनां प्रीत्यर्थम् उपधावनदर्शनात् ।

---

१. °स्यव S',

विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रं प्रियः प्रजानां भूयासम् ॥ ३ ॥

विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् ।
सहमानम् । सहःऽजितम् । स्वःऽजितम् । गोऽजितम् । संधनऽजितम् ।
ईड्यम् । नाम । ह्वे । इन्द्रम् । प्रियः । प्रऽजानाम् । भूयासम् ॥ ३ ॥

प्रजानाम् प्रकर्षेण जायन्त इति प्रजाः पुत्राद्या भृत्यादयश्च । तासां प्रियो भूयासम् । ता यथा विधेयाः सत्यः मां पूजयन्ति तथाविधो भूयासम् इति आशास्ते ।

विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रं प्रियः पशूनां भूयासम् ॥ ४ ॥

विऽससहिम् । सहमानम् । ससहानम् । सहीयांसम् ।
सहमानम् । सहःऽजितम् । स्वःऽजितम् । गोऽजितम् । संधनऽजितम् ।
ईड्यम् । नाम । ह्वे । इन्द्रम् । प्रियः । पशूनाम्[1] । भूयासम् ॥ ४ ॥

पशवो गोमहिष्यजाविकाद्याः करितुरगोष्ट्रादयश्च । 'चतुष्पादाः पशवः' (ऐब्रा ५,१९) इति श्रुतेः । सत्सु तेषु तेषां प्रियभावप्रार्थनौचित्यात् तल्लाभं तदानुकूल्यं चाशास्ते ।

इत्थम् आयुष्याभावे कृत्स्नस्यापि लाभस्य वैयर्थ्यात् प्रथमम् आयुष्यम् आशास्य तत्सिद्धये देवतानुकूल्यमपि आशास्य पुत्राद्यभावे स्वात्मन एव अकात्स्न्यात् प्रजासमृद्धिम् आशास्य तदनन्तरं पशुलाभं प्रार्थ्य[2] अथ तैः सर्वैः संपन्नः स्वसमानेषु श्रेष्ठभावम् आशास्ते ।

विषासहिं सहमानं सासहानं सहीयांसम् ।
सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम् ।
ईड्यं नाम ह्व इन्द्रं प्रियः समानानां भूयासम् ॥ ५ ॥

---

१. पशूनाम् P. २. प्रार्थयित्वा S'.

वि॒ऽस॒स॒हिम् । सह॑मानम् । स॒स॒ह्ा॒नम् । सही॑यांसम् । सह॑मानम् । स॒ह॒ःऽजित॑म् । स्व॒ःऽजित॑म् । गो॒ऽजित॑म् । सं॒ध॒न॒ऽजित॑म् । ईड्य॑म् । नाम॑ । ह्वे॒ । इन्द्र॑म् । प्रि॒यः । स॒मा॒नाना॑म् । भू॒या॒स॒म् ॥

समानानाम् कुलजातिवयोधनविद्याकर्मादिभिः स्वसदृशाः समानाः । तेषां प्रियो भूयासम् । तेषामपि श्रेष्ठत्वेन उपजीव्यो[1] भूयासम् इत्यर्थः । सत्सु स्वसदृशेषु अन्येषु स्वस्य श्रैष्ठ्याभावाद् 'अहं भूयासम् उत्तमः समानानाम्' (तै ३,५,५,१), 'समानानाम् उत्तमश्लोको अस्तु' (तै ५,७,४,३) इत्यादिश्रुतिषु तेषामपि श्रैष्ठ्यप्रार्थनादर्शनात् । इत्थम् आयुष्यादिसर्वकामप्रार्थनालिङ्गाद् अस्यानुवाकस्य च सलिलगणे पाठात् 'सलिलैः सर्वकामः' (कौसू २४,४६) इत्यादिको गणप्रयुक्तो विनियोग उक्त इति द्रष्टव्यम् । अत एव प्रियः प्रजानां भूयासम् प्रियः समानानां भूयासम् इति लिङ्गाद् भास्करप्रीतिकरापूपदाने 'अथ यः कामयेत सर्वेषां नृणाम् उत्तमः स्याम्' इति प्रक्रम्य ''विषासहिम्' इति अभिमन्त्र्य ब्राह्मणाय निवेदयेत्'' (अप १२,१,१-६) इति अस्यानुवाकस्य विनियोग उक्त इति ज्ञातव्यम् ।

उदि॒ह्युदि॑हि सूर्य॒ वर्च॑सा मा॒भ्युदि॑हि ।
द्वि॒षंश्च॒[2] मह्यं॒ रध्य॑तु[3] [4]मा चा॒हं[4] द्वि॑ष॒ते रधं॒[5] तवेद् विष्णो बहु॒धा वी॒र्या॑णि ।
त्वं नः॑ पृणीहि प॒शुभि॑र्वि॒श्वरू॑पैः सु॒धाया॑ं[6] मा[7] धेहि पर॒मे व्यो॑मन् ॥६॥

उत् । इ॒हि॒ । उत् । इ॒हि॒ । सू॒र्य॒ । वर्च॑सा । मा॒ । अ॒भि॒ऽउदि॑हि । द्वि॒षन् । च॒ । मह्य॑म् । रध्य॑तु । मा । च॒ । अ॒हम् । द्वि॒ष॒ते । र॒ध॒म् । तव॑ । इत् । वि॒ष्णो॒ इति॑ । ब॒हु॒ऽधा । वी॒र्या॑णि । त्वम् । न॒ः । पृ॒णी॒हि॒ । प॒शु॒ऽभिः॑[8] । वि॒श्वऽरू॑पैः । सु॒ऽधाया॑म् । मा॒ । धे॒हि॒ । प॒र॒मे । वि॒ऽओ॑मन् ॥ ६ ॥

सरति गच्छति संततम् इति वा सुवति प्रेरयति स्वोदयेन सर्वं प्राणिजातं स्वस्वव्यापारे इति वा सूर्यः । सर्तेः सुवतेर्वा क्यपि 'राजसूयसूर्य' (पा ३,१,११४) इत्यादिना निपातितः । तस्य संबोधनम् । हे सूर्य त्वम् उदिहि उदिहि । वीप्सया उदयविषया त्वरा द्योत्यते । स्वयमेव उदेष्यतः सूर्यस्य उदयविषयप्रार्थनं मन्देहाद्यसुरकृतोदयप्रतिबन्धम् अन्तरेण उदयाशंसनार्थम् । तथा च तैत्तिरीयश्रुतिः सूर्यस्य राक्षसकृतम् उदयप्रतिबन्धं तत्परिहारं च दर्शयति—'तस्माद् उत्तिष्ठन्तं ह वा तानि रक्षांस्यादित्यं योधयन्ति यावद् अस्तम् अन्वगात् । तानि ह वा एतानि रक्षांसि गायत्रियाभिमन्त्रितेनाम्भसा शाम्यन्ति । तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्र्याभिमन्त्रिता अप ऊर्ध्वं विक्षिपन्ति । ता

---

१. उपजीवको S'. २. द्विषन्तं ऋ १,५०,१३. ३. रन्धयन् ऋ.; रध्यन् पै १८,३१,१. ४. मो अहं ऋ. ५. तवेद् इत्यतः पूर्वं विरामः RW. पै एवमग्रेपि. ६. स्वधायां S, पै. एवमग्रेऽपि. ७. नो पै. एवमग्रेऽपि. ८. पशूऽभिः P.

एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति' (तैआ २,२,१) इति । उदिह्येव तव राक्षसकृत उदयप्रतिबन्धो मा भूद् इत्यभिप्रायः । उदयं विशिनष्टि— वर्चसा सर्वस्य आवर्जकेन तेजसा सह मा मां प्रति अभ्युदिहि । अनेन नीहारादितिरोधानाभावः प्रार्थितः । अथ वा वर्चसा हेतुना मम वर्चोलाभाय अभ्युदिहि । सूर्ये उदिते सर्वस्यापि पदार्थस्य वर्चःप्राप्तिः सुप्रसिद्धैव । यद्यपि सर्वं भूतजातं प्रति उदेति तथापि उपासकस्य स्वस्य अभिमतप्राप्तिलक्षणप्रयोजनसद्भावात् माभ्युदिहि इति प्रार्थयते । श्रुतिश्च भवति— 'तस्मात् सर्व एव मन्यते मां प्रत्युदगाद् इति' (तै ६,५,४,२) इति । उदयप्रार्थनायाः प्रयोजनम् आह द्विषंश्चेत्यादिना । हे सूर्य अप्रतिबन्धेन उदितस्य तव अनुग्रहात् द्विषन् मयि द्वेषं कुर्वन् शत्रुः । 'द्विषोऽमित्रे' (पा ३,२,१३१) इति शतृप्रत्ययः । मह्यं रध्यतु मम वशं प्राप्नोतु । मम पादाक्रान्तो भवतु । रध हिंसासंराद्ध्योः । दिवादित्वात् श्यन् । यथा मद्द्वेषी मदधीनो भविष्यति एवम् अहमपि तदधीनः कदाचिदपि स्याम् इत्याशङ्क्य व्यतिरेकाभावम् आशास्ते—मा चाहं द्विषते रधम् । अहं त्वदुपासकस्त्वत्प्रसादाद् द्विषते मयि द्वेषं कुर्वते शत्रवे मा रधम् वशो मा भूवम् । अयम् अर्थो मन्त्रान्तरेपि स्पष्टम् उक्तः—

'उदगाद् अयम् आदित्यो विश्वेन सहसा सह ।
द्विषन्तं मम रन्धयन् मो अहं द्विषतो रधम् ।।' (तैब्रा ३,७,६,२३) इति ।

द्विषंश्च मा चाहम् इति चकारौ परस्परसमुच्चयार्थौ । सत्यपि भोग्ये शत्रुसद्भावे भोगासंभवात् तत्स्वाधीनीकरणलक्षणं फलम् आशास्य इदानीम् ऐहिकामुष्मिकभोगसाधनलक्षणं फलम् आशास्ते तवेद् विष्णो बहुधा इत्यादिना । आदौ भोगप्रदानसामर्थ्यसद्भावं दर्शयति— तवेद् इति । हे विष्णो व्याप्नोति स्वरश्मिभिः सर्वं ब्रह्माण्डान्तरालम् इति विष्णुरादित्यः । अथवा द्वादशादित्यमध्ये 'दिवाकरो मित्रो विष्णुश्च' इति श्रुतौ स्मृतौ च विष्णोरपि परिगणनाद् विष्णुरादित्यः । तादृशविष्णुशब्दाभिधेयादित्य तवेत् तवैव वीर्याणि बहुधा बहुप्रकाराणि नान्यस्य देवतान्तरस्य । यतस्त्वं विष्णुः अतस्तव वीर्याणि अनन्तानीत्यभिप्रायः । विष्णुत्वोपाधौ तु—

'विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायद् उत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ।।' (ऋ १,१५४,१)

इत्यादिमन्त्रश्रुतिषु पुराणेतिहासागमादिषु च प्रसिद्धानि । साक्षात् सूर्यस्य भगवतो वीर्याण्यपि जगदन्धकारनिर्हरणसकलपदार्थप्रकाशननिखिललौकिकवैदिककर्मनिर्वर्तनसमयवृष्टिप्रदानारोग्यकरणमोक्षप्रदानादीनि लोकप्रसिद्धान्येव । यतस्तव सर्वप्राण्युपकारकाणि बहुविधानि वीर्याणि सन्ति अतः त्वं नः अस्मान् विश्वरूपैः गोमहिष्यजाविकरितुरगोष्ट्रादिलक्षणैः पशुभिः पृणीहि पूरय । क्र्यादित्वात् श्ना । 'प्वादीनां ह्रस्वः' (पा ७,३,८०) इति ह्रस्वत्वम् । तथा एतद्देहा-

वसाने परमे निरतिशये व्योमन् व्योमनि विशेषेण अवतीति व्योम तस्मिन् व्रध्नस्य विष्टपे स्थाने ।

'यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हितम् ।
तस्मिन् मां धेहि पवमानामृते लोके अक्षिते ॥' ( ऋ ९,११३,७ ) इति

मन्त्रोक्तलक्षण इत्यर्थः । तथाविधे लोके स्वधायाम्[1] । अन्ननामैतत् । यत्सेवया क्षुत्तृष्णाशोकमोहजरामरणादयो न भवन्ति [2]तथाविधे अन्ने अमृते[2] मा मां धेहि स्थापय । तद्भोगार्हं कुर्वित्यर्थः । उक्तलक्षणे स्थाने स्वधासद्भावो मन्त्रान्तरे । 'स्वधा च यत्र तृप्तिश्च तत्र माम् अमृतं कृधि' ( ऋ ९,११३,१० ) इति । धेहीति । दधातेर्लोटि 'घ्वसोरेद्धावभ्यासलोपश्च' ( पा ६,४,११९ ) इति एत्त्वाभ्यासलोपौ ।

उदि॒ह्युदि॑हि सूर्य॒ वर्च॑सा मा॒भ्युदि॑हि ।
यांश्च॒ पश्या॑मि॒ यांश्च॒ न तेषु॑ मा[3] सुम॒तिं कृ॑धि॒ तवेद् वि॑ष्णो बहु॒धा वी॒र्या॑णि ।
त्वं नः॑ पृणीहि प॒शुभि॑र्वि॒श्वरू॑पैः सु॒धाया॑ं मा धेहि पर॒मे व्यो॑मन् ॥ ७ ॥

उत् । इ॒हि॒[4] । उत् । इ॒हि॒ । सू॒र्य॒ । वर्च॑सा । मा॒ । अ॒भि॒ऽउदि॑हि । यान् । च॒ । पश्या॑मि । यान् । च॒ । न । तेषु॑ । मा॒ । सु॒ऽम॒तिम् । कृ॒धि॒ । तव॑ । इत् । वि॒ष्णो॒ इति॑ । ब॒हु॒ऽधा । वी॒र्या॑णि । त्वम् । नः॒ । पृ॒णी॒हि॒ । प॒शुऽभिः॑ । वि॒श्वऽरू॑पैः । सु॒ऽधाया॑म् । मा॒ । धे॒हि॒ । प॒र॒मे । वि॒ऽओ॑मन् ॥७॥

उदिह्युदिहि इति मन्त्रभागः पूर्ववद् व्याख्येयः[5] । यान् प्राणिनः पश्यामि चक्षुषा विषयीकरोमि देशादिभिरव्यवहितान्, यांश्च प्राणिनः देशादिव्यवधानवतो न पश्यामि तेषु द्विविधेषु प्राणिषु विषयभूतेषु मा मां सुमतिम् शोभनबुद्धियुक्तं कृधि कुरु । तेषु द्रोहरहितचित्तं कुर्वित्यर्थः । 'बहुलं छन्दसि' ( पा २,४,७३ ) इति विकरणस्य लुक् । 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' ( पा ६,४,१०२ ) इति हेर्धिरादेशः । तादृशी बुद्धिः स्वात्मशत्रुमित्रेषु समदर्शिन एव जायते । तथाविधा दृष्टिः परमेश्वरप्रीतये भवति ।

'समत्वम् आराधनम् अच्युतस्य ।
सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किंचिद् उच्चैः ।' ( विपु ३,७,२० )

इति स्मरणात् । किं च अद्रोह एव पुरुषार्थसाधनेषु प्रथमतो निर्दिष्टः 'अहिंसा

---

१. वैतु. मंपा.　　२. तथाविधेन्नमृते S′.　　३. मे पै १८,३१,२.　　४. ई॒हि॒ P,P².　　५. व्याख्येयम् S′.

सत्यम् अस्तेयम्' ( भापु ११,१७,२० ) इति । ईदृशीं बुद्धिं मन्त्रान्तरे महर्षिर्विष्णुं प्रार्थयामास—'त्वं विष्णो सुमतिं विश्वजन्याम् अप्रयुताम् एवयावो मतिं दाः' ( ऋ ७,१००,२ ) इति । हे विष्णो तवेद् इत्यादि गतम् । 'यतस्तव[1] वीर्याणि बहुधा अतो मां सुमतिं कुरु ।

मा त्वा दभन्त्सलिले अप्स्वं१न्तर्ये पाशिन उपतिष्ठन्त्यत्र ।
हित्वाशस्तिं दिवमारुक्ष[2] एतां स नो मृड सुमतौ ते स्याम तवेद् विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥८॥

मा । त्वा । दभन् । सलिले । अप्ऽसु । अन्तः । ये । पाशिनः । उपऽतिष्ठन्ति । अत्र । हित्वा । अशस्तिम् । दिवम् । आ । अरुक्षः । एताम् । सः । नः । मृड । सुऽमतौ । ते । स्याम । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ ८ ॥

सलिले सलिलम् अन्तरिक्षम् तस्मिन् अप्स्वन्तः अन्तरिक्षस्थानाम् अपां मध्ये हे सूर्य त्वा त्वां मा दभन् दम्भनं हिंसां मा कार्षुः प्रच्छन्नचारिणो राक्षसाः । दम्भु दम्भे । माङि लुङि 'दम्भेश्चेति वक्तव्यम्'[3](?) इति च्लेः अङ् । अप्सु सूर्यस्य [4]हिंसकानां कः[4] प्रसङ्ग इति तत्राह—ये पाशिनः इति । अत्र अप्सु ये पाशिनः पाशहस्ता गतिनिरोधसाधनवन्तः उपतिष्ठन्ति मायाविनो राक्षसाः । 'उत्तिष्ठन्तं ह वा तानि रक्षांस्यादित्यं योधयन्ति यावद् अस्तम् अन्वगात्' ( तैआ २,२,१ ) इत्यादिना गतिप्रतिबन्धकसद्भावः प्रदर्शितः[5] प्राक् । इत्थं गतिप्रत्यूहाभावम् आशास्य सुखेन द्यामारूढं दृष्ट्वा आह— हित्वेति । हे सूर्य एताम् अशस्तिम् । अशस्तिर्निन्दा[6] । पराख्यब्रह्मणः सगुणमूर्तिभूतस्य भगवतः सूर्यस्य राक्षसा गतिं प्रत्यबध्नन् किल इत्येवंरूपां निन्दां हित्वा तैरप्रतिबद्धो भूत्वा एतां दिवम् द्याम् अन्तरिक्षम् आरुक्षः आरूढवान् असि । 'शल इगुपधादनिटः क्सः' ( पा ३,१,४५ ) इति क्सप्रत्ययः । स तादृशस्त्यक्ताशस्तिस्त्वं नः अस्मान् मृड सुखय । ते सुमतौ शोभनायाम् अनुग्रहबुद्धौ स्याम भवेम । देवताया अनुग्रहबुद्धौ सत्यां यद् अभीष्टं प्रार्थयते तत् सुलभं भवतीत्यभिप्रायेण आदौ सैव प्रार्थ्यते । तवेद् इत्यादि पूर्ववत् ।

---

१. यत अद S'. २. °रुह पै १८,३१,२. ३. छान्दसः इति न्याय्यम्.
४. हिंसमहानां क S'. ५. प्रतिदर्शितः S'. ६. °निंदि S'.

त्वं न इन्द्र महते सौभगायादब्धेभिः[1] परि पाह्यक्तुभिस्तवेद् विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥ ९ ॥

त्वम् । नः । इन्द्र । महते । सौभगाय । अदब्धेभिः । परि । पाहि । अक्तुऽभिः । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि ।
त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥

हे इन्द्र परमेश्वर सूर्य त्वं नः अस्माकं महते निरतिशयाय सौभगाय शोभनो[2] भगो यस्य स सुभगः सुभगस्य भावः सौभगं सौभगाय[3] सौभाग्याय ।

'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥' ( विपु ६,५,७० )

इत्युक्तलक्षणभूतस्य ऐश्वर्यादेः सिद्ध्यर्थम् इत्यर्थः । तदर्थम् । अदब्धेभिः अदब्धैः अहिंस्यैर्व्याधिसर्पाग्नितस्करादिजनितहिंसारहितैः अक्तुभिः । रात्रिनामैतत् । रात्र्युपलक्षितैर्बहुभिर्दिवसैर्निमित्तभूतैः परि पाहि सर्वतो रक्ष । अथवा प्रायेण रात्रावेव व्याधितस्करभूतरक्षःपिशाचादिपीडासंभवाद्[4] विशेषेण रात्रिषु रक्षा प्रार्थ्यते । तवेद् इत्यादि गतम् ।

त्वं न इन्द्रोतिभिः शिवाभिः शंतमो भव ।
आरोहंस्त्रिदिवं दिवो गृणानः सोमपीतये प्रियधामा स्वस्तये तवेद् विष्णो बहुधा वीर्याणि ।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥१०॥

त्वम् । नः । इन्द्र । ऊतिऽभिः । शिवाभिः । शम्ऽतमः । भव[5] । आऽरोहन् । त्रिऽदिवम् । दिवः । गृणानः । सोमऽपीतये । प्रियऽधामा । स्वस्तये । तव । इत् । विष्णो इति । बहुऽधा । वीर्याणि । त्वम् । नः । पृणीहि । पशुऽभिः । विश्वऽरूपैः । सुऽधायाम् । मा । धेहि । परमे । विऽओमन् ॥ १० ॥

हे इन्द्र त्वं नः अस्माकं शंतमो भव । शम् इति सुखनाम । सुखतमो भव । सुखयितृतमो भवेत्यर्थः । न हि असुखस्य सुखयितृत्वम् अस्ति । कैः साधनैरित्युच्यते — शिवाभिः मङ्गलाभिः ऊतिभिः रक्षाभिः । याभी रक्षाभी रक्षितः

---

१. °दब्धैः पै १८,३१,४. २. शोभनं S′. ३. साभूत S′. ४. °भूरक्षः° S′. ५. भवं P².

पुनःपुनर्जननमरणादिक्लेशभाङ् न भवति तादृश्यो रक्षाः शिवा इत्युच्यन्ते। किं कुर्वन्। दिवः अन्तरिक्षस्य संबन्धिनं त्रिदिवम्। तिसृणां दिवां समाहारस्त्रिदिवः। 'तिस्रो द्यावो निहिता अन्तरस्मिन्' (ऋ ७,८७,५), 'तिस्रो भूमीर्धारयन् त्रीँ रुत द्यून्' (ऋ २,२७,८), 'त्रयो वा इमे त्रिवृतो लोकाः' (ऐब्रा २,१७) इत्यादिश्रुतिभ्यो द्युलोकस्य त्रैविध्यम्। अथवा भूलोकापेक्षया तृतीया द्यौर्द्युलोकस्त्रिदिवः। तम् आरोहन्। तथा सोमपीतये सोमपानाय। सोमपानं तु सोमयागम् अन्तरेण न संभवति तं देवेभ्यो हुत्वा शेषभक्षणविधानात् अग्नौ हुतस्य सोमस्य पानाय वा अतो यागादिकर्मसिद्धये गृणानः अस्माभिः स्तूयमानः। कर्मणि कर्तृप्रत्ययः। आरोहणं किमर्थम् इति उच्यते। स्वस्तये जगतः क्षेमाय। उदयति सवितरि अन्धकारापगमेन सकलव्यवहारसिद्धेः सर्वप्राणिनां क्षेमं[1] भवतीति सुप्रसिद्धम्। कीदृशस्त्वम्। प्रियधामा प्रियस्थानः। द्युस्थाने प्रीतिमान् इत्यर्थः। न हि सूर्यस्य इतरदेववद् यदृच्छया स्थानान्तरसंक्रमणम् अस्ति। अथवा धाम तेजः। प्रियतेजा इत्यर्थः। न हि स्वतेजः स्वस्याप्रियम् अतः सह्यमेव। अथवा यस्य धाम लोकस्य प्रियं स प्रियधामा। एवं कुर्वन् स्वस्तये भवेति शेषम् अध्याहृत्य वा योज्यम्। तवेद् इत्यादि पूर्ववत्।

इति प्रथमं सूक्तम्।

त्वमिन्द्रासि विश्वजित्[2] सर्ववित् पुरुहूतस्त्वमिन्द्र।
त्वमिन्द्रेमं सुहवं स्तोममेरयस्व [3]स नो मृड सुमतौ ते स्याम[3] तवेद् विष्णो बहुधा वीर्याणि।
त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन्॥ ११॥

त्वम्। इन्द्र। असि। विश्वऽजित्। सर्वऽवित्। पुरुऽहूतः। त्वम्। इन्द्र। त्वम्। इन्द्र। इमम्। सुऽहवम्। स्तोमम्। आ। ईरयस्व। सः। नः। मृड। सुऽमतौ। ते। स्याम। तव। इत्। विष्णो इति। बहुऽधा। वीर्याणि। त्वम्। नः। पृणीहि। पशुऽभिः। विश्वऽरूपैः। सुऽधायाम्। मा। धेहि। परमे। विऽओमन्॥ ११॥

हे इन्द्र परमैश्वर्यविशिष्ट सूर्य। इन्द्र एव वा संबोध्यते सूर्यमूर्त्यन्तरभूतः। पुरुहूत इत्यसाधारणविशेषणात्। त्वं विश्वजित् विश्वस्य जेता वशीकर्ता अधिपतिरसीत्यर्थः। तथा सर्ववित् सर्वप्रेरकत्वात् सर्वात्मकत्वाच्च। तथात्वं च 'असावादित्यो ब्रह्म' (तैआ २,२,२), 'स त्रेधात्मानं व्यकुरुत। अग्निं तृतीयं वायुं तृतीयम् आदित्यं तृतीयम्' (बृउ १,२,३) इत्यादिश्रुतेः परमेश्वराद् अभिन्नत्वात् सिद्धम्। तथा हे इन्द्र त्वं पुरुहूतोऽसि पुरुभि-

---

१. क्षेम S'.   २. विश्ववित् पै १८,३१,६.   ३. शिवाभिस्तनूभिरभि नस्सजस्व पै.

इदं यमवाक्यम्। हे यमि अत्र अस्मिन् विषये ते तव अहं नाथम् अभिमतार्थसंपादको भ्राता नास्मि न भवामि । किं च ते तव तन्वा शरीरेण सह नूनम्[1] निश्चयं न सं पपृच्याम् संपर्कं न करोमि । तस्मात् मत् मत्तः अन्येन पुरुषान्तरेण सह प्रमुदः प्रमोदान् संभोगजनितान् कल्पयस्व साधय । ते तव भ्राता अयं जनः हे सुभगे संभोगार्थिनि एतत् जायापत्यलक्षणं कर्म न वष्टि न कामयते ।

[2]न वा उ ते [3]तनूं तन्वा३[3] सं पपृच्यां पापमाहुर्यः[4] स्वसारं निगच्छात् ।
[5]असंयदेतन्मनसो हृदो मे भ्राता स्वसुः शयने यच्छयीय[6] ॥ १४ ॥

न । वै । ऊं इति । ते । तनूम् । तन्वा । सम् । पपृच्याम् । पापम् । आहुः । यः । स्वसारम् । निऽगच्छात् । असम्ऽयत्[7] । एतत् । मनसः । हृदः । मे । भ्राता । स्वसुः । शयने । यत् । शयीय[8] ॥ १४ ॥

इदमपि यमवाक्यम्। पूर्वमन्त्रोक्तमेव निषेधम् अत्यन्तपापतया पुनर्द्रढयति। हे यमि ते तव तन्वा सह तनूम् मदीयां न वै सं पपृच्याम् नैव संपर्चयामि । संपर्काभावे हेतुम् आह— स्वसारं भगिनीं निगच्छात् भ्राता संभोगं कुर्यात् इति यत्[1] एतत् पापं निषिद्धम् आहुः ब्रुवते धर्मरहस्यविदः । न केवलं पारलौकिकं पापमेव अपि तु दृष्टबाधाप्यस्तीत्याह— एतत् वक्ष्यमाणं कर्म मे मम मनसः हृदः हृदयाच्च अथवा मनसा हृदयेन च सह असुम्[1] प्राणम्। अपहरेत् इति शेषः । एतच्छब्दार्थम् आह— भ्राता सन् स्वसुः भगिन्याः शयने । शय्यते अत्रेति शयनम् । एकस्यां शय्यायां शयीय शयनं कुर्याम् इति यद् एतद् इति पूर्वत्रान्वयः ।

बतो बतासि यम नैव ते मनो हृदयं चाविदाम ।
अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते[9] लिबुजेव वृक्षम् ॥ १५ ॥

बतः । बत । असि । यम । न । एव । ते । मनः । हृदयम् । च । अविदाम । अन्या । किल । त्वाम् । कक्ष्याऽइव । युक्तम् । परि । स्वजाते[10] । लिबुजाऽइव । वृक्षम् ॥ १५ ॥

इदं यमीवाक्यम्[11] । हे यम त्वं बतोसि बलाद् अतीतो भवसि दुर्बलो जातोसि[12] बत । खेदानुकम्पयोर्बतशब्दः अत्र खेदे वर्तते । यमस्य पराधीनतया

---

१. वैतु. मंपा. २. पृ १६४१ टि १० द्र. ३. तन्वां तन्वं१ ऋ १०,१०,१२.
४. यंत् S', सा. ५. असंयदे° C,K^m,R,WM. ६. यच्छयीय मूको. (तु. शंपा. WM.).
७. असम्ऽयत् P,P² WM; असम्ऽयत् > असम् यत् ( ? असम् । यत् ) Cp; असुं यत् सा.
८. तु. मंपा.; वैतु. शंपा. शयीय्. ९. °जाते ऋ १०,१०,१३. १०. °जाते Bp².
११. यमवाक्यम् S'. १२. सि नास्ति S'.

दौर्बल्यं यस्याः खेदाय संपद्यते । स्वाभिमतकार्यस्य तत्रासंभवात् खेदश्च । नैव ते मनः तव मनो मयि नास्त्येव । मयि उदासीनो भवसीत्यर्थः ! किं च ते तव हृदयम् अविदाम ज्ञातवन्तः स्मः[1] । बहुवचनं पूजार्थम् । हृदयस्य स्वाधीनताया अभावात् खेदेनेदम् उच्यते । हृदयपरिज्ञानप्रकारं प्रकटयति—अन्या किलेति । अन्या मत्तः अपरा कामिनी त्वां परि ष्वजातै परिष्वङ्गं कृतवती तस्मात् माम् अवमन्यसे । अतएव च पराधीनत्वाद् दुर्बलश्च भवसीत्यर्थः । अत्र दृष्टान्तद्वयम्— कक्ष्येवेति[2] एकः । अश्वस्य कक्षप्रदेशस्था[3] रज्जुः कक्ष्या । सा यथा युक्तम् स्वसंबद्धम् अश्वं परिष्वजति श्लिष्टा भवति तद्वत् । दुर्दान्तोऽप्यश्वः कक्ष्यया संबद्धो यथा स्वाच्छन्द्येन वर्तितुं न शक्नोति तद्वदिति । लिबुजेव वृक्षम् इति द्वितीयो दृष्टान्तः । 'लिबुजा व्रततिर्भवति' ( नि ६,२८ ) इति निरुक्तम् । [4]सा यथा गाढं[4] वृक्षम् आदित आरभ्य अग्रम् आलिङ्गति तद्वत् त्वाम् अन्या सर्वात्मना स्वाधीनं चकार । एकदेशसंश्लेषस्य सर्वाङ्गसंश्लेषस्य च क्रमेण दृष्टान्तद्वयम् । अत्र 'व्रतो बलाद् अतीतो भवति दुर्बलो बतासि' ( या ६,२८ ) इत्यादि निरुक्तम् अनुसन्धेयम्[5] ।

'अ॒न्यमू॒ षु[6] य॑म्य॒न्य[7] उ॒ त्वां परि॑ ष्वजातै॒[8] लि॒बुजे॑व वृ॒क्षम् ।
तस्य॑ वा॒ त्वं मन॑ इ॒च्छा स वा॒ तवाधा॑ कृणुष्व सं॒विदं॒ सुभ॑द्राम् ॥ १६ ॥

अ॒न्यम्[9] । ऊँ॒ इति॑ । सु । य॒मि॒ । अ॒न्यः । ऊँ॒ इति॑ । त्वाम् । परि॑ । स्व॒जा॒तै॒ । लि॒बुजाऽइव । वृ॒क्षम् । तस्य॑ । वा॒ । त्वम् । मन॑ः । इ॒च्छ । सः । वा॒ । तव॑ । अध॑ । कृ॒णु॒ष्व॒ । स॒म्ऽवि॑दम् । सु॒ऽभ॑द्राम् ॥

इदं यमवाक्यम् । हे यमि त्वम् अन्यमू षु । उशब्दः एवार्थे । अन्यमेव सुष्ठु परि ष्वजातै अन्य उ त्वां त्वामपि अन्यः परिष्वजातै । एवं परस्परं कुरुतम्[10] इत्यर्थः । तत्र दृष्टान्तः—लिबुजेव वृक्षम् । गतम् एतत् । संश्लेषस्य उभयव्यापारजत्वाद् व्यतिहारेणाभिधानम् । परस्परसंश्लेषः समानमनस्कत्वम्[11] अन्तरेण न घटत इत्यभिप्रेत्य आह— तस्य वा त्वम् इति । हे यमि तस्य वा मनस्त्वम् इच्छ । वाशब्दश्चार्थे । तस्य मनसे[12] यद् रोचते तदेव त्वम् अनुसरेत्यभिप्रायः । स वा तव । मन इच्छत्विति शेषः । तव मनसः आनुकूल्यं भजताम् । अध अथ परस्परानुकूल्यानन्तरं सुभद्राम् अत्यन्तकल्याणां संविदम् संवित्तिं[13] सुखानुभवं तेन सह कृणुष्व कुरु ।

---

[1] स्म S'.　[2] कक्ष्येवमिति S'.　[3] °देशयनू S'　[4] नास्ति, स्थानं तु अष्टनववर्णानां रिक्तम् S'.　[5] °संबन्धेयम् S'.　[6] अ॒न्य ऊ॒षु A,B,C,K'm,R,V,Dc; अ॒न्य उ॒षु त्वं Km; °षु त्वं ऋ १०,१०,१४.　[7] यम्य° P³,M,E².　[8] °जाते॒ ऋ १०, १०,१४.　[9] अ॒न्यः P, अ॒न्यः Cp, अन्यम् P².　[10] कुर्वं S'.　[11] मन नास्ति S'.　[12] मनसा S'.　[13] वित्विं S'.

त्रीणि च्छन्दांसि कवयो वि येतिरे पुरुरूपं[1] दर्शतं विश्वचक्षणम्[2] ।
आपो वाता ओषधयस्तान्येकस्मिन् भुवन आर्पितानि ॥ १७ ॥

त्रीणि । छन्दांसि । कवयः । वि । येतिरे । पुरुऽरूपम्[3] । दर्शतम् । विश्वऽचक्षणम् ।
आपः । वाताः । ओषधयः । तानि । एकस्मिन् । भुवने । आर्पितानि ॥ १७ ॥

कवयः क्रान्तप्रज्ञा ज्ञानिनः पूर्वे महर्षयः देवा वा त्रीणि च्छन्दांसि । अत्र छादनाच्छन्दांसीति व्युत्पत्त्या छन्दःशब्देन वक्ष्यमाणा अबादयस्त्रयो गृह्यन्ते । तानि वि येतिरे यत्नं कृतवन्तः । जगन्निर्वाहायेति[4] शेषः । तेषु एकैकं विशिनष्टि— तेषु मध्ये आपः अप्तत्त्वं पुरुरूपम् नानारूपम् अब्विकारत्वात् सर्वेषां रूपाणाम् । दर्शतम् दर्शनीयं स्पृहणीयत्वेन प्रियदर्शनं विश्वचक्षणम् विश्वस्य द्रष्टृ[5] । एवं वाताः वायुतत्त्वमपि प्राणात्मना पुरुरूपं भवति दर्शनीयं च भवति । सूत्रात्मतया विश्वद्रष्टृपि । एवम् ओषध्यात्मकमपीति द्रष्टव्यम् । यद्वा समुदायाभिप्रायेण एकवचनम् । तद् अबादित्रयं पुरुरूपत्वादिधर्मकम् इत्यर्थः । त्रीणि च्छन्दांसीति उक्तम् । कानि तानि त्रीणीति तत्राह—आपो वाता ओषधय इति । अबादीनां भुवनाच्छादकत्वं प्रसिद्धम् एव । तेषां भुवनैकप्रयोजकताम् आह— तानीति । तानि एकस्मिन् भुवने भवन्ति अत्र प्राणिनः अप्राणिनश्चेति भुवनं भूलोकः तत्र तन्निर्वाहार्थम् आर्पितानि स्थापितानि सृष्ट्यादौ[6] ।

वृषा वृष्णे दुदुहे दोहसा दिवः पयांसि यह्वो अदितेरदाभ्यः ।
विश्वं स वेद वरुणो यथा धिया स यज्ञियो यजति[7] यज्ञियाँ ऋतून् ॥१८॥

वृषा । वृष्णे[8] । दुदुहे । दोहसा । दिवः । पयांसि । यह्वः । अदितेः । अदाभ्यः ।
विश्वम् । सः । वेद । वरुणः । यथा । धिया । सः । यज्ञियः । यजति । यज्ञियान् । ऋतून् ॥ १८ ॥

वृषा कामानाम् अपां च वर्षिता अग्निः वृष्णे आज्यपयआदेर्वर्षित्रे[9] प्रयच्छते यजमानाय तद्भोगार्थं दोहसा दोहनसाधनेन यज्ञादिना दिवः सकाशात् पयांसि उदकानि दुदुहे वृष्टवान् । कीदृशो वृषा—यह्वः महन्नामैतत् । महान् । अथ द्यौर्विशेष्यते—अदितेः अखण्डनीयायाः । न हि द्यौः केनचित् खण्ड्यते । अदाभ्य इति वृष्णो विशेषणम् । कैरपि रक्षःप्रभृतिभिः अहिंसितः । स तादृशोऽग्निः विश्वं सर्वं धिया प्रज्ञानेन वेद जानाति साक्षात्करोति । तत्र दृष्टान्तः— वरुणो देवो यथा धिया वेत्ति तद्वत् । स च यज्ञियः यज्ञार्होऽग्निः । 'यज्ञर्त्विग्भ्याम्' (पा ५,१,७१)

---

१. पुरुरूपं° V,Dc,WM., पुरुरूपं° K^m,WM., पुरुरूपं दर्शतं C,WM. २. °चर्षणम् B. ३. पुरुऽरूपम् Cp. ४. जगंतिनिर्वा° S'. ५. द्रष्टारम् S'. ६. दृष्ट्यादौ S'. ७. यजतु ऋ १०,११,१. ८. वृष्ण्ये P,P². ९. °र्वर्षित S'.

इति घः । यज्ञियान् यज्ञार्हान् यष्टव्यान् ऋतून् अभिगन्तॄन् यद्वा यज्ञियान् यज्ञियेषु ऋतुषु कालेषु तत्तद्विहितकाले यष्टव्यान् देवान् यजति इति व्याख्येयम् ।

रप॑द् ग॒न्ध॒र्वीरप्या॑ च॒ योष॑णा न॒दस्य॑ ना॒दे परि॑ पातु नो॒[1] मनः॑ ।
इ॒ष्टस्य॒ मध्ये॒ अदि॑ति॒र्नि धा॑तु नो॒ भ्राता॑ नो ज्ये॒ष्ठः प्र॑थ॒मो वि वो॑चति ॥१९॥

रप॑त् । ग॒न्ध॒र्वीः । अप्या॑ । च॒ । योष॑णा । न॒दस्य॑ । ना॒दे । परि॑ । पा॒तु॒ । न॒ः । मनः॑ । इ॒ष्टस्य॑ । मध्ये॑ । अदि॑तिः । नि । धा॒तु॒ । न॒ः । भ्राता॑ । न॒ः । ज्येष्ठः॑ । प्र॒थ॒मः । वि । वो॒च॒ति॒ ॥१९ ॥

गन्धर्वीः गन्धर्वस्य उदकधारकस्य भरतस्य आदित्यस्य स्वभूता भारती अप्या योषणा च अप्संबन्धिनी अप्स्थायिनी युवतिः सरस्वती च रपत् रपतु स्पष्टं वक्तु मद्द्वारा अग्निं स्तौतु । नदस्य नादे स्तोतुर्मम स्तोत्ररूपे नादे कर्तव्ये ध्वनौ नो मनः अस्माकं मनः परि पातु परितो रक्षतु । भारती सरस्वती चेति शेषः । अनन्तरं इष्टस्य फलस्य यागस्य वा मध्ये नः अस्मान् अदितिः देवमाता देवी नि धातु स्थापयतु इष्टं योजयतु । भ्राता भरणकर्ता भ्रातृवत् हितकारी ज्येष्ठः गुणैः प्रशस्यः प्रथमोऽग्निः । 'प्रथम इति मुख्यनाम । प्रतमो भवति' ( नि २,२२ ) इति निरुक्तम् । वि वोचति विवक्तु[2] साधु यष्टा अयम् इति अस्मासु ब्रवीत्वित्यर्थः । वि वोचति । 'लिङ्याशिष्यङ्' ( पा ३,१,८६ ) इति व्यत्ययेनात्र अङ्प्रत्ययः । 'वच उम्' ( पा ७,४,२० ) इति अङ्प्रत्ययनिबन्धन उमागमः ।

सो चि॒न्नु भ॒द्रा क्षु॒मती॒ यश॑स्वत्यु॒षा उ॑वास॒ मन॑वे॒ स्व॑र्वती ।
यदी॑मु॒शन्त॑मुश॒ताम॑नु॒ क्रतु॑म॒ग्निं होता॑रं वि॒दथा॑य॒ जीज॑नन् ॥ २० ॥

सो इति॑ । चि॒त् । नु । भ॒द्रा । क्षु॒ऽमती॑ । यश॑स्वती । उ॒षाः । उ॒वा॒स॒ । मन॑वे । स्वः॒ऽवती[3] । यत् । ई॒म् । उ॒शन्त॑म् । उ॒श॒ताम्[4] । अनु॑ । क्रतु॑म् । अ॒ग्निम् । होता॑रम् । वि॒दथा॑य । जीज॑नन्[5] ॥

सो चित् सैव खलु भद्रा भन्दनीया कल्याणी क्षुमती मन्त्ररूपशब्दवती । प्रातरनुवाकादौ बहुभिरुषस्यसूक्तैः शस्यमानत्वात् । अथवा तस्मिन् काले पक्ष्यादीनां प्रबुद्धानां शब्ददर्शनात् क्षुमती । यशस्वती । यश इति अन्ननाम । अन्नवती मनुष्योपभोगार्थेन अन्नेन हविर्लक्षणेन वा तद्वती । तथा स्वर्वती स्वः आदित्यः । तद्वती । तदविनाभावात् । 'छन्दसीरः[6]' ( पा ८,२,१५ ) इति मतुपो वत्वम् । एवंरूपा उषाः मनवे मनुष्याय । जातावेकवचनम् । मनु-

---

१. मे ऋ १०,११,२. २. विवक्तुं S'. ३. स्वःऽवती P. ४. उशताम् Cp. ५. जीजनत् P²; जीवनम् Cp. ६. वैतु. शंपा. 'छन्दसीवनिपौ' (पावा ५,२,१०९ ) S'. शंपा. [टि.] च मादुप° (पा ८,२,९ ).

ष्याणां व्यवहाराय यजमानाय वा तस्याग्निहोत्राद्यर्थाय उवास प्रादुरभूत् । तमो निराचकारेत्यर्थः[1] । यत् यदा ईम् एनम् उशन्तम् कामयमानं[2] होतारम् देवानाम् आह्वातारं होमनिष्पादकं वा अग्निम् उशताम् यज्ञार्थं कामयमानानां यजमानानां तेषां विदथाय यज्ञाय देवानां हविःप्रापणाय अनु क्रतुम् तत्रतत्र क्रतौ तत्तत्क्रत्वर्थं जीजनन् अजीजनन् उदपादयन् अध्वर्यवः ।

इति अष्टादशे काण्डे प्रथमेऽनुवाके द्वितीयं सूक्तम् ।

अध त्यं द्रप्सं विभ्वं विचक्षणं विराभरदिषिरः[3] श्येनो अध्वरे ।
यदी विशो वृणते दस्ममार्या अग्निं होतारमध धीरजायत ॥ २१ ॥

अध । त्यम् । द्रप्सम् । विऽभ्वम् । विऽचक्षणम् । विः । आ । अभरत् । इषिरः । श्येनः । अध्वरे । यदि । विशः । वृणते । दस्मम् । आर्याः । अग्निम् । होतारम् । अध । धीः । अजायत ॥

अध अथ अनन्तरं त्यम् तम् । 'तृतीयस्याम् इतो दिवि सोम आसीत्' ( तैब्रा ३,२,१,१ ) इत्यादिश्रुतिप्रसिद्धम् । द्रप्सम्[4] देवैर्मनुष्यैश्च भक्षणीयं सोमम् । कीदृशम्— विभ्वम् महन्नामैतत् । महान्तं विचक्षणम् विद्रष्टारम् एवंलक्षणं सोमम् इषिरः प्रकृष्टगमनः एषणां[5] प्राप्तः अग्न्यादिदेवैः प्रार्थितो वा श्येनः शंसनीयगतिः सौपर्णो विः पक्षी अध्वरे यज्ञे निमित्तभूते सति आभरत् आहरत् आहृतवान् । गायत्री सुपर्णरूपं धृत्वा द्युलोकात् सोमम् आहरद् इत्येतद् आख्यानम् 'तृतीयस्याम् इतो दिवि सोम आसीत् । तं गायत्र्याहरत् । तस्य पर्णम् अच्छिद्यत' ( तैब्रा ३,२,१,१ ), 'कद्रूश्च वै सुपर्णी चास्पर्धेताम्' ( तै ६,१,६,१ ) इत्यादिश्रुतिषु प्रसिद्धम् । एवम् आहृते सोमे यदि यदा आर्याः सर्वैरभिगन्तव्या विशः प्रजाः यजमाना दस्मम् दर्शनीयम् अग्निं होतारम् होमनिष्पादकम् । 'जुहोतेर्होतेत्यौर्णवाभः' ( नि ७,१५ ) इति निरुक्तम् । होतृत्वेन वृणते वरणं कुर्वन्ति पुरस्कुर्वन्ति अध अथ अनन्तरं सोमस्य अग्नेश्च सिद्धत्वाद् धीः । कर्मनामैतत् । अग्निष्टोमादिलक्षणं कर्म अजायत जायते निर्वृत्ता भवति । अग्निम् [6]अन्तरेण कस्यचिदपि[6] कर्मणः असिद्धेः यदी विशो वृणते अध धीरजायतेति अग्नेर्होतृत्वोपयोगित्वेन[7] स्तुतिः ।

सदासि रण्वो यवसेव पुष्यते होत्राभिरग्ने मनुषः स्वध्वरः ।
विप्रस्य वा यच्छशमान उक्थ्यो३[8] वाजं ससवाँ उपयासि[9] भूरिभिः ॥२२॥

---

१. इतः परम्—अनुष्ठानाय उवास प्रादुरभूत् तमो निराचकार S′. २. °मानानां भ्राजन्तं दीप्यमानं S′. ३. °दिषितः ऋ १०,११,४. ४. अस्य स्थाने उपपञ्चवर्णानां स्थानं रिक्तम् S′. ५. रषणां S′. ६. °रेणास्य° S′. ७. अग्नेराहृत्योपयोगि S′. ८. उक्थ्यं१ ऋ १०,११,५. ९. उपयासि B,V; उपयासि > उपयासि Dc.

सदा॑ । असि॒ । र॒ण्वः । यव॑साऽइव । पुष्य॑ते । होत्रा॑भिः । अ॒ग्ने॒ । मनु॑षः । सु॒ऽअ॒ध्व॒रः ।
विप्र॑स्य । वा॒ । यत् । श॒श॒मा॒नः । उ॒क्थ्य॑: । वाज॑म् । स॒स॒ऽवान् । उ॒प॒ऽयासि॑[1] । भूरि॑ऽभिः ॥ २२ ॥

हे अग्ने स्वध्वरः शोभनयागः सुष्ठु यागस्य निर्वर्तकस्त्वं मनुषः मनुष्यस्य स्वभूताभिः होत्राभिः होमसाधनाभिः आज्यादिभिः पुष्यते पोषयित्रे यजमानाय तदर्थं सदा सर्वदा रण्वः रमणीयः दर्शनीयः असि । तत्र दृष्टान्तः—यवसेव यवसेन हरिततृणादिना गवादिरिव । स यथा पुष्यते स्वामिने रमणीयो भवति तद्वत् । यत् यस्त्वं शशमानः शंसन् यजमानं प्रशंसन् उक्थ्यः स्तोतव्यश्च सन् विप्रस्य मेधाविनो यजमानस्य वाजम् अन्नं हविर्लक्षणं ससवान् संभजमानः भूरिभिः बहुभिः कामैः सहितः बहुभिर्देवैः सहितो वा उपयासि उपगच्छसि । '[तद्गृहमिति शेषः] यत एवं करिष्यसि अतस्त्वं यजमानस्य सदा रण्वोसीति संबन्धः ।

उदी॑रय पि॒तरा॑ जा॒र आ भग॒मिय॑क्षति हर्य॒तो हृ॒त्त इ॑ष्यति ।
विव॑क्ति॒ वह्निः॑ स्वप॒स्यते॑ म॒खस्त॑वि॒ष्यते॒ असु॑रो॒ वेप॑ते म॒ती ॥ २३ ॥

उत् । ई॒र॒य॒ । पि॒तरा॑ । जा॒रः । आ । भग॑म् । इय॑क्षति । ह॒र्य॒तः । हृ॒त्तः । इ॒ष्य॒ति॒ ।
विव॑क्ति । वह्निः॑ । सु॒ऽअ॒प॒स्यते॑ । म॒खः । त॒वि॒ष्यते॑ । असु॑रः । वेप॑ते । म॒ती ॥ २३ ॥

हे अग्ने त्वं पितरा पितरौ मातापितरौ । 'पिता मात्रा' ( पा १,२,७० ) इत्येकशेषः । अत्र द्यावापृथिव्यौ गृह्येते । 'द्यौः पितः पृथिवि मातः' ( तैब्रा २,८,६,५ ), 'द्यौः पिता पृथिवी माता' ( तैब्रा ३,७,५,४ ) इत्यादिश्रुतिषु तथा श्रवणात् । तौ उदीरय उद्गमय यज्ञं प्रति प्रेरय । यद्वा तावकं तेजः पितरौ प्रति उदीरय उद्गमय । अत्यन्तं प्रज्वलितो भवेत्यर्थः । तत्र दृष्टान्तः—जार आ भगम् । जारः आदित्यः रात्रेः जरयिता । 'जार इव भगम् आदित्योत्र जार उच्यते रात्रेर्जरयिता' ( नि ३,१६ ) इति यास्कः । आ इति इवार्थे । जार इव आदित्य इव । स यथा भगम् भजनीयं स्वप्रकाशं द्यावापृथिव्यौ प्रति प्रेरयति तद्वत् । लौकिको जारो भगम् योनिमिव इत्ययं दृष्टान्तस्तु स्पष्टं प्रतीयत एव । अथवा जरा स्तुतिः । तत्कर्तृत्वेन तत्संबन्धी जारः स्तोता । स च भगम् भजनीयं त्वाम् आ । ह्वयति इत्यध्याहारः । अत उदीरयेति संबन्धः । अथ परोक्षम् आह—इयक्षति यष्टुम् इच्छति यान् देवान् यजमानः । यजतेः सन् । अभ्यासस्य छान्दसं संप्रसारणम् । तान्[2] हर्यतः[3] कमनीयः स्पृहणीयोग्निः हृत्तः हृदयात् हृदयेनैव इष्यति इच्छति । स्वकीयान्[4] कर्तुम् इति शेषः । किं च वह्निः हविषां वोढाग्निः मखः मखसाधनो मंहनीयो वा स्वपस्यते शोभनकर्म कर्तुम् इच्छते[5] । 'सुप आत्मनः क्यच्' ( पा ३,१,८ ) । 'नः क्ये' ( पा १,४,१५ ) इति नियमात् पद-

---

१. उपऽयासि P,P[2]; उप॑ । या॒सि॒ Cp. २. त्वान् S'. ३. शत्रन्तमिति ऋ. भाष्यकृतः.
४. स्वयं S'. ५. क्रियापदमिति वेङ्कट. सा. प्रभृ. द्र. (तु. सपा. ऋ १०,११,६ ).

संज्ञाया अभावाद् रुत्वाभावः । यजमानाय विवक्ति ब्रवीति । अभिलषितं तवेष्टं दास्यामीति भाषत इत्यर्थः । तथा तविष्यते[1] । तविषिर्वृद्ध्यर्थः । वर्धिष्यते यजमानाय असुरः बलवान् अग्निः मती मत्या कर्मणा यागेन निमित्तेन वेनते कम्पते चलति आगच्छति ।

यस्ते॑ अग्ने सुम॒तिं मर्तो॒ अख्य॑त्[2] सह॑सः सूनो अति॒ स प्र शृ॑ण्वे ।
इषं॒ दधा॑नो॒ वह॑मानो॒ अश्वै॒रा स द्यु॒माँ [3]अम॑वान् भूषति॒[3] द्यून् ॥ २४ ॥

यः । ते॒ । अ॒ग्ने॒ । सु॒ऽम॒तिम् । मर्तः॑ । अख्य॑त्[4] । सह॑सः । सू॒नो॒ इति॑ । अति॑ । सः । प्र । शृ॒ण्वे॒ । इष॑म् । दधा॑नः । वह॑मानः । अश्वैः॑ । आ । सः । द्यु॒ऽमान् । अम॑ऽवान् । भू॒षति॒[5] । द्यून् ॥

हे अग्ने ते तव सुमतिम् शोभनां बुद्धिम् अनुग्रहलक्षणां यो मर्तः मरणधर्मा मनुष्यो यजमानः अख्यत् कथयति परस्मै । स्वयं प्राप्तो भवतीत्यर्थः । हे सहसः सूनो बलस्य पुत्र बलेन मथ्यमानो जायत इति तादृशाग्ने सः त्वयानुगृहीतो यजमानः अति[6] आभिमुख्येन सर्वतः प्र शृण्वे प्रकर्षेण श्रूयते । शृणोतेर्लिटि[6] 'छन्दस्युभयथा' (पा ३,४,१७) इति लिटः सार्वधातुकत्वात् 'श्रुवः शृ च' (पा ३,१,७४) इति श्नुप्रत्ययः । सर्वत्र विश्रुतो भवति । किं च स त्वयानुगृहीतो यजमानः इषम् सर्वैरेषणीयम् अन्नं दधानः धारयन् वहन्नः सन् तथा अश्वैः बहुभिः वहमानः अश्वैरुह्यमानो रथगामी भूत्वा द्युमान् दीप्तिमान् अमवान् बलवान् सन् द्यून् । अहर्नामैतत् । बहून् दिवसान् आ भूषति आभवति । सर्वम् अधिष्ठाय वर्तते । यद्वा भूषति बुभूषति द्युमान् अमवांश्च भवितुम् इच्छति । भवतेः सनि 'सनि ग्रहगुहोश्च' (पा ७,२,१२) इति इडभावः । 'इको झल्' (पा १,२,९) इति कित्त्वाद् गुणाभावः । सर्वविधीनां छन्दसि विकल्पितत्वाद् द्वित्वाभावः[8] ।

श्रुधी नो॑ अग्ने॒ सद॑ने स॒धस्थे॑ यु॒क्ष्वा रथ॑म॒मृत॑स्य द्रवि॒त्नुम् ।
आ नो॑ वह॒ रोद॑सी दे॒वपु॑त्रे॒ माकि॑र्दे॒वाना॒मप॑ भूरि॒ह स्याः॑ ॥ २५ ॥

श्रु॒धि । नः॒ । अ॒ग्ने॒ । सद॑ने । स॒धऽस्थे॑ । यु॒क्ष्व । रथ॑म् । अ॒मृत॑स्य । द्र॒वि॒त्नुम् । आ । नः॒ । व॒ह॒ । रोद॑सी॒ इति॑ । दे॒वपु॑त्रे॒ इति॑ दे॒वऽपु॑त्रे । माकिः॑ । दे॒वाना॑म् । अप॑ । भूः॒ । इ॒ह । स्याः॒ ॥

हे अग्ने त्वं नः अस्माकं आह्वानं श्रुधि शृणु । कुत्रेति उच्यते—सदने सीदन्त्यत्रेति सदनं गृहं तत्र । कीदृशे सधस्थे सहस्थाने । 'सध मादस्थयोश्छन्दसि'

---

१. क्रियापदं युक्तम्, अत्र विषये वैप १,१४८३ d द्र. सा. भाष्यं ऋ. च. २. अक्षत् ऋ १०; ११,७. ३. अमवान्भूषति B,V,Dc. ४. अक्षत् Bp,P. ५. भूषति Cp. ६. वैतु. मंपा. ७. इतः परं षोडशवर्णानां स्थानं रिक्तम् S'. ८. गुणाभावः S'.

( पा ६,३,९६ ) इति सहस्य सधादेशः[1]। देवानां साधारणे यागगृहे । तदर्थम् अमृतस्य उदकस्य द्रवितुम् द्रावकं रथं युक्ष्व योजय । किं च त्वं नः अस्माकम् अर्थाय रोदसी द्यावापृथिव्यौ । कीदृश्यौ । देवपुत्रे देवाः पुत्रा ययोस्ते तादृश्यौ तदुपजीव्यत्वात् तत्पुत्रत्वोपचारः। ते देवते आ वह यज्ञार्थम्। किं च त्वं देवानां संघे [2]माकिरप भूः[2] मा भूः मा गच्छ[3] । किंतु इह अस्मदीये यागगृह एव स्याः भव। सर्वकर्मार्थं सर्वदा संनिहितो भवेत्यर्थः । यद्वा देवानां मध्ये एकोपि देवो माकिरप भूः अप भूत् अपगतो मा भूत् । किंतु सर्वोपीह स्याः स्यात् । 'तिङां तिङो भवन्ति' ( पावा ७,१,३९ ) इति [4]प्रथमपुरुषस्थाने मध्यमपुरुषः[4]।

यद॑ग्न ए॒षा समि॑ति॒र्भवा॑ति दे॒वी दे॒वेषु॑ यज॒ता य॑जत्र ।
रत्ना॑ च॒ यद् वि॒भजा॑सि स्वधावो भा॒गं नो॑ अत्र॒ वसु॑मन्तं वीतात् ॥२६॥

यत् । अ॒ग्ने॒ । ए॒षा । सम्ऽइ॑तिः । भवा॑ति[5] । दे॒वी । दे॒वेषु॑ । य॒ज॒ता । य॒ज॒त्र॒ । रत्ना॑ । च॒ । यत् । वि॒ऽभजा॑सि । स्व॒धा॒ऽव॒ः । भा॒गम् । न॒ः । अत्र॑ । वसु॑ऽमन्तम् । वी॒ता॒त् ॥ २६ ॥

हे यजत्र यष्टव्य अग्ने यत् यदा एषा पुरोभाविनी समितिः समाजः । संहतिरित्यर्थः । भवाति भवति । स्तुतीनां हविषां च समितिर्यदा भवति। कीदृशी । देवी दैवी देवसंबन्धिनी दीप्ता वा । कुत्र । देवेषु मध्ये । पुनः कीदृशी सा । यजता यष्टव्या पूजनीया । हे स्वधावः अन्नवः अन्नवन् अग्ने यत् यदा च रत्ना रत्नानि रमणीयानि धनानि विभजासि स्तोतृभ्यो विभजसि प्रयच्छसि अत्र विभागसमये नः अस्माकमपि वसुमन्तम् प्रभूतेन वसुना युक्तं भागम् अंशं वीतात् । वी गत्यादिषु । अत्र गत्यर्थः । वीहि । प्रयच्छेत्यर्थः । 'अन्वग्निः' इति सप्तमी, (२७) 'प्रत्यग्निः' इति अष्टमी (२८) च पूर्वत्र ( अ ७,८७,४;५ ) व्याख्याते । तयोः पाठस्तु—

'अन्व॒ग्निरु॒षसा॒मग्र॑मख्य॒दन्वहा॑नि प्र॒थ॒मो जा॒तवे॑दाः ।
अनु॒ सूर्य॑ उ॒षसो॒ अनु॑ र॒श्मीननु॒ द्यावा॑पृथि॒वी आ वि॑वेश ॥ २७ ॥

अनु॑ । अ॒ग्निः । उ॒षसा॑म् । अग्र॑म् । अ॒ख्य॒त् । अनु॑ । अहा॑नि । प्र॒थ॒मः । जा॒तऽवे॑दाः । अनु॑ । सूर्यः॑ । उ॒षसः॑ । अनु॑ । र॒श्मीन् । अनु॑ । द्यावा॑पृथि॒वी इति॑ । आ । वि॒वे॒श ॥ २७ ॥

'प्र॒त्य॒ग्निरु॒षसा॒मग्र॑मख्य॒त् प्र॒त्यहा॑नि प्र॒थ॒मो जा॒तवे॑दाः ।

---

१. सहादेशः S'. २. माकिर्भूः S'. ३. यच्छ S'. ४. नास्ति, स्थानं तु सप्ताष्टवर्णानां रिक्तम् S'. ५. संवाति P. ६. पृ १०१२ टि॰ द्र,

प्रति सूर्यस्य पुरुधा च रश्मीन् प्रति द्यावापृथिवी आ ततान ॥ २८ ॥

प्रति । अग्निः । उषसाम् । अग्रम् । अख्यत् । प्रति । अहानि । प्रथमः । जातऽवेदाः । प्रति । सूर्यस्य । पुरुऽधा । च । रश्मीन् । प्रति । द्यावापृथिवी इति । आ । ततान ॥ २८ ॥

द्यावा ह क्षामा प्रथमे ऋतेनाभिश्रावे[1] भवतः सत्यवाचा ।
देवो यन्मर्तान् यजथाय कृण्वन्त्सीदद्धोता प्रत्यङ् स्वमसुं यन् ॥ २९ ॥

द्यावा । ह । क्षामा । प्रथमे इति । ऋतेन । अभिऽश्रावे[2] । भवतः । सत्यऽवाचा । देवः । यत् । मर्तान् । यजथाय । कृण्वन् । सीदत् । होता । प्रत्यङ् । स्वम् । असुम् । यन् ॥ २९ ॥

अत्र द्यावापृथिव्यौ यष्टुम् इच्छन् तयोर्यागस्य अग्निसव्यपेक्षत्वाद् अग्निं स्तौति । द्यावा । 'दिवो द्यावा' ( पा ६,३,२९ ) इति द्यावादेशः । द्यौः तथा क्षामा क्षमा पृथिवी द्यावापृथिव्यौ । व्यवहितप्रयोगश्छान्दसः । यद्वा द्योशब्दस्य[3] द्विवचनं द्यावेति[4] । द्यावौ । क्षामाशब्दस्य द्विवचनं क्षामेति । क्षामे । द्वन्द्वस्य युगपदधिकरणवचनत्वात् परस्परापेक्षया उभयोरपि द्विवचनत्वम् । द्यावापृथिव्यौ । ह इति प्रसिद्धौ । प्रथमे ह मुख्ये खलु सत्यवाचा सत्यवाचौ सत्यस्तुतिके । सर्वदेवमनुष्याद्याश्रयत्वात् सर्वोपकारकत्वाच्च तद्विषया स्तुतिरूपा वाक् सर्वापि सत्यैव विद्यमानगुणैव । ते ऋतेन यज्ञेन निमित्तेन यज्ञार्थम् अभिश्रावे अभितः श्रूयेते[5] इति अभिश्रावे स्तोतुः श्रवणयोग्ये भवतः । कदेति उच्यते— यत् यदा देवः द्योतमानोऽग्निः मर्तान् मनुष्यान् यजथाय यागाय यज्ञार्थं कृण्वन् कुर्वन् होता होमनिष्पादको देवानाम् आह्वाता वा[6] प्रत्यङ् यजमानाभिमुखं स्वम् स्वीयम् असुम् प्रज्ञां यागविषयां बलं वा ज्वालालक्षणं यन् गच्छन् प्राप्नुवन् सीदत् निषीदति । तदा अभिश्रावे भवत इति संबन्धः ।

देवो देवान् परिभूर्ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान् ।
धूमकेतुः समिधा भाऋजीको[7] मन्द्रो होता नित्यो वाचा यजीयान् ॥ ३० ॥

देवः । देवान् । परिऽभूः । ऋतेन । [8]वह । नः[8] । हव्यम् । प्रथमः । चिकित्वान् । धूमऽकेतुः । समऽइधा । भाःऽऋजीकः[9] । मन्द्रः । होता । नित्यः[10] । वाचा । यजीयान् ॥ ३० ॥

हे अग्ने देवः द्योतमानः प्रकृष्टज्वालस्त्वम् ऋतेन यज्ञेन देवान् यष्टव्यान् परिभूः परिभवन् स्वाधीनान् कुर्वन् प्रथमः मुख्यः सन् चिकित्वान् एतेऽत्र यष्टव्या इति जानन्

---

१. °भिस्नावे B[2]. २. °ऽस्त्रावे Bp[2],Cp,Op. ३. द्यौश° S'. ४. वेति च S'. ५. श्रूयते S'. ६. वा देवः S'. ७. भाऋचीको A,B,K[m],V.Dc. ८. वहानः Cp. वहानः P,P[2]. ९. °ऋनीकः P: °ऋचीकः Cp,Op. १०. नित्यः Cp.

नः अस्माकं हव्यम् हविः वह प्रापय देवान् [1]प्रति गमय[1]। अथ अग्निं बहुधा प्रशंसति[2]— धूमकेतुः धूमेन प्रज्ञायमानः समिधा समिन्धनसाधनेन काष्ठादिना भाऋजीकः भासमानदीप्तिः प्रकृष्टज्वालः मन्द्रः मोदमानः मादयिता वा होता देवानाम् आह्वाता नित्यः अविनाशी वाचा स्तुतिरूपया यजीयान् अतिशयेन यष्टा यष्टव्यो वा । उक्तमहिमोपेतः सन् हव्यं वहेति संबन्धः ।

इत्यष्टादशे काण्डे प्रथमेऽनुवाके तृतीयं सूक्तम् ।

अर्चामि वां वर्धायापो घृतस्नू[3] द्यावाभूमी शृणुतं रोदसी मे ।
अहा यद् देवा[4] असुनीतिमायन्[5] मध्वा नो अत्र पितरा शिशीताम् ॥३१॥

अर्चामि । वाम् । वर्धाय[6] । अपः[7] । घृतस्नू इति घृतऽस्नू । द्यावाभूमी इति । शृणुतम् । रोदसी[8] इति । मे । अहा । यत् । देवाः । असुऽनीतिम् । आयन् । मध्वा । नः । अत्र । पितरा । शिशीताम् ॥ ३१ ॥

हे घृतस्नू उदकस्य सारयित्र्यौ[9] द्यावापृथिव्यौ वाम् युवयोः अपः कर्म वर्धाय अभिवृद्धये । वृधेर्घञन्तत्वाद् आद्युदात्तः । अर्चामि स्तौमि । तदर्थम् हे द्यावाभूमी द्यावापृथिव्यौ रोदसी रोधयित्र्यौ द्यावापृथिव्योर्मध्ये सर्वेषां प्राणिनां निरोधात् । अथवा रोदयित्र्यौ वृष्टिफलयोः प्रतिबन्धेन । एवंरूपे द्यावापृथिव्यौ मे मम शृणुतम् । स्तुतिम् इति शेषः । अथ परोक्षम् आह— यत् येषु अहा अहस्सु देवाः । दीव्यतिरत्र स्तुत्यर्थः । युवयोः स्तोतारः ऋत्विजः असुनीतिम् असूनां बलानां नयनम्[10] आयन् अगच्छन् स्वकीयं बलं यज्ञार्थम् अकुर्वन् । अत्र एषु दिवसेषु पितरा पितरौ मातापितरौ द्यावापृथिव्यौ नः अस्माकं मध्वा । द्वितीयार्थे तृतीया । मधु उदकं शिशीताम् संस्कुरुतां[11] प्रयच्छताम् । यद्वा मध्वा मधुना उदकेन नः अस्मान् शिशीताम् संस्कुरुताम् । उदकप्रदानेन वर्धयताम्[12] इत्यर्थः । अग्निसाहचर्याद् अनयोः स्तुतिः । शिशीताम् इति । शो तनूकरणे । लोटि छान्दसं रूपम् ।

स्वावृग् देवस्यामृतं यदी गोरतो जातासो धारयन्त उर्वी ।
विश्वे देवा अनु तत् ते यजुर्गुर्दुहे[13] यदेनी दिव्यं घृतं वाः ॥ ३२ ॥

---

१. पमय S'. २. °सन्ति S'. ३. घृतस्नू B,Km,R,O; घृतस्नू > घृतस्नू Dc. ४. देवा B,V,W; देवा R,WM.,RW.; देवा > देवा Dc; द्यावोऽसुं° ऋ १०,१२,४. ५. °मयन् ऋ. ६. अर्धाय P. ७. तु. Bp, ऋ. पपा. सा.; वैतु. P,P² आपः; Cp,WM. आपः. ८. रोदसी Cp. ९. जारयित्र्यौ S'. १०. एवं स्वरो न सिध्यति. ११. सुस्वंस्कुरुताम् S'. १२. °यतम् S'. १३. यजुंगु° Km.

स्वावृक् । देवस्य । अमृतम् । यदि । गोः । अतः । जातासः । धारयन्ते । उर्वी इति । विश्वे । देवाः । अनु । तत् । ते । यजुः । गुः । दुहे । यत् । एनी । दिव्यम् । घृतम् । वाः[१] ॥

देवस्य द्योतमानस्य अग्नेः स्वावृक् सुष्ठु आवर्जकं सर्वप्राण्यावर्जकं स्वाधीनकर्तृ अमृतम् अमृतवद् उपकारकम् उदकं यदि यदा गोः रश्मेः सकाशाद् उत्पद्यते अतः अस्माद् अमृताद् वृष्ट्युदकात् जातासः जाता ओषधयः उर्वी उर्व्यौ महत्यौ द्यावापृथिव्यौ [२]धारयन्ते अधारयन्त[२] भूमिष्ठानां द्युस्थानां च प्राणिनां तिलव्रीह्याद्योषध्युपजीवित्वात् तल्लोकनिवासिनां धारणेन तद्धारकत्वोपचारः । किं च यत् यदा एनी श्येता तव दीप्तिः । 'वर्णाद् अनुदात्तात्°' (पा ४,१,३९) इति [३]एतशब्दात् ङीप् तकारस्य नकारश्च[३] । दिव्यम् दिवि भवं घृतम् क्षरद्[४] वाः सर्वलोकच्छादकम् उदकं दुहे दुग्धे हे अग्ने ते तव तद् यजुः । युज्यत[५] इति यजुः कर्म तत् कर्मजनितम् उदकं विश्वे सर्वे देवा अनु गुः अनुगच्छन्ति । उदकाभिवृद्धानां व्रीह्यादीनाम् अनुगतिरेव उदकानुगतिरित्युच्यते । यद्वा इज्यत इति यजुः । यजिरत्र दानार्थः । तव तद् दानं उदकविषयं विश्वे सर्वे देवाः । दीव्यतिरत्र स्तुत्यर्थः । स्तोतार ऋत्विजः अनुगुः अनुयान्तीति व्याख्येयम् ।

**किं स्विन्नो राजा जगृहे[६] कदस्याति व्रतं चकृमा को वि वेद ।**
**मित्रश्चिद्धि[७] ष्मा जुहुराणो देवांछ्लोको[८] न यातामपि[९] वाजो अस्ति ॥३३॥**

किम् । स्वित् । नः । राजा । जगृहे । कत् । अस्य । अति । व्रतम् । चकृम । कः । वि । वेद । मित्रः । चित् । हि । स्म । जुहुराणः । देवान् । श्लोकः । न । याताम्[१०] । अपि । वाजः । अस्ति ॥ ३३ ॥

राजा देवेषु मध्ये क्षत्रियजातिर्यमो नः अस्माकं संबन्धि किंचिद्धविरादिकं किं स्वित् जगृहे गृह्णाति । कत् कदा अस्य यमस्य प्रीणनं व्रतम् कर्म यमप्रीतिकरं नित्यनैमित्तिकरूपं कर्म अति चकृम अतिक्रमं कृतवन्तः स्मः । को वि वेद तत् को जानाति । अविद्यमानं ज्ञातुं कः शक्नोति । यमविषयापराधपरिहारोस्तीत्याह । देवान् ह्वातव्यान् जुहुराणः आह्वयन् । हृ कौटिल्ये । कानचि रूपम् । धातूनाम् अनेकार्थत्वाद् अत्र ह्वयत्यर्थः । मित्रः मित्रवद्धितकारी अग्निर्विद्यते । चित् हि स्म इति पादपूरणाः । सर्वं स एव परिहरिष्यतीत्यर्थः । यातान्[११] देवान् अभिगच्छतो नः अस्मान् रक्षितुं श्लोको न । नेति उपमार्थे । श्लोकः स्तुतिः । स्तुतिर्यथास्ति

---

१. वाः Cp. २. धारयन्त धारयन्त S'. ३. नास्ति, स्थानं तु दशवर्णानां रिक्तम् S', ४. क्षरदुदकं S' ५. युज्येत S'. ६. जगृहे B. ७. °श्चिद्धि B. ८. देवान्छ्लो° A,B,C,K^m,V. ९. यातानपि K^m,V,Dc,O,R^२. १०. युताम् P, यातान् Cp,Op, ११. वैतु. संपा.

एवं वाजोऽपि हविर्लक्षणम् अन्नं च अस्ति विद्यते। अस्मान् रक्षितुं स्तुत्या हविषा च अग्निं परितोष्य तन्मुखाद् यमस्यापराधं परिहरिष्याम इत्यभिप्रायः।

दुर्मन्त्वत्रामृतस्य नाम सलक्ष्मा यद् विषुरूपा भवाति।
यमस्य यो मनवते सुमन्त्वग्ने तमृष्व पाह्यप्रयुच्छन्॥ ३४॥

दुःऽमन्तु[1]। अत्र। अमृतस्य। नाम। सऽलक्ष्मा। यत्। विषुऽरूपा। भवाति।
यमस्य। यः। मनवते। सुऽमन्तु। अग्ने। तम्। ऋष्व। पाहि[2]। अप्रऽयुच्छन्॥ ३४॥

पूर्वत्र 'सलक्ष्मा यद् विषुरूपा भवाति' (२) इत्यत्र यमेन स्वसृभूताया यम्याः या संभोगप्रार्थना निराकृता तां स्मारयन्नाह—अत्र अस्मिन्। कृते सतीति शेषः। यद्वा अत्र यस्याः संभोगविषये[3] अमृतस्य अमरणस्य यमस्य नाम नामधेयं दुर्मन्तु दुर्मननं दुर्वचम्। भवतीति शेषः। कथं भवतीत्याशङ्क्य तत्र कारणम् आह— सलक्ष्मेति। यत् यस्मात् कारणात् यमस्य यमीम् इच्छतः। अथवा यत् यस्मै संभोगम् अङ्गीकुर्वते यमाय इति व्याख्येयम्। सलक्ष्मा समानोदरा स्वसा यमी संभोगानन्तरं विषुरूपा भिन्नरूपा भार्यारूपा भवाति भवेत्। अतः स्वभगिनी-भर्तेति यमस्य दुर्वचं नाम भवेद् इत्यर्थः। तथा सति यः च पुमान् यमस्य राज्ञो नाम सुमन्तु सुवचं मनवते मनुते स्तौति[4]। मनु अवबोधने। लेटि तनादित्वाद् उप्रत्ययः। 'लेटोऽडाटौ' (पा ३,४,९४) इति अडागमः। आगमस्य अनुदात्तत्वेन विकरणस्वरः। तं स्तोतारम् हे ऋष्व दर्शनीय अग्ने त्वम् अप्रयुच्छन् अप्रमाद्यन् विस्मरणम् अकुर्वाणः पाहि रक्ष। एवं यमस्य निन्दानुकीर्तनदोषपरिहारप्रार्थना-रूपेण अग्नेः स्तुतिः।

यस्मिन् देवा विदथे मादयन्ते विवस्वतः सदने धारयन्ते।
सूर्ये ज्योतिरदधुर्मास्य१क्तून्[5] परि द्योतनिं चरतो अजस्रा॥ ३५॥

यस्मिन्। देवाः। विदथे। मादयन्ते। विवस्वतः। सदने। धारयन्ते। सूर्ये।
ज्योतिः। अदधुः। मासि[6]। अक्तून्। परि। द्योतनिम्। चरतः। अजस्रा॥ ३५॥

यस्मिन् अग्नौ सति यज्ञनिर्वर्तकत्वेन अग्नौ विद्यमाने सति देवा इन्द्राद्याः विदथे यज्ञे मादयन्ते माद्यन्ति। यस्मिन् सति मनुष्या विवस्वतः सूर्यस्य सदने स्थाने सूर्यलोके धारयन्ते वर्तन्ते। कर्मफलम् उपभुञ्जानाः सुखेन अवतिष्ठन्ते।

---

१. °मतु P. २. पाहि Cp. ३. संभोगा° S'. ४. स्तोति S'.
५. °स्यक्तून् A,R; मास्यक्तून् C. ६. मासि Cp.

येन[1] वा अग्निना देवाः सूर्ये ज्योतिः लोकत्रयप्रकाशकं तेजः अदधुः स्थापितवन्तः। एवं मासि मास्यते परिमीयत इति माश्चन्द्रः । 'पद्दन्नोमास्' ( पा ६,१,६३ ) इत्यादिना मासशब्दस्य मास्भावः। तस्मिन् [2]अक्तून् व्यञ्जकान्[2] तमोनिवर्तकान् रश्मीन् अग्नेः[3] सकाशाद् आहृत्य देवाः स्थापितवन्तः। यद्वा अक्तवो रात्रयः। चन्द्रमसि रात्रीः स्थापितवन्तः। यस्माद् एवं तस्माद् द्योतनिम् द्योतमानम् अग्निं तौ चन्द्रसूर्यौ अजस्रम्[4] सततं परि चरतः।

यस्मि॑न् दे॒वा मन्म॑नि सं॒चर॑न्त्यपी॒च्ये॒३॑ न व॒यम॑स्य वि॒द्म[5] ।
मि॒त्रो नो॒ अत्रादि॑ति॒रना॑गान्त्सवि॒ता दे॒वो वरु॑णाय वोचत् ॥ ३६ ॥

यस्मि॑न् । दे॒वाः । मन्म॑नि । स॒म्ऽचर॑न्ति । अ॒पी॒च्ये॑ । न । व॒यम्[6] । अ॒स्य॒ । वि॒द्म ।
मि॒त्रः । न॒ः । अत्र॑ । अदि॑तिः । अना॑गान् । स॒वि॒ता । दे॒वः । वरु॑णाय । वो॒च॒त् ॥ ३६ ॥

यस्मिन् मन्मनि मन्तव्ये स्थाने वरुणाख्ये देवाः यष्टव्याः संचरन्ति। कीदृशि स्थाने। अपीच्ये। अन्तर्हितनामैतत्। अन्तर्हिते स्थाने। अस्य वरुणस्य तत् स्थानं न वयं विद्म न जानीमः। अत्र अन्तर्हितस्थाने[7] स्थिताय देवसंचारास्पदाय वरुणाय नः अस्मान् अनागान् अनागसः सविता देवः अदितिः देवमाता द्यौः मित्रः[8] च हे अग्ने त्वदनुग्रहाद् वोचत् ब्रवीतु। वोचद् इति प्रत्येकं संबध्यते।

सखा॑य॒ आ शि॑षामहे[9] ब्रह्मेन्द्रा॑य व॒ज्रिणे॑। स्तु॒ष ऊ॒ षु[10] नृत॑माय धृ॒ष्णवे॑ ॥३७॥

सखा॑यः । आ । शि॒षा॒म॒हे॒ । ब्रह्म॑ । इन्द्रा॑य । व॒ज्रिणे॑ ।
स्तु॒षे । ऊ॒ इति॑ । सु । नृऽत॑माय । धृ॒ष्णवे॑ ॥ ३७ ॥

हे सखायः सखिभूताः परस्परं प्रेमवन्तः वयं वज्रिणे वज्रोपेताय । अनेन अतिशयितवीर्यत्वम् अस्य उक्तं भवति तेन च तस्य अवश्ययष्टव्यतावगम्यते[11] । तादृशाय इन्द्राय देवाय ब्रह्म परिवृढं कर्म आ शिषामहे आशास्महे । कर्तुम् इति शेषः। आङः शासु[12] इच्छायाम् । लेटि आडागमः। 'शास इदङ्हलोः' ( पा ६,४,३४ ) इति विहितम् इत्त्वम् अत्र व्यत्ययेन भवति। 'शासिवसिघसीनां च' (पा ८,३,६०) इति षत्वम् । अथवा अयम् अर्थः। सखायो वयम् । यजमाना[13] इति शेषः । अस्मिन् पक्षे सखायः इन्द्रस्य सखिभूता इत्यर्थः । तत्सखित्वं च हविःप्रदानाभिमतफलप्रदानाभ्याम्[14] इति मन्तव्यम् । उ अपि च नृतमाय नेतृतमाय । नृणां मध्ये

---

१. एन S'. २. अक्तूनव्यंजकान् S'. ३. अग्निना S,. ४. वैतु. मंपा.
५. विद्म B,V,Dc. ६. व्ययम् P[2]. ७. स्थान् S;. ८. सविता च S'.
९. °महि॒ ऋ ८,२४,१. १०. षु वो S, ऋ. कौ१,३९०. ११. °ताचगम्यते S'.
१२. शसु S'. १३. °माना वयम्, १४. °लप्रदाभ्याम् S'.

इति शेषः। सर्वेषां देवानां मुख्यायेत्यर्थः । धृष्णवे धर्षकाय शत्रूणां प्रत्यावकाय एवंरूपाय इन्द्राय तत्प्रीणनाय स्तुषे स्तौमि । अथवा एकमेव वाक्यम् । उक्तविशेषणोपेताय इन्द्राय स्तुषे स्तोतुम् । ष्टुञ् स्तुतौ । तुमर्थे क्सेप्रत्ययः । ब्रह्म स्तुतिसाधनं मन्त्रजातम् आशिषामहे इच्छाम इति योजना ।

शवसा ह्यसि श्रुतो[१] वृत्रहत्येन वृत्रहा । मघैर्मघोनो अति शूर दाशसि ॥ ३८ ॥

शवसा । हि । असि[२] । श्रुतः[३] । वृत्रऽहत्येन । वृत्रऽहा । मघैः । मघोनः । अति । शूर । दाशसि[४] ॥३८॥

पूर्वमन्त्रे वज्रिणे ब्रह्म आ शिषामहे इत्युक्तम् । अनेन मन्त्रेण तस्य महत्त्वं वर्णयन् स्वाभिमतम् आशास्ते— हे इन्द्र वृत्रहा वृत्रस्य हन्ता[५] बलवतोऽसुरस्य हन्ता त्वं वृत्रहत्येव[६] वृत्रहननेनेव यथा श्रुतः एवं शवसा । बलनामैतत् । बलेन गोत्रभेदनबलनमुच्याद्यसुरविनाशकरणादिरूपसामर्थ्येन श्रुतः[७] विख्यातः असि तेन युक्तो भवसि । यस्माद् एवम् अतो मघैः मंहनीयैर्बहुविधैर्धनैः मघोनः धनवतः बहुविधैर्धनैराढ्योऽहम् इति मन्यमानस्य[८] आढ्यस्य । धनम् इति शेषः । हे शूर विक्रान्त त्वं तद्धनम् अति दाशसि अतिप्रयच्छसि । मह्यम् इति शेषः । त्वदर्थं यागम् अकुर्वाणस्य धनं तव यष्ट्रे मह्यं प्रयच्छेत्यर्थः । 'अयज्वनो विभजन्नेति वेदः' (ऋ १,१०३,६), 'आ नो भर प्रमगन्दस्य वेदः ( ऋ ३,५३,१४ ) इत्यादिश्रुतेः ।

स्तेगो न क्षामत्येषि पृथिवीं[९] मही[१०] नो वाता इह वान्तु भूमौ[१०] ।
मित्रो नो[११] अत्र[११] वरुणो [१२]युज्यमानो अग्निर्वने[१२] न व्यसृष्ट[१३] शोकम् ॥३९॥

स्तेगः । न । क्षाम् । अति । एषि । पृथिवीम् । मही इति । नः । वाताः । इह । वान्तु । भूमौ । मित्रः । नः । अत्र । वरुणः । युज्यमानः । अग्निः । वने । न । वि । असृष्ट[१४] । शोकम् ॥

[१५]स्त्यायति संघातेन बाहुल्येन शब्दं करोति वर्षास्विति स्तेगो मण्डूकः[१५] । स यथा क्षाम् क्षियन्ति निवसन्त्यत्रेति क्षा मही तां यथा अत्येति । वर्षाकाले भुवं परित्यज्य अप्सु प्लवत इत्यर्थः । एवं त्वं[१६] पृथिवीम् अत्येषि अतिगच्छसि ऊर्ध्वं

---

१. श्रितो A,P³,M,T,WM.,RW.; श्रितो > शृतो C; शृतो R, A,B²,E²,I,K². २. अस्ति P. ३. शृतः P,Bp² Kp; श्रितः Cp. ४. दाससि P². ५. हन्तः S'. ६. वैतु. संपा.; वृत्रत्यैव S'. ७. श्रतः S'. ८. समानस्य S'. ९. °त्येति पृथ्वीं ऋ १०,३१,९. १०. मिहं न वातो वि ह वाति भूम ऋ. ११. यत्र ऋ. १२. अज्यमानोऽग्नि° Km,V,Dc,O,R², ऋ. १३. तु. B,V,Dc,Op,R² वैतु. शंपा. व्यसृष्ट ऋ. च. १४. असृष्ट Bp², ऋ. च. १५. नास्ति, स्थानं तु द्वादशवर्णानां रिक्तम् S'. १६. सामर्थ्यादग्निः सूर्यो वा संबोध्यः.

गच्छसि । अथवा अतीति अभीत्यस्यार्थे । अभिगच्छसि सर्वां पृथिवीम् । मही इति पृथिवीविशेषणम् । महतीम् इत्यर्थः । अमः स्थाने सुः । अथवा महीति उत्तरत्र वाता इत्यनेन संबध्यते । किं च मही महान्तो वाता वायवः इह भूमौ नः अस्माकं वान्तु । अग्निसहायत्वेनेति शेषः । अस्माकं सुखायेति योज्यम् । किं च मित्रः सर्वप्राणिनां मित्रभूतः एतन्नामको देवः नः अस्माकम् अर्थाय अत्र अस्मिन् कर्मणि युज्यमानः सन् शोकं व्यसृष्टेति उत्तरत्र संबन्धः । तथा वरुणः अपि देवो युज्यमानः सन् शोकं व्यसृष्ट[1] । नाशयत्वित्यर्थः । सृज विसर्गे । अस्माद् दैवादिकात् लुङि रूपम् । तत्र दृष्टान्तः – अग्निर्वने न अग्निर्यथा तृणगुल्मादिकं कात्स्न्र्येन विसृजति दहति एवम् इति ।

स्तुहि श्रुतं गर्तसदं जनानां राजानं[2] भीममुपहत्नुमुग्रम् ।
मृडा जरित्रे रुद्र स्तवानो अन्यमस्मत् ते नि वपन्तु सेन्यम्[3] ॥ ४० ॥

स्तुहि[4] । श्रुतम्[5] । गर्तऽसदम् । जनानाम् । राजानम् । भीमम् । उपऽहत्नुम् । उग्रम् । मृड । जरित्रे । रुद्र । स्तवानः । अन्यम् । अस्मत् । ते । नि । वपन्तु । सेन्यम् ॥ ४० ॥

अत्र अग्निरूपो रुद्रः स्तूयते । 'रुद्रो वै क्रूरः' ( तै ६,१,७,७ ), 'एष रुद्रो यद् अग्निः' ( तैब्रा १,१,५,८ ) इति श्रुतेः । अत्र स्तोता स्वात्मानमेव संबोध्य ब्रूते । हे स्तोतस्त्वं श्रुतम् प्रसिद्धं गर्तसदम् । 'श्मशानसंचयोपि गर्त उच्यते' ( नि ३,५ ) इति निरुक्तोक्तेर्गर्तः शवदाहप्रदेशः । तत्र सीदतीति गर्तसत्[6] । प्रसिद्धो गर्तो वा परिगृह्यते । तस्य अरण्ये संचाराद् गर्तसदनं युज्यते । पुनः कीदृशम्— जनानां किरातपिशाचादिजनानां राजानम् स्वामिनम् । तथा भीमम् बिभेति अस्माद् इति भीमं भयजनकम् । तथा उपहत्नुम् उपेत्य हन्तारम् । उग्रम् उद्गूर्णबलम् । एवंमहानुभावं रुद्रम् हे आत्मन् स्तुहि स्तुतिं कुरु । अथ प्रत्यक्षवादः — हे रुद्र । सर्वप्राणिनो माम् अनिष्ट्वा[6] नश्यन्तीति स्वयं[7] रौति इति रुद्रः । 'रुद्रो रौतीति सतः' ( नि १०,५ ) इति निरुक्तम् । अथवा देवैर्भर्त्सितः सन् स्वयम् अरोदीद् इति रुद्रः । 'सोऽरोदीत् । यद् अरोदीत् तद् रुद्रस्य रुद्रत्वम्' ( तै १,५,१,१ ) इति श्रुतेः । यद्वा रुद् दुःखं दुःखहेतुभूतं पापं वा । तद् द्रावयतीति रुद्रः । स्वसेवकानां दुःखस्य द्रावकत्वं श्रुत्यागमप्रसिद्धम् । तादृशस्त्वं स्तवानः । कर्मणि कर्तृप्रत्ययः । अस्माभिः स्तूयमानः सन् मृड सुखय अस्मान्[8] । अतः ते सेन्यम् सेनाः अस्मत् अस्मत्तः अन्यम् तव द्वेष्टारं नि वपन्तु । वपिरत्र प्राप्त्यर्थः । नितरां

---

१. व्यसृष्टवान् S'. २. युवानं मृगं न ऋ २,३३,११. ३. सेनाः ऋ.
४. स्तुहि P,P[2]. ५. शुतम् P; सुतम् Cp. ६. °सदः शंपा. ७. अमिट्वा S'.
८. सौय S'. ९. मन्त्रे जरित्रे इति पदं विस्मरता सा. पदमिदं संयोजितम्.

प्राप्नुवन्तु । अथवा सैन्यम् तव सेनार्हम् । 'तद् अर्हति' ( पा ५,१,६३ ) इति यत्[1] । अन्यम् इति व्याख्येयम् । अस्मिन् पक्षे सेना इति शेषः सामर्थ्याल्लभ्यते ।

इति अथर्वसंहितायाम् अष्टादशे काण्डे प्रथमेऽनुवाके चतुर्थं सूक्तम् ।

पितृमेधकर्मणि 'सरस्वतीं देवयन्तः' ( ४१ ) इति तिसृभिः अग्निदाता कनिष्ठपुत्रश्चितौ दक्षिणत आज्येन सारस्वतहोमान् कुर्यात् ।

तत्रैव कर्मणि शवदहनस्थानम् 'उदीरताम्' ( ४४ ) इत्यृचा काम्पीलशाखया[2] उद्धृत्य अभ्युक्ष्य लक्षणं कुर्यात् ( तु. कौसू ८०,४३ ) ।

तथा पिण्डपितृयज्ञेपि अनया ऋचा गर्तं खनेत् । तथा च सूत्रितम्— "यज्ञोपवीती दक्षिणपूर्वम् अन्तर्देशम् अभिमुख[3] 'उदीरताम्' इति कर्षूं खनति प्रादेशमात्रीं[4] तिर्यगङ्गुलिमिताम्[5]" ( कौसू ८७,१४ ) इति ।

तत्रैव 'उदीरताम्' इति तृचेन[6] त्रीणि उदपात्राणि बर्हिषि निनयेत् । सूत्रितं हि — " 'उदीरताम् इति तिसृभिरुदपात्राण्यन्त्रृचं[7] निनयति'[8] ( कौसू ८७,२९ ) इति ।

तत्रैव 'इदं पितृभ्यः' ( ४६ ) इत्यृचा गर्ते दर्भान् स्तृणीयात् ।

पितृमेधे परेयिवांसम् ( ४९ ) इति द्वाभ्यां[9] कनिष्ठपुत्रेण चित्यादीपने सति याम्यौ होमौ [9]कुर्यात् ।

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।
सरस्वतीं सुकृतो हवन्ते[10] सरस्वती दाशुषे वार्यं दात् ॥ ४१ ॥

सरस्वतीम् । देवऽयन्तः । हवन्ते[11] । सरस्वतीम् । अध्वरे । तायमाने ।
सरस्वतीम् । सुऽकृतः । हवन्ते । सरस्वती । दाशुषे । वार्यम् । दात् ॥ ४१ ॥

सरस्वतीम् सरणवतीं सकलशब्दसरणिस्वरूपां वाग्देवतां देवयन्तः देवान् यष्टव्यान् आत्मनः इच्छन्तः । 'सुप आत्मनः क्यच्' ( पा ३,१,८ ) इति क्यच् । अत्र विनियोगानुसारेण देवः मृतशरीरस्य संस्कारकोऽग्निः यमो वाभिमतः । तम् इच्छन्तः हवन्ते आह्वानं कुर्वन्ति । तस्य प्रीणनायेति शेषः । तथा सरस्वतीम् एव अध्वरे यज्ञे ज्योतिष्टोमादौ तायमाने सति हवन्ते । 'तनोतेर्यकि' ( पा ६,४,४४ ) इति आत्त्वम् । यज्ञे सारस्वतहोमस्य विद्यमानत्वात् स्तोत्रशस्त्रादीनां वागात्मकत्वात् तत्सिद्धये च हवन्ते । अत्रापि विनियोगानुसारेण अध्वरः पैतृमेधिको द्रष्टव्यः । एवम् उत्तरत्रापि विनियोगानुसारेण योज्यम् । तथा सरस्वतीं सुकृतः सुकर्माणः स्वस्वाभि-

---

१. यः शंपा. २. °शाखाया S′. ३. °मुखम् S′. ४. °त्री S′. ५. °गङ्गुरिम् Bl. ६. तत्वेत S′. ७. ण्यमृचं S′. ८. नियति S′; निनयेत् Bl. ९. नास्ति, स्थानं तु उपैकादशवर्णानां रिक्तम् S′. १०. अह्वयन्त सा. ऋ १०,१७,७. ११. हवंते Cp.

मतफलाय अह्वयन्त[1] आह्वानम् अकुर्वन् पूर्वं । आह्वयन्ति इदानीम् इति सरस्वती देवी दाशुषे हविर्दत्तवते यजमानाय वार्यम् वरणीयं दात् प्रयच्छतु ।

सरस्वतीं पितरो[2] हवन्ते दक्षिणा[2] यज्ञमभिनक्षमाणाः ।
आसद्यास्मिन् बर्हिषि मादयध्वमनमीवा इष आ धेह्यस्मे ॥ ४२ ॥

सरस्वतीम् । पितरः । हवन्ते । दक्षिणा । यज्ञम् । अभिऽनक्षमाणाः । आऽसद्य । अस्मिन् । बर्हिषि । मादयध्वम् । अनमीवाः । इषः[3] । आ । धेहि । अस्मे इति ॥ ४२ ॥

सरस्वतीं देवीं पितरः अपि हवन्ते आह्वयन्ति । कीदृशाः— दक्षिणा । 'दक्षिणाद् आच्' (पा ५,३,३६) इति आच्प्रत्ययः । वेदेर्दक्षिणभागे यज्ञम् अभिनक्षमाणाः व्याप्नुवानाः । नक्षतिर्व्याप्तिकर्मा । 'सर्वकर्माणि तां दिशम्' (आश्रौ २,६,३) इत्यादिसूत्रात् वेदेर्दक्षिणभागे पैतृकं कृत्स्नं कर्म क्रियते । पितॄणामपि स्वधालाभाय सरस्वत्यपेक्षा विद्यत एव । तत्रापि मन्त्रादिरूपायाः सरस्वत्या अपेक्षितत्वम् । हे पितरः यूयम् अस्मिन् क्रियमाणे बर्हिषि यज्ञे आसद्य उपविश्य मादयध्वम् सरस्वतीं तर्पयत । आसद्य यूयं वा मादयध्वम् तृप्ता भवत । अस्माभिर्दत्तया स्वधयेति शेषः । किं च हे सरस्वति पितृभिराहूता त्वम् अनमीवाः हिंसकैः रक्षोभिर्वर्जिताः व्याधिरहिता वा इषः इष्यमाणाः एवंलक्षणानि अन्नानि अस्मे अस्मासु आ धेहि स्थापय ।

सरस्वति या सरथं ययाथोक्थैः[4] स्वधाभिर्देवि पितृभिर्मदन्ती ।
सहस्रार्घमिडो अत्र भागं रायस्पोषं यजमानाय[5] धेहि ॥ ४३ ॥

सरस्वति । या । सऽरथम् । ययाथ । उक्थैः । स्वधाभिः । देवि । पितृऽभिः । मदन्ती । सहस्रऽअर्घम् । इडः । अत्र । भागम् । रायः । पोषम् । यजमानाय । धेहि ॥ ४३ ॥

हे सरस्वति देवि या प्रसिद्धा त्वं सरथम् समानम् एकमेव रथं ययाथ यासि । सामर्थ्यात् पितृभिरिति गम्यते । या प्रापणे । लिटि 'अचस्तास्वत्थल्यनिटो नित्यम्' (पा ७,२,६१) इति थलि इडभावः । कीदृशी त्वम् । उक्थैः[6] शस्त्रैः स्वधाभिः । पितॄणाम् अन्नं स्वधा । ताभिश्च पितृभिः सह[7] मदन्ती आत्मानं तर्पयन्ती । त्वम् अत्र सहस्रार्घम् अनेकैः पुत्रादिभिः पूजनीयं पुत्रादिसंतर्पकम् बहुमूल्यत्वेन अनर्घं वा इडः अन्नस्य भागम् भजनीयम् अंशं रायस्पोषम् धनस्य गवादिलक्षणस्य पुष्टिं च यजमानाय मह्यं धेहि प्रयच्छ । रायस्पोषम् इति । 'षष्ठ्याः पतिपुत्र' (पा ८,३,५३) इत्यादिना सांहितिकं सत्वम् ।

---

१. वैतु. मंपा. २. हवन्ते दक्षिणा RW,WI,A,C,K^m. यां पितरो हवन्ते द° ऋ १०,१७,९. ३. इषम् P². ४. ययाथ ऋ १०,१७,८. ५. °मानेषु ऋ. ६. वहं उक्थैः S'. ७. ह नास्ति S'.

उदीरतामवर उत् परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ ४४ ॥

उत् । ईरताम् । अवरे । उत् । परासः । उत् । मध्यमाः । पितरः । सोम्यासः ।
असुम् । ये । ईयुः । अवृकाः । ऋतऽज्ञाः[1] । ते । नः । अवन्तु । पितरः । हवेषु ॥ ४४ ॥

अवरे वयसा[2] गुणैर्वा निकृष्टाः पितरः उदीरताम् उत्तिष्ठन्तु । ईर गतौ । आदादिकोऽनुदात्तेत् । तथा परासः परे वयआदिना श्रेष्ठाः पितरः उद् ईरताम् । एवं मध्यमाः उक्तप्रकारेण तादृशाः पितरः उद् ईरताम् उत्तिष्ठन्तु । अथवा [3]अवरे पुत्रपौत्रप्रपौत्राः[3] परासः परे वृद्धप्रपितामहादयः । मध्यमाः पितृपितामहप्रपितामहाः[4] । सर्वत्र उदीरताम् इति संबन्धः । यद्वा सोम्यास इति सोमसंबन्धाद् 'अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः' ( ५८ ) इत्यादिमन्त्रोक्ता अङ्गिरःप्रभृतयः पुरातनाः पितरः अत्र गृह्यन्ते। तेष्वेव तपआदिमहत्त्वतारतम्येन अवरपरमध्यमत्वलक्षणो विभागो द्रष्टव्यः । ते विशेष्यन्ते — सोम्यासः । सोमार्हाः सोमसंपादिनः । 'सोमम् अर्हति यः' ( पा ४,४,१३७ ) इति[5] यप्रत्ययः[5] । ये असुम् प्राणम् ईयुः प्राणोपलक्षितं लिङ्गशरीरं प्राप्ताः प्राणं वा प्रयच्छन्ति स्वयष्टृभ्यः । अवृकाः अहिंसकाः । ऋतज्ञाः सत्यविदः । ते तादृशाः पितरः हवेषु आह्वानेषु निमित्तभूतेषु नः अस्मान् अवन्तु रक्षन्तु ।

आहं पितॄन्त्सुविदत्राँ[6] अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ ४५ ॥

आ । अहम् । पितॄन् । सुऽविदत्रान्[7] । अवित्सि । नपातम् । च । विऽक्रमणम् । च ।
विष्णोः । बर्हिऽसदः । ये । स्वधया । सुतस्य । भजन्त । पित्वः । ते । इह । आऽगमिष्ठाः ॥

अहं सुविदत्रान् कल्याणधनान् पितॄन् आवित्सि आभिमुख्येन प्राप्नोमि आजानामि वा । विदेर्लाभार्थात् लुङि सिचि 'एकाच उपदेशेऽनुदात्तात्' ( पा ७,२,१० ) इति इट्प्रतिषेधः । 'लिङ्सिचावात्मनेपदेषु' ( पा १,२,११ ) इति कित्त्वाद् गुणाभावः । क्रियाफलस्य कर्तृगामित्वाद् आत्मनेपदम् । विदेर्ज्ञानार्थाद् वा लुङि व्यत्ययेन आत्मनेपदम् । इडभावः[8] । किं च विष्णोः । 'यज्ञो वै विष्णुः' ( तैब्रा ३,१,६,७ ) इति श्रुतेर्यज्ञाख्यस्य विष्णोः नपातम् न पातयितारम् । 'नभ्राण्नपात्' ( पा ६,३,७५ ) इत्या-

---

१. ऋतज्ञाः Cp. २. वय नास्ति S'. ३. नास्ति, स्थानं तु उपद्वादशवर्णानां रिक्तम् S'. ४. पितामहप्र नास्ति S'. ५. इति प्रत्ययः S'. ६. °दत्रँ R; °दत्रँ > °दत्राँ Dc. ७. विदत्राम् P². ८. इडाभावः S'.

दिना निपातितः। निर्वाहकम् अग्निं च आविवित्सि। तथा विक्रमणं च क्रमेण सवनत्रयाक्रमणं च आविवित्सि। अतो ये बर्हिषदः बर्हिषि निषीदन्तः एतन्नामकाः पितरः सन्ति। 'ये वै यज्वानो गृहमेधिनस्ते पितरो बर्हिषदः' (तु. तैब्रा १,६,९,६) इति श्रुतेः एवंलक्षणा ये स्वधया सह सुतस्य अभिषुतस्य। कर्मणि षष्ठी। सुतं सोमं भजन्त भजन्ते ते तान् हे अग्ने पित्वः। आसन्ननामैतत्[1]। आसन्नः सन् इह अस्मिन् कर्मणि आगमिष्ठाः आगमय। अथवा ये सोमं भजन्ते ते पितरः पित्वः अन्तिकं देशम् आगमिष्ठाः आगच्छन्तु।

इदं पितृभ्यो नमो अस्त्वद्य[2] ये पूर्वासो[3] ये अपरास[3] ईयुः[4]।
ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु दिक्षु[5] ॥ ४६ ॥

इदम्। पितृऽभ्यः। नमः। अस्तु। अद्य। ये। पूर्वासः। ये अपरासः। ईयुः। ये। पार्थिवे। रजसि। आ। निऽसत्ताः। ये। वा। नूनम्। सुऽवृजनासु। दिक्षु ॥ ४६ ॥

पितृभ्यः अद्य इदानीं क्रियमाणम् इदं नमोऽस्तु। 'नमस्कारो हि पितृणाम्' (तैब्रा १,३,१०,८) इति श्रुतेः नमउक्तिः क्रियते। पितॄन् विशिनष्टि— ये पूर्वासः पूर्वे परेताः[6] ईयुः पितृलोकं प्राप्ताः। उ[7] अपिच परासः[7] परे ईयुः। ये च पितरः पार्थिवे रजसि भूलोके आनिषत्ताः आनिषण्णाः स्थिताः। 'नसत्तनिषत्ता' (पा ८,२,६१) इत्यादिना निपातितः। वा अथ वा ये पितरो नूनम् [8]इदानीं सुवृजनासु[8] सुष्ठु विभक्तासु दिक्षु प्रागादिषु आ निषत्ताः। तेभ्यः सर्वेभ्यः पितृभ्यः इदं नमोस्तु इति पूर्वत्रान्वयः।

मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः।
यांश्च देवा वावृधुर्ये च देवांस्ते नोऽवन्तु पितरो हवेषु ॥ ४७ ॥

मातली। कव्यैः। यमः। अङ्गिरःऽभिः। बृहस्पतिः। ऋक्वऽभिः। ववृधानः। यान्। च। देवाः। ववृधुः। ये। च। देवान्। ते। नः। अवन्तु। पितरः। हवेषु ॥ ४७ ॥

मातली यमः बृहस्पतिः च पितृणां नेतारो देवाः। अत्र मातली नाम देवः कव्यैः एतत्संज्ञकैः पितृभिः सह वावृधानः वर्धमानो भवति यजमानप्रत्तेन हविषा। तथा यमो देवः अङ्गिरोभिः पितृभिः सह। यमस्य देवत्वं पितृत्वं चेति द्वैरूप्यम्

---

१. पितुशब्दस्य अन्नवाचकस्येदं रूपं, न तु पित्वशब्दः आसन्नवाची कश्चिदस्तीति चिन्त्यमिदम्।
२. नमोऽस्त्वद्य E[2], मा १९,६८. ३. य उपरास K[m],P[3],M,I,R[2],T; ऋ १०,१५,२ मा. तै २,६,१२,४ मै ४,१०,६; येऽपरा° पै २,३०,२. ४. परेयुः पै. ५. विक्षु E[2], ऋ. मा. तै. मै. पै; दिविक्षु P[3],M; प्रिक्षु I. ६. परितः S'. ७. वैतु, मंपा. ८. °नीं वृज° S'.

अस्ति । अत्र देवत्वं विवक्षितम् । तथा बृहस्पतिर्देवोपि ऋक्वभिः अर्चनीयैः एतन्नामकैः पितृभिः सह वावृधानः । तत्र यांश्च पितॄन् देवाः मातल्यादयः प्रमुखाः सन्तो वावृधुः वर्धयन्ति यज्ञे । ये च पितरः कव्यादयो देवान् निर्दिष्टान् वावृधुः वर्धयन्ति स्वधाप्रदाने[1] । ते अत्र निर्दिष्टाः पितरः नः अस्मान् हवेषु आह्वानेषु अवन्तु रक्षन्तु ।

स्वादुष्किलायं[2] मधुमाँ[3] उतायं तीव्रः किलायं रसवाँ[4] उतायम् ।
उतो न्व१स्य[5] पपिवांसमिन्द्रं न कश्चन सहत आहवेषु ॥ ४८ ॥

स्वादुः । किल । अयम् । मधुऽमान् । उत । अयम् । तीव्रः । किल । अयम् । रसऽवान् । उत । अयम् । उतो इति । नु । अस्य[6] । पपिऽवांसम् । इन्द्रम् । न । कः । चन । सहते । आऽहवेषु ॥

अत्र सोमः स्तूयते—अयम् अभिषुतः सोमः स्वादुः सुखेन आस्वाद्यः किल । यथा बालकं पयआदिकपानाय[7] स्वाद्वा[8]दिगुणकीर्तनेन प्ररोचयति तद्वद् अत्रापि अभिधीयते । उत अयं सोमः मधुमान् माधुर्योपेतः किल । यत एवम् अतः स्वादुरित्यर्थः । तथा अयं सोमः तीव्रः आशु मदयिता किल । उत अपि च अयं रसवान् बहुरसोपेतः किल । उतो अपि च नु किल अस्य अमुं सोमं पपिवांसम् पीतवन्तम् इन्द्रम् आहवेषु परस्पराह्वानवत्सु संग्रामेषु कश्चन असुरादिः न सहते नाभिभवति । तं सोढुं न शक्नोतीत्यर्थः । अनेनास्य अत्यन्तबलकरत्वम् उक्तं भवति । तत्र सर्वत्र स्वाद्वादिगुणेषु[8] अनुभवसिद्धेष्वपि [9]पितॄणां देवानां च तत्प्रत्यायनाय[9] किलेति प्रयुक्तम् इति मन्तव्यम् ।

परेयिवांसं[10] प्रवतो महीरिति[11] बहुभ्यः पन्थामनुपस्पशानम्[12] ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा सपर्यत[13] ॥ ४९ ॥

परेयिऽवांसम् । प्रऽवतः । महीः । इति । बहुऽभ्यः । पन्थाम् । अनुऽपस्पशानम् । वैवस्वतम् । सम्ऽगमनम् । जनानाम् । यमम् । राजानम् । हविषा । सपर्यत ॥ ४९ ॥

---

१. स्वप्राधान्ये S'. २. स्वादुः कि° C. ३. मधुमं R; मधुमां C; मधुमं > मधुमां Dc. ४. रसवं R; रसवं > रसवाँ Dc. ५. न्व३स्य C,R. ६. अस्य Cp. ७. °आदिकं पानाय S'. ८. द्वा नास्ति S'. ९. तत्पितॄणां देवानां प्रत्या° S'. १०. परेयुवांसं तैआ ६,१,१. ११. महीरति I; महीरत P³,M; महीरनु सा. ऋ १०,१४,१ मै ४,१४,१६ तैआ. १२. °मनप° तैआ. १३. दुवस्य ऋ. मै.; दुवस्यत तैआ.

परेयिवांसम्[1] परागतम् अत्यन्तविप्रकृष्टदेशं गतवन्तम् । [2]'उपेयिवाननाश्वाननूचानश्च' ( पा ३,२,१०९ ) इति क्वस्वन्तो निपातितः । उपसर्गग्रहणम् अतन्त्रम् । परागतिं विशिनष्टि—प्रवतो महीरनु[3] प्रकर्षवतीर्भूमीः[4] प्रति । सर्वां भूमिम् अतिक्रम्य वर्तमानम् इत्यर्थः । 'उपसर्गाच्छन्दसि धात्वर्थे' ( पा ५,१,११८ ) इति वतिः । अर्थग्रहणसामर्थ्यात् लिङ्गसंख्यायोगः । किं च बहुभ्यः पितृलोकं गतेभ्यः पन्थाम् पन्थानम् मार्गम् अनुपस्पशानम् । अनु इत्ययम् अवेत्यस्यार्थे । अवगच्छन्तम् इत्यर्थः । स्पशतिर्ज्ञानकर्मा[5] । एवंरूपम् वैवस्वतम् विवस्वतः पुत्रं जनानाम् मृतानां संगमनम् प्राप्तिस्थानभूतम् एवंमहानुभावं यमं राजानं हविषा सपर्यत पूजयत ।

यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ ।
यत्रा नः पूर्वे पितरः परेता[6] एना[7] जज्ञानाः पथ्या३ अनु स्वाः ॥ ५० ॥

यमः । नः । गातुम् । प्रथमः । विवेद । न । एषा[8] । गव्यूतिः । अपऽभर्तवै । ऊं इति ।
यत्र । नः । पूर्वे । पितरः । पराऽइताः । एना । जज्ञानाः । पथ्याः । अनु । स्वाः ॥५०॥

यमो देवः नः अस्माकं संबन्धिनां मृतानां गातुम् मार्गं प्रथमः पूर्वगामी सन् विवेद अजानात् । उ अपि च एषा मृतेन गन्तव्या यमेन नेतव्या गव्यूतिः पद्धतिः । मार्ग इत्यर्थः । 'गोर्यूतौ छन्दसि[9]' ( पावा ६,१,७९ ) इति वान्तादेशः । अपभर्तवै[6] अपहर्तुं देवैर्मनुष्यैर्वा परिहर्तुं न । शक्येति शेषः । अवश्यं गन्तव्यैवेत्यर्थः । आत्मसाक्षात्काररहितैः पुरुषैः स्वकर्मफलभोगाय पितृलोकप्राप्तेरावश्यकत्वात् । अपभर्तवै इति । 'तवै चान्तश्च युगपत्' ( पा ६,२,५१ ) इति उभयपदप्रकृतिस्वरत्वम् । यत्र यस्मिन् मार्गे नः अस्माकं पूर्वे पूर्वभाविनः पितरः [10]परेताः परागताः[10] येन[3] च मार्गेण पुनरागत्य जज्ञानाः जाताः सर्वे स्वाः स्वीयाः स्वस्वकर्मानुरोधिनीः पथ्याः हितकरा भूमीर्गच्छन्ति । स्वस्वकर्मोपार्जितानि स्थानानि स्वेषां हितानि भवन्ति । तं मार्गं [11]यमो विवेदेति पूर्वत्र संबन्धः[11] ।

इत्यथर्वसंहितायाम् अष्टादशे काण्डे प्रथमेनुवाके पञ्चमं सूक्तम् ।

पिण्डपितृयज्ञे 'बर्हिषदः पितरः' इत्यृचा बर्हिः स्तृणीयात् । सूत्रितं हि— "बर्हिर्गृहीत्वा विचृत्य संनहनं दक्षिणापरम्' इति प्रक्रम्य 'बर्हिरुदकेन संप्रोक्ष्य 'बर्हिषदः पितरः' ( १८, १,५१ ), 'उपहूता नः पितरः' ( अ १८,३,४५ ), 'अग्निष्वात्ताः पितरः' ( अ १८,३,४४ ), 'ये नः

---

१. परेयुवां° S'. २. उपेयुवान° S'. ३. वैतु. मंपा. ४. प्रकर्षवत्यो S'. ५. स्पर्शयति° S'. ६. परेयुर् ऋ १०,१४,२ मै ४,१४,१६. ७. येना S'. ८. एषां Cp. ९. आसपभ°S'. १०. परेता···यखंगताः रिक्तं स्थानमुपदशवर्णानाम् S'. ११. नास्ति, स्थानं तु उपदशवर्णानां रिक्तम् S'.

पितुः पितरः' ( अ १८,३,४६ ), 'येस्माकम् ' ( अ १८,४,६८ ) इति प्रस्तृणाति'' ( कौसू ८७, २६;२७ ) इति ।

तत्रैव कर्मणि 'आच्या जानु' ( ५२ ) इत्यृचा तस्मिन् बर्हिषि तिलान् प्रकिरेत् ।

पितृमेधे प्रेतास्थीनि अनया त्रिपादे शिक्ये उपवेशयेत् ।

पितृमेधे 'प्रेहि प्रेहि' ( ५४ ) इत्यनया प्रेतम् उत्थाप्य शकटे निदध्यात् ।

तत्रैव 'अपेत वीत' (५५) इत्यनया प्रेतदहनस्थानं काम्पीलशाखया[1] संप्रोक्षयेत् ।

पिण्डपितृयज्ञे 'उशन्तस्त्वा' ( ५६ ) इति द्वाभ्याम् ऋग्भ्यां द्वे काष्ठे गृहीत्वा अग्निम् आदीपयेत् । सूत्रितं हि—''द्वे काष्ठे गृहीत्वा 'उशन्तः' इत्यादीपयति । आदीतयोरेकं प्रतिनिदधाति'' ( कौसू ८७,१९;२० ) इति ।

तत्रैव 'अङ्गिरसो नः पितरो नवग्वाः' ( ५८ ) इति सप्तभिर्ऋग्भिः प्रेतशरीरे अग्निप्रदः पुत्रः आज्यं जुहुयात् ।

'इमं यम' ( ६० ) इत्यृचा यमाय चतुर्थीं[2] वपाहुतिं जुहुयात् ।

'इत एतद्[3] उदारुहन्' ( ६१ ) इति चतसृभिः उत्थापनीयाभिर्ऋग्भिः प्रेतम् उत्थाप्य शकटे शयने वा निदध्यात् ।

बर्हिषदः पितर ऊत्य१र्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शंतमेनाधा[4] नः[4] शं योररपो दधात[6] ॥ ५१ ॥

बर्हिऽसदः । पितरः । ऊती । अर्वाक् । इमा । वः । हव्या । चकृम । जुषध्वम् ।
ते । आ । गत । अवसा । शम्ऽतमेन । अध । नः । शम् । योः । अरपः । दधात ॥५१॥

हे बर्हिषदः । बर्हिषि आस्तीर्णे दर्भे सीदन्तीति बर्हिषदः । अन्त्यलोपश्छान्दसः । यज्ञम् आगताः हे पितरः यूयम् ऊती ऊत्या अस्मद्रक्षणेन निमित्तेन अर्वाक् अस्मदभिमुखम् । आगच्छतेति शेषः । आगते सति किं लभ्यम् अस्तीत्यत्राह । इमा इमानि पुरत आसन्नानि हव्या हव्यानि हवींषि वः युष्मभ्यं चकृम अकार्ष्म । तानि यूयं जुषध्वम् सेवध्वम् । ते तादृशा यूयम् आ गत आगच्छत । गमेर्लुङि 'मन्त्रे घस°' ( पा २, ४,८० ) इति च्लेर्लुक् । 'अनुदात्तोपदेश' ( पा ६,४,३७ ) इत्यादिना अनुनासिकलोपः । केन सहिताः । शंतमेन सुखतमेन अवसा रक्षणेन सह । अस्माकं क्लेशलेशेनापि रहितां रक्षां कर्तुम् आगच्छतेत्यर्थः । अथ[3] आगत्य च नः अस्मभ्यं शम् रोगाणां शमनं योः भयानां यावनं च अरपः । 'रपो रिप्रम् इति पापनामनी भवतः' ( नि ४,२१ )

---

१. °शाखाया S'.　२ °र्थी S'.　३. वैतु. मंपा.　४. °नाथा नः ऋ १०,१५,४ मा १९,५५ मै ४,१०,६ °नाथास्मभ्यं तै २,६,१२,२.　६. दधातन Op, मै.

इति निरुक्तम् । अपापं यथा तथा दधात । 'तप्तनप्तनथनाश्च' ( पा ७,१,४५ ) इति तस्य तबादेशः । तपः पित्त्वाद् आल्लोपाभावः । प्रयच्छत ।

**आच्या जानु दक्षिणतो 'निषद्येदं नो हविरभि गृणन्तु' विश्वे ।**
**मा हिंसिष्ट पितरः केन चिन्नो यद् व आगः पुरुषता कराम ॥ ५२ ॥**

आऽअच्य॑ । जानु॑ । दक्षिणतः । निऽसद्य॑ । इदम् । नः । हविः । अभि । गृणन्तु । विश्वे॑ ।
मा । हिंसिष्ट । पितरः । केन॑ । चित् । नः । यत् । वः । आग॑ः । पुरुषता॑ । करा॑म ॥५२॥

हे पितरः विश्वे सर्वे यूयं जानु आच्य जानुप्रदेशम् आकुञ्च्य । अनेन भोजनोचितः संनिवेश उक्तो भवति । दक्षिणतः वेदेर्दक्षिणभागे उपसद्य[2] उपविश्य इदम् नः अस्माभिर्दीयमानं पुरोवर्ति [3]हविः हव्यम्[3] अभि गृणीत[2] अभिष्टुत समीचीनम् इति ब्रूत । अनेन हविःस्वीकारः अर्थाद् उक्तो भवति । न हि अनास्वाद्यमानस्य प्रशंसास्ति । कर्तव्यविषये अतिक्रमे संजातेपि हिंसा[4] न कार्येति प्रार्थयते— हे पितरः यूयं केन चिद् अल्पेन महता वा अपराधेन नः अस्मान् मा हिंसिष्ट हिंसां मा कुरुत । [5]अपराधस्य संभावनाम् आह— पुरुषता[5] पुरुषत्वेन मनुष्यत्वेन हेतुना वः युष्माकं यद् आगः यम् अपराधं कराम कुर्मः । मनुष्याणाम् अनवधानाद् अतिक्रमसंभावनास्त्येवेत्यर्थः ।

**'त्वष्टा दुहित्रे वहतुं "कृणोति तेनेदं" विश्वं भुवनं समेति ।**
**यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ॥ ५३ ॥**

त्वष्टा॑ । दुहित्रे । वहतुम् । कृणोति । तेन॑ । इदम् । विश्व॑म् । भुव॑नम् । सम् । एति ।
यमस्य॑ । माता । परिऽउह्यमा॑ना । महः[8] । जाया । विव॑स्वतः । ननाश ॥ ५३ ॥

अस्य मन्त्रस्य[6] 'अपागूहन्' ( अ १८,२,३३ ) इति उपरि वक्ष्यमाणस्य च अर्थविवरणरूपा आख्यायिका बृहद्देवतानुक्रमणिकाकारेण स्पष्टं प्रदर्शिता—

'अभवन्मिथुनं त्वष्टुः [10]सरण्यूस्त्रिशिराः सह[10] ।
स वै सरण्यूं[11] प्रायच्छत् स्वयमेव विवस्वते ॥
ततः सरण्व्यां[12] जज्ञाते यमयम्यौ विवस्वतः ।
तौ चाप्युभौ यमावेव[13] ज्यायांस्ताभ्यां तु [14]वै यमः[14] ॥

---

१. द्येमं यज्ञमभि गृणीत ऋ १०,१५,६ मा १९,६२. २. वैतु. मंपा. ३. हव्यं हविः S'. ४. शिक्षा शंपा. ५. °धस्य···पु रिक्तं स्थानमुपदशवर्णानाम्. ६. अ ३, ३१,५ द्र. ७. कृणोतीनीदं ऋ १०,१७,१. ८. महः Cp. ९. गूहस्य S'. १०. सरण्युस्त्रिशिराश्च ह शंपा. ११. सरण्युं शंपा. १२. सरण्या S'. १३. यमौ स्यातां शंपा. १४. वैय्यमा S'.

सृष्ट्वा[1] भर्तुः परोक्षं तु सरण्यूः [2]सदृशीं स्त्रियम्[2] ।
निक्षिप्य मिथुनं[3] तस्याम् अश्वा भूत्वापचक्रमे[4] ॥

अविज्ञानाद्[5] विवस्वांस्तु तस्यामजनयन्मनुम् ।
राजर्षिरभवत् सोऽपि विवस्वानिव तेजसा ॥

स विज्ञाय त्वपक्रान्तां सरण्यूमश्वरूपिणीम् ।
त्वाष्ट्रीं प्रति जगामाशु वाजी[6] भूत्वा सलक्षणः[7] ॥

सरण्यूश्च[8] विवस्वन्तं विदित्वा हयरूपिणम् ।
मैथुनायोपचक्राम[9] तां च तत्रारुरोह[10] सः ॥

ततस्तयोस्तु वेगेन[11] शुक्रं[12] [13]तदपतद् भुवि[13] ।
उपाजिघ्रच्च[14] सा त्वश्वा तच्छुक्रं[15] गर्भकाम्यया ॥

आघ्रातमात्राच्छुक्रात्[16] तु कुमारौ संबभूवतुः ।
नासत्यश्चैव[17] दस्रश्च यौ [18]स्तुतावश्विनाविति[18] ॥' (बृदे ७,१-६ )

त्वष्टा **सिक्तस्य रेतसः पुरुषाद्याकारनिर्माता देव उच्यते** । 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति' ( तै १,५,९,२ ) **इत्यादिश्रुतेः । एतन्नामको देवः** दुहित्रे **स्वदुहितुः पुत्र्याः सरण्वाः**[19] **। षष्ठ्यर्थे चतुर्थी ।** वहतुम् **विवाहं** कृणोति **करोति** इति[20] **तेन कारणेन** इदं विश्वं भुवनम् **भूतजातं** समेति **संगतम् अभूत् । तद्दिदृक्षयेति शेषः ।** यमस्य **देवस्य** माता **जनयित्री सरण्यूः** पर्युह्यमाना **परिवाहम् उद्वाहं त्वष्ट्रा पित्रा क्रियमाणा । वहतेर्यकि यजादित्वात् संप्रसारणम् ।** महः **महतः अतिशयितप्रभावस्य** विवस्वतः **सूर्यस्य** जाया **सरण्यूः** ननाश **अदर्शनं तिरोधानं प्राप्ता ।** 'अपागूहन्नमृतां मर्त्येभ्यः' ( अ १८,२,३३ ) **इति वक्ष्यमाणत्वात् । अत्र निरुक्तम्**—'त्वष्टा दुहितुर्वहनं करोतीतीदं सर्वं भुवनं समेति । यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश । रात्रिरादित्यस्य । आदित्योदयेऽन्तर्धीयते' ( नि १२,११ ) **इति ।**

**प्रेहि॒ प्रेहि॑ प॒थिभिः॑ [21]पू॒र्व्याणै॒र्येना॑ ते॒ पूर्वे॑ पि॒तरः॒ परे॑ताः[21] ।**
**उ॒भा राजा॑नौ[22] स्व॒धया॒ मद॑न्तौ[23] य॒मं प॑श्यासि॒ वरु॑णं च दे॒वम् ॥५४॥**

---

१. दृष्ट° S′; दृष्ट्वा शंपा. २. सदृशां प्रियम् S′. ३. मिद्युतां S′; तद्युगं शंपा. ४. भूताप° S′. ५. °ज्ञाता शंपा. ६. इत्रो S′; अश्वो शंपा. ७. स्वल° S′. ८. °ण्युश्च शंपा. ९. मैथुनायाप° S′. १०. चाश्वमा° S′; चाश्वामा° शंपा. ११. योगेन शंपा. १२. शुक्लं शंपा. १३. तदपि तद्भुवि S′. १४. °उपजिघ्रति शंपा. १५. °छुक्लां S′; °छुक्लं शंपा. १६. °च्छुक्ता S′; °च्छुक्तात् शंपा. १७. °त्यश्चेव S′. १८. ताविश्वनादिति S′; तु ताव° शंपा. १९. सरण्याः S′. २०. वैतु. संपा. २१. पू॒र्व्येभि॒ (मै. पूर्वेभि) येना॑ न॒ः पूर्वे॑ पि॒तरः॑ परे॑युः (मै. परेताः) ऋ १०,१४,७ मै ४,१४,१६. २२. राजा॑ना ऋ॰ मै. २३. मद॑न्ता ऋ. मै.

प्र । इहि । प्र । इहि । पथिऽभिः । पूःऽयानैः । येन । ते । पूर्वे । पितरः । पराऽइताः ।
उभा । राजाना । स्वधया । मदन्तौ । यमम् । पश्यासि । वरुणम् । च । देवम् ॥ ५४ ॥

अत्र 'प्रेहि प्रेहि' इत्यनया प्रेतम् उत्थाप्य शकटे निदध्याद् इति विनियोगात् प्रेतस्य शकटं प्रति गमनम् अभिधीयते । हे प्रेत त्वं प्रेहि प्रेहि प्रगच्छ प्रगच्छ । शकटं प्रतीति शेषः । अथवा यमलोकं प्रति प्रेहि । द्विरभिधानम् आवश्यकगमनद्योतनाय । कैः साधनैरिति तत्राह— पूर्याणैः । यात्यनेनेति यानं वर्त्म । पुमांसो येन वर्त्मना पितृलोकं यान्ति स पूर्याणः । पुंभिः उह्यमानो वा शिबिकादिः पूर्याणः । पृषोदरादित्वाद् अयं साधुः । बहुवचनं पूजार्थम् । तैः पथिभिः प्रेहि । स मार्गो विशेष्यते । येन यानेन ते तव पूर्वे पितरः पितृपितामहाद्याः परेताः परागताः पितृलोकं प्राप्ताः । तत्र को लाभ इत्यत्राह । उभा उभौ राजाना[1] राजानौ देवेषु मध्ये क्षत्रियजातीयौ । 'यमो राजा' ( तैब्रा ३,१,२,११ ), 'वरुणो राजा' ( तैब्रा ३,७,७,६ ) इति श्रुतिषु सर्वत्र प्रसिद्धेः । स्वधया अस्माभिर्दत्तया मदन्तौ माद्यन्तौ । विद्येते इति शेषः । तत्र लोके यमं देवं पश्यासि पश्यसि वरुणं च देवं पश्यसि । अतः प्रेहीति पूर्वत्रान्वयः ।

अपेत वीत वि च सर्पतातोऽस्मा एतं† पितरो लोकमक्रन्[2] ।
अहोभिरद्भिरक्तुभिर्व्यक्तं[3] [4]यमो ‡ददात्यवसानमस्मै ॥ ५५ ॥

अप । इत । वि । इत[5] । वि । च । सर्पत । अतः[6] । अस्मै । एतम् । पितरः । लोकम् ।
अक्रन् । अहःऽभिः । अत्ऽभिः । अक्तुऽभिः । विऽअक्तम् । यमः । ददाति । अवऽसानम् । अस्मै ॥

अत्र अनया दहनस्थानं संप्रोक्षेत् इति विनियोगात् तत्स्थानस्थितानां रक्षःपिशाचादीनाम् अपगमनम् अभिधीयते । हे रक्षःप्रभृतयः यूयम् अपेत अपगच्छत । वीत । वी गत्यादिषु । अत्र गतिरर्थः । विगता भवत । अतः अस्माद् दहनस्थानाद् वि सर्पत च विविधं विशेषेण वा गच्छत । दूरं गच्छतेत्यर्थः । अपसारणीयान्[7] विशिनष्टि— ये[8] अत्र[8] स्थले पुराणाः[8] पुरातनाः स्थ[8] भवथ । ये[8] च[8] अत्र नूतनाः[8] इदानीन्तनाः स्थ[8] तिष्ठथ । ते सर्वे अपेतेति संबन्धः । अस्मै प्रेताय अहोभिः च अद्भिः क्षालनसाधनैरुदकैश्च अक्तुभिः अभिव्यक्तिसाधनाभी रात्रिभिश्च व्यक्तम् सुविशदम् अवसानम् अवस्यति अत्रेत्यवसानम् । षो अन्तकर्मणि । अधिकरणे ल्युट् । स्थानम् । तद् अस्मै यमो देवः ददाति अदात् । तदर्थम् अपेतेति संबन्धः ।

---

१. वैतु. मंपा. २. अक्रन्निमं पितरो लोकमस्मै मा १२,४५ तै ४,२,४,१ मै २,७,११ काठ १६,११. † एते S'. ३' द्युभिरहोभिरक्तु° मा ३५,१. ४. अदाद् ( तै. अदादिदं ) यमोऽवसानं पृथिव्या मा. तै. काठ. मै. ‡ ददात्वव° P³,M.I तैआ १,२७,५ मा ३५,१. ५. इत Cp. ६. इतः Cp. ७. अपसर° S'. ८. वैतु. मंपा. (तु. मा. प्रभृ.)

[1]उशन्तस्त्वेधीमह्युशन्तः[1] समिधीमहि ।
उशन्नुशत आ वह पितॄन् हविषे अत्तवे ॥ ५६ ॥

उशन्तः । त्वा । इधीमहि । उशन्तः[2] । सम् । इधीमहि ।
उशन् । उशतः । आ । वह । पितॄन् । हविषे । अत्तवे ॥ ५६ ॥

हे अग्ने अस्मिन् पितृयज्ञे त्वा त्वाम् उशन्तः यज्ञनिर्वाहार्थं त्वां कामयमाना हवामहे[3] आह्वानं कुर्मः । तथा उशन्तः कामयमानास्त्वां समिधीमहि सम्यग् इद्धं[4] करवाम । इन्धेर्विधिलिङि विकरणस्य लुक् छान्दसः। 'अनिदिताम्[5]' (पा ६,४,२४) इति धातुनकारस्य लोपः । त्वं च उशन् यज्ञं स्वधां वा[5] कामयमानः सन् उशतः स्वधां कामयमानान् पितॄन् आ वह । किमर्थम् । हविषे हविःस्वीकाराय अत्तवे तस्य च भक्षणाय । आ[6] वहेति संबन्धः ।

द्युमन्तस्त्वेधीमहि द्युमन्तः समिधीमहि ।
द्युमान् द्युमत[7] आ वह पितॄन् हविषे अत्तवे ॥ ५७ ॥

द्युऽमन्तः । त्वा । इधीमहि । द्युऽमन्तः । सम् । इधीमहि ।
द्युऽमान् । द्युऽमतः[8] । आ । वह । पितॄन् । हविषे । अत्तवे ॥ ५७ ॥

हे अग्ने द्युमन्तः दीप्तिमन्तः त्वदनुग्रहाद्[9] अतिशयिततेजसो वयं त्वा त्वां हवामहे[3] । शिष्टं पूर्वमन्त्रवद् योज्यम् ।

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
[10]तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ५८ ॥

अङ्गिरसः । नः । पितरः । नवऽग्वाः । अथर्वाणः । भृगवः । सोम्यासः ।
तेषाम् । वयम् । सुऽमतौ । यज्ञियानाम् । अपि । भद्रे । सौमनसे । स्याम ॥ ५८ ॥

अङ्गिरसः एतन्नामानः अङ्गारात्मकाः । 'येङ्गारा आसंस्तेङ्गिरसोभवन्' इति [11]ब्राह्मणम् ( ऐब्रा ३,३४ ) । पूर्वे महर्षयः नः पितरः अस्माकं पितरः । नवग्वाः नूतनस्तुतिका नवभिर्मासैरुद्गता वा । तथा अथर्वाणश्च नः पितरः भृगवः च नः पितरः । 'भृगुर्भृज्यमानो न देहे । अङ्गारेषु' इति निरुक्तम् ( नि ३,१७ ) । एते सर्वे सोम्यासः सोमार्हाः

---

१. °स्त्वा निधीमह्यु° ऋ १०,१६,१२ मा १९,७०; त्वा हवामह उश° तै २,६,१२,१ मै १,१०,१८ काठ २१,१४. २. उशतः P,P². ३. वैतु. संपा. ४. ऋद्धं S'. ५. अनुदिता । स्वधां वा । ताम् S'. ६. नास्ति S'. ७. द्युमंत A,B,C,R,WM.,RW. ८. °मंतः P,P². ९. तदनु° S'. १०. पृ ७२५ टि २,३ अ ७,९७,१ च द्र. ११. वैतु. शंपा. निरुक्तम्.

सोमसंपादिनः । एषाम् अङ्गिरःप्रभृतीनाम् ऋषिगणमध्ये प्राधान्याद् इदानीन्तनानामपि प्राचुर्येण तद्गोत्रत्वात् पितृत्वम् । यज्ञियानाम् यज्ञार्हाणां तेषां सुमतौ शोभनायाम् अनुग्रहरूपायां बुद्धौ वयं स्याम भवेम । तेषां सुमतिरस्मासु भवेद् इत्यर्थः । अपि अपि च तेषां भद्रे कल्याणे सौमनसे सुमनसो भावः सौमनसम् । युवादिषु पाठो द्रष्टव्यः । तत्र स्याम भवेम । उक्तस्यैवार्थस्य स्पष्टाभिधानम् एतत् ।

[1]अङ्गिरोभिर्यज्ञियैरा गहीह यम वैरूपैरिह मादयस्व ।
विवस्वन्तं हुवे यः पिता तेऽस्मिन् बर्हिष्या[2] निषद्य ॥ ५९ ॥

अङ्गिरःऽभिः । यज्ञियैः । आ । गहि । इह । यम । वैरूपैः । इह । मादयस्व ।
विवस्वन्तम् । हुवे । यः । पिता । ते । अस्मिन् । बर्हिषि । आ । निऽसद्य ॥ ५९ ॥

हे यम इह अस्मिन् कर्मणि अङ्गिरोभिः एतन्नामकैः पितृभिः सह आ गहि आगच्छ । कीदृशैः । यज्ञियैः यज्ञार्हैः । एवं वैरूपैः विरूपाख्यस्य महर्षेर्गोत्रजैः[3] सह आ गहि । आगत्य च इह अस्मिन् यज्ञे मादयस्व तर्पयस्व[4] । न केवलं त्वामेव ह्वयामि । किं तु ते तव यः पिता विवस्वान् आदित्यः तं विवस्वन्तं हुवे आह्वयामि । ह्वयतेर्लटि 'बहुलं छन्दसि' (पा ६,१,३४) इति संप्रसारणम् । अस्मिन् बर्हिषि आ आस्तीर्णे निषद्य । यथा हविः स्वीकरोति तथा आह्वयामीति शेषः । आभिमुख्येन निषद्य इति वा ।

इमं यम प्रस्तरमा हि रोहाङ्गिरोभिः[5] पितृभिः संविदानः ।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषो[6] मादयस्व ॥ ६० ॥

इमम् । यम । प्रऽस्तरम् । आ । हि । रोह । अङ्गिरःऽभिः । पितृऽभिः । सम्ऽविदानः ।
आ । त्वा । मन्त्राः । कविऽशस्ताः । वहन्तु । एना । राजन् । हविषः । मादयस्व ॥ ६० ॥

हे यम इमम् पुरत आस्तीर्णं प्रस्तरम् [7]बर्हिः । उपस्तीर्णो[7] दर्भः प्रस्तरः । 'प्रे स्त्रोऽयज्ञे' (पा ३,३,३२) इति निषेधाद् घञभावः । 'ऋदोरप्' (पा ३,३,५७) । तं प्रस्तरम् आ सीद[5] । हि इति पादपूरणः । किमेक एव । नेत्याह । अङ्गिरोभिः एतन्नामकैः पितृभिः सह संविदानः ऐकमत्यं[8] प्राप्तः । 'समो गमादिषु विदिप्रच्छि[9]' (पावा १,३,२९) इति आत्मनेपदम् । हे राजन् त्वा त्वां कविशस्ताः कविभिः क्रान्तप्रज्ञैर्महर्षिभिः स्तुता मन्त्राः आह्वानसाधना आ वहन्तु आह्वानं कुर्वन्तु आगमयन्तु[10] । आगत्य च एना

---

१. अङ्गिरोभिरा गहि यज्ञियेभिर् ऋ १०,१४,५ तै २,६,१२,६ मै ४,१४,१६. २. यज्ञे बर्हि° ऋ. तै. मै. ३. महर्षिगो° S'. ४. तर्पय S'. रोहांगि° C,K[m]; हि रोहांगि° R; सीदाङ्गि° ऋ १०,१४,४ तै. मै. ६. हविषा ऋ. तै. मै. ७. बर्हिष उप° S'. ८. वैतु. संपा. (तु. ऋ. प्रभृ.). ९. एक° S'. १०. आ नास्ति S'.

एनेन अनेन । 'द्वितीयाटौस्स्वेनः' (पा २,४,३४) इति एनादेशः । सर्वविधीनां छन्दसि विकल्पितत्वाद् इनादेशाभावः[1] । हविषः । तृतीयार्थे षष्ठी । हविषा अस्माभिर्दत्तेन मादयस्व ।

इत एत उदारुहन्[2] दिवस्पृष्ठान्यारुहन्[3] ।
[4]प्र भूर्जयो† यथा पथा‡ द्यामङ्गिरसो ययुः‡[4] ॥ ६१ ॥

इतः । एते । उत्ऽआरुहन्[5] । दिवः । पृष्ठानि । आ । अरुहन् ।
प्र । भूःऽजयः[6] । यथा । पथा । द्याम् । अङ्गिरसः । ययुः ॥ ६१ ॥

शवसंस्कर्तारः पुरुषाः एतत्[7] मृतशरीरम् इतः अस्माद् भूप्रदेशाद् उदारुहन् ऊर्ध्वं शकटादिकम् आरोहयन् । 'इत एतद्' इति शकटे शयने वा प्रेतं निदध्याद् इति विनियोगात् (तु. कौसू ८०,३५) । अनन्तरं दिवः द्युलोकस्य पृष्ठानि स्प्रष्टव्यानि उपरितनस्थलानि भोग्यस्थानानि आरुहन् आरोहयन् । रुहेर्लुङि 'कृमृदृरुहिभ्यश्छन्दसि' (पा ३,१,५९) इति च्लेः अङ् । ङित्त्वाद् गुणाभावः । द्युलोकं केन पथा आरोहयन्निति तत्राह— भूर्जयः भरणवन्तो भुवं जितवन्तो वा अङ्गिरसः यथा यादृशेन पथा मार्गेण द्याम् द्युलोकं प्र ययुः प्राप्ताः । तेन मार्गेण दिवस्पृष्ठान्यारुहन् इति संबन्धः ।

इत्यथर्वसंहितायां प्रथमेऽनुवाके अष्टादशे काण्डे षष्ठं सूक्तम् ।

इति प्रथमोऽनुवाकः समाप्तः ।

द्वितीयेनुवाके षट् सूक्तानि । तत्र[8] 'यमाय सोमः' इति प्रथमं सूक्तम् । अत्र आदितस्तिसृणाम् ऋचां पूर्वर्चा सह प्रेतोत्थापनकर्मणि उक्तो विनियोगः[9] ।

पितृमेधे 'मैनमग्ने' (४) इत्यादिभिः 'सहस्रणीथाः कवयः' (१८) इत्यन्ताभिः 'अव सृज' (१०) [10]इत्यृग्वर्जिताभिश्चतुर्दशभिर्ऋग्भिर्दह्यमानं प्रेतशरीरं सर्वे गोत्रिण उपतिष्ठेरन् ।

'मैनमग्ने' इति चतसृभिः प्रेतशरीरे कनिष्ठपुत्रेण दत्तम् अग्निं गोत्रिण आदीपयेयुः ।

तत्रैव कर्मणि 'अजो भागः' (८) इति द्वाभ्यां चितेर्दक्षिणपार्श्वे अजपशुं बध्नीयात् । यथा दह्यते तथा बन्धनं कार्यं मोचनं न कर्तव्यम् । तथा च [11]माहकिराचार्यः— 'अजो हन्यते दह्यते एकाग्निप्रेतशरीरदहने' इति ।

---

१. एनादेशस्य निघाताभावश्च द्र. । पृ. ५२१,८ मन्त्रोक्ता प्रक्रिया वा द्र. २. तु. B.K^m, RW. कौ १,९२ वैतु. शंपा. उदारु°; उदारु° R. ३. °रुहत् V. ४. वैप १,२२५५d द्र. † भूर्जयो B,C,K^m,R,V,Dc. ‡ पथोद् कौ. ‡ ययुः कौ. ५. तु. मंपा. वैतु. शंपा. उत् । आ । अरुहन् । कौ. उत् । आरुहन्. ६. भूः । जयः कौ. पपा. ७ वैतु. संपा. ८. तत्र प्रथमा S'. ९. विनियुक्तः S'. १०. °वर्चताभि° S'. ११. माहिकि° S'.

पितृमेध एव चतुर्थेऽहनि 'अव सृज' इत्यनया [1]एकाग्निकस्याहिताग्नेः शरीरम् अनुमन्त्रयेत।

ऋ. अथर्वा, दे. यमः, मन्त्रोक्ताः ; ४-३४ अग्निः, ५- जातवेदाः, २८ पितरः

यमाय [2]सोमः पवते[2] यमाय क्रियते[3] हविः ।
यमं ह यज्ञो गच्छत्यग्निर्दूतो[4] अरंकृतः ॥ १ ॥

यमाय । सोमः । पवते । यमाय । क्रियते । हविः ।
यमम् । ह । यज्ञः । गच्छति । अग्निऽदूतः । अरम्ऽकृतः ॥ १ ॥

यमाय देवाय सोमः पवते पूयते अभिषूयते सोमयागे यजमानैः । कर्मणि कर्तृप्रत्ययः [5]शप् पूधातोः । सोमसाधनो[5] ज्योतिष्टोमादिरननुष्ठितश्चेद् यमो नरके पातयिष्यतीति भिया यमप्रीतये सोमोभिषूयत इत्यर्थः । अथवा पितृणां सोमसंवन्धेन[6] यमस्यापि सोमोस्त्येव । किं च यमाय एव हविः आज्यादिलक्षणं क्रियते संस्क्रियते उत्पवनादिसंस्कारेण। किं च यमं ह यममेव यज्ञः कृत्स्नो ज्योतिष्टोमादिः गच्छति। कीदृशो यज्ञः। अग्निदूतः। दूतो यथा स्वामिना दत्तं धनादिकं दातव्याय प्रयच्छति एवम् अग्निरपि यजमानेन दत्तं हविस्तस्मैतस्मै देवाय प्रयच्छतीत्यग्निर्दूत इत्यभिधीयते। अरंकृतः[7] स्तोत्रशस्त्रादिभिर्भूषितः । यद्वा अलम्[8] अत्यर्थं निष्पादितः । साङ्गोपाङ्ग इत्यर्थः। यद्यपि सोमो हविश्च उभे सर्वार्थं क्रियेते तथा यज्ञोपि सर्वदेवार्थः तथापि यमस्य सर्वप्राणिसंहर्तृत्वेन वा सर्वेषां पितृलोकप्रापकत्वेन वा प्राधान्याद् यमायैव सोमादिकं क्रियत इत्युपचर्यते ।

यमाय मधुमत्तमं[9] [10]जुहोता† प्र च तिष्ठत[10] ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ २ ॥

यमाय । मधुमत्ऽतमम् । जुहोत । प्र । च । तिष्ठत ।
इदम् । नमः । ऋषिऽभ्यः । पूर्वऽजेभ्यः । पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥ २ ॥

अत्रापि पूर्वमन्त्रवद् यमस्य प्राधान्याभिप्रायेण होमप्रतिष्ठे तस्यैव कर्तव्ये इत्यभिधीयते। हे यजमानाः यमाय एव देवाय मधुमत्तमम् अतिशयेन मधुमत् सोमाज्यादिकं हविः जुहोत जुहुत। 'तप्तनप्तन°' (पा ७,१,४५) इति तस्य तबादेशे गुणः। प्र च तिष्ठत प्रतिष्ठां समाप्तिं यमायैव कुरुत। ननु यमायैव हूयते तत्सहचारिणां पितृणां किं स्याद् इत्याशङ्क्य तेषां नमस्कारः क्रियत इत्याह इदं नम इति ।

---

१. तु. के.; वैतु. S' एकाहिकस्या°. २. सोमं सुनुत ऋ १०,१४,१३ तैआ ६,५,१. ३. जुहुता ऋ. तैआ. ४. गच्छत्वग्नि° तैआ. ५. शपधात्तत्स्वामिसाधने S'. ६. °बंधनो S'. ७. वैतु. मंपा. ८. अलयम् S'. ९. घृतवद्धविर् ऋ १०,१४,१५. १०. राज्ञे हव्यं जुहोतन ऋ. † °त ऋ.

ऋषिभ्यः **मन्त्रादिद्रष्टृभ्यः अङ्गिरःप्रभृतिभ्यः**। 'ऋषिर्दर्शनात्। स्तोमान् ददर्शेत्यौपमन्यवः' **इति निरुक्तम्,** 'तद् यद् एनांस्तपस्यमानान् ब्रह्म [1]स्वयंम्भ्वभ्यानर्षत् त ऋषयोऽभवंस्तद्[1] ऋषीणाम् ऋषित्वम् इति विज्ञायते' (नि २,११) **इति च निरुक्तम्। ऋषयो विशेष्यन्ते—** पूर्वजेभ्यः **पूर्वम् उत्पन्नेभ्यः इदानींतनयजमानापेक्षया तेषां पूर्वजत्वम्। अत एव** पूर्वेभ्यः [2]पथिकृद्भ्यः। **पथिकृतः पितृलोकस्य पथां कर्तारः। ये प्रथमं परेताः स्वर्गमार्गाणां दर्शयितारस्ते पथिकृतः पितृगणगताः**[2]**। तेषां मार्गाणाम् इदानीन्तनैरपि अनुस्रियमाणत्वात्**[3]**। एवंमहानुभावेभ्य ऋषिभ्यः अङ्गिरःप्रभृतिभ्यः इदं नमः नमस्कारोस्तु।**

यमाय [4]घृतवत् पयो[4] [5]राज्ञे †हविर्जुहोतन[5]।
स नो [6]जीवेष्वा यमेद्दीर्घमायुः[6] प्र जीवसे ॥ ३ ॥

यमाय। घृतऽवत्। पयः। राज्ञे। हविः। जुहोतन।
सः। नः। जीवेषु। आ। यमेत्। दीर्घम्। आयुः[7]। प्र। जीवसे[8] ॥ ३ ॥

हे **यजमानाः** यमाय राज्ञे घृतवत् **घृतोपेतं** पयः **क्षीरं** हविः **हवीरूपेण संस्कृतं** जुहोतन **जुहोत जुहुत। तस्य तनबादेशे गुणः। तेन किं लभ्यत इत्यत आह।** स **प्राप्तहविः सन्** नः **अस्मान्** जीवेषु **जीवत्सु प्राणिषु मध्ये** आ यमत्[9] **नियमयेत् स्थापयेत्। यथा मृतिर्न भवेत् तथा करोतु। किं च स यमः** दीर्घम् आयुः **शतसंवत्सरलक्षणम् प्रयच्छतु इति शेषः। किमर्थम्।** जीवसे **जीवनाय।**

मैनमग्ने वि दहो माभि शूशुचो[10] मास्य त्वचं चिक्षिपो मा शरीरम्।
शृतं यदा करसि[11] जातवेदोथेमेनं[12] प्र हिणुतात् पितॄँरुप[13] ॥ ४ ॥

मा। एनम्। अग्ने। वि। दहः। मा। अभि। शूशुचः[14]। मा। अस्य। त्वचम्। चिक्षिपः। मा। शरीरम्। शृतम्। यदा। करसि। जातऽवेदः। अथ। ईम्[15]। एनम्। प्र। हिनुतात्। पितॄन्। उप ॥ ४ ॥

---

१. स्वयंभुवभ्यानवृषत्तवृषयोब्रुवं तद् S' २. °कृद्भ्यः···गणगताः रिक्तं स्थानमुपविंशवर्णानाम् S'. ३. अनुसर्यमा° S'. ४. मधुमत्तमं ऋ १०,१४,१५; °वंद्धविर् ऋ १०,१४,१४ तैआ ६,५,१. ५. जुहोत प्र च तिष्ठत ऋ. तैआ. † हव्यं ऋ. ६. देवेष्वा यमद्दीर्घ° ऋ. तैआ.; यमद्दी° D[2]; °यमे दी° A,B,C,K[m],R,WM.; °युष् K[m],V,Dc. ७. आयु P. ८. जीवसे Cp. ९. वैतु. मंपा. १०. शोचो ऋ १०,१६,१ तैआ ६,१,४. ११. कृणवो ऋ.; करवो तैआ. १२. °वेदोमेनं A; वेदोथेमेनं C; वेदोथेममेनं R; WM.;RW. १३. पितृभ्यः S'. ऋ. तैआ. १४. शुशुचः Bp[2]. १५. इमम् P[2]; इमम् > इम् (?ईम्) P.

हे अग्ने एनं प्रेतं मा वि दहः विदाहम् अतिदाहं मा कार्षीः । तथा माभि शूशुचः । शुचेर्लुङि चङि रूपम् । 'दीर्घो लघोः' ( पा ७,४,९४ ) इति अभ्यासस्य दीर्घः । अभितः शोकयुक्तं मा कार्षीः । उपर्यधश्च उभयोः पार्श्वयोरपि दाहाद् अभितः शोको भवति तदभावोत्र प्रार्थ्यते । किं च अस्य त्वचं मा चिक्षिपः अन्यत्र मा गमय । त्वग्भेदं मा कुर्वित्यर्थः । तथा शरीरम् अपि मा चिक्षिपः । अस्य शवशरीरस्य आहुतिरूपत्वात् पुरोडाशादिवद् विदाहाद्यभावः प्रार्थ्यते । यदा त्वम् एतच्छरीरं शृतम् हविर्योग्यं पक्वं करसि करोषि । श्रा पाके । 'श्रृतं पाके' ( पा ६,१,२७ ) इति कर्मणि कर्तरि वा निपातनात् शृभावः । करसीति । करोतेः औत्सर्गिकः शप् । लेटि वा अडागमः । हे जातवेदः जातप्रज्ञ अग्ने अथ शृतकरणानन्तरम् ईम् एनं पितृभ्यः[1] उप पितृसमीपं प्र हिणुतात् प्रहिणु प्रेरय ।

यदा शृतं कृणवो[2] जातवेदोथेममेनं[3] परि दत्तात् पितृभ्यः ।
यदो[4] गच्छात्यसुनीतिमेतामथ[5] देवानां वशनीर्भवाति ॥ ५ ॥

यदा । शृतम् । कृणवः । जातऽवेदः । अथ । इमम्[6] । एनम् । परि । दत्तात् । पितृऽभ्यः ।
यदो इति । गच्छाति[7] । असुऽनीतिम् । एताम् । अथ । देवानाम् । वशऽनीः । भवाति[8] ॥

हे जातवेदः प्राप्तहविर्लक्षणधन अग्ने त्वम् एनं शृतम् पक्वं यदा कृणवः अकरोः अथ अनन्तरम् इदम्[9] इदानीम् एनं दाहेन संस्कृतं पुरुषं पितृभ्यः परि दत्तात् प्रयच्छ । यद्वा परिदानं रक्षणाय दानम् इति प्रसिद्धेस्तस्य रक्षणाय प्रयच्छ । उ अपि च अयम् एतां प्रसिद्धाम् असुनीतिम् असून् प्राणान् नयति लोकान्तरम् इति असुनीतिः प्राणापहर्त्री देवता तां यदा गच्छाति गच्छति अथ अनन्तरम् अयं देवानाम् द्योतमानानां स्वकीयानाम् इन्द्रियाणां वशनीः वशं नयतीति वशनीः 'सत्सूद्विष' ( पा ३,२,६१ ) इत्यादिना क्विप् । चक्षुरादीन्द्रियाणां सूर्यादिदेवताप्रापको भवाति भवति ।

त्रिकद्रुकेभिः पवते[10] षडुर्वीरेकमिद् बृहत् ।
त्रिष्टुब् गायत्री छन्दांसि सर्वा ता यम आर्पिता[11] ॥ ६ ॥

त्रिऽकद्रुकेभिः । पवते । षट् । उर्वीः । एकम् । इत् । बृहत् ।
त्रिऽस्तुप् । गायत्री । छन्दांसि । सर्वा । ता । यमे । आर्पिता ॥ ६ ॥

---

१. वैतु. मंपा. २. करसि ऋ १०,१६,२. ३. °थेदमेनं A; थेमेनं ऋ. तैआ ६,१,४. ४. यदा ऋ. तैआ. ५. °मथा ऋ. तैआ. ६. इदम् । ईम् Cp. ७. गच्छति P; गच्छाति Cp. ८. भवति P. ९. एवं स्वरो न सिध्यति. १०. पतति ऋ १०,१४,१६ तैआ ६,५,३. ११. आहिता ऋ. तैआ.

त्रिकद्रुकेभिः **त्रिकद्रुकैः। ज्योतिष्टोमगोष्टोमायुष्टोमास्त्रयः त्रिकद्रुका इत्युच्यन्ते। तैर्निमित्तभूतैस्तेषां निष्पत्तये** पवते **पूयते यमार्थम् अभिषूयते। सोम इति शेषः। ज्योतिष्टोमादीनाम् अननुष्ठाने[1] यमो हनिष्यतीति भीत्या तेषु सोमोभिषूयत इत्यर्थः। तथा** षडुर्वीः **षडुर्व्यः।** 'षण्मोर्वीरंहसस्पान्तु' (आश्रौ १,२,१) **इत्यत्राम्नानाद् द्यौश्च पृथिवी च अहश्च रात्रिश्च आपश्च ओषधयश्च एताः षड् उर्व्यः। ता अपि** एकमित् **एकमेव** बृहत् **महान्तं यमम्। उद्दिश्यैव प्रवर्तन्त इति शेषः। अथवा बृहत् इति उत्तरत्र अन्वेति। बृहत् बृहती छन्दः तथा** त्रिष्टुब् गायत्री **इति च्छन्दांसि।** ता **तानि इतराणि** सर्वा **सर्वाणि छन्दांसि** यमे आर्पिता **आर्पितानि पर्यवसितानि। छन्दोभिरुपलक्षिताः सर्वे मन्त्रा यमैकविषया इत्यर्थः। ऋ गतौ।** 'अर्तिह्री' (पा ७,३,३६) **इत्यादिना पुगागमः।** 'जुष्टार्पिते च च्छन्दसि' (पा ६,१,२०९) **इति आद्युदात्तत्वम्[2]।**

**सूर्यं [3]चक्षुषा गच्छ[3] [4]वातमात्मना दिवं[4] [5]च गच्छ[5] पृथिवीं च धर्मभिः[6]।**
**अपो वा[7] गच्छ[8] यदि तत्र ते हितमोषधीषु प्रति तिष्ठा शरीरैः॥ ७॥**

सूर्यम्। चक्षुषा। गच्छ। वातम्। आत्मना। दिवम्। च। गच्छ। पृथिवीम्। च। धर्मऽभिः। अपः। वा। गच्छ। यदि। तत्र। ते। हितम्। ओषधीषु। प्रति। तिष्ठ। शरीरैः॥७॥

**हे मृत पुरुष त्वं** सूर्यं **देवं** चक्षुषा **चक्षुर्द्वारेण** गच्छ **। सूर्यप्राप्तौ चक्षुरेव द्वारम्।** 'आदित्यश्चक्षुर्भूत्वाक्षिणी[9] प्राविशत्' (ऐआ २,४,२) **इति पूर्वम् अक्षिणि आदित्यानुप्रवेशात्। तथा** वातम् **वायुं सूत्रात्मानम्** आत्मना **। अत्र आत्मशब्देन मुख्यः प्राणोभिधीयते। तेन तं गच्छ। अत्रापि** 'वायुः प्राणो भूत्वा नासिके प्राविशत्' (ऐआ २,४,२) **इति श्रुतेः वातप्राप्तौ प्राण एव द्वारम्। एवं** धर्मभिः **शरीरधारकैः इतरैरिन्द्रियैः** दिवं च पृथिवीं च **गच्छ।** वा **अथ वा** अपो गच्छ **उदकानि अन्तरिक्षं वा प्राप्नुहि।** यदि तत्र **अप्सु अब्देवतायां** ते **तव** हितं **भवेत्। अनेन तत्तत्स्थानप्राप्तेरैच्छिकत्वं सूचितं भवति।** ओषधीषु **व्रीहियवादिषु** शरीरैः **स्वावयवैः[10] कर्मेन्द्रियैः। यद्वा पूजार्थं बहुवचनम्। शरीरेण स्थूलेन** प्रति तिष्ठ **प्रतिष्ठितो भव।**

**अजो [11]भागस्तपसस्तं[11] तपस्व तं ते शोचिस्तपतु तं ते अर्चिः।**
**यास्ते शिवास्तन्वो[12] जातवेदस्ताभिर्वहैनं[13] सुकृतामु लोकम्[13]॥ ८॥**

---

१. अनुष्ठाने S'. २. आर्पितशब्देऽस्य प्रवृत्तिश्चिन्त्या, गतिरनन्तरः (पा ६,२,४९) इति पूर्वपदप्रकृतिस्वर इति युक्तम्। वैप्र १,६९९ O च द्र. ३. चक्षुषा गच्छ R; चक्षुषा गच्छ > चक्षुषा गच्छ Dc; चक्षुर्गच्छतु ऋ १०,१६,३ तैआ ६,१,४. ४. °त्मा द्यां ऋ. तैआ. ५. च गच्छ A,C,K^m,Cp,R. RW,WI ६. धर्मणा ऋ. तैआ. ७. वा B,V,Dc. ८. गच्छं Op,R. ९. भूत्वाक्षिणीः S'. १०. स्वदवयवै S'. ११. ऽभागस्तपसा तं तैआ. °पसा तं ऋ १०,१६,४. १२. तनुवो तैआ. १३. वहेमं सुकृतां यत्र लोकाः तैआ.

अजः । भागः । तपसः । तम् । तपस्व । तम् । ते । शोचिः । तपतु । तम् । ते । अर्चिः ।
याः । ते । शिवाः । तन्वः । जातऽवेदः । ताभिः । वह । एनम् । सुऽकृताम् । ऊं इति । लोकम् ॥

हे अग्ने अयम् अजः तव भागः । अनुस्तरणीत्वेन अजस्य[1] हन्यमानत्वाद् एवम् उच्यते । तं तपसा[2] तापकेन तव तेजसा तपस्व संतापय । तम् एव अजं भागं ते तव शोचिः दीप्तिः तपतु संतापयतु । तम् एव अजं ते अर्चिः [3]ज्वालालक्षणं तेजः[3] तपतु । एवम् अजस्य तापादिविषयताम् अभिधाय अथ प्रेतस्य अभिमतलोकप्राप्तिम् आशास्ते— उ अपि च हे जातवेदः प्राप्तपशुलक्षणधन त्वं ते याः शिवाः सुखकराः तन्वः सन्ति । 'ये ते अग्ने शिवे तनुवौ' ( तैब्रा १,१,७,२ ) इत्यध्वर्युमन्त्रोक्ता विराट्स्वराडाद्याः शिवास्तन्वः[4] सन्ति ताभिः तनूभिः शरीरसुखकरीभिः एनं प्रेतं सुकृताम् पुण्यकृतां लोकम् स्थानं वह प्रापय ।

**यास्ते शोचयो रंहयो जातवेदो याभिरापृणासि[5] दिवमन्तरिक्षम् ।**
**अजं [6]यन्तमनु ताः समृण्वतामथेतराभिः शिवतमाभिः शृतं[7] कृधि ॥ ९ ॥**

याः । ते । शोचयः । रंहयः । जातऽवेदः । याभिः । आऽपृणासि । दिवम् । अन्तरिक्षम् ।
अजम् । यन्तम् । अनु । ताः । सम् । ऋण्वताम् । अथ । इतराभिः । शिवऽतमाभिः । शृतम्[8] । कृधि ॥

हे जातवेदः ते याः शोचयः । शोचयन्तीति शोचयः । तादृशो याः सन्ति । तथा या रंहयः वेगवत्यः । रहि गतौ । औणादिक इप्रत्ययः[9] । तन्वः सन्ति । किं च याभिः तनूभिर्ज्वालारूपाभिः दिवम् अन्तरिक्षं च आप्रीणासि[2] पूरयसि तर्पयसि वा ताःतव तन्वो यन्तं गच्छन्तम् अजम् अनुस्तरणीलक्षणं समृण्वताम् संगच्छन्ताम् । अथ । अथेत्ययं प्रकारान्तरद्योतनार्थः । इतराभिः तनूभिः शिवतराभिः[2] अत्यन्तसुखकराभिः अमुं प्रेतं श्रृतम् पक्कं हविर्योग्यं कृधि कुरु ।

**अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधावान्[10] ।**
**आयुर्वसान उप यातु[11] शेषः[12] सं गच्छतां तन्वा[13] सुवर्चाः[14] ॥ १० ॥**

अव । सृज । पुनः । अग्ने । पितृऽभ्यः । यः । ते । आऽहुतः । चरति[15] । स्वधाऽवान् ।
आयुः । वसानः । उप । यातु । शेषः । सम् । गच्छताम् । तन्वा । सुऽवर्चाः ॥ १० ॥

---

१. अजाय S'. २. वैतु. मंपा. ३. ज्वालालक्षणतमेव S'. ४. तनुवः S'. ५. °राप्रीणासि S'. ६. युन्त° B. ७. शिवं C,WM.; शृतं > शिवं R. ८. शिवम् P,P². ९. इप्रत्यये रंहयः इत्यत्र स्वरः? १०. स्वधाभिः ऋ १०,१६,५ तैआ ६,४,२. ११. वेतु ऋ. १२. शेषं तैआ. १३. तनुवा तैआ. १४. जातवेदः ऋ. तैआ. १५. चरति Cp.

हे अग्ने त्वम् एनं प्रेतं तव हविष्ट्वेन कल्पितं पितृभ्यः पुनरव सृज अत्यन्तं त्यज प्रयच्छ। पितृलोकस्थानायेत्यर्थः। यः प्रेतपुरुषः ते त्वयि आहुतः आहुतित्वेन दत्तः स्वधावान् अस्माभिर्दत्ताभिः स्वधाभिस्तद्वान् सन् चरति गच्छति। किं च शेषः। अपत्यनामैतत्। 'शेष इत्यपत्यनाम। शिष्यते प्रयतः' (नि ३,२) इति निरुक्तम्। [1]आयुर्वसानः [1]आयुष्मान् सन् उप यातु स्वगृहं प्रति गच्छतु। स च प्रेतः सुवर्चाः शोभनेन वर्चसा युक्तः सन् तन्वा पितृलोकावस्थानोचितेन शरीरेण सं गच्छताम् युक्तो भवतु। यद्वा चतुर्थपादोपि अपत्यविषयतया योजनीयः। तत्पक्षेपि स च शेषः सुवर्चाः सन् तन्वा स्वीयेन शरीरेण सं गच्छताम्। अनेन पितृमृतिदुःखात् पुत्रस्य शरीरत्यागाभावो वर्चस्वित्वं च प्रार्थितं भवति।

इत्यष्टादशे काण्डे द्वितीयेऽनुवाके प्रथमं सूक्तम्।

पितृमेधे 'अति द्रव' इति अष्टानाम् ऋचां दह्यमानप्रेतशरीरोपस्थाने विनियोग उक्तः।

तथा एताभिरष्टभिर्दहनदेशं[2] नीयमानं प्रेतशरीरम् अनुमन्त्रयेत।

संचयनकर्मणि एताभिरष्टभिः हरिणीसंज्ञिकाभिर्ऋग्भिः अस्थिपूर्णं कलशं निखननप्रदेशं प्रति हरेयुः।

तत्र 'अति द्रव' इति तिसृभिः प्रेतहस्तयोर्दीयमानं गोपशुवृक्कद्वयम् अनुमन्त्रयेत।

'स्योनास्मै भव' इति तिसृभिर्मुमूर्षुं यजमानम् अग्निहोत्रशालायाम् आस्तीर्णेषु दर्भेषु स्थापयेत्।

तथा एताभिस्तिसृभिर्ऋग्भिः अग्नेरुत्तरपार्श्वे[3] प्रेतस्य शरीरं शकटाद् अवतारयेत्। इदं कर्म दहनस्थाने कर्तव्यम्।

तथा अस्थिपूर्णकलशस्य भूमौ निखननपक्षे 'स्योनास्मै भव' (१९) इत्यृचा कलशम् अभिमन्त्र्य निखनेत्।

अति॑ द्रव॒ श्वानौ॑ सारमे॒यौ च॑तुर॒क्षौ श॒बलौ॑ सा॒धुना॑ प॒था।
अधा॑[4] पि॒तॄन्त्सु॑वि॒दत्राँ॑ अपी॑हि[5] य॒मेन॒ ये स॑ध॒माद॒ं मद॑न्ति ॥ ११ ॥

अति॑। द्र॒व॒। श्वानौ॑। सा॒र॒मे॒यौ। च॒तुः॒ऽअ॒क्षौ[6]। श॒बलौ॑। सा॒धुना॑। प॒था।
अध॑। पि॒तॄन्। सु॒ऽवि॒दत्रा॑न्। अपि॑। इ॒हि॒। य॒मेन॑। ये। स॒ध॒ऽमाद॑म्। मद॑न्ति ॥ ११ ॥

---

१. सत⋯यन् रिक्तं स्थानमुपपञ्चदशवर्णानाम् S'. २. दहनशेषं S'. ३. अग्निरुत्तरं° S'. ४. अधा ऋ १०,१४,१० तैआ ६,३,१. ५. उपेहि ऋ. ६. °अक्षौ Cp.

प्रेतः संबोध्यते। हे पितृलोकं गच्छन् प्रेत सारमेयौ सरमा नाम देवशुनी तस्याः पुत्रौ। 'स्त्रीभ्यो ढक्' (पा ४,१,१२०)। चतुरक्षौ चत्वारि अक्षीणि ययोः। एकैकस्य चतुरक्षत्वम्। 'बहुव्रीहौ सक्थ्यक्ष्णोः०' (पा ५,४,११३) इति षच् समासान्तः। शबलौ शबलवर्णौ[1]। यद्वा नामधेयम् एतत्। श्यामशबलसंज्ञकौ। शबलाविति द्विवचनेन श्यामोपि विवक्ष्यते। स्मर्यते हि—

'श्वानौ द्वौ श्यामशबलौ वैवस्वतकुलोद्भवौ।
ताभ्यां बलिं प्रदास्यामि स्यातां मे तावहिंसकौ॥' (तु. आह्निकसूत्रावलि, वैश्वदेवप्रयोग) इति।

तौ श्वानौ साधुना समीचीनेन ऋजुना पथा मार्गेण अति द्रव अतीत्य गच्छ। अध अथ अनन्तरं सुविदत्रान्। विदत्रशब्दो धनवाची। सुधनान् शोभनहवीरूपान्नान्। यद्वा। वेत्तेः कत्रन्[2] प्रत्ययः। ज्ञानवाची विदत्रशब्दः। संज्ञानान् पितॄन् अपेहि[3]। अपशब्दः उपोपसर्गस्यार्थे। उपेहि। उपगच्छेत्यर्थः। यद्वा अपशब्दो वर्जनार्थः। अपवृज्य मार्गे आसीनौ[4] श्वानौ वर्जयित्वा पितॄन् इहि गच्छ। एतेर्लोटि रूपम्। ये पूर्वजाः पितरो यमेन पितृराजेन सधमादम् सह मादनं तृप्तिर्यस्मिन् कर्मणि तत् सधमादं सह तृप्तिर्हर्षो वा यथा भवति तथा मदन्ति माद्यन्ति तान् इहीति संबन्धः। 'सध मादस्थयोश्छन्दसि' (पा ६,३,९६) इति सहस्य सधादेशः। मादयतेरेरजन्तो[5] माद इति माद्यतेर्वा व्यत्ययेन घञ्।

यौ ते॒ श्वानौ॑ यम रक्षि॒तारौ॑ चतु॒रक्षौ॑ प॑थि॒षदी॑[6] नृ॒चक्ष॑सा[7]।
ताभ्यां॑ राजन् परि॑ [8]धेह्येनं स्व॒स्त्य॑स्मा अनमी॒वं च॑ धेहि॥ १२॥

यौ। ते॒। श्वानौ॑। [9]य॒म॒। र॒क्षि॒तारौ॑। च॒तुः॒ऽअ॒क्षौ॑[10]। प॒थि॒सदी॒ इति॑ प॒थि॒ऽसदी॑। नृ॒ऽचक्ष॑सा। ताभ्या॑म्। रा॒ज॒न्। परि॑। धे॒हि॒। ए॒न॒म्। स्व॒स्ति। अ॒स्मै॒। अ॒न॒मी॒वम्। च॒। धे॒हि॒॥ १२॥

यमरक्षितारौ[3] यमो रक्षिता गोपायिता ययोः। 'ऋतश्छन्दसि' (पा ५,४,१५८) इति कबभावः। 'अन्तोदात्तप्रकरणे त्रिचक्रादीनाम् उपसंख्यानम्' (पावा ६,२,१९९) इति अन्तोदात्तत्वम्। यद्वा यमशब्देन तत्स्वामिकं पुरम् उच्यते। यमपुरस्य पालयितारौ। कृदुत्तरपदप्रकृतिस्वरत्वेन अन्तोदात्तत्वम्। चतुरक्षौ व्याख्यातम्। पथिसदी पितृभिर्गन्तव्ये मार्गे सीदन्तौ। 'छन्दसि वनसनरक्षिमथाम्' (पा ३,२,२७) इति विहित इन्प्रत्ययः सदेरपि व्यत्ययेन भवति। नृचक्षसा नृचक्षसौ[11] नृणां गन्तॄणां द्रष्टारौ हे राजन् पितॄणां स्वामिन् ते त्वदीयौ यौ श्वानौ वर्तेते ताभ्यां श्वभ्याम् एनम्

---

१. शबलशबलवर्णौ S'. २. षक S'. ३. वैतु. मंपा. ४. मार्गसिनौ S'.
५. एरजन्ते स्वरः? ६. प॑थि॒रक्षी॑ ऋ १०,१४,११ तैआ ६,३,१. ७. नृ॒चक्ष॑सौ ऋ.
८. देहि ऋ. तैआ. ९. य॒म॒ऽर॒क्षि॒तारौ॑ Cp. १०. °अक्षौ॑ Cp. ११. नृचक्षौ S'.

अन्वादिष्टं प्रेतं परि धेहि। परिदेहीत्यर्थः। रक्षणार्थं दानं परिदानम् इत्युच्यते। किं च अस्मै त्वदीयं लोकं गच्छते स्वस्ति। स्वस्तीत्यविनाशिनाम। अविनाशम् अनमीवम् अमीवो रोगः बाधा तद्रहितं स्थानं च धेहि विधेहि।

उ॒रू॒ण॒सावसुतृपावुदुम्बलौ[1] य॒मस्य॑ दू॒तौ च॑रतो॒ जना॒ँ अनु॑।
ताव॒स्मभ्यं॑ दृ॒शये॒[3] सूर्या॑य पुन॑र्दाता॒मसु॑म॒द्येह॑[4] भ॒द्रम्॥ १३॥

उ॒रु॒ऽन॒सौ। अ॒सु॒ऽतृपौ॑। उ॒दु॒म्ब॒लौ। य॒मस्य॑। दू॒तौ। च॒र॒तः॒। जना॑न्। अनु॑।
तौ। अ॒स्मभ्य॑म्। दृ॒शये॑। सूर्या॑य। पुन॑ः। दा॒ता॒म्। असु॑म्। अ॒द्य। इ॒ह। भ॒द्रम्॥ १३॥

उरुणसा[5] उरुणसौ विस्तीर्णनासिकौ। नासिकाशब्दस्य नस्भावः[6]। सुप आकारः। असुतृपौ प्राणिनाम् असुभिः प्राणैस्तृप्यन्तौ। प्राणापहारकौ उदुम्बलौ। विस्तीर्णबलावित्यर्थः। पूर्वपदे वर्णोपजनश्छान्दसः। यमस्य दूतौ प्रेष्यौ जनान् जननवतः उत्पत्तिमतः प्राणिनः अनु अनुलक्ष्य चरतः[7] तेषां प्राणान् अपहर्तुं सर्वत्र संचरतः। तौ दूतौ सूर्याय। 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थी। दृशये दर्शनाय। 'इगुपधात् कित्' (पाउ ४,१२०) इति औणादिक इप्रत्ययः। कित्त्वात् लघूपधगुणाभावः। सूर्यं द्रष्टुम् अद्य इदानीम् इह अस्मच्छरीरे भद्रम् भन्दनीयम् असुम् पञ्चवृत्तिकं प्राणम् अस्मभ्यं पुनर्दाताम् पुनः प्रयच्छताम्। ददातेश्छान्दसे लुङि 'गातिस्था°' (पा २,४,७७) इति सिचो लुक्। बाहुलकाद् अमाङ्योगेपि अडभावः।

सोम॒ एके॑भ्यः पवते घृ॒तमेक॒ उपा॑सते।
येभ्यो॒ मधु॑ प्र॒धाव॑ति॒[8] तांश्चि॑दे॒वापि॑ गच्छतात्॥ १४॥

सोम॑ः। एके॑भ्यः। प॒व॒ते॒। घृ॒तम्। एके॑। उप॑। आ॒स॒ते॒।
येभ्य॑ः। मधु॑। प्र॒ऽधाव॑ति[9]। तान्। चि॒त्। ए॒व। अपि॑। ग॒च्छ॒ता॒त्॥ १४॥

इदमादिभिः पञ्चभिर्ऋग्भिः म्रियमाणानां यजमानानां वर्तनम् अत्र प्रतिपाद्यते। एकेभ्यः केभ्यश्चित् पितृभ्यः सोमः पवते उपभोगाय कुल्यारूपेण प्रवहति येषां गोत्रजाः सामानि ब्रह्मयज्ञसमयेऽधीयते। श्रूयते हि— 'यत् सामानि सोम एभ्यः पवते' (तैआ २,१०,१) इति। एके अन्ये पितरः घृतम् आज्यम् उपासते

---

१. वुलुम्बलौ तैआ ६,३,२; °पा उदुम्बरौ पै १०,९,१०.　२. ऽवशाँ तैआ.　३. दृशे- दृशेद? पै.　४. पुनर्दत्तावसुं तैआ.　५. वैतु. मंपा.　६. अच्प्रत्ययश्च समासान्तो बहुव्रीहौ द्र. (पा ५,४,११८)　७. रतः नास्ति S'.　८. तु. सा. W. ऋ १०,१५४,१; वैतु. A,B,C,R,V,Dc,RW. प्रधावधि; K[m],WM. प्रधावधि.　९. तु. मंपा.; वैतु. Cp प्रऽधौ। अधिं; P,P[2] प्रऽधौ। अधि.

उपगच्छन्ति। उपभुञ्जत इत्यर्थः। येषां पुत्रादयो यजूंषि ब्रह्मयज्ञकालेऽधीयते। श्रुतिश्च भवति— 'यद् यजूंषि घृतस्य कूल्याः' (तैआ २,१०,१) इति। येभ्यः पितृभ्यः। तादर्थ्ये चतुर्थी। उपभोगाय मधु क्षौद्रं प्रधावति प्रवाहरूपेण शीघ्रं गच्छति। ये आथर्वणान् मन्त्रान् ब्रह्मयज्ञार्थम् अधीयते तेषां पितॄन् प्रति मधु मधुकुल्या प्रवहति। तथा चाम्नायते— 'यद् अथर्वाङ्गिरसो[1] मधोः कूल्याः' (तैआ २,२०,१) इति। तांश्चिदेव पूर्वोक्तान् सर्वान् एव हे म्रियमाण प्रेत वा अपि गच्छतात् अपिगच्छ प्राप्नुहि। 'तुह्योः०' (पा ७,१,३५) इति हेस्तातङ् आदेशः।

ये चित् पूर्व [2]ऋतसाता ऋतजाता[2] ऋतावृधः।
ऋषीन्[3] तपस्वतो यम [4]तपोजाँ अपि[4] गच्छतात्॥ १५॥

ये। चित्। पूर्वे। ऋतऽसाताः। ऋतऽजाताः। ऋतऽवृधः।
ऋषीन्। तपस्वतः। यम। तपःऽजान्। अपि। गच्छतात्॥ १५॥

ये चित् ये च पूर्वे पूर्वपुरुषा ऋतसाताः ऋतम् सत्यं यज्ञो वा तेन दत्ताः संभक्ता वा। सनोतेर्निष्ठायां 'जनसनखनां सञ्झलोः' (पा ६,४,४२) इति आत्वम्। अत एव ऋतजाताः ऋतेन सत्येन जाता उत्पन्नाः ऋतावृधः [5]ऋतस्य वर्धकाश्च[5] भवन्ति। तपस्वतः तपसा युक्तान् तपोजान् तपसः सकाशादेव उत्पन्नान् ऋषीन् अतीन्द्रियार्थदर्शिनस्तान् हे यम यमवत् नियत यद्वा यमेन पितृराजेन नीयमान हे प्रेत त्वम् अपि गच्छतात् [6]अपिगच्छ प्राप्नुहि[6]।

तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः[7]।
तपो ये चक्रिरे महस्तांश्चिदेवापि[8] गच्छतात्॥ १६॥

तपसा। ये। अनाधृष्याः। तपसा। ये। स्वः। ययुः।
तपः। ये। चक्रिरे[9]। महः। तान्। चित्। एव। अपि। गच्छतात्॥ १६॥

ये जनाः तपसा कृच्छ्रचान्द्रायणादिना युक्ताः सन्तः अनाधृष्याः पापैरप्रधृष्या भवन्ति। ये च तपसा यागादिरूपेण साधनेन स्वः स्वर्गं ययुः यान्ति प्राप्नुवन्ति। ये च महः महत् तपः अन्यैर्दुष्करं राजसूयाश्वमेधादिकं हिरण्यगर्भाद्युपासनं वा चक्रिरे कुर्वन्ति। एते येषु लोकेषु वर्तन्ते तेषु लोकेषु तांश्चिदेव तानेव तपस्विनः हे प्रेत अपि गच्छतात् अपिगच्छ।

---

१. °थर्वांगिरो S'. २. ऋतसाप ऋतावान ऋ १०,१५४,४. ३. पितॄन् ऋ. ४. ताँश्चिदेवापि ऋ. ५. ऋततस्य वर्धकांश्च S'. ६. नास्ति, स्थानं तु उपनववर्णानां रिक्तम् S'. ७. सुवर्गताः तैआ ६,३,२. ८. महत्तां° तैआ. ९. चक्रिरे Cp.

ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः[1] ।
[2]ये वा सहस्रदक्षिणास्तांश्चिदेवापि[2] गच्छतात् ॥ १७ ॥

ये । युध्यन्ते । प्रऽधनेषु । शूरासः । ये । तनूऽत्यजः ।
ये । वा । सहस्रऽदक्षिणाः । तान् । चित् । एव । अपि । गच्छतात् ॥ १७ ॥

प्रधनेषु । **प्रकीर्णानि अस्मिन् धनानि भवन्तीति प्रधनाः[3] संग्रामाः । तेषु** शूरासः **शौर्यवन्तो** ये युध्यन्ते **शत्रून् संप्रहरन्ते ।** ये **च** तनूत्यजः [4]**तत्र ये**[4] **शरीराणि त्यक्तारो भवन्ति ।** ये वा **ये च** सहस्रदक्षिणाः **सहस्रदक्षिणान् क्रतून् अनुष्ठितवन्तः** तान् **सर्वान् एव हे प्रेत त्वम् इतो गच्छ । ते येषु उत्तमेषु लोकेषु निवसन्ति तं लोकं प्राप्नुहीत्यर्थः ।**

सहस्रणीथाः कवयो ये गोपायन्ति सूर्यम् ।
ऋषीन् तपस्वतो यम तपोजाँ अपि गच्छतात् ॥ १८ ॥

सहस्रऽनीथाः । कवयः । ये । गोपायन्ति । सूर्यम् ।
ऋषीन् । तपस्वतः । यम । तपःऽजान् । अपि । गच्छतात् ॥ १८ ॥

सहस्रणीथाः **सहस्रनयनाः**[5] कवयः **क्रान्तदर्शिनो** ये सूर्यम् **आदित्यं** गोपायन्ति **रक्षन्ति** तपस्वतः **तपसा युक्तान्** तपोजान् **तपसः सकाशादेव उत्पन्नान् तान्** ऋषीन् **हे** यम **नियत शकटे बद्ध वा यमेन नीयमान वा हे प्रेत त्वम्** अपि गच्छतात् **अपिगच्छ ।**

[6]स्योनास्मै भव पृथिव्यनृक्षरा[6] निवेशनी ।
[7]यच्छास्मै[7] शर्म सप्रथाः[8] ॥ १९ ॥

स्योना । अस्मै । भव । पृथिवि । अनृक्षरा । निऽवेशनी ।
यच्छ । अस्मै । शर्म । सऽप्रथाः ॥ १९ ॥

**हे** पृथिवि **प्रथिते भूमे वेदिरूपे त्वम्** अनृक्षरा **अनाधिका** निवेशनी **निविशन्ति अत्रेति निवेशनी शयनार्हा सती** अस्मै **मुमूर्षवे जनाय अस्थिरूपप्रेताय वा** स्योना **सुखकरी** भव । **किं च** अस्मै **पूर्वोक्ताय** सप्रथाः **प्रथः प्रख्यानं विस्तीर्णता तत्सहिता**[3] **त्वं** शर्म **सुखं** यच्छ **देहि । दाणू दाने ।** 'पाघ्रा' ( पा ७,३,७८ ) **इत्यादिना यच्छादेशः ।**

---

१. तनुत्यजः तैआ ६,३,२. २. तांस्त्वं सहस्रदक्षिणांस्तां° पै २०,४०,८. ३. बहुव्रीहौ स्वरः ? ४. यत्रय S'. ५. °नयवाः S'. ६. स्योना पृथिवि भवानृ° ( नो भवानृ° मा ) ऋ १,२२,१५ मा ३५,२१ मै ४,१२,२ काठ ३८,१३ तैआ १०,१,१०. ७. यच्छा नः ऋ. मा. मै. काठ. तैआ. ८. सप्रथः ऋ. मै. काठ.

असंबाधे पृथिव्या उरौ लोके नि धीयस्व ।
स्वधा याश्चकृषे[1] जीवन्[2] तास्ते सन्तु मधुश्चुतः[3] ॥ २० ॥

असम्ऽबाधे । पृथिव्याः । उरौ । लोके । नि । धीयस्व ।
स्वधाः[4] । याः । चकृषे । जीवन्[5] । ताः । ते । सन्तु । मधुऽश्चुतः[6] ॥ २० ॥

हे मुमूर्षो प्रेत वा असंबाधे । संबाधः संमर्दः । तद्रहिते उरौ विस्तीर्णे पृथिव्याः अग्निहोत्रवेदिलक्षणाया लोके लोक्यमाने स्थाने नि धीयस्व निधापितो भव । दधातेः कर्मणि यक् । पूर्वं त्वं जीवन् जीवनवान्[7] याः स्वधाः स्वम् आत्मानं दधाति पुष्णाति धिनोतीति स्वधा अन्नं दैवानि हवींषि स्वधाकारेण दत्तानि पित्र्याणि हवींषि च चकृषे कृतवान् असि । करोतेर्लिटि क्रादिनियमाद् इडभावः । ताः स्वधाः ते तव मधुश्च्युतः[8] मधुप्रवाहक्षारयित्र्यः[9] सन्तु भवन्तु । उपलक्षणम् एतत् । मधुररसघृतसोमादिप्रवाहरूपा भवन्तु ।

इति द्वितीयेनुवाके द्वितीयं सूक्तम् ।

'ह्वयामि' (२१) इति आद्यायाः 'स्योनास्मै भव' (१९) इत्यनया सह उक्तो विनियोगः ।

'उत् त्वा वहन्तु' (२२) इत्यनया चितेर्दक्षिणपार्श्वे [10]अजं पशुं[10] बध्नाति[11] । यथा दह्यते[11] तथा बध्नीयात् ।

आहिताग्नेः संस्कारार्थं विहितेषु त्रिष्वग्निषु 'अपेमम्' (२७) इत्यृचा आज्यं जुहुयात् ।

पिण्डपितृयज्ञे बर्हिषि उदपात्रनिनयनानन्तरं 'ये दस्यवः' (२८) इत्यृचा उभयत आदीप्तम् उल्मुकं निरस्येत् । सूत्रितं हि—"यज्ञोपवीती 'ये दस्यवः' इत्युभयत आदीप्तम् उल्मुकं त्रिः प्रसव्यं परिहृत्य निरस्यति" (कौसू ८७,३०) इति ।

पिण्डपितृयज्ञ एव 'सं विशन्तु" (२९) इत्यनया आस्तीर्णे बर्हिषि तिलान् प्रकिरेत् ।

ह्वयामि ते मनसा मन इहेमान्[12] गृहाँ उप जुजुषाण एहि ।
सं गच्छस्व पितृभिः सं यमेन स्योनास्त्वा वाता उप वान्तु शग्माः ॥२१॥

---

१. °कृषे Km. २. तु. सा. RW.; वैतु. R जीवान्; A,B,C,V,O,Km जीवं; WM, जीवांस्; Dc. जीवान् > जीवन्. ३. मधुश्च्युतः R. मधुश्च्युतः > मधुश्चुतः C,Dc. ४. स्वधा P,P², WM. ५. तु. संपा.; वैतु. Cp जीवन्; P,P² जीवन्. ६. °श्च्युतः Cp. ७. जीवनवन् S'. ८. वैतु. संपा. ९. °प्रवाहहारयित्र्यः S'. १०. अजपशुं S'. ११. तु के.; वैतु. S' नास्ति. १२. °मां, °माम् WM.

ह्वयामि । ते । मनसा । मनः । इह । इमान्[1] । गृहान्[1] । उप । जुजुषाणः । आ । इहि ।
सम् । गच्छस्व । पितृऽभिः । सम् । यमेन । स्योनाः । त्वा । वाताः । उप । वान्तु । शग्माः ॥

हे प्रेतपुरुष ते तव संबन्धि मनः अन्तःकरणम् अस्मदीयेन मनसा इह अस्मिन् लोके ह्वयामि आह्वयामि । इमान् अस्मदीयान् गृहान् येषु त्वाम् उद्दिश्य और्ध्वदेहिकं कर्म क्रियते तान् जुजुषाणः सेवमानः प्रीयमाणो वा । जुषी प्रीति-सेवनयोः । व्यत्ययेन श्लुः । उपेहि उपागच्छ । उपेत्य च संस्कारोत्तरकालं पितृभिः पितृपितामहप्रपितामहैः सं गच्छस्व सापिण्ड्यकरणेन संगतो भव । 'समो गम्यृच्छि०' ( पा १,३,२९ ) इति आत्मनेपदम् । यमेन तद्राजेन[2] च सं संगतो भव । स्योनाः । [3]षिवु तन्तुसंताने । अस्माद् औणादिको नप्रत्ययः ( पाउ ३,९ ) । 'च्छ्वोः शूडनुनासिके च' (पा ६, ४,१९ ) इति वकारस्य ऊडादेशः । पितृलोकगमनसमये तव अध्वजन्यश्रमम् अपनेतुं संतताः नैरन्तर्येण वर्तमानाः शग्माः सुखकराः शैत्यमान्द्यसौरभ्ययुक्ता वाताः वायवः त्वा त्वाम् उप वान्तु उपगच्छन्तु । वा गतिगन्धनयोः । अदादित्वात् शपो लुक् ।

उत् त्वा वहन्तु मरुत उदवाहा उदप्रुतः[4] ।
अजेन कृण्वन्तः शीतं वर्षेणोक्षन्तु बालिति ॥ २२ ॥

उत् । त्वा । वहन्तु[5] । मरुतः । उदऽवाहाः । उदऽप्रुतः[6] ।
अजेन । कृण्वन्तः । शीतम् । वर्षेण । उक्षन्तु । बाल् । इति ॥ २२ ॥

हे प्रेत मरुतः मरुत्संज्ञका देवाः त्वा त्वाम् उद्वहन्तु ऊर्ध्वम् आकाशे वहन्तु धारयन्तु । यद्वा उदवाहसमभिव्याहारात् मरुच्छब्देन वायव उच्यन्ते । वायव-स्त्वाम् उपरिलोकं प्रापयन्तु इत्यर्थः । अपि च उदवाहाः उदकं वहन्ति धारयन्तीति उदवाहा मेघाः । 'पेषंवासवाह०' ( पा ६,३,५८ ) इति उदकशब्दस्य उदभावः[7] । अत एव उदप्लुतः[8] उदकैर्भूमिं प्लावयन्तः आर्द्रीकुर्वन्तः । शीतम् शैत्यगुणं कृण्वन्तः कुर्वन्तः एवंगुणविशिष्टा मेघाः समीपबद्धेन अजेन सहितं त्वां वर्षेण वर्षजलेन उक्षन्तु सिञ्चन्तु । इतिशब्दः बाल् इत्यस्य अनुकरणशब्दतां द्योतयति । उक्षणसमये बाल् इत्येवमात्मकः शब्दो यथा जायेत तथा उक्षन्तु इत्यर्थः । उक्ष सेचने ।

उदह्वमायुरायुषे क्रत्वे दक्षाय जीवसे ।
स्वान्[9] गच्छतु[10] ते मनो अधा[11] पितॄँरुप द्रव ॥ २३ ॥

---

१. इमाम् । गृहात् P²; इमाम् । गृहान् P; इमान् । गृहां Cp.  २. तद्राज्ञा S'.
३. पिवि S'.  ४. उदुप्लुतः B,K^m,O,Op,R²; उदुल्पुतः V; उदुप्रुतः > उदुप्लुतः Dc.
५. वहतु P,P².  ६. उदुप्लुतः D².  ७. सूत्रे वाहनशब्दो वाहमपि लक्षयतीति द्र.
८. वैतु. मंपा.  ९. स्वां WM. सा.; स्वांन् T.  १०. गंच्छंतु B,R.  ११. ऽधा B²,RW.

उत् । अह्वम् । आयुः । आयुषे । क्रत्वे । दक्षाय । जीवसे ।
स्वान्[1] । गच्छतु । ते । मनः । अध । पितॄन् । उप । द्रव ॥ २३ ॥

हे प्रेत ते त्वदीयम् आयुः उदह्वम् उच्चैःस्वरेण आह्वयामि । 'छन्दसि लुङ्लङ्लिटः' ( पा ३,४,६ ) इति लुङ् । 'लिपिसिचिह्वश्च' ( पा ३,१,५३ ) इति च्लेः अङ् आदेशः । किमर्थम् । आयुषे जीवनाय क्रत्वे क्रतवे यज्ञादिकर्मणे दक्षाय बलाय । यद्वा 'प्राणो वै दक्षः । अपानः क्रतुः' ( तै २,५,२,४ ) इति श्रुतेर्दक्षक्रतुशब्दाभ्यां प्राणापानावभिधीयेते[2] । क्रत्वे अपाननव्यापाराय दक्षाय प्राणनव्यापाराय । प्राणवायोर्नासारन्ध्राद् बहिर्निःसरणं प्राणनम् । अन्तराकर्षणम्[3] अपाननम् । जीवसे जीवनाय प्राणधारणाय । सर्वत्र तादर्थ्ये चतुर्थी । एतत् सर्वम् आयुषि सत्येव भवतीति तदाह्वानं क्रियत इत्यर्थः । ते त्वदीयं मनः स्वाम्[4] स्वकीयां तनुं संस्कारजन्यम् अभिनवशरीरं गच्छतु । अध अथ शरीरप्राप्त्यनन्तरं पितॄन् वस्वादिरूपान् उप द्रव उपलक्ष्य गच्छ । द्रु गतौ ।

मा ते मनो[5] मासोर्माङ्गानां मा रसस्य ते ।
मा ते हास्त तन्वः[6] किं चनेह[7] ॥ २४ ॥

मा । ते । मनः । मा । असोः । मा । अङ्गानाम् । मा । रसस्य । ते ।
मा । ते । हास्त । तन्वः । किम् । चन । इह ॥ २४ ॥

हे प्रेतपुरुष ते तव मनः मानसम् इन्द्रियं मा हास्त त्वां मा परित्याक्षीत् । ओहाक् त्यागे । व्यत्ययेन आत्मनेपदम् । यद्वा । ओहाङ् [8]गतावित्यस्य रूपम् । मा गच्छतु त्वां विहाय इह मा तिष्ठतु । तथा[8] असोः त्वदीयस्य प्राणस्य किं चन किमपि रूपं मा हास्त । अङ्गानाम् अवयवानां हस्तपादादीनां किमपि मा हास्त । तथा ते तव देहसंबन्धिनो रसस्य रुधिरादेः किमपि मा हास्त । इह अस्मिन् लोके ते तव तन्वः शरीरस्य किं चन किमप्यङ्गं मा हास्त । लोकान्तरे मनःप्राणादिसर्वाङ्गसहितशरीरयुक्तो भवेत्यर्थः ।

[9]मा त्वा वृक्षः सं बाधिष्ट† मा देवी पृथिवी मही ।
लोकं पितृषु वित्त्वैधस्व ‡यमराजसु[9] ॥ २५ ॥

---

१. स्वाम् P,P²; स्वान् Cp. २. °पानावित्यभि° S′. ३. अनन्तरा° S′. ४. वैतु. मंपा. ५. मनसो W. वैप १,२४३५ a द्र. ६. तन्वा३ः B¹,E². ७. चनेह Km. ८. गता···तथा रिक्तं स्थानमुपपञ्चदशवर्णानाम् S′. ९. मा त्वा वृक्षौ सम्बाधिष्टां मा माता पृथिवि त्वम् । पितॄन् ह्यत्र गच्छास्येधासं यमराज्ये । मा त्वा वृक्षौ संबाधेथां मा माता पृथिवी मही । वैवस्वतं हि गच्छासि यमराज्ये विराजसि । तैआ ६,७,२. † बाधिष्ठ R,B, Dc; बाधिष्टे Km,O ‡ यमराजसु P³,M,T.

मा । त्वा । वृक्षः । सम् । बाधिष्ट । मा । देवी । पृथिवी । मही ।
लोकम् । पितृषु । वित्त्वा । एधस्व । यमराजऽसु[1] ॥ २५ ॥

हे प्रेत त्वा त्वां वृक्षः त्वदाश्रयभूतो[2] मा सं बाधिष्ट संबाधं हिंसनं मा कार्षीत् । बाधृ[3] विलोडने । 'माङि लुङ्' ( पा ३,३,१७५ ) । तथा देवी द्योतमाना दानादिगुणयुक्ता वा मही महती पृथिवी त्वदाश्रयभूता भूमिस्त्वां मा सं बाधिष्ट । त्वं च यमराजसु यमो राजा ईश्वरो येषां ते यमराजानः तथाविधेषु पितृषु पितृदेवतासु लोकम् स्थानं वित्त्वा लब्ध्वा एधस्व वर्धस्व । विद्लृ लाभे । 'समानकर्तृकयोः पूर्वकाले' ( पा ३,४,२१ ) इति क्त्वाप्रत्ययः । 'एकाच उपदेशे' ( पा ७,२,१० ) इति इट्प्रतिषेधः ।

[4]यत् ते अङ्गमतिहितं पराचैरपानः प्राणो य उ वा ते परेतः[5] ।
तत् ते संगत्य पितरः सनीडा[6] घासाद् घासं पुनरा वेशयन्तु ॥ २६ ॥

यत् । ते । अङ्गम् । अतिऽहितम् । पराचैः । अपानः । प्राणः । यः । ऊं इति । [7]वा । ते[7] । पराऽइतः । तत् । ते । सम्ऽगत्य । पितरः । सऽनीडाः । घासात् । घासम् । पुनः । आ । वेशयन्तु ॥

हे प्रेत ते तव यद् अङ्गम् शरीरं पराचैः पराङ्मुखम् अतिहितम् अतीत्य स्थितम् । अतिक्रम्य गतम् इत्यर्थः । तस्मिन् शरीरे वर्तमानः अपानः अपानवायुः प्राणः प्राणवायुः । उशब्दः अप्यर्थे । अपि वा ये[8] च अन्ये चक्षुःश्रोत्रादिरूपाः सप्त शीर्षण्याः प्राणाः ते त्वदीयाः परेताः[8] परागताः । अपुनरावृत्तये शरीरान्निर्गता इत्यर्थः । ते त्वदीयं तत् सर्वं सनीलाः[8] समाननिलयाः पितरः पितृदेवताः संगत्य संघीभूय । संपूर्वाद् गमेः क्त्वो ल्यप् । 'अनुदात्तोपदेश' ( पा ६,४,३७ ) इत्यादिना अनुनासिकलोपे 'ह्रस्वस्य पिति' ( पा ६,१,७१ ) इति तुक् । घासात् । अद्यते भुज्यते अस्मिन्निति घासः भोगायतनं शरीरम् । अद भक्षणे । अधिकरणे घञ् । 'घञपोश्च' ( पा २,४,३८ ) इति घस्लादेशः । घासात् भोजनाधिकरणाच्छरीराद् घासम् भोजनाधिकरणम् अन्यच्छरीरं पुनरा वेशयन्तु अभिप्रापयन्तु ।

अपेमं जीवा अरुधन् गृहेभ्यस्तं निर्वहत परि ग्रामादितः ।
मृत्युर्यमस्यासीद् दूतः प्रचेता असून् पितृभ्यो गमयां चकार ॥ २७ ॥

---

१. यम । राजऽसु P,P[2]; यम । राजऽसु Bp[2].D[2],Kp. २. त्वयाश्रय° S'.
३. बाध S'. ४. अ ७,५५,३ द्र. ५. उवातेपरेतः A,B,C,WM.; उवातेपरेताः K,R,O; उवातेपरेताः > उंवातेपरेतः Dc. ६. °डाद् A,B,K[m],V,Dc,WM. ७. वा । ते P,P[2].; वा । ते Cp,WM. ८. वैतु. मंपा.

अप॑ । इ॒मम् । जी॒वाः । अ॒रु॒ध॒न् । गृ॒हेभ्यः॑ । तम् । निः । व॒ह॒त॒ । परि॑ । ग्रामा॑त्[1] । इ॒तः ।
मृ॒त्युः । य॒मस्य॑ । आ॒सी॒त् । दू॒तः । प्रऽचे॑ताः । असू॑न् । पि॒तृऽभ्यः॑ । ग॒मया॑म् । च॒का॒र॒ ॥ २७ ॥

जीवाः जीवन्तः प्राणधारिणो बान्धवा इमं प्रेतं गृहेभ्यः सकाशाद् अपारुधन् । प्रेतशरीरम् अपगमयन्तु इत्यर्थः । रुधिर् आवरणे । 'इरितो वा' ( पा ३,१,५७ ) इति च्लेः अङ् आदेशः । तं प्रेतदेहम् इतः अस्माद् ग्रामात् परि । परिः पञ्चम्यर्थानुवादी । यद्वा परिहरणार्थः । हे बान्धवाः तं मृतदेहं परिहृत्य निर्वहत[2] ग्रामाद् निर्गमयत । कुत इत्यत आह— मृत्युः मारकः पुरुषो यमस्य राज्ञो दूतः कर्मकर आसीत् अभवत् । प्रचेताः प्रकृष्टज्ञानः सः म्रियमाणस्य पुरुषस्य असून् प्राणान् पितृभ्यः पितॄन् अनुप्रवेशयितुम् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' ( पा २,३,१४ ) इति चतुर्थी । गमयां चकार प्रापयामास । गमेर्ण्यन्तात् 'कास्प्रत्ययाद्°' ( पा ३,१,३५ ) इति आम्प्रत्ययः । कृञोऽनुप्रयोगश्च[3] ।

[4]ये दस्य॑वः† पि॒तृषु॒ प्रवि॑ष्टा [6]ज्ञा॒तिमु॑खा‡ अहु॒ताद॒श्चर॑न्ति[4] ।
प॒रा॒पुरो॑ नि॒पुरो॒ ये [5]भर॑न्त्य॒ग्निष्टान॒स्मात् प्र ध॑माति य॒ज्ञात्[5] ॥ २८ ॥

ये । दस्य॑वः । पि॒तृषु॑ । प्रऽवि॑ष्टाः । ज्ञा॒तिऽमु॑खाः[6] । अ॒हु॒त॒ऽअदः॑ । चर॑न्ति ।
प॒रा॒ऽपुरः॑ । नि॒ऽपुरः॑ । ये । भर॑न्ति । अ॒ग्निः । तान् । अ॒स्मात् । प्र । ध॒मा॒ति॒ । य॒ज्ञात् ॥ २८ ॥

ये दस्यवः उपक्षयकारिणो राक्षसा ज्ञातिमुखाः ज्ञातीनां मुखमिव मुखं येषां ते तथोक्ताः । ज्ञातिप्रतिरूपा इत्यर्थः । अत एव पितृषु पितृपितामहप्रपितामहेषु मध्ये प्रविष्टाः अहुतादः अहुतं लौकिकम् अन्नम् अदन्ति भक्षयन्तीति अहुतादः । यद्वा अहुतावस्थमेव हविर्मायया अदन्तीति अहुतादः । चरन्ति पितृषु मध्ये वर्तन्ते । परापुरः परापृणन्ति पिण्डान् ददतीति परापुरः पिण्डदातारः पुत्राः । निपुरः निपृणन्ति नियमेन पिण्डदानादिकं कुर्वन्तीति निपुरः पौत्राः । पॄ पालनपूरणयोः । इत्यस्माद् उभयत्र कर्तरि क्विप् । 'उदोष्ठ्यपूर्वस्य' ( पा ७,१,१०२ ) इति उत्त्वम् । ये च राक्षसाः पिण्डोदकदानादिना पालयितॄन् पुत्रपौत्रादीन् भरन्ति हरन्ति । नाशयन्तीत्यर्थः । तान् मायाविनो राक्षसान् अग्निः अस्माद् यज्ञात् पितॄन् उद्दिश्य क्रियमाणात् प्र धमाति प्रधमतु प्रकर्षेण निर्गमयतु । धमा शब्दाग्निसंयोगयोः । अस्मात् लेटि आडागमः । 'पाघ्रा' ( पा ७,३,७८ ) इत्यादिना धमादेशः ।

---

१. क्रामत् Cp. २. निर्वहेत S'. ३. °नुयोगश्च S'. ४. ये रूपाणि प्रतिमुञ्चमा॑ना असु॑राः सन्तः॑ स्व॒धया॒ चर॑न्ति मा २,३० शांश्रौ ४,४,२ माश्रौ १,१,२,८ आश्रौ २,६,२ मंत्रा २,३,४.आपश्रौ १,८,७; अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याचरन्ति, ये ज्ञातीनां प्रतिरूपाः पितॄन् मायया॒ऽसुराः प्रविष्टाः आपश्रौ. † द॒स्य॑वः C,R,MW. ‡ ज्ञातिमुखा अहुता° C,R,I; तु॰ RW॰ वैतु. शंपा. ज्ञातिमु॑. ५. °ष्टाल्लँ॒ोकात् प्रणु॑दात्य॒ (आपश्रौ 'दात्व मंत्रा. °दत्व माश्रौ °णुनोतु ) स्मात् मा. प्रभृ. ६. तु. मंपा. वैतु. शंपा. ज्ञा॒ति॒ऽमु॒खाः.

सं विशन्त्विह पितरः स्वा नः स्योनं कृण्वन्तः प्रतिरन्त[१] आयुः ।
तेभ्यः शकेम हविषा नक्षमाणा ज्योग् जीवन्तः शरदः पुरूचीः ॥२९॥

सम् । विशन्तु । इह । पितरः । [२]स्वाः । नः[२] । स्योनम् । कृण्वन्तः । प्रऽतिरन्तः[३] । आयुः ।
तेभ्यः । शकेम । हविषा । नक्षमाणाः । ज्योक् । जीवन्तः । शरदः । पुरूचीः ॥ २९ ॥

इह अस्मिन् यज्ञे नः अस्माकं स्वाः ज्ञातयो गोत्रजाः पितरः पितृपितामहप्रपितामहाः सं विशन्तु सम्यग् उपविशन्तु । उपविष्टास्ते स्योनम् सुखम् अस्माकं कृण्वन्तः कुर्वन्तः[3] आयुः जीवनं प्रतिरन्ते[४] । प्रपूर्वस्तरतिर्वर्धनार्थः । प्रवर्धयन्तु । चिरकालम् अस्मान् जीवयन्तु इत्यर्थः । दक्षमाणाः[४] वर्धमाना वयं तेभ्यः पितृभ्यो हविषा चरुपुरोडाशादिलक्षणेन शकेम परिचरितुं शक्ता भूयास्म । शक्ऌ शक्तौ इत्यस्माद् आशिषि लिङि 'लिङ्याशिष्यङ्' ( पा ३,१,८६ ) इति अङ्प्रत्ययः । पुरूचीः पुरु बहुलम् अञ्चन्ति गच्छन्तीति पुरूच्यः । अञ्चतेः 'ऋत्विग्' ( पा ३,२,५९ ) इत्यादिना क्विन् । 'अनिदिताम्' (पा ६,४,२४) इति नलोपः । 'अचः' ( पा ६,४,१३८ ) इति अकारलोपे 'चौ' ( पा ६,३,१३८ ) इति दीर्घः । 'अञ्चतेश्चोपसंख्यानम्' ( पावा ४,१,६ ) इति ङीप्[५] । पुरूचीः बह्वीः शरदः संवत्सरान् । अत्यन्तसंयोगे द्वितीया । ज्योक् चिरकालं जीवन्तः पितृप्रसादाज्जीवितारो भवेम ।

यां ते धेनुं निपृणामि यमु ते क्षीर ओदनम् ।
तेना जनस्यासो भर्ता योत्रासदजीवनः[६] ॥ ३० ॥

याम् । ते । धेनुम् । निऽपृणामि । यम् । ऊं इति । ते । क्षीरे । ओदनम्[७] ।
तेन । जनस्य । असः । भर्ता । यः । अत्र । असत् । अजीवनः[८] ॥ ३० ॥

हे प्रेत ते तुभ्यं यां धेनुम् दोग्ध्रीं गां निपृणामि प्रयच्छामि । निपूर्वः पृणातिः पित्र्ये दाने वर्तते । त्वाम् उद्दिश्य गां दत्तवान् अस्मीत्यर्थः । तथा क्षीरे पयसि पक्वं यम् उ यं च ओदनं ते तुभ्यं निपृणामि तेन धेनुसहितेन ओदनेन जनस्य जनिमतो लोकस्य भर्ता धारयिता पोषयिता वा असः भवेः । डुभृञ् धारणपोषणयोः । यो जनः अत्र अस्मिन् लोके अजीवनः जीवनरहितः असत् भवेत् । तस्य जनस्येति

---

१. प्रऽतिरन्तै Cp,WM.; प्रऽतिरते P,P[3]; प्रऽतिरतै WM. २. तु. सा. W, WI ; वैतु. P,P[२] स्वानः; Cp,WM. स्वानः; Bp[२] स्वा । नः. ३. कृण्वंतः S'. ४. वैतु. पपा. ५. उदात्तनिवृत्तिस्वरश्च इति शेषः. ६. °त्रांसद° K[m],C; त्रासदजीवनः E[२]. ७. ओदने Cp. ८. अजीवनः Bp[२].

संबन्धः। यद्वा अस्मिन् लोके जीवनरहितः असत् । पुरुषव्यत्ययः । स त्वम् इति संबन्धः। अस इति । अस्तेर्लेटि अडागमः[1] । 'इतश्च लोपः परस्मैपदेषु' (पा ३,४,९७) इति इकारलोपः।

इति द्वितीयेऽनुवाके तृतीयं सूक्तम्।

पितृमेधे 'अश्वावतीम्' (३१) इत्यृचा शवदाहानन्तरं स्नानं कृत्वा नदीं तरतोऽनुमन्त्रयेत[2]। पिण्डपितृयज्ञे 'ये निखाताः' (३४) इति द्वाभ्यां द्वे समिधावादध्यात्। 'शं तप' (३६) इत्यृचा प्रेतशरीरे पुत्रेण दत्तम् अग्निं पुत्रो गोत्रिणो वा दीपयेयुः। 'ददामि' (३७) इत्यनया काम्पीलशाखया दहनस्थानं संप्रोक्षेत्। 'इमां मात्रां मिमीमहे' (३९) इत्यादिभिः सप्तभिः श्मशानदेशं प्रतिदिशं मिमीते[3]। दिष्टिवितस्त्यादिभिः प्रमाणैः सप्त दक्षिणतो मिमीते। सप्त उत्तरतः। पञ्च पुरस्तात्। पञ्च पश्चाद् इत्यादिक्रमेणेत्यर्थः।

अश्वा॑वतीं॒ प्र त॑र॒ या सु॒शेवा॒र्क्षाकं॑[4] वा प्रत॒रं नवी॑यः ।
यस्त्वा॑ ज॒घान॒ वध्यः॒ सो अ॑स्तु॒ मा सो अ॒न्यद् वि॑दत भाग॒धेय॑म् ॥३१॥

अश्व॑ऽवतीम्। प्र। त॒र। या। सु॒ऽशेवा॑। ऋ॒क्षाक॑म्[5]। वा॒। प्र॒ऽतरम्। नवी॑यः।
यः। त्वा॒। ज॒घान॑। वध्यः॑[6]। सः। अ॒स्तु॒। मा। सः। अ॒न्यत्। वि॒द॒त्। भा॒ग॒ऽधेय॑म् ॥३१॥

हे प्रेत अश्वावतीम् अश्वा अस्यां सन्तीति अश्वावती अश्वानाम् आकरभूता[7] नदी। 'मन्त्रे सोमाश्वेन्द्रिय°' (पा ६,३,१३१) इति मतौ दीर्घः। संज्ञाशब्दोयम्। एतत्संज्ञां नदीं प्र तरय[8] प्रकर्षेण तारय उत्तारय। सा च नदी सुशेवा अस्मभ्यं सुसुखा भवतु। तथा ऋक्षाकं वा। वाशब्दश्चार्थे। ऋक्षाकम् ऋक्षैः भल्लूकैरुपेतं दुष्टमृगनिषेवितं नवीयः नवतरम् [9]अदृष्टपूर्वम् अरण्यमपि[9] प्रतरम् प्रकर्षेण तरामि[10]। हे प्रेत त्वा त्वां यः पुरुषः जघान स वध्यः वधार्हः अस्तु भवतु। स घातकः पुरुषः अन्यद् भागधेयम् पूर्वम् उपभुक्ताद् अन्यद् उपभोग्यं वस्तु मा विदत मा लभताम्। निर्धनो भवत्वित्यर्थः। विद्लृ लाभे। अस्मात् माङि लुङि आत्मनेपदैकवचने ऌदित्वात् च्लेः अङ् आदेशः[11]।

य॒मः [12]प॒रोव॑रो॒ वि॒व॑स्वा॒न्[12] तत॒ः परं॒ नाति॑ पश्यामि॒ किं च॒न ।
य॒मे अ॑ध्व॒रो अधि॑ मे॒ निवि॑ष्टो [13]भु॒वो वि॒व॑स्वा॒न॒न्वात॑तान[13] ॥ ३२ ॥

---

१. आडागमः S′. २. तु. के.; वैतु. कौसू. (८२,१०) नदीं तारयते; नदीतरोनु° S′. ३. मिमीत S′. ४. वा ऋक्षाकं P³,M,E²,I. ५. ऋक्षाकाम् Cp. ६. बध्यः P,Cp,WM. ७. अकारभूता S′. ८. वैतु. संपा. ९. °पूर्वेरण्युमपि S′. १०. क्रियापदे स्वरः? अमन्तमव्ययं द्र. ११. छान्दसः इति द्र. १२. पु॒रोव॑रो वि॒व° A,Kᵐ,C R,WM.; पु॒रोव॑रो वि॒व° > परोव॑रो॒ विव॑° Dc. १३. भुवो॑ विव॑° C.

यमः । [1]परः । अवरः । विवस्वान्[1] । ततः । परम् । न । अति । पश्यामि । किम् । चन ।
यमे । अध्वरः । अधि । मे । निऽविष्टः । भुवः । विवस्वान् । अनुऽआततान ॥ ३२ ॥

यमः **विवस्वतः पुत्रः** परः **तेजसा अधिकोभवत्**[2] । विवस्वान् **यमस्य पिता आदित्यः** अवरः **तेजसा निकृष्टोभवत्**[2] । **यमस्तेजसा पितुरपि अधिकोभवद् इत्यर्थः** । ततः[3] **तस्माद् यमात्** परम् **उत्कृष्टं** किं चन **किमपि प्राणिजातं** नाति पश्यामि **अतिक्रान्तं न जानामि । तस्मिन् सर्वोत्कृष्टे** यमे मे **मदीयः** अध्वरो **यज्ञः** अधि निविष्टः **अधिकम् अवस्थितः । तत्प्रीतिकरो वर्तते इत्यर्थः । यज्ञस्य**[4] **सिद्धये** विवस्वान् **तत्पिता सूर्यः** भुवः **भूप्रदेशान्** अन्वाततान **स्वकिरणैर्विस्तारितवान् । तनु विस्तारे ।**

**अपागूहन्नमृतां**[5] **मर्त्येभ्यः कृत्वा**[6] **सवर्णामदधुर्विवस्वते**[7] ।
**उताश्विनावभरद् यत् तदासीदजहादु द्वा मिथुना सरण्यूः ॥ ३३ ॥**

अप । अगूहन्[8] । अमृताम्[9] । मर्त्येभ्यः । कृत्वा । सऽवर्णाम् । अदधुः । विवस्वते ।
उत । अश्विनौ । अभरत् । यत् । तत् । आसीत् । अजहात् । ऊं इति । द्वा । मिथुना । सरण्यूः[10] ॥

'त्वष्टा दुहित्रे' ( अ १८,१,५३ ) **इत्यत्र इतिहासोभिहितः । सोत्र ऋगर्थप्रतिपत्तये पुनः स्मार्यते । त्वष्टृदुहिता सरण्यूर्नाम विवस्वत आदित्याद् यमौ मिथुनौ जनयांचकार । तौ च यमलौ यमश्च यमी चेत्याहुरैतिहासिकाः । माध्यमिकोग्निर्माध्यमिका वाक् चेति नैरुक्ताः ।** ततः[11] **सरण्यूस्तत्तेजः असहमाना स्वसमानरूपाम् अन्यां प्रतिनिधाय आश्वं रूपं कृत्वा प्रदुद्राव । सोपि विवस्वान् तज्जानन् आश्वमेव रूपं कृत्वा तां समभवत् । ततः अश्विनौ जज्ञाते । प्रतिनिहितायां सवर्णायां विवस्वत आदित्याद् मनुर्जज्ञ इत्ययम् अर्थोत्र प्रतिपाद्यते ।** मर्त्येभ्यः **मरणधर्मभ्यो मनुष्येभ्यः** अमृतान्[12] **मरणधर्मरहितान् आत्मनः देवा** अपागूहन् **तिरोहितान् अकुर्वन् । अमृतत्वप्रापकं स्वकीयं रूपं देवा मनुष्येभ्यः प्राच्छादयन्**[13] **। गुहू संवरणे । तथा** सवर्णाम् **समानरूपाम् अन्यां स्त्रियं** कृत्वा विवस्वते **आदित्याय** अदधुः **अधारयन् । प्रायच्छन्नित्यर्थः ।** उत **अपि** च **सरण्वा** यद् **आश्वं रूपं तदानीं स्वीकृतम्** आसीत् तत् अश्विनौ अभरत् **समभरत् । उदपादयद् इत्यर्थः ।**

---

१. पुरः । अवरः । विवस्वान् Cp. २. °भवतु S'. ३. अतः S', ४. यज्ञस्ययज्ञस्य S'. ५. °मृतान् R; °मृतान् > मृतां Dc. ६. कृत्वी ऋ १०,१७,२. ७. °मददुर्वि° ऋ. ८. अगूहम् P²; गूहन् Cp. ९. अमृताम् P,P². १०. सरंण्यूः Cp. ११. तः नास्ति S'. १२. वैतु. संपा. १३. प्रच्छा° S'.

यद्वा अश्वभूतयोः सरण्यूविवस्वतोर्यद् रेत आसीत् तद् अश्विनावजनयद् इत्यर्थः। सा च सरण्यूः त्वष्टृदुहिता निर्गमनसमये द्वा द्वौ मिथुना मिथुनौ स्त्रीपुंसात्मकौ अजहात् पर्यत्यजत्। ओहाक् त्यागे। उशब्दः अवधारणे। द्वा [1]मिथुनेत्यत्र 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः[1]।

ये निखा॑ता॒ ये परो॑प्ता॒ ये द॒ग्धा ये चोद्धि॑ताः।

सर्वाँ॒स्ताँन॑ग्न॒ आ व॑ह पि॒तॄन् ह॒विषे॒ अत्त॑वे ॥ ३४ ॥

ये। निऽखा॑ताः। ये। परा॑ऽउप्ताः। ये। द॒ग्धाः। ये। च॒। उद्धि॑ताः[2]।

सर्वा॑न्। तान्। अ॒ग्ने॒। आ। व॒ह॒। पि॒तॄन्। ह॒विषे॑। अत्त॑वे ॥ ३४ ॥

ये पितरः भूमौ निखाताः निखननसंस्कारेण संस्कृताः। खनु अवदारणे। कर्मणि निष्ठा। 'जनसनखनां सञ्झलोः' (पा ६,४,४२) इति आत्वम्। ये च पितरः परोप्ताः परावपनं दूरदेशे काष्ठवत्परित्यागः। तेन संस्कृताः। ये च दग्धाः अग्निना संस्कृताः। ये च उद्धिताः संस्कारोत्तरकालम् ऊर्ध्वदेशे पितृलोके स्थिताः। एवं बहुविधावस्थितान् तान् सर्वान् पितॄन् हविषे अत्तवे अस्माभिर्दत्तं हविर्भक्षयितुम् हे अग्ने आ वह आनय। 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वात् हविःशब्दाच्चतुर्थी। अद भक्षणे इत्यस्मात् 'तुमर्थे सेसेन्°' (पा ३,४,९) इति तवेन्प्रत्ययः।

ये [3]अ॒ग्निद॒ग्धा ये ।अन॑ग्निद॒ग्धा[3] मध्ये॑ दि॒वः स्व॒धया॑ मा॒दय॑न्ते[4]।

त्वं[5] तान् वे॑त्थ॒ [6]यदि॒ ते जा॑तवेदः[6] [7]स्व॒धया॑ य॒ज्ञं स्वधि॑तिं जुषन्ताम्[7] ॥ ३५ ॥

ये। अ॒ग्नि॒ऽद॒ग्धाः[8]। ये। अन॑ग्निऽदग्धाः। मध्ये॑। दि॒वः। स्व॒धया॑। मा॒दय॑न्ते।

त्वम्। तान्। वे॒त्थ॒। यदि॑। ते[9]। जा॒त॒ऽवे॒दः। स्व॒धया॑। य॒ज्ञम्। स्वऽधि॑तिम्। जु॒षन्ता॒म् ॥ ३५ ॥

ये पितरः अग्निदग्धाः अग्निना संस्कृताः। ये च अनग्निदग्धाः अग्निदाहरहितेन खननादिसंस्कारेण संस्कृता दिवः द्युलोकस्य मध्ये स्वधया। अन्ननामैतत्। पुत्रादिभिर्दत्तेन पिण्डरूपेण हविषा। यद्वा स्वधाकारोपलक्षितेन पिण्डपितृयज्ञादि-

---

१. मिथु···र्वसवर्ण° रिक्तं स्थानं दशवर्णानाम् S'. २. उदिताः P,P². ३. अ॒ग्नि॒ष्वा॒त्ता॒ ये॒ अन॑ग्निष्वात्ता मा १९,६० । ऽनग्नि O,R². ४. मा॒दय॑न्ते ऋ १,१०८,१२, ५. अग्ने आपमं २,१९,७ पागृ २,११,१. ६. यदि॑ ते जातवे॑दः C,B,WM,W; यदि॒ ते जा॑तवेदः > यदि॑ ते जातवे॑दः Dc; यति॒ ते जा॑तवेदः ऋ १०,१५,१३ मा १९,६७. ७. स्व॒धाभि॑र्य॒ज्ञं सुकृ॑तं जुषस्व ऋ. मा. ८. अ॒ग्निऽद॑ग्धाः Cp. ९. ते॒ Cp.

कर्मणा मादयन्ते हृष्यास्तृप्ता वर्तन्ते हे जातवेदः जातानां वेदितरग्ने त्वं तान् सर्वान् पितॄन् यदि वेत्थ जानासि। 'यदि वेदाः प्रमाणं स्युः' इतिवद् निश्चये यदिशब्दः। त्वमेव तान् निश्चयेन जानासीत्यर्थः। ते सर्वे स्वधायाः[1] संबन्धिनम् अस्मदीयं यज्ञं स्वधितम्[1]। स्वधा संजाता यस्य स तथोक्तः। तारकादित्वाद् इतच्प्रत्ययः। यद्वा स्वैर्ज्ञातिभिः पुत्रपौत्रादिभिः हितं विहितं कृतम् ईदृशं यज्ञं जुषन्ताम् सेवन्ताम्।

शं त॑प॒ माति॑ तपो॒ अग्ने॒ मा [2]त॒न्वं॑१ तप॑ः[2]।
वने॑षु शु॒ष्मो॑ अस्तु ते पृथि॒व्याम॑स्तु॒ यद्धरः॑ ॥ ३६ ॥

शम्। त॒प॒। मा। अति॑। त॒पः॒। अग्ने॑। मा। त॒न्व॑म्। तप॑ः।
वने॑षु। शुष्म॑ः[3]। अ॒स्तु॒। ते॒। पृ॒थि॒व्याम्। अ॒स्तु॒। यत्। हर॑ः ॥ ३६ ॥

हे अग्ने शम् सुखं यथा भवति तथा प्रेतशरीरं तप दह। मा अति तपः अतितापं मा कार्षीः। अतिदहने हि अस्थीन्यपि भस्मीभवन्ति तेषां संचयनादिसंस्कारेण प्रतिविधानाद् अतिदाहो निषिध्यते। तथा तन्वः[1] शरीराणि अस्मत्संबन्धीनि मा तपः मा धाक्षीः। तथा ते त्वदीयः शुष्मः शोषको ज्वालासमूहो वनेषु अरण्येषु अस्तु भवतु। हरः रसहरणशीलं यत् त्वदीयं तेजस्तत् पृथिव्याम् भूम्याम् अस्तु भवतु।

ददा॒म्यस्मा अ॒व॒सान॑मे॒तद् [4]य ए॒ष[4] आग॑न् मम॒ चेदभू॑दि॒ह।
य॒मश्चि॑कि॒त्वान् प्रत्ये॒तदा॑ह॒ ममै॒ष रा॒य उप॑ तिष्ठताम् इ॒ह ॥ ३७ ॥

ददा॑मि। अ॒स्मै॒। अ॒व॒ऽसान॑म्। ए॒तत्। यः। ए॒षः। आ॒ऽअग॑न्। मम॑। च॒। इत्।
अभू॑त्[5]। इ॒ह। य॒मः। चि॒कि॒त्वान्। प्रति॑[6]। ए॒तत्। आ॒ह॒। मम॑। ए॒षः। रा॒ये॑[7]।
उप॑। तिष्ठ॒ता॒म्। इ॒ह ॥ ३७ ॥

यमो ब्रूते- अस्मै मृताय पुरुषाय अवसानम्। अवस्यन्ति निवसन्ति अस्मिन्निति अवसानम् आवासस्थानम्। एतत् स्थानं [8]ददामि यत्[1] यस्मात् कारणात् एष पुरुषः[8] आगन् मत्समीपम् आगमत्। गमेर्लुङि 'मन्त्रे घस' (पा २,४,८०) इति च्लेर्लुक्। 'मो नो धातोः (पा ८,२,६४) इति नत्वम्। स च आगतः पुरुषः इह अस्मिन् लोके मम संबन्धी अभूच्चेत्। यदि मत्संबन्धी मत्परिचरणशीलो भवेद् इत्यर्थः। तदा अस्मै आगतायेति पूर्वेण संबन्धः। एवं चिकित्वान् जानन् यमो मृतं पुरुषं प्रति एतद्

---

१. वैतु.मंपा.　२. तप॑ः Cp; त॒न्वं॑१ तप॑ः A,B,C,K^m,R,Dc; त॒न्वं॑ तपः V,R²,Op.
३. शुग्मः Cp.　४. यदेष S.　५. अ॒भू॒त् Cp.　६. अति Cp.　७. रा॒यः W, सा.　८. ददाम···रुषः रिक्तं स्थानमुपदशानां वर्णानाम् S'.

वाक्यम् आह ब्रवीति । एषः मत्समीपम् आगतः पुरुषः रायः[1] । रै शब्दे । रायति स्तौतीति रायः मम स्तोता भूत्वा इह अस्मिन् मदीये लोके उप तिष्ठताम् सेवताम् ।

इमां मात्रां मिमीमहे यथापरं न मासातै । शते शरत्सु नो पुरा ॥३८॥

इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै[2] । शते । शरत्ऽसु । नो इति । पुरा ॥ ३८ ॥

इमाम् इति इदंशब्देन सूत्रोक्ता मात्रा अभिनयेन प्रदर्श्यते । इमाम् एतावतीं श्मशानदेशस्य[3] मात्राम् परिमाणं मिमीमहे अरत्निप्रादेशादिमितेन दण्डेन परिच्छेदयामः । माङ् माने । यथा येन प्रकारेण अपरम् अन्यत् श्मशानकर्म मा[4] मां न आसातै[4] नासीत न प्राप्नुयात् । आस उपवेशने । अस्मात् लेटि आडागमः । 'वैतोन्यत्र' ( पा ३,४,९६ ) इति ऐकारः । तथा मिमीमह इति संबन्धः । श्मशानकर्मप्राप्तेरवधिम् आह— शते शरत्स्विति । शतसंख्याकेषु संवत्सरेषु अस्माकं जीवनं ब्रह्मणा परिकल्पितम् ततः पुरा शतसंवत्सरमध्ये नो नैव अस्मान् श्मशानकर्म प्राप्नोतु । अकालमृतिरस्माकं मा भूद् इत्यर्थः । एवम् उत्तरे षण्मन्त्रा व्याख्येयाः ।

प्रेमां मात्रां मिमीमहे यथापरं न मासातै । शते शरत्सु नो पुरा ॥ ३९ ॥

प्र । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै । शते । शरत्ऽसु । नो इति । पुरा ॥ ३९ ॥

[5]प्र इत्येतावान्[5] अत्र विशेषः । प्रकर्षेण मिमीमहे इति श्मशानदेशमानस्य प्रकर्षगुणः प्रतिपाद्यते । अन्यत् पूर्ववत् ।

अपेमां मात्रां मिमीमहे यथापरं न मासातै । शते शरत्सु नो पुरा ॥ ४० ॥

अप । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै । शते । शरत्ऽसु । नो इति । पुरा ॥ ४० ॥

अत्र[6] अप इत्युपसर्गेण अपगतदोषता मानस्य प्रतिपाद्यते । तद्दोषाश्च [3]श्मशानलक्षणे निषिध्यन्ते । यथाह भारद्वाजः— 'दहनदेशं जोषयते दक्षिणाप्रत्यक्प्रवणम् अनिरिणम् असुषिरम् अनूषरम् अभङ्गुरम्' (तु. गौतमपितृमेधसूत्र १,२,५;६ ) इत्यादिना । अन्यत् पूर्ववत् ।

इति द्वितीयेऽनुवाके चतुर्थं सूक्तम् ।

---

१. वैतु. पपा. २. मासतै Cp. ३. स्मशान° S'. ४. वैतु. संपा.
५. एतावान् S'. ६. तत्र S'.

'वीमां मात्रां मिमीमहे' इति आदितश्चतसृणाम् ऋचां श्मशानप्रमाणकरणे विनियोग उक्तः।

'अमासि मात्राम्' (४५) इति तिसृभिः पूर्वोक्तप्रकारेण मितं [1]श्मशानप्रदेशम् अनुमन्त्रयेत।

'उदन्वती' (४८) इति द्वाभ्यां प्रेतम् उत्थाप्य शकटे शयने वा निदध्यात्।

'ये नः पितुः पितरः' (४९) इति द्वाभ्यां प्रेतशरीरे संदीपितेऽग्नौ [2]याम्यहोमं कुर्यात्।

'इदमिद् वा' (५०) इति तिसृभिः श्मशानदेशं[1] विषमसंख्याकाभिः शलाकाभिः इष्टकाभिर्वा प्रसव्यं चिनुयात्।

**वी३मां मात्रां मिमीमहे यथापरं न मासातै। शते शरत्सु नो पुरा॥ ४१॥**

वि। इमाम्। मात्राम्। मिमीमहे। यथा। अपरम्। न। मासातै। शते। शरत्ऽसु। नो इति। पुरा॥ ४१॥

अत्र वीत्युपसर्गेण [1]श्मशानदेशमानस्य विशिष्टगुणयोगः प्रदर्शितः। अन्यत् पूर्ववत्।

**निरिमां मात्रां मिमीमहे यथापरं न मासातै। शते शरत्सु नो पुरा॥ ४२॥**

निः। इमाम्। मात्राम्। मिमीमहे। यथा। अपरम्। न। मासातै। शते। शरत्ऽसु। नो इति। पुरा॥ ४२॥

अत्र[3] निरित्युपसर्गेण निर्गतदोषता मानस्य प्रतिपाद्यते। अन्यत् समानं पूर्वेण।

**उदिमां मात्रां मिमीमहे यथापरं न मासातै। शते शरत्सु नो पुरा॥४३॥**

उत्। इमाम्। मात्राम्। मिमीमहे। यथा। अपरम्। न। मासातै। शते। शरत्ऽसु। नो इति। पुरा॥ ४३॥

उद् इत्युपसर्गेणात्र मानस्य उत्कर्षगुणोभिधीयते। गतम् अन्यत्।

**समिमां मात्रां मिमीमहे यथापरं न मासातै। शते शरत्सु नो पुरा॥ ४४॥**

---

१. स्मशान° S'. २, यम्य° S'. ३. तत्र S'.

सम् । इमाम् । मात्राम् । मिमीमहे । यथा । अपरम् । न । मासातै[1] । शते । शरत्ऽसु । नो इति । पुरा ॥ ४४ ॥

इमां श्मशानदेशस्य[2] मात्रां सं मिमीमहे । उदीरितगुणयोगेन सम्यग् [3]मिमीमहे । अत्र प्रत्यृचं यथापरं[3] न मासातै इत्यादिरावर्त्यते । तस्यायम् अभिप्रायः— पुनः-पुनःप्रार्थनया आदरातिशयद्योतिन्या प्रार्थ्यमानोऽर्थः सर्वथा सिध्यतीति । गतम् अन्यत् ।

अमासि मात्रां स्वरगामायुष्मान् भूयासम् ।
यथापरं न मासातै शते शरत्सु नो पुरा ॥ ४५ ॥

अमासि । मात्राम् । स्वः । अगाम् । आयुष्मान् । भूयासम् ।
यथा । अपरम् । न । मासातै[1] । शते । शरत्ऽसु । नो इति । पुरा ॥ ४५ ॥

मात्राम् श्मशानदेशस्य परिमाणम् अमासि परिच्छेदितवान् अस्मि । उदीरितरीत्या समीचीनं मानम् अकृषीत्यर्थः । माङ् माने इत्यस्मात् लुङि उत्तमैकवचने रूपम् । तेन मानेन स्वः अगाम् स्वर्गं लोकं गतोस्मि । भाविस्वर्गलोकप्राप्तिस्तस्य मानस्य फलम् इत्यर्थः । यद्वा । अन्तर्भावितण्यर्थे एतिर्वर्तते । अगाम् अगमयम् इत्यर्थः । 'इणो गा लुङि' (पा २,४,४५) इति गादेशः । तेन च मानकर्मणा अहम् आयुष्मान् शतसंवत्सरपरिमितेन आयुषा युक्तो भूयासम् । यथापरं न मासातै इत्यादि प्रागुक्तार्थम् ।

प्राणो अपानो व्यान आयुश्चक्षुर्दृशये सूर्याय ।
अपरिपरेण पथा यमराज्ञः पितॄन् गच्छ ॥ ४६ ॥

प्राणः । अपानः । विऽआनः । आयुः । चक्षुः । दृशये । सूर्याय ।
अपरिऽपरेण । पथा[4] । यमऽराज्ञः । पितॄन् । गच्छ ॥ ४६ ॥

मुख्यप्राणस्य तिस्रो वृत्तयः प्राणाद्याः । [5]मुखनासिकाभ्यां बहिर्निःसरन् वायुः प्राणः । अन्तर्गच्छन् अपानः । मध्यस्थः सन् अशितपीतादिकं विविधम् आनयति कृत्स्नदेहं व्यापयतीति व्यानः । आयुः जीवनं शतसंवत्सरपरिमितम् । चक्षुः नीलपीतादिदर्शनसाधनम् इन्द्रियम् । एतच्च उपलक्षणम् अन्येषाम् इन्द्रियाणाम् । सर्वम् एतद् अनुक्रान्तं सूर्याय । षष्ठ्यर्थे चतुर्थी । सूर्यस्य दृशये दर्शनाय

---

१. मासतै Cp. २. स्मशान° S'. ३. मिमी···परं रिक्तं स्थानमुपद्वादशानां वर्णानाम् S'. ४. यथा P,P[2]; यथा Cp. ५. मुख्यना° S'.

भवतु । प्राणादिभिः सहिताः सूर्यं पश्यन्तश्चिरकालम् अवतिष्ठेमहीत्यर्थः[1] । हे मृतपुरुष त्वं यमराज्ञः यमश्चासौ राजा यमराजा[2] तस्य स्वभूतेन अपरिपरेण । परिपरिणः पर्यवस्थातारश्चोराः । तद्रहितेन[3] पथा मार्गेण पितॄन् गच्छ प्राप्नुहि ।

ये अग्रवः[4] शशमानाः परेयुर्हित्वा द्वेषांस्यनपत्यवन्तः ।
ते द्यामुदित्याविदन्त लोकं नाकस्य पृष्ठे अधि दीध्यानाः ॥ ४७ ॥

ये । अग्रवः । शशमानाः । पराऽईयुः । हित्वा । द्वेषांसि । अनपत्यऽवन्तः ।
ते । द्याम् । उत्ऽइत्य । अविदन्त[5] । लोकम् । नाकस्य । पृष्ठे । अधि । दीध्यानाः ॥ ४७ ॥

शशमानाः । 'शशमानः शंसमानः' (नि ६,८) इति यास्कः । यद्वा शश प्लुतगतौ । ताच्छीलिकश्चानश् । प्लुतगमनशीला अग्रवः अग्रगामिनो ये पितरः अनपत्यवन्तः अपत्यरहिता द्वेषांसि द्वेषणीयानि पापानि हित्वा त्यक्त्वा परेयुः पराजग्मुः । अमृषतेत्यर्थः । ते पितरो द्याम् अन्तरिक्षम् उदित्य उद्गत्य ऊर्ध्वं गत्वा नाकस्य दुःखसंस्पर्शरहितस्य स्थानस्य पृष्ठे उपरिभागे । अधिः सप्तम्यर्थानुवादी । अधिकं वा दीध्यानाः दीप्यमाना लोकम् सुकृतफलोपभोगस्थानम् अविदन्त अलभन्त । विद्लृ लाभे । लृदित्वाद् आत्मनेपदेपि व्यत्ययेन च्लेः अङ् आदेशः । यद्वा लङि 'अनित्यम् आगमशासनम्' इति नुमभावः ।

उदन्वती[6] द्यौरवमा पीलुमतीति[7] मध्यमा ।
तृतीया ह प्रद्यौरिति यस्यां पितर आसते ॥ ४८ ॥

उदन्ऽवती[8] । द्यौः । अवमा । पीलुऽमती[9] । इति । मध्यमा ।
तृतीया । ह । प्रऽद्यौः । इति । यस्याम् । पितरः । आसते ॥ ४८ ॥

पितृलोकस्य सर्वोत्कृष्टतां वक्तुं दिवस्त्रैविध्यं प्रतिपाद्यते— अवमा अधःकक्ष्यां गता द्यौः उदन्वती उदकवती यस्याम् अवस्थिता मेघाः प्रवर्षन्ति । तस्या उदन्वतीति संज्ञेत्यर्थः । मध्यमा मध्यकक्ष्यां[10] गता द्यौः पीलुमती इति उच्यते । पालयन्तीति पीलवः [11]ग्रहनक्षत्रादयः । ते यस्यां सन्तीति पीलुमती । तृतीया ह । हशब्दः[11] प्रसिद्धौ । प्रद्यौरिति प्रसिद्धा । प्रकृष्टफलोपेता द्यौः प्रद्यौः । यस्यां तृतीयस्यां दिवि नाकपृष्ठाख्ये स्थाने पितरः पितृदेवता आसते निवसन्ति ।

---

१. अवतिष्ठतही° S'. २. कर्मधारये स्वरः टच्प्रत्ययाभावश्च ? ३. बहुव्रीहौ स्वरः ? ४. अुग्रवः C,R,WM.; अुग्रवः > अग्रवः Dc. ५. अविंदन्त Cp. ६. उदन्वती A,C,R; उदन्वती > उदन्वती Dc. ७. पीतुम° O. ८. °वती Cp. ९. पीलुऽमती Bp², D². १०. °कक्षां S'. ११. °नक्षत्रा···शब्दः रिक्तं स्थानमुपसप्तदशानां वर्णानाम् S'.

ये नः पितुः पितरो ये पितामहा य आविविशुरुर्व१न्तरिक्षम् ।
य आक्षियन्ति पृथिवीमुत द्यां तेभ्यः पितृभ्यो नमसा विधेम ।। ४९ ।।

ये । नः । पितुः । पितरः । ये । पितामहाः । ये । आऽविविशुः । उरु । अन्तरिक्षम् ।
ये । आऽक्षियन्ति । पृथिवीम् । उत । द्याम् । तेभ्यः । पितृभ्यः । नमसा । विधेम ।।४९।।

नः **अस्माकं** पितुः **तातस्य** ये पितरः **जनकाः** । ये **च** पितामहाः **तज्जनकाः** । **पूजार्थं बहुवचनम्** । ये **च अन्ये** उरु **विस्तीर्णम्** अन्तरिक्षम् आविविशुः **आविष्टवन्तः** । ये **च** पृथिवीम् आक्षियन्ति **अभिनिवसन्ति । पृथिव्यां वर्तन्त इत्यर्थः** । उत-**शब्दः अप्यर्थे । ये च** द्याम् **स्वर्गलोकम् आक्षियन्ति आश्रित्य निवसन्ति । इत्थं लोकत्रयं व्याप्य वर्तन्त इत्यर्थः** । तेभ्यः **सर्वेभ्यः** पितृभ्यः । **तादर्थ्ये चतुर्थी** । नमसा । **नम इति अन्ननाम । हविर्लक्षणेन अन्नेन नमस्कारेण वा** विधेम **परिचरेम । विधतिः परिचरणकर्मा ।**

इदमिद् वा उ नापरं दिवि पश्यसि सूर्यम् ।
माता पुत्रं यथा सिचाभ्ये॑नं[1] भूम ऊर्णुहि[2] ।। ५० ।।

इदम् । इत् । वै । ऊं इति । न । अपरम् । दिवि । पश्यसि[3] । सूर्यम् ।
माता । पुत्रम् । यथा । सिचा । अभि । एनम् । भूमे । ऊर्णुहि ।। ५० ।।

हे **मृतपुरुष** इदम् इद् वा उ **इदमेव खलु तव जीवनम् यद् अस्माभिः श्राद्धेषु दीयते** । अपरम् **अन्यद् न किंचिद् अस्ति । अत्रैव श्मशानदेशे निवसन्** सूर्यं दिवि **आकाशे** पश्यसि । **उत्तरोर्धर्चः परोक्षकृतः** । यथा **येन प्रकारेण** माता **जननी** सिचा **चेलाञ्चलेन स्वकीयं** पुत्रम् **अभिवृणोति आच्छादयति हे** भूमे **पृथिवि** एनं **श्मशानस्थं[4] मृतम्** अभ्यूर्णुहि **स्वतेजसा प्रच्छादय । शीतवातोष्णादिकं यथैनं न प्राप्नोति तथा त्वत्स्वरूपे अन्तर्भावयेत्यर्थः । ऊर्णुञ् आच्छादने ।**

**इति द्वितीयेनुवाके पञ्चमं सूक्तम् ।**

'इदमिद् वै' **इति ऋचोराद्ययोः श्मशानदेशे शलाकाभिश्रयनकर्मणि विनियोग उक्तः ।**

'अग्नीषोमा पथिकृता' ( ५३ ) **इति तिसृभिः प्रेतम् उत्थाप्य दहनाय शकटे निदध्यात् ।**

---

१. सिचा अभ्यैनं C. २. भूमि वृणु तैआ ६,७,१. ३. पश्यसि Cp.
४. स्मशान॰ S'.

'इमौ युनज्मि' ( ५६ ) इत्यनया सप्रेते शकटे वृषभद्वयम् अभिमन्त्र्य युञ्ज्यात्।

'एतत् त्वा वासः' ( ५७ ) इत्यनया वासोऽभिमन्त्र्य प्रेतं प्रच्छादयेत्।

'अग्नेर्वर्म' ( ५८ ) इत्यनया सप्तच्छिद्रया गोवपया प्रेतमुखं प्रच्छादयेत्।

'दण्डं हस्तात्' ( ५९ ) इत्यनया प्रेतब्राह्मणहस्ताद् वेदयष्टिं पुत्रो गृह्णीयात्।

'धनुर्हस्तात्' ( ६० ) इत्यनया प्रेतक्षत्रियहस्ताद् धनुर्गृह्णीयात्।

इदमिद् वा उ नापरं जरस्यन्यादितोपरम्।
जाया पतिमिव वाससाभ्येनं भूम ऊर्णुहि ॥ ५१ ॥

इदम्। इत्। वै। ऊं इति। न। अपरम्। जरसि। अन्यत्। इतः। अपरम्।
जाया। पतिम्ऽइव। वाससा। अभि। एनम्। भूमे। ऊर्णुहि ॥ ५१ ॥

जरसि जरायां जीर्यदवस्थायां यद् अन्नादिकम् उपभुक्तम् इदम् इद् वा उ इदमेव खलु परिशिष्टम् नापरम् अन्यद् भोक्तव्यम् अस्ति। इतः अस्मात् [1]श्मशान-देशाद् अन्यत् स्थानमपि अस्य न विद्यते अपरं कार्यजातमपि अस्य न संभवति। इत्थं श्मशाने[1] परित्यक्तम् एनम् हे भूमे जाया भार्या पतिं वाससेव अभ्यूर्णुहि अभिप्रच्छादय।

अभि त्वोर्णोमि पृथिव्या मातुर्वस्त्रेण भद्रया।
जीवेषु भद्रं तन्मयि स्वधा पितृषु सा त्वयि ॥ ५२ ॥

अभि। त्वा। ऊर्णोमि। पृथिव्याः। मातुः। वस्त्रेण। भद्रया।
जीवेषु। भद्रम्। तत्। मयि। स्वधा। पितृषु। सा। त्वयि ॥ ५२ ॥

मातुः सर्वजनन्याः भद्रया। षष्ठ्यर्थे तृतीया। भद्रायाः कल्याण्याः पृथिव्याः भूम्याः संबन्धिना वस्त्रेण वाससा हे मृतपुरुष त्वा त्वाम् अभि [2]ऊर्णोमि अभिच्छादयामि। जीवेषु प्राणधारिषु जीवदवस्थावत्सु मनुष्येषु मध्ये यद् दानाय भद्रम् शोभनं वस्त्वस्ति तन्मयि संस्कर्तरि भवतु। पितृषु पितृदेवतासु या स्वधा विद्यते। स्वधेति अन्ननाम। स्वधाकारेण हूयमानं हविर्लक्षणम् अन्नं यद् अस्ति सा स्वधा त्वयि मृतपुरुषे भवतु। यद्वा स्वैर्ज्ञातिभिर्धीयते विधीयत इति स्वधा पिण्डोदकदानादिरूपा पितृतृप्तिकरी क्रिया स्वधा। सा त्वयि भवत्वित्यर्थः।

अग्नीषोमा पथिकृता स्योनं देवेभ्यो रत्नं दधथुर्वि[3] लोकम्।

---

१. स्मशा° S'. २. प्रोर्णोमि S', शंपा च. ३. दधतु° R; दधतु° > दधथु° Dc.

उप प्रेष्यन्तं[1] पूषणं यो वहात्यञ्जोयानैः[2] पथिभिस्तत्र गच्छतम्[3] ॥५३॥

अग्नीषोमा । पथिऽकृता । स्योनम् । देवेभ्यः । रत्नम् । दधथुः । वि । लोकम् ।
उप । प्र । ईष्यन्तम्[4] । पूषणम् । यः । वहाति । अञ्जःऽयानैः[5] । पथिऽभिः । तत्र । गच्छतम् ॥

अग्नीषोमा अग्निश्च सोमश्च अग्नीषोमौ । 'सुपां सुलुक्°' ( पा ७,१,३९ ) इति पूर्वसवर्ण आकारः । पथिकृता पन्थानं पुण्यलोकगमनसाधनं मार्गं कुरुत इति पथिकृतौ[6] । तेनैव सूत्रेण विभक्तेराकारः । एवंगुणविशिष्टावग्नीषोमौ[6] स्योनम् सुखकरं रत्नम् रमणीयं यद्वा रत्नवद् उत्कृष्टं लोकम् स्वर्गाख्यं देवेभ्यः । तादर्थ्ये चतुर्थी । देवानाम् अर्थे वि दधतुः[6] चक्रतुः । 'छन्दसि परेऽपि' ( पा १,४,८१ ) इति उपसर्गस्य परत्र प्रयोगः । यद्वा । पुरुषव्यत्ययः । हे पथिकृतावग्नीषोमौ देवेभ्यः देवार्थं देवान् उद्दिश्य होतुं रत्नम् रमणीयं लोकम् स्थानं वि दधथुः युवां कृतवन्तौ स्थः । श्रूयते हि—"'राजानौ वा एतौ देवतानां यद् अग्नीषोमौ । अन्तरा देवता इज्येते देवतानां विधृत्यै' ( तै २,६,२,२ ) इति । यो लोकः उप समीपे प्रेष्यन्तम् प्रगच्छन्तं पूषणम् पूषाख्यं देवम् यद्वा सर्वप्राणिनां[7] पोषकं सूर्यं वहाति वहति धारयति तत्र तस्मिन् लोके अञ्जयानैः[6] अञ्जसा आर्जवेन यान्ति गच्छन्ति एभिरिति अञ्जयानाः । तैः पथिभिर्गच्छतम् इमं प्रेतं गमयतम् । प्रयोज्यव्यापारवाचिना प्रयोजकव्यापारो लक्ष्यते ।

पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः ।
स त्वैतेभ्यः परि ददत्[8] पितृभ्योऽग्निर्देवेभ्यः[9] सुविदत्रियेभ्यः[10] ॥ ५४ ॥

पूषा । त्वा । इतः । च्यवयतु । [11]प्र । विद्वान्[11] । अनष्टऽपशुः । भुवनस्य । गोपाः ।
सः । त्वा । एतेभ्यः । परि । ददत् । पितृऽभ्यः । अग्निः । देवेभ्यः । सुऽविदत्रियेभ्यः ॥ ५४ ॥

हे प्रेत त्वा त्वां विद्वान् जानन् पूषा एतत्संज्ञको देवः इतः अस्मात् स्थानात् प्र च्यावयतु निर्गमयतु । कीदृशः पूषा । अनष्टपशुः अनष्टा अहताः पशवो येन स तथोक्तः । स खलु गवादिपशूनां पोषयिता । 'पूषा पोषयतु' ( तु. तैब्रा १,६,२,२ ),

---

१. प्रेष्यंतं > प्रेष्यंतं Dc; प्रेष्यंतं RW., W. वैप १,२२५३ R द्र. २. वहात्यञ्जायानैः V; वहात्यजौयानैः K; वहात्यजोयानैः B,C,R; वहात्यंजोयानैः > वहात्यंजायानैः Dc; वहात्यंजयानैः A,S, सा.; वहात्यंजोयानैः WM.; वहात्यजयानैः B[2],RW.,W. ३. गच्छंन्तम् W. ४. ईष्यंतम् P,P[2]; ईष्यतम् Cp; इष्यतम् Op. ५. अजः° WM. ६. वैतु. मंपा. ७. प्राणानां S'. ८. ददात् तैआ ६,१,१ सा. ९. पितृभ्यो अग्नि° A,K[m], RW.; पितृभ्यो अग्नि° C. १०. सुविदत्रेभ्यः तैआ. ११. प्रऽविद्वान् Cp; प्र । विद्वान् P,P[2].

'पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः' (ऋ ६,५४,५) इत्यादिश्रुतेः । भुवनस्य भूतजातस्य गोपाः गोपायिता । गुपू रक्षणे । 'गुपूधूपविच्छि°' (पा ३,१,२८) इति आयप्रत्ययः । क्विपि अतो लोपे[1] यलोपविधिं प्रति न[2] स्थानिवद् भवतीति तस्य स्थानिवत्त्वनिषेधात् 'लोपो व्योर्वलि' (पा ६,१,६६) इति यकारलोपः । स पूषा त्वा त्वाम् एतेभ्यः पितृभ्यः । एतच्छब्देन संनिहितार्थवाचिना मृतपुरुषसंबन्धिनः पितरः परामृश्यन्ते । त्वदीयेभ्यः पितृपितामहप्रपितामहेभ्यः परि ददात्[3] परिददातु । रक्षणार्थं दानं परिदानम् । तद्योगे चतुर्थी विभक्तिर्भवति । 'अग्नये त्वा परिददामि' (कौसू ५६,१३) इत्यादौ तथा दर्शनात् । परिपूर्वाद् ददातेर्लेटि आडागमः । 'इतश्च लोपः' (पा ३,४,९७) इति इकारलोपः । तथा अग्निः देवः दहनसंस्कारेण त्वा सुविदत्रियेभ्यः सुविदत्रं शोभनविज्ञानम् यद्वा सुखेन लब्धव्यं धनं सुविदत्रम् सुष्ठु विशेषेण दानं वा । आह च यास्कः— 'सुविदत्रं धनं भवति । विन्दतेर्वैकोपसर्गाद् । ददातेर्वा स्याद् द्व्युपसर्गात्' (नि ७,९) इति । तदर्हाः सुविदत्रियाः । तेभ्यो देवेभ्यः परि ददातु ।

आयु॒र्वि॒श्वायुः॒ परि॑ पातु[4] त्वा पू॒षा त्वा॑ पातु प्रप॑थे पु॒रस्ता॑त् ।
यत्रास॑ते सु॒कृतो॒ यत्र॒ त[5] ई॒युस्तत्र॑[6] त्वा दे॒वः स॑वि॒ता द॑धातु ॥ ५५ ॥

आयु॑ः । वि॒श्वऽआ॑युः । परि॑ । पा॒तु॒ । त्वा॒ । पू॒षा । त्वा॒ । पा॒तु॒ । प्रऽप॑थे । पु॒रस्ता॑त् ।
यत्र॑ । आस॑ते । सु॒ऽकृत॑ः । यत्र॑ । ते॒ । ई॒युः । तत्र॑ । त्वा॒ । दे॒वः । स॒वि॒ता । द॒धा॒तु॒ ॥ ५५ ॥

आयुः एतन्नामको जीवनाभिमानी देवः त्वा त्वां परि पासति[3] परिपातु । कीदृश आयुः । विश्वायुः सर्वजीवनवान् । तथा पूषा जीवपोषको देवः पुरस्तात् पूर्वस्यां दिशि प्रपथे पथो[7] गमनमार्गस्य प्रारम्भे त्वा त्वां पातु रक्षतु । यत्र यस्मिन् स्वर्गे[8] लोके सुकृतः पुण्यकृतः आसते उपविशन्ति ते सुकृतो यत्र यस्मिन् स्वर्गसंबन्धिनि देशे नाकपृष्ठाख्ये ईयुः जग्मुः तत्र देशे देवः दानादिगुणयुक्तः सविता सर्वप्रेरकः एतत्संज्ञकः हे प्रेत त्वा त्वां दधातु धारयतु स्थापयतु ।

इ॒मौ यु॑नज्मि ते॒ वह्नी॑[9] असु॑नीताय[10] वोढ॑वे[11] ।
ताभ्यां॑[12] य॒मस्य॒ साद॑नं॒ समि॑ती॒श्चाव॑[13] गच्छतात् ॥ ५६ ॥

---

१. लोप S'.　२. व S'.　३. वैतु. मंपा.　४. पासति ऋ १०,१७,४ तैआ ६,१,२ S', सा.　५. ते ययुस्तत्र ऋ. तैआ.　६. ते Cp.　७. पयो S',　८. सर्वे S'.　९. ?वह्नी तैआ ६,१,१.　१०. °नीथाय S, तैआ.　११. ?वोढवै तैआ.　१२. याभ्यां तैआ.　१३. समि॑ती चाव E²; सुकृताञ्चापि तैआ.

इमौ । युनज्मि[1] । ते । वह्नी इति । असुऽनीताय । वोढवे ।
ताभ्याम् । यमस्य । सदनम् । सम्ऽइतीः[2] । च । अव । गच्छतात्[3] ॥ ५६ ॥

हे मृतपुरुष वह्नी वोढारौ इमौ अनड्वाहौ ते तव वहनाय युनज्मि अनसि संयोजयामि । किमर्थम् । असुनीताय[4] असवः प्राणा नीता यस्मात् सः असुनीतो गतप्राणो देहः तस्मै । 'क्रियाग्रहणं कर्तव्यम्'(पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थी । त्यक्तप्राणं शरीरं वोढवे वोढुम् । यद्वा सुष्ठु नेतव्यः सुनीतः न सुनीतः असुनीतः । दुर्वह इत्यर्थः । तादृशं शवं वोढुम् । वहेः 'तुमर्थे सेसेन्°' (पा ३,४,९) इति तुमर्थे तवेन्प्रत्ययः । ताभ्याम् अनडुद्भ्यां यमस्य संबन्धि सदनम् गृहम् इति[5] अनेन प्रकारेण सम्[5] अव गच्छतात् सम्यग् जानीहि[6] ।

°एतत् त्वा वासः[7] प्रथमं[8] न्वागन्नपैतदूह यदिहाबिभः पुरा ।
[9]इष्टापूर्तमनुसंक्राम विद्वान् यत्र[5] ते दत्तं बहुधा विबन्धुषु ॥ ५७ ॥

एतत् । त्वा । वासः । प्रथमम् । नु । आ । अगन् । अप । एतत् । ऊह । यत् । इह । अबिभः । पुरा[10] । इष्टाऽपूर्तम् । अनुऽसंक्राम । विद्वान् । यत्र । ते । दत्तम् । बहुऽधा । विऽबन्धुषु ॥

एतत् इदं संनिहितं प्रथमम् मुख्यं वासस्त्वा त्वां नु अद्य आगन् आगमत् प्राप्नोत् । गमेर्लुङि 'मन्त्रे घस°' (पा २,४,८०) इति च्लेर्लुक् । 'मो नो धातोः' (पा ८,२,६४) इति नत्वम् । एतद् वासः अपोह परित्यज । इह अस्मिन् भूलोके पुरा पूर्वस्मिन् जीवनकाले यद् वासः अबिभः अधारयः । एतत् इति पूर्वेण संबन्धः । बिभर्तेर्लङि सिपि 'भृञामित्' (पा ७,४,७६) इति अभ्यासस्य इत्त्वम् । विद्वान् जानन् मोहरहितो भूत्वा इष्टापूर्तम् इष्टं श्रुतिचोदितम् अग्निहोत्रदर्शपूर्णमासादि कर्म, पूर्तम् स्मृत्युदितं[11] वापीकूपतटाकादिनिर्माणम् तद् उभयं स्वात्मना कृतम् अनु संक्राम अनुलक्ष्य गच्छ संप्राप्नुहि । यत्र यस्मिन्निष्टापूर्ते क्रियमाणे बन्धुषु[5] बान्धवजनेषु बहुधा बहुप्रकारं ते त्वया [5]विशेषेण[12] धनं दत्तम् दक्षिणात्वेन वितीर्णम् । अभवद् इत्यर्थः । तादृशम् इष्टापूर्तम् इति संबन्धः ।

अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व मेदसा पीवसा च ।
नेत्[13] त्वा धृष्णुर्हरसा जर्हृषाणो दधृग्[14] विधक्षन्[15] परीङ्खयातै[16] ॥५८॥

---

१. युनग्मि P,P²; युनग्मि Cp. २. °इती Bp. ३. गछताम् P². ४. °नीथाय S'. ५. वैतु. मंगा. ६. समज्जानीहि S'. ७. इदं त्वा वस्त्रं तैआ ६,१,१. ८. प्रथम° A,B,K^m,C; प्रथमं > प्रथम° Dc. ९. °नुसंपश्य दक्षिणां यथा तैआ. १०. पुरां P². ११. °दित S'. १२. विश S'. १३. न B. १४. दधद् तैआ ६,१,४. १५. °धक्ष्यन् B,K^m,V,Op ऋ १०,१६,७ तैआ. १६. परीङ्खयातै C,R,RW.; पर्यङ्खयाते ऋ.; पर्यङ्खयातै तैआ.

अ॒ग्नेः । वर्म॑ । परि॑ । गोभि॑ः । व्य॒य॒स्व॒ । सम् । प्र । ऊ॒र्णु॒ष्व॒ । मेद॑सा । पीव॑सा । च॒ ।
न । इत् । त्वा॒ । धृ॒ष्णुः । हर॑सा । जर्हृ॑षाणः । द॒धृक् । वि॒ऽध॒क्षन्[१] । प॒रि॒ऽई॒ङ्खया॑तै[२] ॥५८॥

हे प्रेत गोभिः । अवयवेषु अवयविशब्दः । अनुस्तरण्या गोः संबन्धिभिरवयवैः अग्नेः दाहकस्य वह्नेः वर्म वारकं कवचं परि व्ययस्व परितः [३]संवृणु । यथाग्नेर्ज्वालाभिर्दग्धो न भवसि[३] तथा गोसंबन्धिभिरवयवैः संवृतो भवेत्यर्थः । व्येञ् संवरणे । संव्यानक्रियाफलस्य आत्मगामित्वात् 'स्वरितञितः०' ( पा १,३,७२ ) इति व्ययतेरात्मनेपदम् । उक्त एवार्थो विव्रियते । पीवसा पीवरेण स्थूलेन मेदसा मेदोधातुरूपया वपया च सं प्रोर्णुष्व । यद्वा मेदसा वपया पीवसा अन्येन च पीवरेणाङ्गेन सं प्रोर्णुष्व हे प्रेत आत्मानं सम्यक् प्रच्छादय । प्रच्छादनाभावे भीतिं दर्शयति नेद् इति । धृष्णुः धर्षकः अभिभवनशीलो हरसा रसहरणशीलेन तेजसा जर्हृषाणः अत्यर्थं हृष्यन् दधृक् प्रगल्भः एवंगुणविशिष्टोऽग्निः त्वा त्वां विधक्षन् विशेषेण दग्धुम् इच्छन् परि[४] परितः नेत् ईङ्खयातै[४] ईङ्खनं चलनं दाहासहिष्णुतया इतस्ततः पतनं तन्नैव कुर्यात् । महाभीतिकरम् ईङ्खनं तव मा भूद् इत्यर्थः । नेत् इति निपातः परिभये[५] वर्तते । उक्तं हि यास्केन— 'अथापि नेत्येष इद् इत्येतेन संप्रयुज्यते परिभये' ( नि १,१० ) इति । ईङ्खतिर्गत्यर्थः । उख उखि वख वखि इत्यादिषु गत्यर्थेषु इख ईखि इति पठितत्वात् । तस्मात् लेटि आडागमः । 'वैतोन्यत्र' ( पा ३,४,९६ ) इति ऐकारः ।

'द॒ण्डं हस्ता॑दा॒दद॑ानो ग॒तासो॑ः स॒ह श्रोत्रे॑ण॒ वर्च॑सा॒ बले॑न' ।
अत्रै॒व त्वमि॒ह व॒यं सु॒वीरा॒[७] विश्वा॒ मृधो॑[८] अ॒भिमा॑तीर्जयेम ॥ ५९ ॥

द॒ण्डम् । हस्ता॑त् । आ॒ऽदद॑ानः । ग॒तऽअ॑सोः । स॒ह । श्रोत्रे॑ण । वर्च॑सा । बले॑न ।
अत्र॑ । ए॒व । त्वम् । इ॒ह । व॒यम् । सु॒ऽवीरा॑ः । विश्वा॑ः । मृध॑ः । अ॒भिऽमा॑तीः । ज॒येम॒ ॥ ५९ ॥

समावर्तनप्रभृति समन्त्रकं दण्डधारणं ब्राह्मणस्य विहितम् । स दण्डः अस्मिन् काले पुत्रादिना धारणाय स्वीकार्य इति प्रतिपाद्यते । गतासोः गता असवः प्राणा यस्मात् स तथोक्तः तथाविधस्य ब्राह्मणशवस्य हस्ताद् वैणवं दण्डम् आददानः स्वीकुर्वन्नहं श्रोत्रेण शब्दश्रवणसाधनेन्द्रियजनितेन वर्चसा श्रुताध्ययनसंभूतेन तेजसा तत्कृतेन बलेन च सह । भवामीति शेषः । अत्र अस्मिन् दहनदेशे एव हे प्रेत त्वम् भव वर्तस्व । वयं तु इह अस्मिन् भूलोके सुशेवा.[४] सुसुखाः सन्तः विश्वाः सर्वा मृधः संग्रामान् अभिमातीः अभिमन्यमानान् हिंसकान् शत्रून् जयेम अभिभवेम ।

---

१. वि॒ऽध॑क्ष्यन् Cp,Op; वि॒ऽध॒क्षन् P,P[२]. २. परि॑ऽई॒ङ्खया॑तै Bp[२]. ३. नास्ति S'. ४. वैतु मंगा. ५. ०भवे S'. ६. सु॒वर्णं॒ ( मणिं॒ च ) हस्ता॑दा॒दद॑ाना मृ॒तस्य॒ श्रियै॑ ब्र॒ह्मणे॑, ( वि॒शे न ) तेज॑से, ( पुष्ट्यै॒ च ) बला॑य । तैआ ६,१,३. ७. सु॒शेवा॒ तैआ. ८. स्पृधो॑ ऋ १०,१८,९ तैआ.

धनुर्हस्तादाददानो[1] मृतस्य सह क्षत्रेण वर्चसा बलेन[2] ।
समागृभाय[3] वसु भूरि पुष्टमर्वाङ् त्वमेह्युप[4] जीवलोकम् ॥ ६० ॥

धनुः । हस्तात् । आऽददानः । मृतस्य । सह । क्षत्रेण । वर्चसा । बलेन ।
सम्ऽआगृभाय । वसु । भूरि । पुष्टम् । अर्वाङ् । त्वम् । आ । इहि । उप । जीवऽलोकम् ॥ ६० ॥

मृतस्य त्यक्तप्राणस्य क्षत्रियस्य हस्ताद् धनुः चापम् आददानः गृह्णन्नहं क्षत्रेण[5] क्षतात् त्रायत इति क्षत्रम् क्षत्रजातेरसाधारणं तेजः तेन तेजसा वर्चसा पराभिभवसमर्थेन वीर्येण तत्कृतेन बलेन च सह युक्तो भवामि । भूरि बहुलं पुष्टम् पोषकं वसु धनम् अस्मभ्यं दातुं समागृभाय सम्यग् अभिमुखं गृहाण आदत्स्व। ग्रह उपादाने । 'छन्दसि शायजपि' ( पा ३,१,८४ ) इति हल उत्तरस्य श्नाप्रत्ययस्य शायजादेशः । एवं धनं गृहीत्वा जीवलोकम् जीवानां लोकं भूलोकम् उप उपलक्ष्य अर्वाङ् अस्मदभिमुखः सन् त्वम् एहि आगच्छ । आगत्य अस्मभ्यम् इष्टधनादिकं प्रयच्छेत्यर्थः ।

इति द्वितीयेऽनुवाके षष्ठं सूक्तम् ।

इति अष्टादशकाण्डस्य द्वितीयोऽनुवाकः ।

ऋ· अथर्वा, दे· यमः, मन्त्रोक्ताः, ५,६- अग्निः, ५० भूमिः, ५४- इन्दुः, ५६- आपः

तृतीयेऽनुवाके सप्त सूक्तानि । [6]तत्र प्रथमसूक्तस्य[6] आद्यया चितौ भार्यां[7] प्रेतेन सह संवेशयेत् । ऋक्पाठस्तु—

इयं नारी पतिलोकं वृणाना नि पद्यत उप त्वा मर्त्य प्रेतम् ।
धर्मं[8] पुराणमनुपालयन्ती[9] तस्यै प्रजां द्रविणं चेह धेहि[10] ॥ १ ॥

इयम् । नारी । पतिऽलोकम् । वृणाना । नि । पद्यते । उप । त्वा । मर्त्य । प्रऽइतम् ।
धर्मम् । पुराणम् । अनुऽपालयन्ती[11] । तस्यै । प्रऽजाम् । द्रविणम् । च । इह । धेहि ॥ १ ॥

इयं पुरोवर्तिनी नारी स्त्री । 'नृनरयोर्वृद्धिश्च' ( पा ४,१,७३ ) इति शार्ङ्गरवादिषु पाठात् ङीन्प्रत्ययः । 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तत्वम् । पतिलोकम्

---

१. °दाना तैआ ६,१,३. २. मृतस्यास्मे क्षत्राय वर्चसे बलाय ऋ १०,१८,९; मृतस्य श्रियै क्षत्रायौजसे बलाय तैआ. ३. समागृभाय R. ४. त्वमेह्युप Km,R; त्वमेह्युप > त्वमेह्युप Dc. ५. क्षत्रियेण S'. ६. ···सूक्तस्य रिक्तं स्थानं द्वादशानां वर्णानाम् S'. ७. भार्याः S'. ८. विश्वं तैआ. ९. °पादयन्ती A,B,Km,V,O,Op,R², K²; पाद· यन्ती इह कश्चिदन्यो वर्णो दकारीकृतः Dc. १०. धेहि B. ११. °पादयंती P²; °पादयंती Cp,D²,O,Op.

पत्युर्लोकः पतिलोकः पत्या अनुष्ठितानां यागदानहोमादीनां फलभूतं[1] स्वर्गादिस्थानम् तं पतिलोकं वृणाना सहधर्मचारिणीत्वेन संभजमाना । वृङ् संभक्तौ । लटः शानच् । क्र्यादित्वात् श्नाप्रत्ययः । 'चितः' (पा ६,१,१६३) इति अन्तोदात्तत्वम् । एवंभूता स्त्री हे मर्त्य मरणधर्मन् मनुष्य प्रेतम् प्रकर्षेण गतम् अस्माद् भूलोकाद् विनिर्गतं त्वा त्वाम् उप नि पद्यते समीपे नितरां गच्छति । अनुमरणार्थं प्राप्नोतीत्यर्थः । पद गतौ । दिवादित्वाद् श्यन्प्रत्ययः । कस्माद्धेतोरित्याह— पुराणम् पुरातनम् अनादिशिष्टाचारसिद्धं स्मृतिपुराणादिप्रसिद्धं वा । 'पुराणप्रोक्तेषु' (पा ४,३,१०५) इत्यत्र पुराणेतिनिपातनात् तुडभावः । धर्मम् सुकृतम् अनुपालयन्ती । आनुपूर्व्येण संप्रदायाविच्छेदेन परिपालनम् अनुपालनम् । तत् कुर्वती । 'लक्षणहेत्वोः क्रियायाः' (पा ३,२'१२६) इति हेतौ शतृप्रत्ययः । स्मृतिपुराणादिप्रसिद्धधर्मस्य अनुमरणजन्यस्य अनुपालनाद्धेतोरित्यर्थः । स्मर्यते हि—

'भर्तारम् उद्धरेन्नारी प्रविष्टा सह पावकम् ।
व्यालग्राही यथा सर्पं बलाद् उद्धरते बिलात् ॥' इति ।

तस्यै तथाविधायै अनुमरणं कृतवत्यै स्त्रियै इह अस्मिन् भूलोके जन्मान्तरे लोकान्तरेपि प्रजाम् । प्रजायत इति प्रजा । 'उपसर्गे च संज्ञायाम्' (पा ३,२,९९) इति जनेर्डप्रत्ययः । तां पुत्रपौत्रादिरूपां द्रविणम् धनं च धेहि प्रयच्छ । अनुमरणप्रभावाज्जन्मान्तरेपि स एव तस्याः पतिर्भवतीत्यर्थः[2] । डुधाञ् धारणपोषणयोः । 'घ्वसोरेद्धावभ्यासलोपश्च' (पा ६,४,११९) इति एत्वाभ्यासलोपौ ।

उपनिपद्यमाना सा यदि इह लोके पुनर्जीवितुम् इच्छेत् तदा 'उदीर्ष्व' इत्यनया द्वितीयर्चा प्रेतेन सह संविष्टां ताम् अभिमन्त्र्य उत्थापयेत् । पाठस्तु—

**उदी॑र्ष्व नार्य॒भि जी॑वलो॒कं ग॒तासु॑मे॒तमुप॑[3] शेष॒ एहि॑ ।**
**ह॒स्त॒ग्रा॒भस्य॑ [4]दधि॒षोस्तवे॒दं[4] पत्यु॑र्जनि॒त्वम॒भि सं ब॑भूथ[5] ॥ २ ॥**

उत् । ई॒र्ष्व॒ । ना॒रि॒ । अ॒भि । जी॒व॒ऽलो॒कम् । ग॒तऽअ॑सुम् । ए॒तम् । उप॑ । शे॒षे॒ । आ । इ॒हि॒ ।
ह॒स्त॒ऽग्रा॒भस्य॑ । द॒धि॒षोः[6] । तव॑ । इ॒दम् । पत्युः॑ । ज॒नि॒ऽत्वम् । अ॒भि । सम् । ब॒भू॒थ॒ ॥ २ ॥

हे नारि धर्मपत्नि जीवलोकम् जीवानां जीवतां प्राणधारिणां लोकः । लोक्यते अनुभूयते जन्मान्तरकृतधर्माधर्मफलं सुखदुःखात्मकम् अस्मिन्निति लोकः भूलोकः । 'उभाभ्यामेव मनुष्यलोकम्' (प्रउ ३,७) इति श्रुतेः । तथाविधं जीवलोकम् अभि अभिलक्ष्य उदीर्ष्व उद्गच्छ । पत्युः सकाशाद् उत्तिष्ठ । ईर गतौ कम्पने च । 'अदिप्रभृतिभ्यः शपः' (पा २,४,७२)

---

१. फलभुवं S'. २. °र्थः स्मर्यते हि S'. ३. इतासु° तैआ ६,१,३.
४. दिवि॒षो° V,Km,R, ऋ १०,१८,८ तैआ.; दवि॒षो° > दिवि॒षो° Dc; °षोस्त्वमे॒तत् तैआ.
५. बंभूव तैआ. ६. दिधिषोः P,P[2]; दिवि॒षोः Cp,D[2].

इति शपो लुक्। गतासुम् गता असवः प्राणा यस्मात् स तथोक्तः तथाविधम् एतं पतिम् उप शेषे उपेत्य तेन सार्धं शयनं 'करोषि। शीङ्[1] स्वप्ने। अदादित्वात् शपो लुक्। अयम् अर्थः। पूर्वम् अदृष्टार्थम् अनुगमनम् उक्तम्। इदानीं शास्त्राविरोधिदृष्टफलानुरोधेन तत उत्थानं प्रतिपाद्यते। दृष्टफलाभावप्रतिपत्त्यर्थं गतासुम् इति विशेषणम्। उपशयने[2] दृष्टप्रयोजनं नास्तीत्यतः एहि पत्युः सकाशाद् आगच्छ। जीवनावस्थायामेव पतिसकाशात् सर्वम् ऐहिकं पुत्रादिलक्षणम् अभिप्राप्तम् अतोपि हेतोरागच्छेति प्रतिपाद्यते हस्तग्राभस्य इति। हस्तं गृह्णातीति हस्तग्राभः पाणिग्रहणकर्ता तस्य। ग्रह उपादाने इत्यस्मात् 'कर्मण्यण्' (पा ३,२,१) इति अण्प्रत्ययः। 'हृग्रहोर्भश्छन्दसि' (पावा ८,२,३२) इति भत्वम्। दधिषोः धारयितुः तव पत्युः इदं जनित्वम् अपत्यादिरूपेण जन्म त्वम् अभि सं बभूथ अभिसंप्राप्तासि। 'बभूथाततन्थजगृम्भववर्थेति निगमे' (पा ७,२,६४) इति इडभावो निपात्यते।

'अपश्यं युवतिम्' इति द्वाभ्याम् ऋग्भ्यां चितौ पार्श्वतः परिणीयमानां गाम् अनुमन्त्रयते। तत्र आद्या—

[3]अप॑श्यं युव॒तिं नी॒यमा॑नां [4]जी॒वां मृ॒तेभ्यः॑[4] परिणी॒यमा॑नाम्।
अ॒न्धेन॒ यत् तम॑सा प्रावृ॒तासी॑त् प्रा॒क्तो अपा॑चीमनयं॒ तदे॑नाम्[3] ॥ ३ ॥

अप॑श्यम्। यु॒व॒तिम्[5]। नी॒यमा॑नाम्। [6]जी॒वाम्। मृ॒तेभ्यः॑[6]। परि॒ऽनी॒यमा॑नाम्। अ॒न्धेन॑। यत्। तम॑सा। प्रावृ॑ता। आसी॑त्। प्रा॒क्तः। अपा॑चीम्। अ॒न॒य॒म्। तत्। ए॒ना॒म् ॥ ३ ॥

युवतिम् यौवनावस्थोपेतां नीयमानाम् शवसमीपं प्राप्यमाणां जीवाम् जीवन्तीं मृतेभ्यः। तादर्थ्ये चतुर्थी। त्यक्तप्राणेभ्यः पुरुषेभ्यः मृतपुरुषार्थं परिणीयमानाम् दारुचित्यग्न्यादिसहितं शवं परितः प्रसव्यं नीयमानां गाम् अनुस्तरण्याख्याम् अपश्यम् पश्यामि अवलोकयामि। 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति वर्तमाने लङ्। जीवदवस्थापन्नाया युवतेर्गोः शवपरिणयनम् अयुक्तम् इति जानामीत्यभिप्रायः। अनुस्तरणी सा गौः यत् यस्माद् अन्धेन दृष्ट्युपघातकेन[7] गाढेन तमसा तमिस्रेण अज्ञानलक्षणेन प्रावृता प्रकर्षेण वेष्टिता आसीत्। हिताहितविभागं स्वयं न[8] जानातीत्यर्थः। तत् तस्माद्धेतोः एनां गां प्राक्तः पूर्वदेशात् शवसमीपाद् अपाचीम् अपाङ्मुखीं शवात् पराङ्मुखीम् अस्मदभिमुखीम् अनयम् प्रापयामि। पूर्ववत् लङ्।

---

१. …ङ् रिक्तं स्थानं ४ वर्णानाम् S'. २. …उप° रिक्तं स्थानं १५ वर्णानाम् S'.
३. अप॑श्याम यु॒व॒तिमा॒चर॑न्तीं मृ॒ताय॑ जी॒वां परि॑णी॒यमा॑नाम्। अ॒न्धेन॒ या तम॑सा प्रावृ॑ताऽसि॒ प्रा॒चीमवा॑ची॒मव॒यन्नरि॑ष्ट्यै ॥ तैआ ६,१२,१. ४. जी॒वामृ॒तेभ्यः॑ R. ५. यु॒व॒तीम् Cp. ६. जीवाम्। ऋतेभ्यः P,P[2]. ७. °घातेन S'. ८. य S'.

प्रजानत्यघ्न्ये[1] जीवलोकं देवानां पन्थामनुसंचरन्ती ।
अयं ते गोपतिस्तं जुषस्व स्वर्गं लोकमधि रोहयैनम् ॥ ४ ॥

प्रऽजानती । अघ्न्ये । जीवऽलोकम् । देवानाम् । पन्थाम् । अनुऽसंचरन्ती ।
अयम् । ते । गोऽपतिः । तम् । जुषस्व । स्वःऽगम् । लोकम् । अधि । रोहय । एनम् ॥४॥

हे अघ्न्ये । गोनामैतत् । अहन्तव्ये हे गौः जीवलोकम् जीवानां लोको जीवलोकः भूलोकः। तं प्रजानती प्रकर्षेण जानाना । ज्ञा अवबोधने इत्यस्मात् लटः शत्रादेशः । 'ज्ञाजनोर्जा' (पा ७,३,७९) इति जादेशः। 'श्नाभ्यस्तयोरातः' इति आल्लोपः। उगितश्च' (पा ४,१,६) इति ङीप् । 'शतुरनुमः°' (पा ६,१,१७३) इति नद्या उदात्तत्वम् । तथा देवानाम् इन्द्रादीनां पन्थाम् पन्थानं मार्गं यज्ञलक्षणम् अनुसंचरन्ती अनुलक्ष्य गच्छन्ती क्षीरदध्यादिहविर्निष्पादयन्ती । त्वम् आगच्छेति शेषः । ते तव अयं गोपतिः गोस्वामी । तं जुषस्व सेवस्व । एनं मृतं पुरुषं स्वर्गं लोकम् अधि रोहय प्रापय ।

पितृमेधे चतुर्थेऽहनि[2] संचयनाख्ये कर्मणि 'उप द्यामुप वेतसम्' इति पञ्चमीषष्ठीभ्यां मन्त्रोक्ता ओषधीरभिमन्त्र्य ताभिः क्षीरेण ब्राह्मणस्य अस्थीनि अवसिञ्चेत्। [3]ताश्च ओषधयः वेतसाश्च कर्णी च† नदीफेनं च अवका च गर्हका‡ च बृहद्दूर्वा च मण्डूकपर्णी *चेत्येवमाद्याः[3]।

'[4]उप द्यामुप वेतसमवत्तरो[5] नदीनाम्[4] । अग्ने पित्तमपामसि[5] ॥ ५ ॥[6]

उप । द्याम् । उप । वेतसम्[7] । अवत्ऽतरः[8] । नदीनाम् । अग्ने । पित्तम्[9] । अपाम् । असि ॥[6]

नदीनाम् नदनशीलानाम् अपाम् । 'नदनान्नद्यः' (तु. नि २,२४) इति यास्कः। मन्त्रवर्णश्च भवति । 'अहावनदता हते । तस्मादा नद्यो नाम स्थ' (अ ३ १३,१) इति। पचादिषु नदट् इति पाठात् 'टिड्ढाणञ्' (पा ४,१,१५) इत्यादिना ङीप् । नदनशीलानाम् अपां संबन्धिनीं द्याम् उप । [10]अत्र द्योशब्दः अवकावाची[10] । जलस्योपरि

---

१. प्रजानत्यघ्न्ये Km. २. °र्थे इति S'. ३. नास्ति, स्थानं तु उपषोडशानां वर्णानां रिक्तम् S', पञ्चममन्त्रभाष्याद् उद्धृत्य न्यस्तम् (तु. टि १०) † कर्णश्च के. ‡ गरुहेरुका के. * चे नास्ति S'. ४. उप ज्मन्नुप वेतसेऽवतर (तै. त्तरं मै. पपा. तरं) नदीष्वा मा १७,६ तै ४,६,१,२ मै २,१०,१ काठ १७,१७. † वेतस° Km,R; वेतस° > वेतस° Dc. ५. पित्वम्° B,Km,V,Dc. ६. मन्त्रपदपाठौ न स्तः S'. ७. वेतसम् Cp. ८. अवऽत्तरः Cp. ९. पित्वम् Cp; पित्वम् P²; पित्तम् P. १०. अस्य काल्पनिकन्यासस्य स्थाने ताश्च ओषधयः वेतसाश्च कर्णी च नदीफेनं च अवका च गर्हका च बृहद्दूर्वा च मण्डूकपर्णीत्येवमाद्याः S'.

प्ररूढा भूसंस्पर्शरहिता अवका उच्यन्ते । तत्समीपे । तथा वेतसम् उप । वेतसो नदीतीरगतो वृक्षविशेषः । तस्य समीपे । यद्वा सप्तम्यर्थप्रतिपादकावुपशब्दौ। अवकासु वेतसे चेत्यर्थः। अवत्तरः अतिशयेन अवन् रक्षणसमर्थः सारभूतांशो विद्यते। वेतसस्य च अवकानां च अप्सारत्वं तैत्तिरीये समाम्नायते— 'अपां वा एतत् पुष्पं यद् वेतसः। अपां शरोऽवका। वेतसशाखया चावकाभिश्च विकर्षति' (तै ५,४,४,२;३) इति। हे अग्ने त्वमपि अपां पित्तम् अप्संबन्धी पित्तधातुः असि। 'शुचिरप्पित्तम् और्वस्तु' (अको १,१,५६) इति अभिधानकारः। यतस्त्वम् अपां संबन्ध्यसि अतस्त्वाम् अप्संबन्धिनीभिः अवका-वेतसशाखानदीफेनबृहद्दूर्वाद्योषधीभिः शमयामीति शेषः। ओषधयः[1] केशवेन पद्धतिकारेण परिगणिताः (कौसू ८२,२६)। वेतसाश्च कर्णी[2] च नदीफेनं चावका च बर्हका[3] च बृहद्दूर्वा च मण्डूकपर्णी चेति। अवत्तर इति। अव रक्षणे इत्यस्मात् लटः शत्रादेशः। ततः प्रकर्षार्थे तरप्।

यं त्वम॑ग्ने स॒मद॑ह॒स्तमु॒[4] निर्वा॑पया॒ पुन॑ः ।

क्याम्बू॒रत्र॑[5] रोहतु[6] शाण्डदू॒र्वा[7] व्य॑ल्कशा[8] ॥ ६ ॥

यम्। त्वम्। अ॒ग्ने॒। स॒म्ऽअद॑हः। तम्। ऊं॒ इति॑। निः। वा॒प॒य॒। पुन॑ः।

क्याम्बूः। अत्र॑। रो॒ह॒तु॒। शा॒ण्ड॒ऽदू॒र्वा। वि॒ऽअ॒ल्कशा[9] ॥ ६ ॥

हे अग्ने त्वं यं पुरुषं समदहः सम्यग् दग्धवान् असि तमु तं खलु त्वं पुनर्निर्वापय निर्वृतं सुखितं कुरु। दाहजनितौष्ण्यपरिहारेणेत्यर्थः[10]। एतदर्थमेव हि पूर्वम् अपां पित्तम् असीति अग्नेरप्कार्यत्वम् उक्तम्। निरुपसृष्टाद् वा गतिगन्धनयोः इत्यस्माद् णिचि 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ' (पा ७,३,३६) इति पुगागमः। दाह-निर्वापणस्य परां काष्ठाम् आह क्याम्बूरित्युत्तरार्धेन। अत्र अस्मिन् दहनप्रदेशे क्याम्बूः ओषधिविशेषः रोहतु प्ररोहतु उत्पद्यताम्। तथा शाण्डदूर्वा जलसमीपे उत्पद्य-माना। अण्डाकृतिमूलसहिता दीर्घकाण्डा वा दूर्वा शाण्डदूर्वा सा बृहद्दूर्वेत्यु-च्यते। सा व्यल्कशा अल्काः शाखाः। शो[11] मत्वर्थीयः। विविधशाखोपेता। रोह-त्विति संबन्धः।

'इदं त एकम्' इत्यनया सप्तम्या आहिताग्नेः प्रेतस्याग्रे अग्नित्रयं धारयित्वा अनुमन्त्रयते। तत्पाठस्तु—

---

१. ओषध नास्ति S′. २. कर्नौ S′; कर्णौ शंपा.; कर्णः के. ३. गरुहेरुका के.
४. °हुस्त्वमु तैआ६,४,१. ५. क्रियाम्बरत्र ऋ १०,१६,१३.; क्याम्बूरत्र तैआ. ६. जायतां तैआ. ७. पाकदूर्वा ऋ. तैआ. ८. व्यल्कुशा R², Op, B, K, V; व्यल्कुशा Dc.
९. विऽअल्कुशा Cp. १०. °हारेत्यर्थः S′. ११. सो S′.

इदं त एकं पर ऊं त एकं तृतीयेन ज्योतिषा सं विशस्व ।
संवेशने[2] तन्वा३[3] चारुरेधि प्रियो[4] देवानां परमे सधस्थे[5] ॥ ७ ॥

इदम् । ते । एकम् । परः । ऊं इति । ते । एकम् । तृतीयेन । ज्योतिषा । सम् । विशस्व । सम्ऽवेशने[6] । तन्वा । चारुः । एधि । प्रियः । देवानाम् । परमे । सधऽस्थे ॥ ७ ॥

हे प्रेत ते तव परलोकगमनाय इदम् एकम् गार्हपत्याख्यं ज्योतिः । तथा परः परस्तात् ते तव । उशब्दः अप्यर्थे । अन्वाहार्यपचनाख्यमपि एकं ज्योतिः । तृतीयेन त्रित्वसंख्यापूरकेण ज्योतिषा आहवनीयाख्येन सं विशस्व संगतो[7] भव । साकल्येन आत्मानम् आहवनीयं गमयेत्यर्थः । इत्थम् संवेशने अग्निसंवेशने सति तन्वा संस्कारजनितेन देवशरीरेण चारुः शोभनः एधि भव । अस भुवि इत्यस्माल्लोटि 'घ्वसोरेद्धावभ्यासलोपश्च' (पा ६,४,११९) इति अकारस्य एत्वम् । तस्य 'असिद्धवद् अत्राभात्' (पा ६,४,२२) इति असिद्धत्वात् 'हुझल्भ्यः°' (पा ६,४,१०१) इति हेर्धि-त्वम् । ततः परमे उत्कृष्टे सधस्थे सहस्थाने देवलोके देवानाम् इन्द्रादीनां प्रियः प्रीतिविषयो भव । सह तिष्ठन्ति अस्मिन्निति सधस्थः । 'घञर्थे कविधानम्' (पावा ३,३,५८) इति अधिकरणे तिष्ठतेः कप्रत्ययः । 'सध मादस्थयोश्छन्दसि' (पा ६,३,९६) इति सहस्य सधादेशः । यद्वा [8]अग्निसंस्कारजनितदेवशरीरेण चारुर्भूत्वा देवलोके देवानां प्रिय एधीत्येकवाक्यता[9] ।

'उत्तिष्ठ प्रेहि' इत्यष्टम्या 'प्र च्यवस्व' इति नवम्या च दहनप्रदेशं नेतुं प्रेतम् उत्थापयेत् ।

उत्तिष्ठ प्रेहि प्र द्रवौकः[10] कृणुष्व [11]सलिले सधस्थे[11] ।
तत्र त्वं पितृभिः संविदानः सं सोमेन मदस्व सं स्वधाभिः ॥ ८ ॥

उत् । तिष्ठ । प्र । इहि । प्र । द्रव । ओकः । कृणुष्व । सलिले । सधऽस्थे ।
तत्र । त्वम् । पितृऽभिः । सम्ऽविदानः । सम् । सोमेन । मदस्व । सम् । स्वधाभिः ॥ ८ ॥

---

१. उ त कौ १,६५ तैब्रा ३,७,१,३ आपश्रौ ९,१,१७. २. संवेशने B,C; संवेशनस् कौ. तैब्रा. तैआ ६,३,१ आपश्रौ. ३. तन्व१श् K,K^m,V; तन्वा३ > तन्व१श् Dc; तन्व१ श् ऋ १०,५६,१; तन्वे३ कौ.; तनुवै तैब्रा. तैआ. आपश्रौ. ४. प्रिये तैब्रा. आपश्रौ. ५. जनित्रे ऋ. तैब्रा. आपश्रौ. ६. सम्ऽवेशते Cp; सम् । वेशने P,P². ७. …संगतो रिक्तस्थानं८वर्णानाम् S'. ८. दे अग्नि° S'. ९. °कवावद्धता S'. १०. द्रवोकः WM. ११. परमे व्योमन् तैआ ६,४,२.

हे प्रेत त्वम् उत्तिष्ठ अस्मात् स्थानाद् ऊर्ध्वं तिष्ठ । 'उदोनूर्ध्वकर्मणि' (पा १,३,२४) इति पर्युदासात् तिष्ठतेरात्मनेपदाभावः । उत्थानानन्तरं प्रेहि प्रगच्छ । ततः प्र द्रव प्रकर्षेण धाव । शीघ्रं गच्छेत्यर्थः । सलिले । अन्तरिक्षनामैतत् । अन्तरिक्षे सधस्थे सहस्थाने अलौकिके ओकः गृहं कृणुष्व कुरु । कृवि हिंसाकरणयोश्च । 'धिन्विकृण्व्योर च' (पा ३,१,८०) इति उप्रत्ययः । तत्र तस्मिन् लोके त्वं पितृभिः बर्हिषदग्निष्वात्ताख्याभिः पितृदेवताभिः संविदानः संजानानः ऐकमत्यं[1] गतः सन् सोमेन सं मदस्व । मद तृप्तियोगे । सोमपानेन तृप्तो भवेत्यर्थः । सोमयागेषु हि नाराशंसाख्यः सोमरसस्य भागः पितॄणाम् अस्ति । तदुपभोगेन आत्मानं हर्षयेति भावः । यद्वा सोमेन राज्ञा पितॄणाम् अधिपतिना सह मदस्वेत्यर्थः । तथा स्वधाभिः स्वधाकारसहितैः श्राद्धैः पुत्रादिभिः कृतैः सं मदस्व । संविदान इति । विद ज्ञाने । 'समो गम्यादिषु विदिप्रच्छि' (पावा १,३,२९) इत्यादिना आत्मनेपदम् ।

'प्र च्यवस्व' इत्यनया प्रेतस्य गात्राणि इतस्ततश्च व्याकुलीकुर्यात् । तत्पाठस्तु—

[2]प्र च्यवस्व तन्वं१ सं भरस्व मा ते गात्रा वि हायि मो शरीरम् ।
मनो निविष्टमनुसंविशस्व[3] यत्र भूमेर्जुषसे तत्र गच्छ ॥ ९ ॥[2]

प्र । च्यवस्व । तन्वम् । सम् । भरस्व । मा । ते । गात्रा । वि । हायि । मो इति । शरीरम् ।
मनः । निऽविष्टम् । अनुऽसंविशस्व । यत्र । भूमेः[4] । जुषसे । तत्र । गच्छ ॥ ९ ॥

हे प्रेत त्वं प्र च्यवस्व अस्मात् स्थानात् प्रच्युतो भव । तदर्थं तन्वम् शरीरं हस्तपादादिसहितं[5] सं भरस्व संभृतम् एकीभूतं कुरु । ते तव गात्रा गात्राणि हस्तपादादीनि मा वि हायि परित्यक्तानि मा भूवन् । तथा शरीरम् अवयविभूतो मध्यदेहश्च मो मैव त्यक्तं[6] भूत्[6] । यत्र यस्मिन् स्थाने त्वदीयं मनो निविष्टम् अवस्थितं मनसो विषयभूतं तत् स्वर्गादिलक्षणम् अनुसंविशस्व संप्रविष्टो भव । तथा यत्र यस्यां भूमौ[7] भूप्रदेशे जुषसे प्रीयसे । जुषी प्रीतिसेवनयोः । तत्र गच्छ । तं भूप्रदेशं प्राप्नुहीत्यर्थः ।

पिण्डपितृयज्ञे 'वर्चसा माम्' इति दशम्या उत्तरसूक्तस्य आद्यया च आचामेत् । "'वर्चसा माम्' इत्याचामति" (कौसू ८१,४७) इति हि सूत्रितम् ।

वर्चसा मां पितरः सोम्यासो अञ्जन्तु[8] देवा मधुना घृतेन ।

---

१. एक° S'. २. उत्तिष्ठातस्तनुवं संभरस्व मेह गात्रमवहा मा शरीरम् । यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवः सविता दधातु । तैआ ६,४,२. ३. °ष्टमनु° P³,M,O,R², T,K². ४. भूमे W,M,P,P². ५. पाण्यादि° S'. ६. त्याक्षीः शंपा. ७. वैतु, मंपा. ८. अजंतु R,R²,T.

**चक्षुषे मा प्रतरं तारयन्तो जरसे मा जरदष्टिं वर्धन्तु ॥ १० ॥**

वर्चसा । माम् । पितरः । सोम्यासः । अञ्जन्तु[1] । देवाः । मधुना । घृतेन ।
चक्षुषे । मा । प्रऽतरम् । तारयन्तः । जरसे । मा । जरत्ऽअष्टिम् । वर्धन्तु ॥ १० ॥

पितरः पितृदेवताः सोम्यासः सोम्याः सोमार्हाः । 'सोमम् अर्हति यः' ( पा ४,४,१३७) इति सोमशब्दाद् अर्हार्थे यप्रत्ययः । 'आज्जसेरसुक्' ( पा ७,१,५० ) । तथाविधाः पितरो मां यजमानं वर्चसा तेजसा अञ्जन्तु अक्तं संश्लिष्टं कुर्वन्तु । तथा देवाः विश्वे देवा मधुना माधुर्योपेतेन घृतेन दीप्तिकरेण आज्येन माम् अञ्जन्तु । अपि च चक्षुषे दर्शनाय मा मां प्रतरम् प्रकृष्टतरं तारयन्तः प्लावयन्तः । दीर्घकालदर्शनार्थं रोगादिभ्यो मां व्यावर्तयन्त इत्यर्थः । तथा जरसे जरायै मा मां जरदष्टिम् जरती जीर्णा अष्टिः अशनं यस्य । जृष् वयोहानौ । 'जीर्यतेरतृन्' ( पा ३,२,१०४ ) इति भूतेऽर्थे अतृन्[2]प्रत्ययः । 'जराया जरसन्यतरस्याम्' ( पा ७,२,१०१ ) इति जराशब्दस्य जरस् आदेशः । तादर्थ्ये चतुर्थी । जरार्थम् यावता कालेन जरा भवति तावत्कालपर्यन्तं मां जरदष्टिं कृत्वा वर्धन्तु वर्धयन्तु ।

इति अष्टादशकाण्डस्य तृतीयेऽनुवाके प्रथमं सूक्तम् ।

'वर्चसा माम्' इति आद्याया ऋचः पूर्वया ऋचा सह उक्तो विनियोगः । तत्पाठस्तु—

**वर्चसा मां समनक्त्वग्निर्मेधां मे विष्णुर्न्यनक्त्वासन् ।**
**रयिं मे विश्वे नि यच्छन्तु देवाः स्योना मापः पवनैः पुनन्तु ॥ ११ ॥**

वर्चसा । माम् । सम् । अनक्तु । अग्निः । मेधाम् । मे । विष्णुः । नि । अनक्तु । आसन् ।
रयिम् । मे । विश्वे । नि । यच्छन्तु । देवाः । स्योनाः[3] । मा । आपः । पवनैः । पुनन्तु ॥ ११ ॥

अग्निः अङ्गनादिगुणयुक्तो देवः मा[4] मां वर्चसा तेजसा समनक्तु संयोजयतु । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । रुधादित्वात् श्नम् । 'श्नान्नलोपः' ( पा ६,४,२३ ) इति नलोपः । तथा विष्णुः मे मम आसन् आसनि आस्ये मुखे मेधां नि अनक्तु नितरां संयोजयतु । 'पद्दन्' ( पा ६,१,६३ ) इत्यादिना आस्यशब्दस्य आसन् आदेशः । 'सुपां सुलुक्' (पा ७,१,३९) इति सप्तम्या लुक् । तथा विश्वे देवाः स्योनाम्[4] सुखकरीं रयिम् धनं मे मह्यं नि यच्छन्तु नियतां कुर्वन्तु । यम उपरमे । 'इषुगमियमां छः' ( पा ७,३,७७ ) इति छत्वम् । यद्वा नियमेन ददतु । दाण् दाने इत्यस्य 'पाघ्रा' ( पा ७,३,७८ ) इत्यादिना यच्छादेशः । तथा आपः उदकानि पवनैः शोधनसाधनैः स्वांशैः मा मां पुनन्तु पूतं शुद्धं कुर्वन्तु ।

---

१. अजंतु D², Cp; अजंतु P, P². २. अतृन्प्र. स्वरो न सिध्यति. ३. °ना Cp. ४. वैतु. मंपा.

'मित्रावरुणा परि माम्' इति द्वितीयया ऋचा पिण्डपितृयज्ञे पाणी कर्ता प्रक्षालयेत् । तत्पाठस्तु—

मित्रावरुणा[1] परि मामधातामादित्या मा स्वरवो वर्धयन्तु ।
वर्चो म इन्द्रो न्यनक्तु हस्तयोर्जरदष्टिं मा सविता कृणोतु ॥ १२ ॥

मित्रावरुणा[2] । परि । माम् । अधाताम् । आदित्याः । मा । स्वरवः । वर्धयन्तु ।
वर्चः । मे । इन्द्रः । नि । अनक्तु । हस्तयोः । जरत्ऽअष्टिम् । मा । सविता । कृणोतु ॥१२॥

मित्रावरुणा मित्रश्च वरुणश्च मित्रावरुणौ । 'देवताद्वन्द्वे च' (पा ६,३,२६) इति पूर्वपदस्य आनङ् आदेशः । 'सुपां सुलुक्°' (पा ७,१,३९) इति पूर्वसवर्णदीर्घः । अहरभिमानी देवो मित्रः । वरुणो रात्र्यभिमानी । तावुभौ मां पर्यधाताम् परितो धारयताम् । यद्वा वस्त्रादिना परिहितं कुरुताम् । तथा आदित्याः अदितेः पुत्रा अन्ये देवाः स्वरवः । स्वृ शब्दोपतापयोः । 'शॄस्वृस्निहि°' (पाउ १,१०) इति उप्रत्ययः । स्वरवः शोभनशब्दं कुर्वाणाः यद्वा अस्मच्छत्रुविषयम् उपतापं कुर्वन्तो मा मां वर्धयन्तु । अपि च इन्द्रो देवः मे मम हस्तयोर्वर्चः बलं नि अनक्तु नियोजयतु । बाहुजातत्वाद् इन्द्रस्य बाहुबलं तत्प्रसादाल्लभ्यम्[3] इत्यभिप्रायः । सविता सर्वस्य प्रसविता देवो मा मां जरदष्टिम् जीर्यदवस्थभोजनं दीर्घायुषं कृणोतु करोतु ।

यो ममार प्रथमो मर्त्यानां यः प्रेयाय प्रथमो लोकमेतम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा सपर्यत[4] ॥ १३ ॥

यः । ममार । प्रथमः । मर्त्यानाम् । यः । प्रऽइयाय[5] । प्रथमः । लोकम् । एतम् ।
वैवस्वतम् । सम्ऽगमनम् । जनानाम् । यमम् । राजानम् । हविषा । सपर्यत ॥ १३ ॥

यो यमो राजा मर्त्यानाम् मरणधर्मणां मनुष्याणां मध्ये स्वयमपि एकः सन् प्रथमः प्रथमभूतो ममार मरणं प्राप्तवान् । मृङ् प्राणत्यागे । 'म्रियतेर्लुङ्लिङोश्च' (पा १,३,६१) इति नियमात् लिटः परस्मैपदम् । एतं लोकं यो यमो राजा प्रथमः प्रथमभूतः प्रेयाय प्रगतवान् । प्रथमं मरणम् पश्चात् लोकान्तरप्राप्तिः इत्युभयं यमोपज्ञम् आसीद् इत्यर्थः । अत एव यमस्य मनुष्यवत् कामयितृत्वादिकं यागाद् राज्यप्राप्तिश्च आम्नायते । 'यमो वा अकामयत पितॄणां राज्यम् अभिजयेयम्[6] इति । स एतं

---

१. मित्रावरुणा B,C,K^m,R,W M.; मित्रावरुणा > मित्रावरुणा Dc. २. मित्रावरुणौ Bp[2]. ३. त्वत्प्रसादा° S'. ४. दुवस्य ऋ १०,१४,१ मै ४,१४,१६, दुवस्यत तैआ ६,१,१, ५. °ईयाय P,P[2]; °इयाय Cp. ६. °जयेद् S'.

यमायापभरणीभ्यश्चरुं निरवपत्' ( तैब्रा ३,१,५,१४ ) इति । इत्थं यः यमो राजा मरण-पूर्वकं प्रथमं प्रेयाय अस्माल्लोकात् प्रगतो बभूव तं वैवस्वतम् विवस्वान् आदित्यः तस्य पुत्रं जनानाम् जनिमतां प्राणिनां संगमनम् संगच्छन्ते अस्मिन्निति संगमनः । अधिकरणे ल्युट् । जनिमद्भिः सर्वैः प्राणिभिः संप्राप्यम् इत्यर्थः । एवंगुणविशिष्टं यमं राजानम् ईश्वरम् । प्राणिकृतसुकृतदुष्कृतानुरूपेण शिक्षाकरम् इति यावत् । हविषा आज्यपुरोडाशादिना सपर्यत पूजयत । हे ऋत्विज इति शेषः । सपर पूजायाम् । 'कण्ड्वादिभ्यो यक्' (पा ३,१,२७) इति यक्प्रत्ययः । अथवा प्रथमः प्रथमभावी कल्पादौ वर्तमानो यो जनः प्राणी ममार यश्च जनः प्रथमः कल्पादौ वर्तमानः एतं लोकं यमस्य स्वभूतं प्रेयाय प्रगतवान् । तदाप्रभृति वर्तमानानां सर्वेषां जनानां संगमनम् संप्राप्यं राजानम् इत्यादि पूर्ववत् ।

पिण्डपितृयज्ञे 'परा यात' इति चतुर्थ्या ऋचा पितॄन् विसर्जयेत् । तत्पाठस्तु —

परा॑ यात पितर॒ आ च॑ याता॒यं वो॑ य॒ज्ञो मधु॑ना॒ सम॑क्तः ।
[1]द॒त्तो अ॒स्मभ्यं॑[1] द्रवि॑णे॒ह[2] भ॒द्रं र॒यिं च॑ नः॒ सर्व॑वीरं दधात[3] ॥ १४ ॥

परा॑ । या॒त॒ । पि॒त॒रः॒ । आ । च॒ । या॒त॒ । अ॒यम् । व॒ः । य॒ज्ञः । मधु॑ना । सम्ऽअ॑क्तः । द॒त्तो इति॑ । अ॒स्मभ्य॑म् । द्रवि॑णा । इ॒ह । भ॒द्रम् । र॒यिम् । च॒ । न॒ः । सर्व॑ऽवीरम् । द॒धा॒त॒ ॥१४॥

हे पितरः पितृदेवताः अस्माभिः कृतेन पितृयज्ञरूपेण कर्मणा संतुष्टाः सन्तः परा यात परागच्छत । पराङ्मुखाः स्वस्थानं गच्छतेत्यर्थः । पुनर्यागार्थम् अस्माभिराहूताः सन्तः आ यात च आगच्छत च । इदानीं परागमने कारणम् आह— वः युष्मभ्यं मधुना मधुरेण आज्येन । 'एतद् वै मधु दैव्यं यद् आज्यम्' ( ऐब्रा २,२ ) इति हि ऐतरेयकम् । समक्तः सम्यक् संसिक्तः अयं यज्ञः अस्माभिः दत्तः । तं स्वीकृत्य अस्मभ्यम् अस्मदर्थं भद्रम् कल्याणं द्रविणा द्रविणं धनम् इह अस्मिन् गृहे दधात धारयत । तथा सर्ववीरम् वीर्याज्जायन्त इति वीराः पुत्रपौत्रादि-रूपाः प्रजास्तैः सर्वैरुपेतं रयिम् प्रजापश्वादिरूपं धनं नः अस्माकं दधात धारयत । 'तप्तनप्तनथनाश्च' ( पा ७,१,४५ ) इति तस्य तबादेशः । पित्त्वेन ङित्त्वाभावाद् आल्लोपाभावः ।

कण्वः॑ क॒क्षीवा॑न् पुरुमी॒ढो अ॒गस्त्यः॑ श्या॒वाश्वः॒ सोभ॑र्यर्च॒नाना॑ः ।
वि॒श्वामि॑त्रो॒ऽयं ज॒मद॑ग्नि॒रत्रि॒रव॑न्तु नः क॒श्यपो॑ वा॒मदे॑वः ॥ १५ ॥

---

१. दत्तास्मभ्यं मंब्रा २,३,५; दत्त्वायास्म° काठ. ५,३; दत्तायास्मभ्यं आश्रौ २,७,९.
२. द्रविणमि॒ह W. ३ नियच्छत मंब्रा. आश्रौ.

कण्वः । कक्षीवान् । पुरुऽमीढः । अगस्त्यः । श्यावऽअश्वः । सोभरी । अर्चनानाः ।
विश्वामित्रः । अयम् । जमत्ऽअग्निः । अत्रिः । अवन्तु । नः । कश्यपः । वामऽदेवः ॥ १५ ॥

कण्वादयो द्वादशसंख्याका ऋषयो नः अस्मान् अवन्तु रक्षन्तु । कण्वः । कणतिः शब्दार्थः । 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' (पाउ १,१५१) इति क्वन्प्रत्ययः । [1]नित्त्वाद् आद्युदात्तः[1] कण्वशब्दः । 'कक्ष्या रज्जुरश्वस्य । कक्षं सेवते' (नि २,२) इति यास्कः । तद्वान् कक्षीवान् । 'आसन्दीवद् अष्ठीवच्चक्रीवत् कक्षीवत्°' (पा ८,२,१२) इति मतुपि निपात्यते । पुरुमीढः । मिह सेचने इत्यस्मात् [2]कर्मणि निष्ठा । पुरूणि मीढानि सिक्तानि[2] अपत्यानि यस्य[3] स तथोक्तः । यद्वा । मीढम् इति धननाम । पुरूणि मीढानि धनानि यस्य[3] स तथोक्तः । बहुधन इत्यर्थः । अगस्त्यः प्रसिद्धः । श्यावाश्वः श्यावाः कृष्णवर्णा अश्वा यस्य स तथोक्तः । सोभरी प्रसिद्धः । अर्चनानाः अर्चनम् अर्चनीयम् अनः शकटं यस्य स तथोक्तः । संज्ञाशब्दोयम् । स च अत्रीणां प्रवरमध्ये पठ्यते— 'आत्रेयार्चनानसश्यावाश्वेति । श्यावाश्ववद् अर्चनानसवद् अत्रिवत्' (आपश्रौ २४,८,११) इति । विश्वामित्रः । विश्वं सर्वं जगत् मित्रं यस्य स तथा । 'मित्रे चर्षौ' (पा ६,३,१३०) इति विश्वशब्दस्य दीर्घः । अयम् इति इदंशब्देन पुरोवर्तिवस्तुवाचिना सर्वजनसंनिहितत्वेन सर्वमित्रत्वम् उपपाद्यते । जमदग्निः । जमतिर्ज्वलतिकर्मा । जमन्तो ज्वलन्तः अग्नयो यस्य स तथोक्तः । अत्रिः । आध्यात्मिकाधिदैविकाधिभौतिकभेदभिन्नास्त्रिविधा दुःखानुभवा यस्य न विद्यन्ते स तथा । अत एव यास्को निरवोचत— 'तस्माद् अत्रिः । न त्रयः' (नि ३,१७) इति । कश्यपः । आद्यन्तवर्णविपर्ययः । सर्वं जगत् सर्वदा सौक्ष्म्येण पश्यतीति कश्यपः[4] । श्रूयते हि— 'कश्यपः पश्यको भवति । यत् सर्वं परिपश्यतीति सौक्ष्म्यात्' (तैआ १,८,८) इति । वामदेवः । वामो वननीयो देवो द्योतकोस्ति[5] तत्त्वविषये बोधो यस्य स तथा । स खलु गर्भावस्थ एव सन् उत्पन्नतत्त्वज्ञानः स्वस्य सार्वात्म्यम् अनुसंदधौ । श्रूयते हि— 'अहं मनुरभवं सूर्यश्च' (ऋ ४,२६,१) इति ।

विश्वामित्र जमदग्ने वसिष्ठ भरद्वाज गोतम वामदेव ।
शर्दिर्नो[6] अत्रिरग्रभीन्नमोभिः [7]सुसंशासः पितरो[7] मृडता नः ॥ १६ ॥

विश्वामित्र । जमत्ऽअग्ने । वसिष्ठ । भरत्ऽवाज । गोतम । वामऽदेव[8] ।
शर्दिः[9] । नः । अत्रिः । अग्रभीत् । नमःऽभिः । सुऽसंशासः । पितरः । मृडत । नः ॥ १६ ॥

---

१. ···यान्तः रिक्तं स्थानं १० वर्णानाम् S'. २. कर्म सिक्तानि S'. ३. बहुव्रीहौ स्वरः? ४. पश्यकः S'. ५. द्योतकनास्त S'. ६. शर्दिर्नो B,C,V,WM.; शर्दिनौं WM.; शर्दि° > शर्दि° Dc. ७. सुसंशासः पितरो Km,O,R[2],T; सुशंशासः पितरो C; सुशंशासः पितरो P[2], M,I; सुसंशासः पितरो > सुसंशासः पितरो Dc. ८. वामऽदेव Cp. ९. ·शर्दिः Cp.

पूर्वार्धेन षट्संख्याका ऋषयः संबोध्यन्ते । तत्र वसिष्ठो वसुमत्तमः एतन्नामा ऋषिः । 'भरणाद् भारद्वाजः' ( नि ३,१७ ) इति यास्कः । अन्ये शब्दा उक्तार्थाः । मृडता नः इत्येतद् वक्ष्यमाणं पदद्वयम् अत्रापि संबध्यते । हे विश्वामित्रादयः ऋषयः नः अस्मान् मृडत सुखयत । अत्रिः एतत्संज्ञो महर्षिः नः अस्माकं शर्दिः छर्दिः । गृहनामैतत् । उछृदिर् दीप्तिदेवनयोः इत्यस्माद् 'अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः' ( पाउ २,१०८ ) इति इसिप्रत्ययः । वर्णव्यत्ययः । नः अस्मदीयं गृहम् अग्रभीत् अग्रहीत् । रक्षणार्थं गृहीतवान् इत्यर्थः । ग्रह उपादाने । 'हृग्रहोर्भः°' ( पा ८,२,३२ ) इति भत्वम् । यद्वा शर्दतिर्बलकर्मा[1] । शर्दयति[2] बलयतीति शर्दिः । एवंगुणविशिष्टः अत्रिर्नः अस्मान् अग्रहीत् आत्मीयत्वेन गृहीतवान् । अथवा शर्दिर्नाम कश्चिद् ऋषिः । अन्यत् पूर्ववत् । तथा नमोभिः नमस्कारैः । यद्वा अन्ननामैतत् । दीयमानैरन्नैः कव्यरूपैर्हेतुभिः[3] हे पितरः पितृदेवताः यूयं सुशंसासः[4] सुष्ठु शंसितुं स्तोतुं शक्याः । शंसु स्तुतौ इत्यस्मात् 'ईषद्दुःसुषु°' ( पा ३,३,१२६ ) इति कर्मणि खल्प्रत्ययः[5] । 'आज्जसेरसुक्' ( पा ७,१,५० ) । सुष्टुताः [6]संस्तुताः सन्तः नः मृडत अस्मान् सुखयत । मृडत । मृड सुखने[6] ।

शवदहनदिवसे रात्रौ [7]रिक्तकलशभञ्जनकर्ता[7] 'कस्ये मृजानाः' इति सप्तमीम् ऋचं जपेत् । ऋक्पाठस्तु—

**क॒स्ये॑[8] मृ॒जा॒ना॒[9] अति॑ यन्ति रि॒प्रमायु॒र्दधा॑नाः [10]प्रत॒रं नवी॑यः ।**
**आ॒प्याय॑मानाः प्र॒जया॒ धने॒नाध॑ स्याम सु॒र॒भयो॑ गृ॒हेषु॑ ॥ १७ ॥**

क॒स्ये॑[11] । मृ॒जा॒नाः[12] । अति॑ । य॒न्ति॒ । रि॒प्रम् । [13]आयुः॑ । द॒धा॑नाः[13] । प्र॒ऽत॒रम् । नवी॑यः । आ॒ऽप्याय॑मानाः । प्र॒ऽज॒या॑ । धने॑न । [14]अध॑ । स्या॒म॒[14] । सु॒र॒भयः॑ । गृ॒हेषु॑ ॥ १७ ॥

कस्ये । कसः कीकसः । कीशब्दलोपश्छान्दसः । कसम् अर्हतीति कस्यो दहनदेशः तस्मिन् मृजानाः बान्धवमृतिजनितं दुःखम् उपलिपन्तः । परित्यजन्त इत्यर्थः[15] । रिप्रम् । पापनामैतत् । शवसंस्पर्शजनितं पापम् । 'रपो रिप्रम् इति पापनामनी भवतः' ( नि ४,२१ ) इति हि निरुक्तम् । मरणनिमित्तं पापम् अति यन्ति अतीत्य गच्छन्ति । इति प्रथमः पादः परोक्षकृतः । यद्वा पुरुषव्यत्ययः । अतीमः । अतीत्य गच्छाम इत्यर्थः । इण् गतौ । अदादित्वात् शपो लुक् । 'इणो यण्' ( पा ६,४,८१ ) इति

---

१. शर्धति° S'. २. शर्धयति S'. ३. हैं नास्ति S'. ४. वैतु. संपा. ५. एवं स्वरो न सिध्यति. ६. सं····सुखयते रिक्तं स्थानं ६० वर्णानाम् S'. ७. रिक्तलशभंजन······कर्ता S'. ८. कस्ये. ९. स्वरः ? वैप १,२५१८ d द्र. मृजाना K,O,R[2]; मृजा॑ना > मृ॒जा॒ना॒ Dc. १०. °मायु° WM. ११. कस्ये P,P[2]. १२. मृजा॑नाः Cp; मृजानाः P,P[2]. १३. आयुः । दधा॑नाः Cp; आयुऽदधा॑नाः Bp[2],Kp. १४. अधास्याम P,P[2]. १५. इता S'.

यण् आदेशः । यतो वयम् उक्तरीत्या दुःखम् अतिक्रान्तास्ततो हेतोः नवीयः अतिशयेन नवम् उत्कृष्टम् आयुः जीवितं प्रतरम् प्रकृष्टतरं दधानाः । दीर्घकालजीवनं धारयन्त इत्यर्थः । एवम् अनेन द्वितीयपादेन चिरकालजीवनं प्रार्थितम् । जीवत एव पुरुषस्य प्रजापश्वाद्यपेक्षेति तृतीयेन पादेन प्रतिपाद्यते । प्रजया पुत्रपौत्रादिरूपया धनेन कनकरजतादिलक्षणं गवाश्वादिकं च धनम् तेन आप्यायमानाः वर्धमाना भवेम । अध अथ अनन्तरं गृहेषु सुरभयः शोभनगन्धोपेताः श्लाघ्यगुणयुक्ताः स्याम भवेम ।

पिण्डपितृयज्ञे 'अञ्जते व्यञ्जते' इति ऋचा पिण्डेषु घृतेन अभिघारणं कुर्यात् । सैषा सूक्ते अष्टमी—

अ॒ञ्ज॒ते व्य॑ञ्जते॒ सम॑ञ्जते॒ क्रतुं॑ रिहन्ति॒ मधु॑ना॒भ्य॑ञ्जते[1] ।
सिन्धो॑रुच्छ्वा॒से प॒तय॑न्तमु॒क्षणं॑ हिरण्यपा॒वाः प॒शुमा॑सु[2] गृह्णते[3] ॥ १८ ॥

अ॒ञ्जते॑ । वि । अ॒ञ्ज॒ते॒ । सम् । अ॒ञ्ज॒ते॒ । क्रतु॑म् । रि॒ह॒न्ति॒ । मधु॑ना । अ॒भि । अ॒ञ्ज॒ते॒ ।
सिन्धोः॑ । उ॒त्ऽश्वा॒से । प॒तय॑न्तम् । उ॒क्षण॑म् । हि॒र॒ण्य॒ऽपा॒वाः । प॒शुम् । आ॒सु॒ । गृ॒ह्ण॒ते॒ ॥ १८ ॥

पितृत्वं प्राप्ताः कर्मिणो जना धूमादिमार्गेण चन्द्रलोकं प्राप्य तत्र यागहोमादिसुकृतजनितं फलं भुञ्जत इति स सोमः अनया स्तूयते— सोमयागं [4]प्रवर्तयन्तः प्रथमम् ऋत्विजः[4] अञ्जते यजमानम् अञ्जनेन संस्कुर्वन्ति । तथा च ऐतरेयकम्— 'आञ्जन्त्येनम् । तेजो वा एतद् अक्ष्योर्यद् आञ्जनम् । सतेजसमेवैनं तत् कृत्वा दीक्षयन्ति' (ऐब्रा १,३) इति । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । 'श्नसोरल्लोपः' (पा ६,४,१११) इति अकारलोपः । तस्याञ्जनस्य लौकिकाद् वैशिष्ट्यं प्रतिपाद्यते— व्यञ्जत इति । विविधम् अञ्जते । लौकिकाद् अञ्जनाद् अन्येन प्रकारेण यजमानस्याक्ष्णोरञ्जनं कुर्वन्तीत्यर्थः । तत्प्रकारश्च तैत्तिरीये समाम्नायते—'दक्षिणं पूर्वम् आङ्क्ते । सव्यं हि पूर्वं मनुष्या आञ्जते' (तै ६,१,१,६) इत्यादिना । तथा समञ्जते सम्यग् अक्तं कुर्वन्ति । उक्तस्याञ्जनस्य सम्यक्त्वविशेषणप्रतिपादनाय पुनरनुवादः । तथा क्रतुं रिहन्ति । क्रतुः सोमयागसंकल्पः । तं लिहन्ति आस्वादयन्ति । लिह आस्वादने । कपिलकादित्वात् लत्वविकल्पः । सोमेन यक्ष्य इत्येवमात्मकं वचो[5] यजमानम् उच्चारयन्तीत्यर्थः । मधुना माधुर्योपेतेन नवनीतेन अभ्यञ्जते अभ्यक्तशरीरं कुर्वन्ति । तथा च ऐतरेयकम्— नवनीतेनाभ्यञ्जन्ति । स्वेनैवैनं तद् भागधेयेन समर्धयन्ति,' (ऐब्रा १,३) इति । यद्वा अञ्जनादिसंस्कारैः सोम एव स्तूयते । सोमयागे प्रवृत्ता ऋत्विग्यज-

---

१. मध्वा॒भ्य॑ञ्जते कौ १,५६४. २. प॒शुम॒प्सु कौ. ३. गृभ्णते I, सा., ऋ ९,८६,४३ कौ. ४. वर्तं प्रथममृजः S'. ५. वाचा S'. ६. अभ्यक्तं शरीरं S'.

मानाः सोमम् अञ्जते दीक्षणीयादिषु हूयमानेनाज्येन सोममेव अञ्जन्ति । संस्कुर्वन्तीत्यर्थः । तथा व्यञ्जते दण्डकृष्णाजिनादिदीक्षाव्यञ्जनद्रव्येण यजमानद्वारा तमेव सोमं संस्कुर्वन्तीत्यर्थः । तथा समञ्जते सोमयागोपयुक्तं यूपं सम्यग् आमूलाग्रम् अञ्जते[1] । तेन च समञ्जनेन यूपद्वारा सोम एव संस्कृतो भवतीत्यर्थः । क्रतुं रिहन्ति । यूपवान् यागः क्रतुः । अत्र तत्साधनभूतः सोमो लक्ष्यते । क्रतुं सोमं लिहन्ति क्रयाभिषवादिसंस्कारपूर्वकं सोमम् अग्नौ हुत्वा हुतशेषं लिहन्ति । आस्वादयन्तीत्यर्थः । मधुना माधुर्योपेतेन क्षीरादिना श्रयण-द्रव्येण तं सोमम् अभ्यञ्जते अभितः अक्तं संयुक्तं संस्कृतं कुर्वन्तीत्यर्थः । दिवि स्थि-तश्चन्द्र एव लतारूपसोमात्मना पृथिव्याम् अवस्थित इति प्रतिपादयति[2]—सिन्धोरुच्छ्वासे इति । सिन्धोः स्यन्दनशीलस्य समुद्रस्य उच्छ्वासे । उच्छ्वास उद्गमः अभिवृद्धिः । तस्मिन् समये पतयन्तम् गच्छन्तम् । उद्यन्तम् इत्यर्थः । पत गतौ । चुरादिरदन्तः । अतोलोपस्य स्थानिवत्त्वाद् उपधावृद्ध्यभावः । उक्षणम् सेक्तारम् अमृतमयैः किरणैरभिषिञ्चन्तम् । यद्वा सिन्धोः स्यन्दनशीलस्य वसतीवरीजलस्य उच्छ्वासे उद्गमे सति अभिषवकाले पतयन्तम् गच्छन्तम् । अभिषवसंस्कारेण द्रवी-भवन्तम् इति यावत् । उक्षणम् सेक्तारं सर्वजगदुत्पत्तेः आहुतिद्वारा बीजभूतम् इत्यर्थः । स्मर्यते हि—

'अग्नौ [3]प्रास्ताहुतिः सम्यग् आदित्यम्[3] उपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' (मस्मृ ३,७६) इति ।

तथा पशुम् । पश्यति सर्वं जगत् स्वकिरणैः प्रकाशयतीति पशुश्च-न्द्रमाः । 'पशुः पश्यतेः' ( नि ३,१६ ) इति यास्कः । एवंगुणविशिष्टं सोमं रसात्मना अवस्थितं हिरण्यपावाः हिरण्येन पावयन्तीति हिरण्यपावाः अभिषोतार ऋत्विजः । अभिषवपावनादिषु तेषां हिरण्यपाणित्वं भगवता आपस्तम्बेनोक्तम्— हिरण्यपाणिर-भिषुणोति गृह्णाति जुहोतीत्यत्यन्तप्रदेशः ( आपश्रौ १२,७,१२ ) इति । आसु स्थालीषु । सोम-यागे हि प्रधानभूतानाम् आग्रयणादीनां ग्रहाणां ग्रहणाय चतस्रः स्थाल्यो विहिताः[4] । तासु गृभ्णते[5] गृह्णते । उपलक्षणम् एतत् । स्थाल्युपलक्षितग्रहचमसपात्रेषु सोमरस-ग्रहणेन संस्कुर्वन्तीत्यर्थः ।

एवं पितृदेवताभूतसोमाञ्जनलिङ्गात् पिण्डाभिघारणे विनियोग उपपन्नः ।

**यद् वो॑ मु॒द्रं पि॑तरः[6] सो॒म्यं च॒ तेनो॑ सचध्व॒ं स्वय॑शसो॒ हि भू॒त[7] ।**

---

१. अञ्जति S'. २. °दयितु S'. ३. प्रस्थाहुतिः S'. ४. ···हिता रिक्तं स्थानं ४ वर्णानाम् S'. ५. वैतु. संपा. ६. पितरः WM. ७. भूतम् C,K^m,R,Dc,WM; भूता Op.

ते अर्वाणः कवय आ शृणोत सुविदत्रा[1] विदथे हूयमानाः ॥ १९ ॥

यत् । वः । मुद्रम् । पितरः[2] । सोम्यम् । च । तेनो इति । सचध्वम् । स्वऽयशसः । हि । भूत[3] । ते । अर्वाणः । कवयः । आ । शृणोत । सुऽविदत्राः[4] । विदथे । हूयमानाः ॥१९॥

हे पितरः वः युष्माकं संबन्धि मुद्रम् मोदकं हर्षजनकम् । मुद हर्षे इत्यस्मात् 'स्फायितञ्चि ( पाउ २,१३ ) इत्यादिना रक् । यद्वा मुदम् हर्षं राति[5] ददातीति मुद्रम् । 'आतोऽनुपसर्गे कः' ( पा ३,२,३ ) इति कप्रत्ययः । प्रीतिकरं यद् धनम् सोम्यम् सोमार्हं च विद्यते [6]तेनो तेनैव धनेन सह यूयं[6] सचध्वम् अस्माभिः संगता भवत । षच समवाये । तादृग् धनम् अस्मभ्यं प्रयच्छतेत्यर्थः । तत्र हेतुरुच्यते — हि यस्माद् यूयं स्वयशसः स्वायत्तयशस्का भूत भवथ । तस्माद् इष्टफलदानं भवतां युक्तम् इत्यर्थः । ते यूयम् अर्वाणो[7] गन्तारः कवयः[7] क्रान्तदर्शनाः सुविदत्राः शोभनज्ञानाः शोभनधना वा विदथे यज्ञे हूयमानाः अस्माभिराहूयमाना आ शृणोत अस्मदाह्वानं शृणुत । श्रु श्रवणे । लोटि तस्य तबादेशः ।

ये 'अत्रयो अङ्गिरसो[8] नवग्वा इष्टावन्तो रातिषाचो दधानाः ।
दक्षिणावन्तः सुकृतो य उ स्थासद्यास्मिन् बर्हिषि मादयध्वम् ॥ २० ॥

ये । अत्रयः । अङ्गिरसः । नवऽग्वाः । इष्टऽवन्तः । रातिऽसाचः । दधानाः । दक्षिणाऽवन्तः । सुऽकृतः । ये । ऊं इति । स्थ । आऽसद्य । अस्मिन् । बर्हिषि । मादयध्वम् ॥ २० ॥

ये पितरो यूयम् अत्रयः अत्रिगोत्रोत्पन्नाः । ये वा अङ्गिरसः अङ्गिरोगोत्रजाः । यद्वा अत्रिमहर्षिरूपेण अङ्गिरोरूपेणावस्थिताः । नवग्वाः अभिनवगमनाः । अथवा अङ्गिरसो हि केचन सत्रयागं[9] कुर्वाणा नवभिर्मासैः स्वर्गं गतास्ते नवग्वा उच्यन्ते । अपरे दशभिर्मासैर्गतास्ते दशग्वाः । तथा चाम्नायते — 'नवग्वासः सुतसोमास इन्द्रं दशग्वासो अभ्यर्चन्त्यर्कैः' ( ऋ ५,२९,१२ ) इति । इष्टावन्तः इष्टाः दर्शपूर्णमासादियागास्तद्वन्तः इष्टावन्तः रातिषाचः । रातिर्दानम् तत् सचन्ते समवयन्तीति दक्षिणादानयुक्तक्रिया रातिषाच इत्युच्यन्ते । ता दधानाः धारयन्तः । ये च अन्ये हे पितरो यूयं दक्षिणावन्तः दक्षिणादानयुक्ताः सुकृतः पुण्यकृतः स्थ भवथ । उशब्दः अप्यर्थे । अस्मिन् बर्हिषि यज्ञे आस्तीर्णे दर्भे वा आसद्य उपविश्य ते सर्वे यूयं मादयध्वम् अस्मदीयेन हविषा तृप्ता भवत ।

इति अष्टादशे काण्डे तृतीयेऽनुवाके द्वितीयं सूक्तम् ।

---

१. तु. RW अ १८,१,४५ प्रभृ. वैतु. शंपा. सुविदुत्रा. २. पितर: Cp,WM. ३. भूत Cp; भूतम् P,P²; भूता Op. ४. तु. मंपा. वैतु. शंपा. सुऽविदुत्राः. ५. चाति S'. ६. तनोतन…रिक्तं स्थानमुपदशानां वर्णानाम् S'. ७. वैतु. मंपा. ८. अत्रयोंगि° R,B,V; अत्रयो अंगि° > अत्रयोंगि Dc. ९. सत्रयोगं S'.

'अधा यथा नः' इति आदितश्चतसृणाम् ऋचां प्रेतोपस्थाने विनियोग उक्तः।

**अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशशानाः[1]।**
**शुचीदयन् दीध्यत[2] उक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥२१॥**

अध। यथा। नः। पितरः। परासः। प्रत्नासः। अग्ने। ऋतम्। आऽशशानाः।
शुचि। इत्। अयन्। दीध्यतः[3]। उक्थऽशसः[4]। क्षाम[5]। भिन्दन्तः। अरुणीः। अप। व्रन्॥

अध अथ अनन्तरम्। यद्वा अप्यर्थः अधेतिनिपातः। अपि च यथा येन प्रकारेण नः अस्माकं पितरः पितृपितामहाः। यद्वा अस्माकं पितृभूता अङ्गिरसः परासः। परशब्दः उत्कृष्टवाची। 'आज्जसेरसुक्' (पा ७,१,५०)। परा उत्कृष्टाः प्रत्नासः पुराणाः हे अग्ने त्वत्प्रसादाद् ऋतम् यज्ञम् आशशानाः व्याप्नुवन्तः। अशू व्याप्तौ इत्यस्मात् कानचि रूपम्[6]। एवंभूतास्ते शुचि दीप्तं स्थानं नाकपृष्ठाख्यम् अयन् अगच्छन्। इच्छब्दः अवधारणे। इण् गतौ। अस्मात् लङि पूर्वम् 'इणो यण्' (पा ६,४,८१) इति यणि कृते तस्य असिद्धवद्भावेन प्राप्तस्य आटश्छान्दसत्वाद् निवृत्तौ अडागम एव भवति। दीध्यतः दीप्यमानाः। दीधीङ् दीप्तिदेवनयोः इत्यस्मात् लट्। व्यत्ययेन शत्रादेशः। उक्थशासः। उक्थानि शस्त्राणि। तेषां शंसितारः एवंगुणविशिष्टास्ते पितरः क्षमा रात्रिः तत्संबन्धि तमः क्षाम शार्वरं तमो भिन्दन्तः स्वतेजसा निवर्तयन्तः अरुणीः[7] अरुणवर्णा उषसः उषःकालान् अप व्रन् अपावृण्वन् प्राकाशयन्[8]। यद्वा पणिनामानोऽसुरा अङ्गिरसां यज्ञसाधनभूता गा अपहृत्य भूम्यां बिलं प्रावेशयन् [9]अङ्गिरसस्तज्जानन्तः इन्द्रसहाया बिलं विवृत्य[9] ता गा अलभन्तेत्याख्यायिका। तद् एतद् उच्यते। क्षाम क्षमां भूमिं भिन्दन्तः विदारयन्तः अरुणीः अरुणवर्णा गा अप व्रन् अपावृण्वन् बिलद्वारापवरणेन अलभन्तेत्यर्थः।

**सुकर्माणः सुरुचो देवयन्तो अयो[10] न देवा जनिमा धमन्तः।**
**शुचन्तो अग्निं [11]वावृधन्त इन्द्रमुर्वीं गव्यां परिषदं नो अक्रन्[11] ॥ २२ ॥**

सुऽकर्माणः। सुऽरुचः। देवऽयन्तः। अयः। न। देवाः। जनिम। धमन्तः।
शुचन्तः। अग्निम्। ववृधन्तः। इन्द्रम्। उर्वीम्। गव्याम्। परिऽसदम्। नः। अक्रन्॥

---

१. °मांशुपाणाः ऋ ४,२,१६ मा १९,६९ तै २,६,१२,४. २. दीधितिम् ऋ. मा. तै.
३. °त Bp[2]. ४. °शासः P. ५. क्षामा P. ६. वैतु. पपा.; वैप १,७१८ i द्र.
७. अरुणाः S'. ८. प्रका° S'. ९. °सस्तपायन्…वृत्य रिक्तं स्थानम् ११ वर्णानाम् S'.
१०. ऽयो ऋ ४,२,१७. ११. वंवृधन्त इन्द्रमूर्वं गव्यं परिषदन्तो अग्मन् ऋ.

सुकर्माणः **शोभनकर्माणः** सुरुचः **सुदीप्तयो** देवयन्तः **देवान् आत्मन इच्छन्तः** अयो न । **नेति उपमार्थे । यथा अयस्कारा अयो धमन्ति धमनेन परिशुद्धं कुर्वन्ति एवं स्वकीयं** जनिम **जन्म** धमन्तः **तपसा शोधयन्तो** देवाः **देवत्वं प्राप्ताः** अग्निम् **गार्हपत्यादिकं** शुचन्तः **दीपयन्तः सामिधेनीभिः प्रज्वालयन्तः** इन्द्रं ववृधन्तः **स्तुतिभिर्वर्धयन्तः** उर्वीम् **महतीं** गव्याम् **गवां समूहम्** । 'खलगोरथात्' ( पा ४,२,५० ) **इति समूहार्थे यप्रत्ययः**[1] । नः **अस्माकं** परिषदम् **परितः सीदन्तीम्** अक्रन् **अकार्षुः । डुकृञ् करणे** । 'मन्त्रे घस' ( पा २,४,८० ) **इत्यादिना च्लेर्लुक्** ।

**आ [2]यूथेव क्षुमति[2] पश्वो अख्यद् देवानां जनिमान्त्युग्रः[3] ।**
**मर्तासश्चिदुर्वशीरकृप्रन्[4] वृधे चिदर्य उपरस्यायोः ॥ २३ ॥**

आ । यूथाऽइव । क्षुऽमति[5] । पश्वः । अख्यत्[6] । देवानाम् । जनिम । अन्ति । उग्रः[7] । मर्तासः । चित् । उर्वशीः । अकृप्रन् । वृधे । चित् । अर्यः । उपरस्य । आयोः ॥२३॥

उग्रः **उद्गूर्णबलोयमग्निः** देवानाम् **यष्टव्यानाम् इन्द्रादीनां** जनिम **जन्म प्रादुर्भावम्** अन्ति **अन्तिके समीपे** । 'कादिलोपो बहुलम् इति वक्तव्यम्' ( पाका ६,४,१४९ ) **इति अन्तिकशब्दस्य कादिलोपः** । आ अख्यत् **अभिपश्यति । आभिमुख्येन ज्ञातुं शक्नोतीत्यर्थः** । यूथेव क्षुमति पश्वः **इति तत्र दृष्टान्तः** । यूथा इव । **सप्तम्याः पूर्वसवर्णदीर्घः । यूथे समूहे** क्षुमति **शब्दवति गवां संघे** पश्वः **पशून् आत्मीयान् गवादीन्**[8] **यथा स्वामी पश्यति तद्वत् । अयं देवसंघे यष्टव्यान्**[9] **जानातीत्यर्थः । यद्वा दाहकोग्निः संबोध्यः । हे अग्ने त्वया दह्यमानोऽयं यजमानस्त्वत्प्रसादाद् उग्रः उद्गूर्णबलः क्षुमति शब्दवति पशुसंघे पश्वः पशूनां यूथा यूथानीव देवानां जनिम आख्यत् अभिपश्यतीति । देवलोकं गतस्य तस्य देवा अन्तिके प्रादुर्भवन्तीत्यर्थः** । मर्तासश्चित् **मर्त्या अपि मनुष्यजातीया अपि त्वत्प्रसादाद्** उर्वशीः **उर्वश्याद्या**[10] **अप्सरसः** अकृप्रन् **अकल्पयन् । उपभोक्तुं समर्था भवन्तीत्यर्थः**[11] । **कृपू सामर्थ्ये इत्यस्मात् लुङि च्लेः अङ् आदेशः** । 'बहुलं छन्दसि' ( पा ७,१,८ ) **इति रुडागमः । ततश्च त्वत्प्रसादाद् देवत्वं प्राप्तः** अर्यः **स्वामी भूत्वा** उपरस्य **उप्तस्य गर्भाशये निषिक्तस्य** आयोः **मनुष्यस्य गर्भावस्थस्य** वृधे चित् **वर्धनाय च । भवतीति शेषः । पितृप्रसादात् पुत्रपौत्राद्यभिवृद्धिरिति भावः** ।

---

१. यप्रत्यये स्वरः? २. यूथेव क्षुमति A,B,C,R,WM.; यूथेव क्षुमति > यूथेव क्षुमति Dc. ३. °मान्त्युग्र B; °मान्त्युग्र A,R,O,R², K², यज्जनिमान्त्युग्र ऋ ४,२,१८; °मान्त्युग्रः Km,C,V, °मान्त्युग्र > °मान्त्युग्रः Dc. ४. मर्त्तानां चिदु° ऋ. ५. क्षुम् । अपि P; क्षुम् । अति P²; क्षुम् अति Cp,Op. ६. अक्षत् P². ७. उग्रा P; उग्रः P². ८. गवादीयान् S'. ९. य इष्टव्यान् S'. १०. उर्वश्याःद्या S'. ११. भवतीत्यर्थः S'.

अर्कर्म ते स्वपसो 'अभूम ऋतमवस्रन्नुषसो[1] विभातीः ।
विश्वं तद् भद्रं यदवन्ति देवा बृहद् वदेम विदथे सुवीराः ॥ २४ ॥

अर्कर्म । ते । सुऽअपसः । अभूम । ऋतम् । अवस्रन्[2] । उषसः । विऽभातीः ।
विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥२४॥

हे अवस्वन्[3] अवनवन्[4] पालक अग्ने ते तुभ्यम् अकर्म परिचरणम् अकार्ष्म । 'मन्त्रे घस' (पा २,४,८०) इत्यादिना च्लेर्लुक् । अतस्त्वत्प्रसादात् स्वपसः शोभनकर्माणः अभूम अस्माभिः कृतानि यागहोमदानादीनि कर्माणि शोभनानि [5]फलयुक्तानि येषां तथोक्ता अभवाम । अस्मत्कर्माणि फलयुक्तानि भवन्त्वित्यर्थः[5] । तथा विभातीः विभात्यः व्युच्छन्त्यः उषसः च ऋतम् । सत्यनामैतत् । सत्यं यागदानादिकर्मफलम् । कुर्वन्तु इति शेषः । यत् शास्त्रविहितं कर्म देवा अवन्ति रक्षन्ति तद् विश्वम् सर्वं भद्रम् कल्याणं भवति । वयमपि सुवीराः शोभनपुत्रादियुक्ताः सन्तो विदथे यज्ञे बृहत् महत् स्तोत्रं वदेम ब्रूयाम ।

'इन्द्रो मा मरुत्वान्' इत्यादिभिः एकादशभिर्ऋग्भिः श्मशानचयनकर्मणि आज्यं जुहुयात् ।

तथा 'इन्द्रो मा मरुत्वान्' इत्यादिभिः पञ्चभिर्ऋग्भिः प्रेतशरीरे अग्निदानानन्तरम् आज्येन सारस्वतहोमान् कुर्यात् ।

इन्द्रो मा मरुत्वान् प्राच्या दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २५ ॥

इन्द्रः । मा । मरुत्वान् । प्राच्याः । दिशः । पातु । बाहुऽच्युता । पृथिवी । द्याम्ऽइव । उपरि । लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ[6] ॥

मरुत्वान् मरुद्भिः एकोनपञ्चाशत्संख्याकैर्देवैः सहितः इन्द्रो मा मां संस्कर्तारं प्राच्या दिशः प्राचीदिक्संबन्धिभयहेतोः पातु रक्षतु । तत्र दृष्टान्तः— बाहुच्युता[7] बाहुभ्यो दातृसंबन्धिभ्यश्च्युता[8] विनिर्गता । यद्वा बाहुषु प्रतिग्रहीतृसंबन्धिषु च्युता[8] प्राप्ता । उदकपूर्वं दत्तेत्यर्थः । तादृशी दातृसात्कृता पृथिवी द्यामिव यथा द्याम् दिवं स्वर्गं भूदानप्राप्यम् उपरि आगामिनि काले दातृप्रतिग्रहीतृभ्याम् उपभोग्यं लोकं पाति तद्वत् । मां पात्विति संबन्धः ।

---

१. अभूमर्त्तर्म° B,K[m],R,A,V,Dc,B[2],O,K[2].　२. अवस्रन् Cp, वैप १,२७७८ R अपि द्र.　३. वैतु. मंपा.　४. अवनस्वन् S'.　५. फल…त्यर्थः रिक्तं स्थानमुपपञ्चदशानां वर्णानाम् S'.　६. स्थ Cp.　७. °च्युताः S'.　८. एवं स्वरो न सिध्यति, वैप १,२२७७ e द्र.

'भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति ।
उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ ॥' इति ।

अपि च लोककृतः लोकस्य पुण्यफलभूतस्य स्वर्गादेः कर्तॄन् पथिकृतः तत्प्राप्त्युपायभूतस्य मार्गस्य कर्तॄन् यजामहे हविषा पूजयामः । हे देवाः ये यूयं देवानाम् इन्द्रादीनां मध्ये हुतभागाः हुतः स्वाहाकारवषट्काराभ्याम् अग्नौ प्रक्षिप्तो[1] हविर्भागः अंशो येषां ते हुतभागा इह अस्मिन् पितृमेधकर्मणि स्थ भवथ । तान् देवान् लोककृत इति पूर्वेण संबन्धः ।

धाता मा निर्ऋत्या दक्षिणाया दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २६ ॥

धाता । मा । निःऽऋत्याः । दक्षिणायाः । दिशः । पातु । बाहुऽच्युता । पृथिवी । द्याम्ऽइव । उपरि ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २६ ॥

धाता सर्वस्य जगतो विधाता धारयिता वा एतत्संज्ञो देवः निर्ऋत्याः । निर्ऋतिः आर्तिकरी पापदेवता । तद्युक्ताया दक्षिणाया दिशो मा मां पातु दक्षिणदिगवस्थिताद् रक्षःपिशाचादेर्मां संस्कर्तारं रक्षतु । बाहुच्युता इत्यादेः पूर्ववद् योजना ।

अदितिर्मादित्यैः प्रतीच्या दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २७ ॥

अदितिः । मा । आदित्यैः । प्रतीच्याः । दिशः । पातु । बाहुऽच्युता । पृथिवी । द्याम्ऽइव । उपरि ।
लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २७ ॥

अदितिः अदीना देवमाता । सा आदित्यैः स्वपुत्रैः सह प्रतीच्या दिशः सकाशात् मा मां पातु प्रत्यग्दिगवस्थितरक्षःपिशाचादेर्मां रक्षत्वित्यर्थः । अन्यद् उक्तार्थम् ।

सोमो मा विश्वैर्देवैरुदीच्या दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि ।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ २८ ॥

सोमः । मा । विश्वैः । देवैः । उदीच्याः । दिशः । पातु । बाहुऽच्युता । पृथिवी । द्याम्ऽइव ।
उपरि । लोकऽकृतः । पथिऽकृतः । यजामहे । ये । देवानाम् । हुतऽभागाः । इह । स्थ ॥ २८ ॥

---

१. प्रक्षिप्तं S'.

विश्वैः सर्वैः देवैः सह सोमः 'एतन्नामको देवः'[1] मा माम् उदीच्या दिशः पातु उत्तरदिगवस्थिताद् राक्षसादेः श्मशानवासिनः[2] सकाशाद् रक्षतु ।

**ध॒र्ता ह॑ त्वा ध॒रुणो॑ धारयाता ऊ॒र्ध्वं भा॒नुं स॑वि॒ता द्यामि॑वो॒परि॑ ।**
**लो॒क॒कृत॑ः पथि॒कृतो॑ यजामहे॒ ये दे॒वानां॑ हु॒तभा॑गा इ॒ह स्थ ॥ २९ ॥**

ध॒र्ता । ह॒ । त्वा॒ । ध॒रुण॑ः । धा॒र॒या॒तै॒ । ऊ॒र्ध्वम् । भा॒नुम् । स॒वि॒ता । द्याम्ऽइ॑व । उ॒परि॑ ।
लो॒क॒ऽकृत॑ः । प॒थि॒ऽकृत॑ः । य॒जा॒म॒हे॒ । ये । दे॒वाना॑म् । हु॒तऽभा॑गाः । इ॒ह । स्थ ॥ २९ ॥

धरुणः[3] सर्वस्य जगतो धारयिता धर्ता एतत्संज्ञक ऊर्ध्वदिगभिमानी देवः हे प्रेत त्वा त्वाम् ऊर्ध्वम् ऊर्ध्वदिगवस्थितं लोकान्तरं गन्तुम् उद्यतम् ऊर्ध्वमुखं वा धारयातै धारयतु । 'लेटोडाटौ' (पा ३,४,९४) इति आडागमः । 'वैतोऽन्यत्र' (पा ३,४,९६) इति ऐकारः । तत्र दृष्टान्तः । सविता सर्वप्रेरकः सूर्यः भानुम् दीप्तां द्याम् द्युलोकं यथा उपरि धारयति तद्वद् इत्यर्थः । लोककृत इत्यादि पूर्ववद् व्याख्येयम् ।

**प्राच्यां॑ त्वा दि॒शि पु॒रा सं॒वृत॑ः स्व॒धाया॒मा द॑धामि बाहु॒च्युता॑ पृथि॒वी द्यामि॑वो॒परि॑ ।**
**लो॒क॒कृत॑ः पथि॒कृतो॑ यजामहे॒ ये दे॒वानां॑ हु॒तभा॑गा इ॒ह स्थ ॥ ३० ॥**

प्रा॒च्या॑म् । त्वा॒ । दि॒शि । पु॒रा । स॒म्ऽवृत॑ः । स्व॒धाया॑म् । आ । द॒धा॒मि॒ । बा॒हु॒ऽच्युता॑ । पृ॒थि॒वी ।
द्याम्ऽइ॑व । उ॒परि॑ । लो॒क॒ऽकृत॑ः । प॒थि॒ऽकृत॑ः । य॒जा॒म॒हे॒ । ये । दे॒वाना॑म् । हु॒तऽभा॑गाः । इ॒ह । स्थ ॥

प्राच्यां दहनदेशात् पूर्वस्यां दिशि पुरा पूर्वं संवृतः संछादितः[4] कम्बलेन आवेष्टितोऽहं यद्वा पूः शरीरं तेन संवृतः सशरीर एव सन् हे प्रेत त्वा त्वां स्वधायाम् पितॄणां तृप्तिकरी देवता स्वधा तस्याम् आ दधामि स्थापयामि । संस्कारकर्मणा प्रेतत्वप्रच्युतिपूर्वकं[5] पितृदेवतात्वं गमयामीत्यर्थः । बाहुच्युता दातृबाहुभिः प्रच्युता ब्राह्मणेभ्यो दत्ता पृथिवी उपरि उपरिष्टाद्देशस्थितां द्याम् दिवं नाकपृष्ठाख्यं स्थानं यथा पालयति । यद्वा उपरि आगामिनि काले भूदानप्राप्यां दिवं यथा दत्ता पृथिवी पालयति तथा त्वां सैव पृथिवी पालयत्वित्यर्थः । गतमन्यद् ।

इति तृतीयेऽनुवाके तृतीयं सूक्तम् ।

'दक्षिणायां त्वा दिशि' इत्यादितः पञ्चानाम् आज्यहोमे अभिमन्त्रणे च विनियोग उक्तः ।

---

१. नास्ति, स्थानं तु ५ वर्णानां रिक्तम् S'. २. स्मशान° S'. ३. उपरि हे ऊर्ध्वायां दिशि धरुणः S'. ४. एवं स्वरो न सिध्यति, तस्मात् क्विबन्तं न्याय्यम्. ५. °पूर्वकं° S'.

**दक्षिणायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि।**
**लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३१ ॥**

दक्षिणायाम्। त्वा। दिशि। पुरा। सम्ऽवृतः। स्वधायाम्। आ। दधामि। बाहुऽच्युता। पृथिवी। द्याम्ऽइव। उपरि। लोकऽकृतः। पथिऽकृतः। यजामहे। ये। देवानाम्। हुतऽभागाः। इह। स्थ ॥

हे प्रेत त्वा त्वां दक्षिणायां दिशि **दक्षिणदिग्भागे** पुरा **पूर्वमेव** संवृतः **आत्मरक्षार्थं**[1] **कम्बलादिना प्रावृतः**[2] स्वधायाम् **पितृदेवतायाम्** आ दधामि **स्थापयामि। स्वधाकारभाजं करोमीत्यर्थः। अन्यद् व्याख्यातम्।**

**प्रतीच्यां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि।**
**लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३२ ॥**

प्रतीच्याम्। त्वा। दिशि। पुरा। सम्ऽवृतः। स्वधायाम्। आ। दधामि। बाहुऽच्युता। पृथिवी। द्याम्ऽइव। उपरि। लोकऽकृतः। पथिऽकृतः। यजामहे। ये। देवानाम्। हुतऽभागाः। इह। स्थ ॥

प्रतीच्यां **दहनदेशात् पश्चिमायां** दिशि पुरा संवृतः **इत्यादि पूर्ववत्।**

**उदीच्यां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि।**
**लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३३ ॥**

उदीच्याम्। त्वा। दिशि। पुरा। सम्ऽवृतः। स्वधायाम्। आ। दधामि। बाहुऽच्युता। पृथिवी। द्याम्ऽइव। उपरि। लोकऽकृतः। पथिऽकृतः। यजामहे। ये। देवानाम्। हुतऽभागाः। इह। स्थ ॥ ३३ ॥

उदीच्याम् **उत्तरस्यां दिशि। अन्यत् पूर्ववत्।**

**ध्रुवायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युतां पृथिवी द्यामिवोपरि।**
**लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ ३४ ॥**

ध्रुवायाम्। त्वा। दिशि। पुरा। सम्ऽवृतः। स्वधायाम्। आ। दधामि। बाहुऽच्युता। पृथिवी। द्याम्ऽइव। उपरि। लोकऽकृतः। पथिऽकृतः। यजामहे। ये। देवानाम्। हुतऽभागाः। इह। स्थ ॥ ३४ ॥

---

१ °रक्षार्थ° S'.   २. क्तान्ते स्वरो नोपपद्यते.

ध्रुवायाम्। ध्रुवा स्थिरा अधरा दिक्। तस्यां दिशि। गतम् अन्यत्।

ऊर्ध्वायां त्वा दिशि पुरा संवृतः स्वधायामा दधामि बाहुच्युता पृथिवी द्यामिवोपरि।
लोककृतः पथिकृतौ यजामहे ये देवानां हुतभागा इह स्थ ॥ ३५ ॥

ऊर्ध्वायाम्। त्वा। दिशि। पुरा। सम्ऽवृतः। स्वधायाम्। आ। दधामि। बाहुऽच्युता। पृथिवी। द्याम्ऽइव। उपरि। लोकऽकृतः। पथिऽकृतः। यजामहे। ये। देवानाम्। हुतऽभागाः। इह। स्थ[1] ॥ ३५ ॥

ऊर्ध्वायाम् उपरितन्यां दिशि हे प्रेत त्वा त्वां स्वधायाम् स्वधाकारे आ दधामि स्थापयामि पुरा पूर्वमेव संवृतः प्रावृतो[2]ऽहम्। बाहुच्युता पुण्यकृतां बाहुभिर्दत्ता पृथिवी च त्वां पातु। उपरि अवस्थितां द्यामिव दानफलभूतं स्वर्गं यथा सा पालयति तद्वत्। लोककृतः स्वर्गादिलोकस्य कर्तॄन् यजामहे हविर्भिः पूजयामः। देवानाम् हविर्भुजां मध्ये हे देवाः ये यूयम् इह अस्मिन् लोके हुतभागाः स्थ भवथ।

धर्तासि धरुणोसि वंसगोसि ॥ ३६ ॥

धर्ता। असि। धरुणः। असि। वंसगः। असि ॥ ३६ ॥

उदपूरसि मधुपूरसि वातपूरसि ॥ ३७ ॥

उदऽपूः। असि। मधुऽपूः। असि। वातऽपूः। असि ॥ ३७ ॥

हे अग्ने त्वं [3]धर्तासि सर्वेषां धारयितासि[3]। धरुणः। धार्यत इति धरुणः। 'धारेर्णिलुक् च' (पाउ ३,५८) इति उनन्प्रत्ययः। गार्हपत्यादिरूपेण सर्वैर्धार्यमाणोसि। वंसगः वननीयगतिर्वृषभः असि भवसि। तथा 'चत्वारि शृङ्गा' (ऋ ४,५८,३) इत्यस्याम् ऋचि वृषभरूपकल्पनाग्नेः समाम्नाता। अत एव 'तिग्मशृङ्गो न वंसगः' (ऋ ६,१६,३९) इति अन्यत्रापि आम्नातम् [३६]। तथा हे अग्ने त्वम् उदपूः उदकस्य पूरयिता असि। तथा मधुपूः मधुनो माक्षिकस्य पूरयिता असि भवसि। तथा वातपूः वातस्य प्राणात्मकस्य वायोः पूरयिता असि भवसि। एवंगुणविशिष्टस्त्वम् इमं यजमानं पालयेत्यर्थः। [३७]

सोमयागे हविर्धानाख्यशकटे प्रवर्त्यमाने 'इतश्च मा' इति द्वाभ्याम् अभिमन्त्रयेत। तथा च वैतानं सूत्रम्। "हविर्धाने प्रवर्त्यमाने 'इतश्च मा' इति द्वाभ्याम् अनुमन्त्रयते" (वैताश्रौ १५,११) इति।

---

१. स्थ Cp. २. क्तप्रत्ययान्ते स्वरः! ३. ...रयितासि रिक्तं स्थानं द्वादशानां वर्णानाम् S'.

[१]इतश्च॑ मा॒मुत॑श्चावतां य॒मे इ॑व॒ यत॑माने॒ यदै॒तम्[२] ।
प्र वां॑ भर॒न् मानु॑षा देव॒यन्तो॒[३] आ सी॑दतां॒[४] स्वमु॒ लो॒कं विदा॑ने[१] ॥३८॥

इ॒तः । च॒ । मा[५] । अ॒मुतः॑ । च॒ । अ॒व॒ताम् । य॒मे इ॒वेति॑ य॒मेऽइ॑व । यत॑माने॒ इति॑ । यत् । ऐ॒तम् । प्र । वा॒म् । भ॒र॒न् । मानु॑षाः । दे॒व॒ऽयन्तः॑ । आ । सी॒द॒ता॒म्[६] । स्वम् । ऊं॒ इति॑ । लो॒कम् । विदा॑ने॒ इति॑ ॥ ३८ ॥

इतश्च[७] इतः अस्माद् भूलोकाद् अमुतश्च अमुष्मात् स्वर्गलोकात् लोकद्वयावस्थिताद् भयहेतोः मा मां यजमानम् अवताम् हविर्धाने रक्षताम् । इति परोक्षकृतो निर्देशः । अथ[८] प्रत्यक्षकृतः । हे हविर्धाने यमे इव यमले युगपद् उत्पन्ने अपत्ये इव यतमाने समानव्याप्रियमाणे जगतः पोषणाय प्रयत्नं कुर्वाणे [९]यत् यस्मात् कारणाद् युवाम् ऐतम् गच्छथः[९] । वाम् युवाभ्यां देवयन्तः देवान् आत्मन इच्छन्तो मानुषाः मनुष्या ऋत्विग्यजमानाः प्र भरन् हवींषि समभरन् । तदानीं युवां स्वम् स्वकीयं लोकम् स्थानं [१०]विदाने जानती[१०] आ सीदतम्[११] उपविशतम् । उ इति पदपूरणः ।

[१२]स्वा॒स॒स्थे[१३] भ॑वत॒मिन्द॑वे नो यु॒जे वां॒ ब्रह्म॑ पू॒र्व्यं नमो॑भिः ।
वि श्लोक॑ एति प॒थ्ये॑व सू॒रिः शृ॒ण्वन्तु॒ विश्वे॑ अ॒मृता॑स ए॒तत्[१२] ॥ ३९ ॥

स्वा॒स॒स्थे इति॑ सु॒ऽआ॒स॒स्थे[१४] । भ॒व॒त॒म् । इन्द॑वे । नः॒ । यु॒जे । वा॒म् । ब्रह्म॑ । पू॒र्व्यम् । नमः॑ऽभिः । वि । श्लोकः॑ । ए॒ति॒ । प॒थ्या॒ऽइव । सू॒रिः । शृ॒ण्वन्तु॑ । विश्वे॑ । अ॒मृता॑सः । ए॒तत् ॥ ३९ ॥

हे हविर्धाने नः अस्माकम् इन्दवे सोमाय स्वासस्थे सुखासनस्थे सुस्थिरे भवतम् । अहं च वाम् युवयोः पूर्व्यम् पूर्वकाले भवं चिरंतनं ब्रह्म परिवृढं स्तोत्रं नमोभिः नमस्कारैः सहितं युजे युनज्मि । यद्वा नमोभिः नमस्कारप्रतिपादकैर्मन्त्रैरित्यर्थः । श्लोकः श्लोकनीयस्तुतिसंघः व्येति विशेषेण युवां गच्छति । तत्र दृष्टान्तः— पथ्या सूरिरिव । पथोनपेतं पथ्यम् । 'सुपां सुलुक्' ( पा ७,१,३९ ) इति

---

१. य॒मे इ॒व यत॑माने॒ यदै॒तं प्र वां॑ भर॒न् मानु॑षा दे॒व॒यन्तः॑ । आ सी॑द॒तं स्वमु॒ लो॒कं विदा॑ने स्वा॒स॒स्थे भ॑वत॒मि॑न्द॑वे नः ॥ ऋ १०,१३,२. २. यदै॒त C; यदे॒तम् तैआ ६,५,१. ३. दे॒व॒यन्तो॒ > दे॒व॒यन्त॒ A,C. ४. सी॑द॒तं C,RW. ५. मा Cp. ६. सीदताम् P,P[२]; ७. इतश्च लोपः S'. ८. अथ प्रत्यक्षकृतो निर्देशः अथ S'. ९. नास्ति S'. १०. विजाने जानत्यौ S'. ११. वैतु. मंपा. १२. यु॒जे वां॒ ब्रह्म॑ पू॒र्व्यं नमो॑भि॒र्वि श्लोक॑ एतु प॒थ्ये॑व सू॒रेः ( श्लोका॑ यन्ति प॒थ्ये॑व सू॒राः तै. पथेव सूरः काठ. ) । शृ॒ण्वन्तु॒ ( °वन्ति॒ तै.) विश्वे॑ अ॒मृत॑स्य पु॒त्रा आ ये धामा॑नि दि॒व्यानि॑ त॒स्थुः ऋ १०,१३,१ मा ११,५ तै ४,१,१,२ मै २,७,१ काठ १५,११. १३. तु. ऋ १०,१३,२ प्रभृ. वैतु. शंपा. स्वास॑स्थे भ°. १४. तु. मंपा. वैतु. शंपा. स्वास॑स्थे॒ इति॑ सु॒ऽआस॑स्थे.

तृतीयायाः पूर्वसवर्णदीर्घः । यथा पथोनपेतेन धर्मेण सूरिः विद्वान् अभिमतं फलं प्राप्नोति तद्वद् इत्यर्थः । एतत् अस्माभिः कृतं स्तोत्रम् अमृतासः अमृता मरणरहिता विश्वे सर्वे देवाः शृण्वन्तु आकर्णयन्तु । श्रु श्रवणे । 'श्रुवः शृ च' (पा ३,१,७४) इति श्नुप्रत्ययः शृभावश्च ।

'त्रीणि पदानि' इत्यनया दह्यमानं[1] प्रेतशरीरं बान्धवा उपतिष्ठेरन् ।

[2]त्रीणि पदानि रुपो[3] अन्वरोहच्चतुष्पदीमन्वैतद्[4] व्रतेन ।
अक्षरेण प्रति मिमीते अर्कमृतस्य नाभावभि सं पुनाति[2] ॥ ४० ॥

त्रीणि । पदानि । रुपः[5] । अनु । अरोहत् । चतुःऽपदीम् । अनु । एतत्[6] । व्रतेन । अक्षरेण । प्रति । मिमीते । अर्कम् । ऋतस्य । नाभौ । अभि । सम् । पुनाति ॥ ४० ॥

रुप्यति[7] मुह्यतीति रुपो[8] मृतः पुरुषः । रुप रुप लुप विमोहने । इगुपधलक्षणः कप्रत्ययः । त्रीणि त्रिसंख्याकानि पदानि[9] द्युस्थानानि अन्वरोहत् क्रमेण आरूढवान् । प्राप्तवान् इत्यर्थः । केन साधनेन इत्याह । एतत्[10] एतेन अनुष्ठीयमानेन व्रतेन कर्मणा पैतृमेधिकसंस्कारेण चतुष्पदीम् चत्वारः पादा यस्याः सा तथोक्ता ताम् अनुस्तरण्याख्यां गाम् अनु अनुलक्ष्य । अन्वरोहद् इति संबन्धः । संस्कारमाहात्म्येन मृतो[11] लोकत्रयं व्याप्नोद् इत्यर्थः । अक्षरेण । अश्नुते व्याप्नोति स्वफलभूतं स्थानम् इत्यक्षरं स्वार्जितं सुकृतम् । यद्वा क्षरो[12] विनाशः । तद्रहितम् । तेन स्वार्जितेन सुकृतेन । यद्वा परिच्छेदकशरीरे त्यक्ते अक्षरेण[13] व्यापकेन विनाशरहितेन आत्मस्वरूपेण अर्कम् अर्चनीयं सुकृतफलं स्वर्गादिकं सूर्यमेव वा प्रति मिमीते प्रतिमुखं मिमीते परिच्छिनत्ति । व्याप्नोतीत्यर्थः । यद्वा प्रतिमानं प्रतिबिम्बम् । सूर्यस्य प्रतिबिम्बं भवति । सूर्यसदृशो भवतीत्यर्थः । ऋतस्य योनौ[10] । ऋतम् इति सत्यस्य उदकस्य यज्ञस्य वा नामधेयम् । तस्य योनिः उत्पत्तिस्थानं सूर्यमण्डलं तत्र अभि अभितः सर्वतः आभिमुख्येन वा सं पुनाति सम्यक् पूतो वर्तते ।

इति तृतीयेऽनुवाके चतुर्थं सूक्तम् ।

'देवेभ्यः कम्' इत्यादिकं पञ्चमं सूक्तम् । तत्र 'त्वमग्न ईळितः'[10] इत्यनया पिण्डपितृयज्ञे समिधम् आदध्यात् ।

---

१. दाह्यमानं S′. २. पञ्च पदानि रुपो अन्वरोहं चतुष्पदीमन्वेमि व्रतेन । अक्षरेण प्रति मिम एतामृतस्य नाभावधि सं पुनामि ॥ ऋ १०,१३,३. ३. रूपो A,C. ४. °मन्वैद् > °मन्वैतद् C; °मन्वैतद् O; वैप १,२५७० द्र. ५. रूपः Cp.; रूपाः P. ६. एतत् P,P²; ऐतत् Op.; ऐत् Cp. ७. रोपेति S′. ८. वैप १,२६८० द्र. ९. पदानि···रिक्तं स्थानमुपत्रयोदशानां वर्णानाम् S′. १०. वैतु. मंपा. ११. त्यामृतो S′. १२. अक्षरो S′. १३. तिसृक्षरेण S′.

'समिधोऽभ्यादधाति' इति प्रक्रम्य सूत्रितम्— "'त्वमग्न ईळितः' ( अ १८,३,४२ ), 'आ त्वाग्न इधीमहि' ( अ १८,४,८८ ) इति" ( कौसू ८९,१३ ) इति ।

'अग्निष्वात्ताः पितरः' (४४) इत्यनया पिण्डपितृयज्ञे बर्हिः स्तृणीयात् ।

'उपहूता नः पितरः' (४५) इति उत्तराभ्यां द्वाभ्यां च पिण्डपितृयज्ञे बर्हिः स्तृणीयात् ।

'ये तातृषुः'(४७)इत्यृचा 'ये सत्यासः'(४८)इत्युत्तरया च पिण्डपितृयज्ञे समिधावादध्यात् ।

'उप सर्प' (४९) इति तिसृभिर्ऋग्भिः श्मशानदेशं[1] शलाकाभिः इष्टकाभिर्वा प्रसव्यं चिनुयात् ।

देवेभ्यः कर्मवृणीत मृत्युं प्रजायै किममृतं[2] नावृणीत ।
[3]बृहस्पतिर्यज्ञमतनुत ऋषिः[3] प्रियां [4]यमस्तन्वं१मा रिरेच[4] ॥ ४१ ॥

देवेभ्यः । कम् । अवृणीत । मृत्युम् । प्रऽजायै । किम् । अमृतम् । न । अवृणीत ।
बृहस्पतिः । यज्ञम् । अतनुत । ऋषिः । प्रियाम् । यमः । तन्वम् । आ । रिरेच ॥ ४१ ॥

देवेभ्यः दीव्यन्तीति देवाः इन्द्रादयः । तेभ्यः । तादर्थ्ये चतुर्थी । तदर्थं कम् कीदृशं मृत्युम् अवृणीत सृष्ट्यादौ विधाता वृतवान् देवानाम् अर्थे स्रष्टा कमपि मरणहेतुं न कृतवान् इत्यर्थः काका द्योत्यते । अतो देवानां मृत्युसंबन्धविरहात् तेषाम् अमृतत्वम् उत्पत्तिसिद्धम् इत्यर्थः । प्रजायै । प्रजायते उत्पद्यत इति प्रजा मनुष्यादिरूपा । तस्यै वेधाः किम् किं कारणम् अमृतम् अमरणं न अवृणीत न वृतवान् । मनुष्यादीनां देववद् अमृतत्वं न कृतवान् । तत्र कारणं किमपि नास्तीत्यर्थः । प्रजापतिना केचन इन्द्राद्याः अमृताः सृष्टाः मनुष्याद्याः प्राणिनो मरणधर्मोपेताः कल्पिताः । अतो देवानाम् अमरणं मनुष्याणां मरणं च अनादिसिद्धम् । अतस्तत्र कारणगवेषणं न कार्यम् इत्यर्थः । बृहस्पतिः बृहतां महतां देवानां पतिः स्वामी ऋषिः अतीन्द्रियार्थद्रष्टा यज्ञम् सोमयागम् अतनुत अकरोत् । भूलोके ऋषिरूपेणावस्थितो बृहस्पतिः स्वस्य ऐहिकामुष्मिकफलप्राप्तये तत्प्राप्त्युपायभूतं[5] यज्ञं कृतवान् इत्यर्थः । श्रूयते हि— 'बृहस्पतिरकामयत देवानां पुरोधां गच्छेयम् इति । स एतं बृहस्पतिसवम् अपश्यत् । तम् आहरत् । तेनायजत' ( तैब्रा २,७,१,२ ) इति । बृहस्पतेः प्रियां तन्वम् प्रेमास्पदं मानुषं शरीरं यमो वैवस्वतः आ रिरेच आ समन्ताद् रिक्तं निःसारं मृतं कृतवान् । ऋषिरूपेणावस्थितस्य बृहस्पतेरपि यमः प्राणान् अपाहार्षीत् किल, किमु वक्तव्यम् अन्येषां मनुष्यादीनां यमः प्राणान् अपहरतीति । यद्वा नावृणीत इति पूर्वत्रापि संबध्यते । देवानां कं मृत्युं नावृणीत ।

१. स्मशान° S'. २. कममृतं ऋ १०,१३,४. ३. बृहस्पतिं यज्ञमकृण्वत ऋषिं ऋ. ४. °तन्वं१ प्रारिरेचीत् ऋ. ५. °भूत° S'.

सर्वमपि मृत्युं वृतवान् । अतस्तेषाम् अमृतत्वसिद्धये तैः प्रार्थितो बृहस्पतिः ऋषिर्भूत्वा यज्ञम् अतनुत । तस्माद् यज्ञात् ते देवा अमृताः संपन्नाः । तथा प्रजायै मनुष्यादिरूपायै किमपि अमृतं नावृणीत अतः सा मर्त्या भूता । तस्माद् यमो मनुष्यादिशरीरम् आरेचितवान् इति ।

त्वम॑ग्न ई॒डि॒तो जा॑तवे॒दोऽवा॑ड्ढ॒व्यानि॑[1] सुर॒भीणि॑ कृ॒त्वा[2] ।
प्रादा॑ः पि॒तृभ्य॑ः स्व॒धया॒ ते अ॑क्षन्न॒द्धि त्वं दे॑व॒ प्रय॑ता ह॒वींषि॑ ॥ ४२ ॥

त्वम् । अ॒ग्ने॒ । ई॒डि॒तः । जा॒त॒ऽवे॒दः॒ । अवा॑ट् । ह॒व्यानि॑ । सु॒र॒भीणि॑ । कृ॒त्वा ।
प्र । अ॒दा॒ः । पि॒तृऽभ्य॑ः । स्व॒धया॑ । ते । अ॒क्ष॒न् । अ॒द्धि । त्वम् । दे॒व॒ । प्रऽय॑ता । ह॒वींषि॑ ॥ ४२ ॥

हे जातवेदः जातानां जनिमतां प्राणिनां वेदितः हे अग्ने ईळितः[3] अस्माभिः स्तुतः त्वं हव्यानि अस्मदीयानि चरुपुरोडाशादीनि सुरभीणि सुगन्धीनि रसवन्ति कृत्वा अवाट् देवेभ्यो वह । 'छन्दसि लुङ्लङ्लिटः' ( पा ३,४,६ ) इति लोडर्थे लुङ् । वह प्रापणे इत्यस्मात् लुङि सिपि 'बहुलं छन्दसि' ( पा ७,४,७८ ) इति ईडभावे 'झलो झलि' ( पा ८,२,२६ ) इति सिज्लोपः । 'हल्ङ्याब्भ्यः०' ( पा ६,१,६८ ) इति सलोपे रूपम् । तथा पितृभ्यः पितृदेवताभ्यः स्वधया स्वधाकारेण सह कव्यसंज्ञकानि हवींषि प्रादाः प्रत्तवान् असि । ते च पितरस्त्वया दत्तानि कव्यानि हवींषि अक्षन् अभुञ्जत । अद भक्षणे । 'लुङ्सनोर्घस्लृ' ( पा २,४,३७ ) इति घस्लादेशः । 'मन्त्रे घसह्वर' ( पा २,४,८० ) इत्यादिना च्लेर्लुक् । 'गमहनजनखनघसां लोपः' ( पा ६,४,९८ ) इति उपधालोपः । चर्त्वषत्वे । हे देव द्योतमान अग्ने त्वम् अपि प्रयता[4] प्रयतानि प्रकर्षेण अस्माभिर्दत्तानि हवींषि अद्धि भुङ्क्ष्व । अद भक्षणे । 'हुझल्भ्यो हेर्धिः' ( पा ६,४,१०१ ) इति हेर्धिरादेशः ।

आसी॑नासो अरु॒णीना॑मु॒पस्थे॑ र॒यिं ध॑त्त दा॒शुषे॒ मर्त्या॑य ।
पु॒त्रेभ्य॑ः पितर॒स्तस्य॒ वस्व॒ः[5] प्र य॑च्छत॒ त इ॒होर्जं॑ दधात ॥ ४३ ॥

आसी॑नासः । अ॒रु॒णीना॑म् । उ॒पऽस्थे॑ । र॒यिम् । ध॒त्त॒ । दा॒शुषे॑ । मर्त्या॑य ।
पु॒त्रेभ्य॑ः । पि॒त॒रः॒ । तस्य॑ । वस्व॑ः[6] । प्र । य॒च्छ॒त॒ । ते । इ॒ह । ऊर्ज॑म् । द॒धा॒त॒ ॥ ४३ ॥

हे पितरः अरुणीनाम् अरुणवर्णानां मातॄणाम् उपस्थे उत्सङ्गे आसीनासः आसीना उपविशन्तो दाशुषे हविर्दत्तवते मर्त्याय मरणधर्मणे यजमानाय रयिम् धनं धत्त दत्त प्रयच्छत । पुत्रेभ्यः । पुन्नाम्नो नरकात् त्रायन्त इति पुत्राः । तेभ्यः अस्मभ्यं

---

१. कव्यवाहनावाड्° मा १९,६६. २. कृत्वी ऋ १०,१५,१२ मा. ३. वैतु. मं.ग्रा.
४. प्रयाता S'. ५. वसु B,V; वस्वः > वसु Dc. ६. वसुं Cp; वस्वः P,P[2].

तस्य वस्वः । कर्मणि षष्ठी । तत् प्रसिद्धं वसु धनं प्र यच्छत दत्त । दाण् दाने । 'पाघ्राध्मास्थाम्नादाण्' (पा ७,३,७८) इत्यादिना यच्छादेशः । हे पितरः ते यूयम् इह अस्मिन् भूलोके ऊर्जम् बलकरम् अन्नम् अस्मभ्यं दधात धत्त ।

अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः ।
अत्तो[1] हवींषि प्रयतानि बर्हिषि [2]रयिं च नः[2] सर्ववीरं दधात[3] ॥ ४४ ॥

अग्निऽस्वात्ताः । पितरः । आ । इह । गच्छत । सदःसदः । सदत । सुऽप्रनीतयः ।
अत्तो इति । हवींषि । प्रऽयतानि । बर्हिषि । रयिम् । च । नः । सर्वऽवीरम् । दधात ॥४४॥

हे अग्निष्वात्ताः पितरः । पितरो द्विविधाः । बर्हिषदः अग्निष्वात्ताश्चेति । तेषां भेदस्तैत्तिरीयके स्पष्टम् आम्नातः । 'पितॄन् बर्हिषदो यजति । ये वै यज्वानस्ते पितरो बर्हिषदः तानेव तद् यजति । पितॄन् अग्निष्वात्तान् यजति । ये वा अयज्वानो गृहमेधिनस्ते पितरोऽग्निष्वात्ताः' (तैब्रा १,६,९,६) इति । कृतसोमयागाः पितरो बर्हिषत्संज्ञकाः अकृतसोमयागास्तु अग्निष्वात्त-संज्ञका इत्यर्थः । हे एतत्संज्ञकाः पितरः इह अस्मिन् यज्ञे आ गच्छत । हे सुप्रणीतयः । प्रणीतिः प्रकृष्टं फलप्रापणम् । शोभना प्रणीतिर्येषां ते तथोक्ताः । आगतास्ते यूयं सदःसदः । सीदन्ति[4] अस्मिन्निति सदः उपवेशनस्थानम् पितृपितामहप्रपितामहा-दीनां यद्यत् स्थानं परिकल्पितं तत् स्थानं सदत प्राप्नुत । स्वेस्वे स्थाने उपवि-शतेत्यर्थः । बर्हिषि यज्ञे प्रयतानि प्रत्तानि यद्वा शुद्धानि हवींषि चरुपुरोडाशादीनि अत्त[5] भक्षयत । हविरदनेन संतुष्टा यूयं नः अस्मभ्यं सर्ववीरम् सर्वैर्वीरैरुपेतं रयिम् धनं दधातन[5] धत्त । प्रयच्छतेत्यर्थः । डुधाञ् धारणपोषणयोः[6] । लोटि 'तप्तनप्तनथ-नाश्च' (पा ७,१,४५) इति तस्य तनबादेशः ।

उपहूता नः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ ४५ ॥

उपऽहूताः । नः । पितरः । सोम्यासः । बर्हिष्येषु । निऽधिषु । प्रियेषु । ते । आ ।
गमन्तु । ते । इह । श्रुवन्तु । अधि । ब्रुवन्तु[7] । ते । अवन्तु । अस्मान् ॥ ४५ ॥

नः अस्माकं पितरः उपहूताः समीपम् आहूताः । सोम्यासः सोम्याः सोमार्हाः एवंगुणविशिष्टाः पितृपितामहप्रपितामहाः बर्हिष्येषु बर्हिषि यज्ञे भवा बर्हिष्याः तेषु प्रियेषु प्रीतिविषयेषु निधिषु निधीयमानेषु हविःषु सत्सु प्रागुदीरितास्ते पितरः आ गमन्तु आगच्छन्तु । इह अस्मिन् यज्ञे ते पितरः श्रुवन्तु । अस्मदीयं स्तोत्रं शृण्वन्तु ।

---

१. अत्ता ऋ १०,१५,११ मा १९,५९ तै २,६,१२,२ मै ४,१०,६. २. अथा रयिं ऋ. मा. तै. मै. ३. दधातन ऋ. मा. तै. मै. ४. सीदति S'. ५. वैद्रु. मंपा. ६. दानधारणयोः शंपा. ७. ब्रवंतु Cp.

श्रु श्रवणे। 'बहुलं छन्दसि' (पा २,४,७३) इति विकरणस्य लुक्। अधि ब्रुवन्तु अधिवचनं पक्षपातेन वचनम्।[1]अधिवचनेन अस्मान् स्वीकुर्वन्तु। न केवलम् अधिवचनमात्रम्। अपि तु ते पितरः अस्मान् अवन्तु ऐहिकामुष्मिकफलप्रदानेन रक्षन्तु।

ये नः [2]पितुः पितरो ये पितामहा[2] अनूजहिरे[3] सोमपीथं वसिष्ठाः।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ ४६ ॥

ये। नः। पितुः। पितरः। ये। पितामहाः। अनुऽजहिरे[4]। सोमऽपीथम्[5]। वसिष्ठाः। तेभिः। यमः। सम्ऽरराणः। हवींषि। उशन्। उशत्ऽभिः। प्रतिऽकामम्। अत्तु ॥४६॥

नः अस्माकं पितुः जनकस्य ये पितरः सन्ति ये च पितामहाः तज्जनका वसिष्ठाः[6] वसुमत्तमाः एवंगुणविशिष्टा ये पितृपितामहप्रपितामहाः सोमपीथम् सोमपानम् अनुजहिरे अनुक्रमेण हरन्ति आत्मसात् कुर्वन्ति स्म तेभिः तैः पितृभिः [7]संरराणः सह[7] रममाणो यमः उशन् कामयमानः उशद्भिः कामयमानैस्तैः पितृभिः सह हवींषि अस्मदीयानि चरुपुरोडाशादीनि हवींषि प्रतिकामम्। कामः अभिलाषः। अभिलाषं प्रति। अभिलाषानुसारेणेत्यर्थः। अत्तु भक्षयतु।

ये तातृषुर्देवत्रा जेहमाना होत्राविद स्तोमतष्टासो अर्कैः।
आग्ने याहि [8]सहस्रं देववन्दैः[8] सत्यैः [9]कविभिर्ऋषिभिर्घर्मसद्भिः ॥ ४७ ॥

ये। ततृषुः। देवऽत्रा[10]। जेहमानाः। होत्राऽविदः। स्तोमऽतष्टासः। अर्कैः। आ। अग्ने। याहि। सहस्रम्। देवऽवन्दैः। सत्यैः। कविऽभिः। ऋषिऽभिः[11]। घर्मसत्ऽभिः ॥४७॥

देवत्रा देवेषु जेहमानाः। जेहृ प्रयत्ने। प्रयतमानाः व्याप्रियमाणा होत्राविदः होत्राः सप्त वषट्कर्तारः। तत्कृतान् यागान् जानन्तः अर्कैः अर्चनीयैः स्तोत्रैः स्तोमतष्टासः स्तोमस्य [12]स्तुतेः कर्तारः स्तोमकर्तारः†। तक्षू तनूकरणे[12]। तस्मात् कर्तरि निष्ठा। एवंगुणविशिष्टा ये पितरः तातृषुः तृष्यन्ति पिपासन्ति। तैः देववन्दैः देवान् वन्दन्ते[13] प्रणमन्तीति देववन्दाः तैः सत्यैः सत्यफलैः कविभिः क्रान्तदर्शिभिः ऋषिभिः अतीन्द्रियद्रष्टृभिः घर्मसद्भिः घर्मः प्रवर्ग्यः तदुपलक्षिते सोमयागे सीदन्तीति घर्मसदः। सहार्थयोगे तृतीया। एवंगुणविशिष्टैः पितृभिः सह हे अग्ने त्वम्

---

१. आधिक° S'. २. ये नः पूर्वे पितरः सोम्यासो ऋ १०,१५,८ मा १९,५१. ३. अनुजहीरे K^m,V,Dc,O,Op,R[2]; अनुजहिरे A,B,P[3]; अनूजहीरे R,K[2]; अनूजहिरे S'; ऽनूहिरे ऋ १०,१५,८ मा १९,५१. ४. अनुऽजहिरे P,P[2]. ५. सोमऽपीथम् Cp. ६. वशिष्ठाः S'. ७. सह संरराणः S'. ८. सुविदत्रैभिरर्वाङ् ऋ १०,१५,९. ९. कव्यैः पितृभिर्घर्म° ऋ. १०. देवत्रा Cp. ११. ऋषिऽभिः Cp. १२. स्तुतेः···नूकरणे रिक्तं स्थानमुपदशानां वर्णानाम् S'. † कारकसमासे स्वरः? १३. वन्दते S'.

अस्माकं सहस्रम् अपरिमितं धनं यथा भवति तथा आ याहि आगच्छ । आगत्य च अस्मदीयेन हविषा पितॄणां तृप्तं निवर्तयेति भावः ।

ये स॒त्यासो॑ हवि॒रदो॑ हवि॒ष्पा[1] इन्द्रे॑ण दे॒वैः स॒रथं॑ तु॒रेण॑[2] ।
आग्ने॑ याहि सुवि॒दत्रे॑भिर॒र्वाङ्[3] परैः॑ पूर्वैर्ऋषि॑भिर्घर्म॒सद्भिः॑[4] ॥ ४८ ॥

ये । स॒त्यासः॑ । ह॒विः॒ऽअदः॑ । ह॒विः॒ऽपाः॑ । इन्द्रे॑ण । दे॒वैः । स॒ऽरथ॑म् । तु॒रेण॑ । आ ।
अग्ने॑ । या॒हि॒ । सु॒ऽवि॒दत्रे॑भिः । अ॒र्वाङ् । परैः॑ । पूर्वैः॑ । ऋषि॑ऽभिः[5] । घ॒र्म॒सत्ऽभिः॑ ॥४८॥

ये पितरः सत्यासः सत्याः सत्प्रभवाः सत्यभाषणोपेता वा हविरदः हवींषि चरुपुरोडाशादीनि अदन्ति भक्षयन्तीति हविरदः । हविष्पाः हविः सोमरसं पिबन्तीति हविष्पाः । तुरेण त्वरमाणेन शत्रूणां हिंसकेन वा इन्द्रेण देवैः अन्यैश्च सरथम् समानो रथो यथा भवति तथा[6] । वर्तन्त इति शेषः । इन्द्रेण देवैः सह एकं रथम् उपारूढा वर्तन्त इत्यर्थः । तैः सुविदत्रेभिः सुविदत्रैः शोभनधनैः शोभनप्रज्ञैर्वा परैः उत्कृष्टैः पूर्वैः पूर्वपुरुषैः पितृपितामहप्रपितामहैः ऋषिभिः अतीन्द्रियार्थदर्शिभिः घर्मसद्भिः यज्ञे सीदद्भिः एवंगुणविशिष्टपितृभिः सह हे अग्ने त्वम् अर्वाङ् अस्मदभिमुखः सन् आ याहि आगच्छ ।

उप॑ सर्प मा॒तरं॒ भूमि॑मे॒तामु॑रु॒व्यच॑सं पृथि॒वीं सु॒शेवा॑म् ।
ऊर्ण॑म्रदाः[7] पृथि॒वी[8] दक्षि॑णावत[9] ए॒षा त्वा॑ पातु [10]प्रप॑थे पु॒रस्ता॑त्[10] ॥४९॥

उप॑ । स॒र्प॒ । मा॒तर॑म् । भूमि॑म् । ए॒ताम् । उ॒रु॒ऽव्यच॑सम् । पृ॒थि॒वीम् । सु॒ऽशेवा॑म् ।
ऊर्ण॑ऽम्रदाः[11] । पृ॒थि॒वी । दक्षि॑णाऽवते । ए॒षा । त्वा॒ । पा॒तु॒ । प्र॒ऽप॑थे । पु॒रस्ता॑त् ॥४९॥

हे प्रेत मातरम् जननीम् एतां भूमिम् उप सर्प उपगच्छ । कीदृशीम् । उरुव्यचसम् । व्यचतिर्व्याप्तिकर्मा । विस्तीर्णव्यापनां पृथिवीम् प्रथितां प्रख्यातां सुशेवाम् सुसुखाम् । एषा त्वया उपसृप्ता पृथिवी दक्षिणावते दक्षिणा अस्य सन्तीति दक्षिणावान् बह्वीभिर्यज्ञसंबन्धिनीभिर्दक्षिणाभिर्युक्ताय तुभ्यम् ऊर्णम्रदाः ऊर्णाभिर्विरचितकम्बलवन्म्रदीयसी मार्दवेन सुखकरी सती पुरस्तात् पूर्वस्यां दिशि पूर्वमेव वा प्रपथे पथो मार्गस्य प्रारम्भः प्रपथः । 'ऋक्पूरब्धूः°' ( पा ५,४,७४ ) इति अकारः समासान्तः । तत्र वर्तमानं त्वा त्वां पातु रक्षतु ।

---

१. हवि॒ष्या A,B. २. दधा॑नाः ऋ १०,१५,१०. ३. स॒हस्रं॑ देवव॒न्दैः ऋ.
४. पूर्वैः॑ पि॒तृभि॑र्घर्म॒° ऋ. ५. ऋषि॑ऽभिः Cp. ६. स्वरः ? ७. ऊर्ण॑म्रदाः WM.
८. यु॒व॒तिः ऋ १०,१८,१० तैआ६,७,१. ९. दक्षिणावती तैआ. १०. निर्ऋ॑तेरु॒पस्था॑त् ऋ.; निर्ऋ॑त्या उ॒पस्थे॑ तैआ. ११. ऊर्ण॑म्ऽम्रदाः $Bp^2$,$D^2$,Kp.

उच्छ्वञ्चस्व[1] पृथिवि मा [2]नि बाधथाः[2] सूपायनास्मै भव सूपसर्पणा[3]।
माता पुत्रं यथा सिचाभ्येनं [4]भूम ऊर्णुहि[4] ॥ ५० ॥

उत् । श्वञ्चस्व । पृथिवि । मा । नि । बाधथाः । सुऽउपायना । अस्मै । भव । सुऽउपसर्पणा । माता । पुत्रम् । यथा । सिचा । अभि । एनम् । भूमे । ऊर्णुहि ॥ ५० ॥

हे पृथिवि भूदेवते त्वम् उच्छ्वञ्चस्व । श्वञ्चतिर्गतिकर्मा । उच्छूनावयवा पुलकिता भव । एनम् उपसृतं पुरुषं मा नि बाधथाः कार्कश्येन मा बाधस्व । अपि च अस्मै पुरुषाय सूपायना सुखेन उपगन्तुम् अर्हा सूपसर्पणा शोभनोपसर्पणयुक्ता च भव । यथा येन प्रकारेण माता जननी स्वकीयं पुत्रं सिचा चेलाञ्चलेन अभिच्छादयति तथा एनं त्वाम् उपगतं पुरुषम् हे भूमे त्वमपि अभ्यूर्णुहि अभितः प्रच्छादय । यथा अस्य शीतवातोष्णादिजनितदुःखं न भवति तथा एनं त्रायस्वेत्यर्थः । ऊर्णुञ् आच्छादने । अदादित्वात् शपो लुक् ।

इति तृतीयेऽनुवाके पञ्चमं सूक्तम् ।

'उच्छ्वञ्चमाना' ( ५१ ) इत्याद्याया ऋचो विनियोग उक्तः ।

पात्रचयनकर्मणि यजमानस्य उदरे इडापात्रं निधाय 'इमम् अग्ने' (५३) इति द्वाभ्याम् अनुमन्त्रयते ।

यदि आहिताग्निः एकाग्निर्वा सर्पव्याघ्रादिभिर्म्रियेत तर्हि 'यत् ते कृष्णः शकुनः' (५५) इत्यनया सर्पदंशनस्थानं[5] दंष्ट्र्यादिकृतव्रणस्थानं वा अग्निना दहेत् ।

'पयस्वतीः' ( ५६ ) इति ऋचा शवदहनानन्तरं स्नानं कुर्यात् ।

'शं ते नीहारः' ( ६० ) इत्यनया अभिमन्त्रिताभिर्जलक्षीरमिश्रिताभिरोषधीभिर्ब्राह्मणस्य अस्थीनि सिञ्चेत् ।

उच्छ्वञ्चमाना[6] पृथिवी [7]सु तिष्ठतु[7] सहस्रं मित[8] उप हि श्रयन्ताम् ।
ते गृहासो [9]घृतश्चुतः स्योना[9] विश्वाहास्मै शरणाः सन्त्वत्र ॥ ५१ ॥

उत्ऽश्वञ्चमाना । पृथिवी । सु । तिष्ठतु । सहस्रम् । मितः । उप । हि । श्रयन्ताम्[10] । ते । गृहासः । घृतऽश्चुतः[11] । स्योनाः । विश्वाहा । अस्मै[12] । शरणाः । सन्तु । अत्र ॥५१॥

---

१. उछ्मंञ्चस्व तैआ ६,७,१. २. नि बाधथाः Km; वि बाधिथाः तैआ. ३. सूपवञ्चना ऋ १०,१८,११ तैआ. ४. भूमि वृणु तैआ. ५. सर्पदर्शन° S'. ६. उछ्मञ्च° तैआ. ७. हि तिष्ठसि तैआ. ८. मिथः S, सा. ९. °श्च्युतः° R; मधुश्चुतो तैआ.; °श्चुतो भवन्तु ऋ १०,१८,१२. १०. सयन्ताम् Cp. ११. °श्च्युतः Cp; °श्च्युतः p. १२. अस्मै Cp.

उच्छ्वञ्चमाना उच्छ्वयमानावयवा[1] पुलकितशरीरा पृथिवी सु तिष्ठतु सुखेन अवतिष्ठताम्। तत्र श्मशानदेशे[2] सहस्रम् सहस्रसंख्याका अपरिमिता मिथः[3] मीयमानाः स्थाप्यमाना ओषधयः उप श्रयन्ताम् उपेत्य आश्रिता भवन्तु। हिशब्दो यस्मादर्थे। यस्माद् ओषधिवनस्पतयस्तत्र उपाश्रितास्तस्मात् ते घृतश्चुतः घृतस्राविणः अत एव स्योनाः सुखकरा अस्मै मृतपुरुषाय गृहासः गृहाः विश्वाहा सर्वाणि अहानि। अत्यन्तसंयोगे द्वितीया। सर्वकालम् अत्र श्मशानदेशे शरणाः रक्षकाः सन्तु भवन्तु।

उत् ते स्तभ्नामि[4] पृथिवीं त्वत् परीमं लोगं[5] निदधन्मो अहं रिषम्[6]।
एतां स्थूणां[7] पितरो[8] धारयन्ति ते तत्र[8] यमः सादना[9] ते कृणोतु[10] ॥ ५२ ॥

उत्। ते। स्तभ्नामि। पृथिवीम्। त्वत्। परि। इमम्। लोगम्[11]। निऽदधत्। मो इति। अहम्। रिषम्[12]। एताम्। स्थूणाम्। पितरः। धारयन्ति। ते। तत्र। यमः। सदना। ते। कृणोतु ॥

हे मृतपुरुष ते तुभ्यं त्वदर्थम् इमां पृथिवीम् उत् ऊर्ध्वं स्तभ्नामि धारयामि। ष्टभि स्कभि गतिप्रतिबन्धे[13]। क्र्यादित्वात् श्नाप्रत्ययः[13]। त्वत् परि तव परितः इमं लोकम्[3] सर्वप्राण्यधिष्ठितं भूलोकं निदधत् निक्षिपन् अहं मो रिषम् मैव हिंसितो भूवम्। तत्र तस्याम् उत्तम्भनेन धृतायां भूम्यां ते त्वदर्थं पितरः पितृदेवताः एतां प्रसिद्धां स्थूणां तव गृहनिर्माणाय धारयन्ति स्थापयन्ति। यमस्तत्र ते तव सादना सदनानि गृहाणि कृणोतु करोतु। 'शेश्छन्दसि बहुलम्' ( पा ६,१,७० ) इति शेर्लोपः।

इममग्ने चमसं मा वि जिह्वरः[14] प्रियो देवानामुत सोम्यानाम्।
अयं[15] यश्चमसो देवपानस्तस्मिन् देवा अमृता मादयन्ताम्[16] ॥ ५३ ॥

इमम्। अग्ने। चमसम्। मा। वि। जिह्वरः। प्रियः। देवानाम्। उत। सोम्यानाम्। अयम्। यः। चमसः। देवऽपानः। तस्मिन्। देवाः। अमृताः। मादयन्ताम् ॥ ५३ ॥

हे अग्ने इमं चीयमानं चमसम् भक्षणसाधनम् इडापात्रं मा वि जिह्वरः कुटिलं मा कार्षीः। ह्वृ कौटिल्ये। अस्माण्ण्यन्तात् लुङि चङि रूपम्। 'न माङ्योगे' ( पा ६,४,७४ ) इति अडभावः। यश्चमसो देवानाम् अग्न्यादीनां प्रियः प्रीतिकरः। उत

---

१. °यवा वा S'. २. स्मशान S'. ३. वैतु. मंपा. ४. तभ्नोमि तैआ ६,७,१. ५. लोकं R,O, सा. तैआ.; लोकं > लोगं Dc. ६. तु R², Kᵐ ऋ १०,१८,१३ तैआ.; वैतु. A,B,C,R,V,Dc रिंषन्. ७. स्थूणां WM. ८. °यन्तु तेऽत्रा ऋ १०,१८,१५ तैआ. ९. °नात् तैआ. १०. मिनोतु ऋ. तैआ. ११. लोकम् P; लोगम् P². १२. रिषन् P,P²; रिपन् Cp. १३. ष्टभि स्कभि प्रतिबन्धे इति भ्वादौ पठ्यते ततः छान्दसः श्नाप्रत्ययः द्र. १४. जीह्वरः तैआ ६,१,४. १५. एष ऋ १०,१६,८ तैआ. १५. मादयन्ते ऋ.

अपि च सोम्यानाम् सोमार्हाणां पितॄणां प्रियः। 'उपहूता नः पितरः सोम्यासः' (४५) इति हि उक्तम्। देवपानः देवाः पिबन्ति अनेन अमृतम् इति देवपानः। एवंगुणविशिष्टो योयं चमसस्तस्मिन् अमृताः अमरणधर्माणः सर्वे देवा इन्द्रादयो मादयन्ताम् माद्यन्तु। तत्रत्यहविरास्वादनेन तृप्ता भवन्तु इत्यर्थः।

अथर्वा पूर्णं चमसं यमिन्द्रायाबिभर्वाजिनीवते[1]।
तस्मिन् कृणोति सुकृतस्य भक्षं तस्मिन्निन्दुः पवते विश्वदानीम् ॥ ५४ ॥

अथर्वा। पूर्णम्। चमसम्। यम्। इन्द्राय। अबिभः। वाजिनीऽवते[2]।
तस्मिन्। कृणोति। सुऽकृतस्य। भक्षम्। तस्मिन्। इन्दुः। पवते। विश्वऽदानीम् ॥५४॥

अथर्वा एतन्नामकः अतीन्द्रियार्थद्रष्टा कश्चिद् ऋषिः वाजिनीवते वाजः अन्नम् हविर्लक्षणम् अस्याम् अस्तीति वाजिनी यज्ञक्रिया। तद्वते इन्द्राय पूर्णम् सोमादिहविषा पूरितं यं चमसम् अबिभः भृतवान्। बिभर्तेर्लङि प्रथमैकवचने[3] रूपम्। इन्द्रप्रीत्यर्थं हविर्भिः पूर्णं यं चमसं संभृतवान् इत्यर्थः। तस्मिन् चमसे सुकृतस्य सुष्ठु कृतस्य यज्ञस्य[4] संबन्धि[4] भक्षम् भक्षणं हुतशिष्टहविषो भक्षणं कृणोति करोति। ऋत्विजां गण इत्यर्थः। तथा तस्मिन् अथर्वकृते चमसे विश्वदानीम् सर्वदा इन्दुः सोमः पवते अमृतरसात्मकः स्रवति। पूङ् पवने। भौवादिकः। विश्वदानीम् इति। विश्वशब्दाद् दानींप्रत्ययः।

यत् ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः।
अग्निष्टद् विश्वादगदं[5] कृणोतु सोमश्च यो ब्राह्मणाँ[6] आविवेश ॥ ५५ ॥

यत्[7]। ते। कृष्णः। शकुनः। आऽतुतोद। पिपीलः। सर्पः। उत। वा। श्वापदः। अग्निः।
तत्। विश्वऽअत्[8]। अगदम्। कृणोतु। सोमः। च। यः। ब्राह्मणान्। आऽविवेश ॥५५॥

हे पुरुष ते त्वदीयं यत् अङ्गं कृष्णः कृष्णवर्णः शकुनः पक्षी काकादिः आतुतोद व्यथितं दष्टं कृतवान्। तुद व्यथने। तथा पिपीलः विषदंष्ट्रः[9] पिपीलिकाविशेषः उत वा अपि वा सर्पः श्वापदः शुनः पदानीव पदानि यस्य स श्वापदो व्याघ्रादिः आतुतोदेति सर्वत्र संबध्यते। तद् अङ्गं विश्वात् विश्वं सर्वम् अत्तीति विश्वात् सर्वभक्षकः अग्निः अगदम् गदो रोगः तद्रहितं कृणोतु करोतु। यः सोमः ब्राह्मणान् ऋत्विग्यजमानान् आविवेश रसरूपेण अन्तः प्रविष्टवान् तादृशः सोमोपि। अगदं कृणोत्विति संबन्धः।

---

१. यमिन्द्रा° Km; यमिन्द्रा > यमिन्द्रा Dc. २. वाजिनीऽवते Cp. ३. मध्यमैक° S'. ४. यज्ञसंबन्धि S'. ५. विश्वादनूनं तैआ ६,४,२. ६. ब्राह्मणम् तैआ. ७. यः Cp. ८. विश्वऽअत् Cp. ९. °दंष्टः S'.

पयस्वतीरोषधयः पयस्वन्मामकं[1] पयः[2] ।
अपां [3]पयसो यत्[3] पयस्तेन [4]मा सह[4] शुम्भतु[5] ॥ ५६ ॥

पयस्वतीः । ओषधयः । पयस्वत् । मामकम् । पयः ।
अपाम् । पयसः । यत् । पयः । तेन । मा । सह । शुम्भतु ॥ ५६ ॥

ओषधयः व्रीहियवाद्याः प्रसिद्धाः याश्च अन्याः फलपाकान्ताः । ताः सर्वाः पयस्वतीः अस्मदर्थं पयस्वत्यः । पयःशब्देन सारभूतोंऽश उच्यते । सारवत्यो भवन्तु । जसि 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः । मामकम् मत्संबन्धि मम शरीरस्थितं यत् पयः सारभूतं बलं तदपि पयस्वत् सारवद् भवतु । तथा अपाम् उदकानां संबन्धिनः पयसः सारभूतांशस्य यत् पयः सारभूतः उत्कृष्टोंऽशः स तेन[6] ओषध्यादिगतेन सर्वेण पयसा सह मा मां शुम्भतु शोभनं करोतु । जलाभिमानी वरुणः स्नानेन मां शोधयत्विति भावः । शुभ शुम्भ दीप्तौ ।

इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सं स्पृशन्ताम्[7] ।
अनश्रवो अनमीवाः सुरत्ना[8] आ रोहन्तु जनयो योनिमग्रे[9] ॥ ५७ ॥

इमाः । नारीः । अविधवाः । सुऽपत्नीः । आऽअञ्जनेन । सर्पिषा । सम् । स्पृशन्ताम् ।
अनश्रवः । अनमीवाः । सुऽरत्नाः । आ । रोहन्तु । जनयः । योनिम् । अग्रे ॥ ५७ ॥

'इमा नारीः' इत्येषा सप्तमी पूर्वम् (अ १२,२,३१) आम्नाता । तत्रैव व्याख्याता । अर्थस्तु— इमाः प्रेतकुलोत्पन्ना नार्यः वैधव्यरहिताः सुपतिकाः सत्यः सर्पिर्मिश्रेण आञ्जनेन संस्पृष्टा भवन्तु । अश्रुरहिता रोगरहिताः शोभनाभरणा अपत्यजनन्यः अपत्योत्पादनाय योनिम् आ रोहन्त्विवति ।

सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन[10] परमे व्योमन् ।
हित्वावद्यं[11] पुनरस्तमेहि सं गच्छतां[12] तन्वा सुवर्चाः ॥ ५८ ॥

---

१. °स्वद् वीरुधां तै १,५,१०,२ तैब्रा ६,७,४,७. २. वर्चः ऋ १०,१७,१४ अ ३,२४,१ पै २०,१३,१. ३ पयस्वदित् ऋ. ४. मामिन्द्र तै. तैब्रा. ५. शुंभत B,V,Op; शुंभतु>शुंभत Dc; शुन्धत ऋ.; सꣳसृज तै. तैब्रा. ६. °ऽशः स तेन नास्ति S'. ७. विशन्तु ऋ १०,१८,७ पै १७,३३,१; मृशन्ताम् तैआ ६,१०,२. ८. सुशेवा तैआ. ९. योनिमग्रे B. १०. स्वधाभिः समिष्टा° तैआ ६,४,२. ११. °वद्यं K^m,C,R: हित्वायावद्यं ऋ १०,१४,८. १२. गच्छस्व ऋ.

सम् । गच्छस्व । पितृऽभिः । सम् । यमेन । इष्टापूर्तेन । परमे । विऽओमन् ।
हित्वा । अवद्यम्[1] । पुनः । अस्तम् । आ । इहि । सम् । गच्छताम् । तन्वा । सुऽवर्चाः ॥

हे मृतपुरुष त्वं पितृभिः पितृपितामहप्रपितामहैः सं गच्छस्व पैतृमेधिकेन सापिण्ड्यकरणावधिना संस्कारेण [2]हेतुना संगतो भव । पितृषु मध्ये प्राप्तस्थानो[2] भवेत्यर्थः । यस्तेषां राजा यमः तेनापि सं गच्छस्व । तथा परमे उत्कृष्टे पितृलोकादपि श्रेष्ठे व्योमन् व्योम्नि द्युलोके नाकपृष्ठाख्ये कर्मफलोपभोगस्थाने इष्टापूर्तेन । इष्टम् प्रत्यक्षश्रुतिचोदितं यागहोमदानादि । पूर्तम् स्मृतिपुराणागमचोदितं वापीकूपतटाकदेवागारनिर्माणादि । तेन उभयेन सं गच्छस्व । तत्फलम् उपभुङ्क्ष्वेत्यर्थः । तथा अवद्यम् पापं हित्वा त्यक्त्वा अस्तम्[3] । गृहनामैतत् । उत्तमलोकस्थितं गृहं पुनरेहि प्राप्नुहि । सुवर्चाः शोभनदीतिकस्तव आत्मा तन्वा स्वर्गलोकभोगयोग्येन शरीरेण सं गच्छताम् संयुज्यताम् । 'समो गम्यृच्छि' (पा १,३,२९) इति संपूर्वाद् गमेरकर्मकाद् आत्मनेपदम् ।

ये नः पितुः पितरो ये पितामहा य आविविशुरुर्व१न्तरिक्षम् ।
तेभ्यः[4] [5]स्वराडसुनीतिर्नो अद्य[6] यथावशं तन्वः [7]कल्पयाति[8] ॥ ५९ ॥

ये । नः । पितुः । पितरः । ये । पितामहाः । ये । आऽविविशुः । उरु । अन्तरिक्षम् ।
तेभ्यः । स्वऽराट् । असुऽनीतिः । नः । अद्य । यथाऽवशम् । तन्वः । कल्पयाति ॥ ५९ ॥

नः अस्माकं पितुः जनकस्य ये पितरः जनका ये च पितामहाः तेषामपि उत्पादयितारः । पूजार्थं बहुवचनम् । पितृपितामहप्रपितामहा इत्यर्थः । ये च अन्ये गोत्रजा उरु विस्तीर्णम् अन्तरिक्षम् आविविशुः आविष्टाः प्रविष्टाः । तेभ्यः । षष्ठ्यर्थे चतुर्थी । तेषां तन्वः शरीराणि अद्य इदानीं स्वराट् स्वयमेव राजा असुनीतिः असूनां नेता एतत्संज्ञको देवः नः अस्माकं यथावशम् यथाकामं कल्पयाति कल्पयतु । तत्रतत्र फलोपभोगाय शरीराणि संपादयत्वित्यर्थः ।

शं ते नीहारो [8]भवतु शं ते प्रुष्वाव[9] शीयताम् ।
शीतिके शीतिकावति [9]ह्लादिके ह्लादिकावति[9] ।

---

१. अवद्यम् Cp. २. नास्ति, स्थाने तु द्वादशानां वर्णानां रिक्तम् S'. ३. हस्तम् S'. ४. तेभिः ऋ १०,१५,१४. ५. °नीतिमेतां ऋ. मा १९,६०. ६. तन्वं ऋ. मा. ७. कल्पयस्व ऋ. ८. वर्षतु शमु पृष्ठावं तैआ ६,४,१. ९. ह्लादके ह्लादका° P³,M,I, सा.; ह्लादुके ह्लादुका° S, तैआ.

मण्डूक्य१प्सु[2] शं[2] भुव[3] इमं स्व१ग्निं शमय[4] ॥ ६० ॥

शम् । ते । नीहारः । भवतु । शम् । ते । प्रुष्वा । अव । शीयताम् । शीतिके । शीतिकाऽवति । [5]ह्लादिके । ह्लादिकाऽवति[5] । मण्डूकी । अप्ऽसु । शम्[6] । भुवः । इमम् । सु । अग्निम् । शमय ॥ ६० ॥

हे प्रेतपुरुष नीहारः अवश्यायः ते तव शं भवतु सुखकरो भवतु । दाहजनितम् औष्ण्यं शमयत्वित्यर्थः । तथा प्रुष्वा[7] विप्रुड्रूपेण स्रवन् उत्सः ते तव शम् सुखं यथा भवति तथा अव शीयताम् अवपततु । अधोमुखं स्रवत्वित्यर्थः । हे शीतिके शीतस्य कारिणि । ओषधिविशेषस्येयं संज्ञा । हे शीतिकावति शीतिकाख्यौषधियुक्ते पृथिवि हे ह्लादके[8] ह्लादः सुखम् तत्कारिणि ओषधे हे ह्लादकावति[8] ह्लादकाख्यौषधियुक्ते पृथिवि मण्डूक्या[8] मण्डूकस्य स्त्री मण्डूकी तया । यद्वा मण्डूकपर्णाख्यया ओषध्या अस्य[8] दग्धस्य पुरुषस्य शं भव[8] । दाहशमनहेतुर्भवेत्यर्थः । तदर्थम् इमं दाहकम् अग्निं सु सुष्ठु शमय शान्तं कुरु ।

इति तृतीयेऽनुवाके षष्ठं सूक्तम् ।

'विवस्वान् नः' (६१) इत्यादिभिः सप्तभिर्ऋग्भिः श्मशानचयनकर्मणि कर्ता सर्वे गोत्रिणश्च श्मशानस्य[9] पश्चाद्भागे स्थित्वा प्रेतम् उपतिष्ठेरन् ।

पितृमेधे चतुर्थेऽहनि वैवस्वते स्थालीपाके 'विवस्वान् नो अभयम्' इति द्वाभ्यां प्रत्यृचं द्वे आहुती जुहुयात् । युक्ताभ्यां तृतीयाम् आहुतिं कुर्यात् ।

तथा एताभ्यामेव हुतशेषम् अभिमन्त्र्य समानोदका गोत्रिणः कर्तारं प्राशयेयुः । संचयने 'विवस्वान् नः' इति द्व्यृचम् 'इन्द्र क्रतुम्' (६७) इत्येतां च स्वस्त्ययनार्थं जपेत् ।

'यास्ते धानाः' (६९) इति द्वाभ्यां तिलमिश्रा धाना अस्थ्नाम् उपरि आदध्यात् । 'पुनर्देहि' (७०) इति ऋचा अस्थीनि वृक्षमूलाद् आददीत यदि अस्थीनि वृक्षमूले[10] पूर्वं स्थापितानि स्युः ।

'आ रभस्व' (७१) इति तिसृभिः प्रेतशरीरे दत्तम् अग्निं काष्ठैर्दीपयेयुः ।

'ये ते पूर्वे परागताः' (७२) इति ऋचा सर्पिर्मधुभ्यां चरुम् अभिमन्त्र्य अस्थिसमीपे निदध्यात् ।

तथा पिण्डपितृयज्ञे अनया निरुप्तानां पिण्डानाम् उपरि घृतधारां निनयेत् ।

---

१. मण्डूक्या३प्सु Km,V,Dc; मण्डूक्याप्सु R; मण्डूक्यप्सु C; मण्डूक्या३ सु ऋ १०,१६,१४; मण्डूक्यासु तैआ.; वैप १,२४०७ a अपि द्र. २. सं O,Op,R[2], ऋ. ३. गंम ऋ.; गमय तैआ. ४. शमय तैआ.; हर्षय ऋ. ५. ह्लादके । ह्लादका° Bp[2],Cp; ह्लादके । ह्लादका° P. ६. सम् Cp. ७. पृष्वा S'. ८. वैतु. मंपा. ९. स्मशान° S'. १०. °मूलं S'.

'विवस्वान् नो' अभयं कृणोतु यः सुत्रामा जीरदानुः सुदानुः ।
इहेमे वीरा बहवो भवन्तु गोमदश्ववन्मय्यस्तु पुष्टम् ॥ ६१ ॥

विवस्वान् । नः । अभयम् । कृणोतु । यः । सुऽत्रामा । जीरऽदानुः । सुऽदानुः ।
इह । इमे । वीराः । बहवः । भवन्तु । गोऽमत् । अश्वऽवत् । मयि । अस्तु । पुष्टम् ॥ ६१ ॥

विवस्वान् एतत्संज्ञक आदित्यो नः अस्माकम् अभयम् मरणजनितभीतिराहित्यं कृणोतु करोतु । तथा जीरदानुः जीवनस्य कर्ता । जीव प्राणधारणे । 'जीवे रदानुक्'[2] (पाउद १,१६३) इति । यद्वा । 'रकि ज्यः संप्रसारणम्' (पाम १,१,४) इति ज्या वयोहानौ इत्यस्मात् रक्प्रत्ययः संप्रसारणं च । जीरस्य वयोहानेर्दाता[3] जीरदानुः । सुदानुः शोभनदानुः । एवंगुणविशिष्टो यः सुत्रामा सुष्ठु त्राता एतत्संज्ञको देवः सोपि अस्माकम् अभयं कृणोत्विति संबन्धः । इह अस्मिन् लोके इमे वीराः पुत्रपौत्रादयः अस्माकं बहवः बहुला भवन्तु । तथा गोमत् बहुभिर्गोभिर्युक्तम् अश्ववत् बह्वश्वोपेतं पुष्टम् पोषकं धनं मयि आत्मनि अस्तु भवतु । मरणजनितभीतिपरिहारेण पुत्रपौत्रादिसमृद्धिर्धनसमृद्धिश्च अस्माकं भवत्वित्यर्थः ।

'विवस्वान् नो'[1] अमृतत्वे दधातु परैतु[4] मृत्युरमृतं न ऐतु[5] ।
इमान् रक्षतु पुरुषाना जरिम्णो मो ष्वेषामसवो यमं गुः ॥ ६२ ॥

विवस्वान् । नः । अमृतऽत्वे । दधातु । परा । एतु । मृत्युः । अमृतम् । नः । आ । एतु ।
इमान् । रक्षतु । पुरुषान् । आ । जरिम्णः । मो इति । सु । एषाम् । असवः[6] । यमम् । गुः ॥ ६२ ॥

विवस्वान् आदित्यो नः अस्मान् अमृतत्वे अमरणत्वे दधातु स्थापयतु । तत्प्रसादात् मृत्युः मरणकारी देवः परैतु पराङ्मुखो गच्छतु । अमृतम् अमरणं नः अस्मान् एतु[7] प्राप्नोतु । आ जरिम्णः । जराया भावो जरिमा । जरावस्थापर्यन्तम् इमान् अस्मदीयान् पुरुषान् पुत्रपौत्रादीन् रक्षतु पालयतु । एषां पुरुषाणाम् असवः प्राणाः सु सुष्ठु मो मैव यमम् वैवस्वतं गुः गच्छन्तु । विवस्वता यमस्य पित्रा रक्षितत्वाद् इति भावः । इण् गतौ । माङि लुङि 'इणो गा लुङि' (पा २,४,४५) इति गादेशः ।

यो दध्रे 'अन्तरिक्षे न' मह्वा पितॄणां कविः प्रमतिर्मतीनाम् ।

---

१. विवस्वान्नो B,K,V,Op; विवस्वान्नो > विवस्वान्नो Dc. २. रदानुक्प्रत्यये अवग्रहो नोपपद्यते. ३. षष्ठीसमासे स्वरः ? ४. अपैतु तैब्रा २,७,१४,४ तैआ १०,४५,१. ५. न एतु S, सा.; म आगात् शांश्रौ ४,१६,५ मंब्रा १,१,१५ न आगन् तैब्रा. तैआ. ६. असवः Cp. ७. वैतु. मंपा. ८. अन्तरिक्षेन A,C,O,R[2],T; अन्तारिक्षेण K[2],P[3],M,I; अन्तरिक्षेण > अन्तरिक्षे न Dc; अन्तारिक्षेण सा.

**तमर्चत विश्वमित्रा हविर्भिः स नो यमः प्रतरं जीवसे धात् ॥ ६३ ॥**

यः । दध्रे[1] । [2]अन्तरिक्षे । न[2] । मह्ना । पितॄणाम् । कविः । प्रऽमतिः । मतीनाम् ।

तम् । अर्चत । विश्वऽमित्राः । हविःऽभिः । सः । नः । यमः । प्रऽतरम् । जीवसे । धात् ॥ ६३ ॥

यो **यमः** कविः **क्रान्तदर्शी** प्रमतिः **प्रकृष्टबुद्धिः** मह्ना **स्वमहिम्ना** मतीनाम् [3]**मन्तॄणां स्तोतॄणां** पितॄणाम्[3] । 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) **इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी । पितॄन्** अन्तरिक्षेण[4] **अन्तरा क्षान्तेन लोकेन** दध्रे **धारयति हे** विश्वमित्राः[5] **सर्वजनमित्रभूता ब्राह्मणाः** तं **तादृशं यमं** हविर्भिः**चरुपुरोडाशादिभिः** अर्चत **पूजयत** । सः **अर्चितो** यमो नः **अस्मान्** जीवसे **जीवनाय** प्रतरम् **प्रकृष्टतरं** धात् **दधातु धारयतु । प्रशब्दात् तरप् ।** 'अमु च च्छन्दसि' (पा ५,४,१२) **इति अमुप्रत्ययः ।**

**आ रोहत दिवमुत्तमामृषयो मा बिभीतन ।**
**सोमपाः सोमपायिन इदं वः क्रियते हविरगन्म ज्योतिरुत्तमम् ॥ ६४ ॥**

आ । रोहत । दिवम् । उत्ऽतमाम् । ऋषयः । मा । बिभीतन । सोमऽपाः । सोमऽपायिनः । इदम् । वः । क्रियते । हविः । अगन्म । ज्योतिः । उत्ऽतमम् ॥ ६४ ॥

हे ऋषयः **मन्त्रदर्शिनो मनुष्याः** उत्तमाम् **उत्कृष्टां** दिवम् **स्वर्गम्** आ रोहत **यज्ञदानादिसत्कर्मभिः प्राप्नुत** । मा बिभीतन **भयं मा प्राप्नुत । बिभेतर्लोटि** तप्तनप्तनथनाश्च' (पा ७,१,४५) **इति तस्य तनादेशः । ऋषयो विशेष्यन्ते — सोमं पिबन्तीति** सोमपाः **। स्वयं कृतसोमयागा इत्यर्थः ।** सोमपायिनः **अन्यानपि यजमानान् सोमं पाययन्तीति सोमपायिनः । सोमयागस्य कारयितार इत्यर्थः । दिवम्[6] आरूढानां** वः **युष्माकम्** इदं हविः क्रियते । **तेन हविषा यूयं सुखेन द्युलोके वर्तध्वम् इत्यर्थः । वयं च युष्मत्प्रसादाद्** उत्तमम् **उत्कृष्टतमं** ज्योतिः **प्रकाशं चिरकालजीवनम्** अगन्म **गच्छेम ।**

**प्र केतुना बृहता [7]भात्यग्निरा रोदसी[7] वृषभो रोरवीति ।**
**दिवश्चिदन्तादुपमामुदानडपामुपस्थे[8] महिषो ववर्ध ॥ ६५ ॥**

प्र । केतुना । बृहता । भाति । अग्निः । आ । रोदसी इति । वृषभः । रोरवीति ।
दिवः । चित् । अन्तात् । उपऽमाम्[9] । उत् । आनट् । अपाम् । उपऽस्थे । महिषः । ववर्ध ॥

---

१. दध्रे Cp. २. अन्तरिक्षेण D[2]. ३. मंत्रूणां स्तोत्रूणां पित्रूणां S'. ४. वैतु. मंपा. ५. आमन्त्रितत्वे स्वरो न सिध्यति; वैप १,२९३७ j द्र. ६. दिविम् S'. ७. यात्य° ऋ१०, ८,१ कौ १,७१; °ग्निराविर्विश्वानि तैआ ६,३,१. ८. °दन्तामुपमानुदा° K[2]; °दन्ताँ उपमाँ उदा° ऋ.; दन्तादुप मामुदानंड° तैआ. ९. उपऽमाम् P; उप । माम् P[2]; उप । माम् Cp,Op,D[2].

अविदीर्यमाणं सम्यक् शोभमानं वा सहस्रच्छिद्रं कुम्भं पितरः प्रेतभूताः । पूजायां बहुवचनम् । स्वधाभिः । हेतौ तृतीया । स्वप्रीणनसाधनैरन्नैर्हेतुभिः उपासते सेवन्ते उपगच्छन्ति ।

इदं कसाम्बु चयनेन चितं[1] तत् संजाता अव पश्यतेत[2] ।
[3]मर्त्योयममृतत्वमेति तस्मै गृहान्[4] कृणुत[5] यावत्सबन्धु[6] ॥ ३७ ॥

इदम् । कसाम्बु । चयनेन । चितम् । तत् । सऽजाताः । अव । पश्यत । आ । इत ।
मर्त्यः । अयम् । अमृतऽत्वम् । एति । तस्मै । गृहान् । कृणुत । यावत्ऽसबन्धु ॥ ३७ ॥

हे सजाताः सहजन्मानः समानकुले जाता गोत्रिणः यूयं चयनेन संचयनकर्मणा[7] चितम् संचितम् एकत्र समूहीकृतं तद् इदं कसाम्बु कसाः कीकसाः अस्थीनि । कसाश्च[8] अम्बूनि च कसाम्बु । द्वन्द्वैकवद्भावः[9] । पूर्वआदिवर्णलोपश्छान्दसः । कसाश्च अम्बूनि च कसाम्बु । उदकेन आप्लावनम् उक्तम् । उदकाप्लावितान्यस्थीनि अव पश्यत अवधानेन ईक्षध्वम् । एत आगच्छत । अयं मर्त्यः मरणधर्मा प्रेतः अमृतत्वम् एति अमरणधर्मं प्राप्नोति । तस्मै तदर्थं गृहान् स्थानानि कृणुत कुरुत । यावत्सबन्धु यावन्तः[10] सबन्धवः[10] समानगोत्रा भवथ ते सर्वे यूयं तस्मै प्रेताय गृहान् कुरुतेति । तस्यास्थिनिरीक्षणमेव परलोके स्थानकरणम् इत्यर्थः ।

[11]इहैवैधि धनसनिरिहचित्त[11] इहक्रतुः ।
इहैधि[12] वीर्यवत्तरो[13] वयोधा अपराहतः ॥ ३८ ॥

इह । एव । एधि । धनऽसनिः[14] । इहऽचित्तः । इहऽक्रतुः ।
इह । एधि । वीर्यवत्ऽतरः । वयःऽधाः । अपराऽहतः ॥ ३८ ॥

हे दीप्तपांसुष्वाहित उल्मुक[15] त्वम् इहैव पांसुलक्षणे प्रदेश एव एधि भव । धनसनिः अस्माकं धनस्य दाता भव । 'छन्दसि वनसनरक्षिमथाम्' ( पा ३,२,२७ ) इति सनोतेः इन्प्रत्ययः । इह[16] अस्मिन् प्रदेशे चित्तः[16] प्रज्ञातो भव । चिती संज्ञाने । कर्मणि निष्ठा । 'श्वीदितो निष्ठायाम्' ( पा ७,२,१४ ) इति इडभावः । इह[16] क्रतुः[16] कर्म अस्मदीयकर्मसंपादको भव । तथा इहैव[16] प्रदेशे वीर्यवत्तरः अत्यन्तं बलवान्

---

१. चित्तं B,K$^m$,P,M,I. २. पश्यतैत S'. ३. मर्त्यो३य° K$^m$,C,WM.; मर्त्योयम°> मर्त्यो३यम°> मर्त्योयम° Dc. ४. गृहम् पै २०,३३,२. ५. कृणुता पै. ६. °संबुधम् O. ७. ष्टसंच° S'. ८. कसांश्च S'. ९. द्वन्द्वसमासे स्वरः ? वैप १, १९०५ f अपि द्र. १०. कर्मधारये अव्ययीभावे वा स्वरः ? ११. °वैधि धनसनि° K$^m$; °वैधि धनसनि°> °वैधि धनसनि° Dc. १२. इहैवैधि S'. १३. वीर्यवत्तरो K$^m$; वीर्यवत्तरो > वीर्यवत्तरो Dc. १४. धनऽसनिः Cp. १५. उन्मुक S'. १६. वैतु. मंपा.

वयोधाः । वय इति अन्ननाम । तस्य धाता विधाता अपराहतः शत्रुभिरपराजितश्च सन् एधि भव । अस्तेर्लोटि हौ रूपम् ।

पुत्रं [१]पौत्रमभितर्पयन्तीरापो मधुमतीरिमाः ।
स्वधां पितृभ्यो अमृतं दुहाना आपो देवीरुभयांस्तर्पयन्तु ॥ ३९ ॥

पुत्रम् । पौत्रम् । अभिऽतर्पयन्तीः । आपः । मधुऽमतीः । इमाः ।
स्वधाम् । पितृऽभ्यः । अमृतम् । दुहानाः । आपः । देवीः । उभयान् । तर्पयन्तु ॥३९॥

मधुमतीः मधुररसोपेता इमा आचमनार्हा आपः पुत्रम् अव्यवहितं पुमपत्यं पौत्रम् पुत्रस्य पुमपत्यम् । उभयत्र एकवचनम् अतन्त्रम् । लिङ्गं तु विवक्षितम् । पुत्रान् पौत्रांश्च अभितर्पयन्तीः अभितः सर्वतस्तर्पयन्त्यः प्रीणयन्त्यो भवन्ति[२] यतः अतः पितृभ्यः स्वीयेभ्यः पिण्डोपजीविभ्यः अमृतम् अमरणसाधनं स्वधाम् आत्मप्रीणनकरम् अन्नं दुहानाः प्रयच्छन्त्यो देवीः देव्यो द्योतमाना आपः आचमनीया उभयान् पुत्रान् पौत्रांश्च उभयविधान् तर्पयन्तु वर्धयन्तु । अथवा उभयशब्देन स्वीया मातृपितामह्यादयः पितृवंश्याश्च विवक्ष्यन्ते । तान् उभयविधांस्तर्पयन्तु । पिण्डदानानन्तरं क्रियमाणेन अनेन आचमनकर्मणा तृप्तान् कुर्वन्तु । अस्मिन् पक्षे पितृभ्य इत्यत्र 'पिता मात्रा' ( पा १,२,७० ) इति एकशेषो द्रष्टव्यः ।

आपो अग्निं प्र हिणुत पितॄँरुपेमं यज्ञं पितरो मे जुषन्ताम् ।
आसीनामूर्जमुप ये सचन्ते ते नो रयिं सर्ववीरं नि यच्छान्[३] ॥ ४० ॥

आपः । अग्निम् । प्र । हिणुत । पितॄन् । उप । इमम् । यज्ञम् । पितरः । मे । जुषन्ताम् ।
आसीनाम् । [४]ऊर्जम् । उप । ये । सचन्ते[४] । ते । नः । रयिम् । सर्वऽवीरम् । नि । यच्छान्[५] ॥ ४० ॥

हे आपः अवसेचनसाधनभूता यूयम् अग्निम् युष्माभिरवसिच्यमानं दक्षिणाग्निं पितॄन् पितृपितामहादीन् उप । उपशब्दः समीपवचनः । पितॄणां समीपं प्र हिणुत प्रेषयत । बर्हिर्दत्तान् पिण्डान् दातुम् इति शेषः । मे मदीयम् इमम् इदानीम् अनुष्ठीयमानं यज्ञम् पिण्डपितृयज्ञाख्यं पितरः मदीया जुषन्ताम् सेवन्ताम् । पिण्डान् आस्वादयन्तु । ये पितरः आसीनाम् उपविष्टाम् । आस उपवेशने । 'ईदासः' ( पा ७,२,७३ ) इति ईकारः । बर्हिषि आसादिताम् ऊर्जम् बलकरपिण्डलक्षणम् अन्नम् उप सचन्ते स्वीकर्तुं समीपे समवयन्ति ते पितरो नः अस्मभ्यं सर्ववीरम् । वीराः कर्मणि कुशलाः पुत्रपौत्रादयः । बहुपुत्रादिसहितं रयिम् धनं नि यच्छान्

---

१. पौत्रमभि॰ Km,O,R²; पौत्रमभि > पौत्रमभि॰ Dc. २. भवति S'. ३. यच्छांत् A,B,C,K,Km,R,V,Dc. ४. ऊर्जे । उभयें । सचंते Cp. ५. यच्छात् P,P².

नियच्छन्तु प्रयच्छन्तु । नियमनं नाम स्थैर्येण अवस्थापनम् । यमेर्लेटि 'इतश्च लोपः परस्मैपदेषु' ( पा ३,४,९७ ) इति इकारलोपः ।

इति चतुर्थेऽनुवाके चतुर्थं सूक्तम् ।

'समिन्धते' इति आद्यया ऋचा पिण्डपितृयज्ञे समिधम् आदध्यात् । सूत्रितं हि—"उपसमादधाति 'ये निखाताः' ( अ १८,२,३४ ), 'समिन्धते' ( अ १८,४,४१ ), 'ये तातृषुः' ( अ १८,३,४७ ), 'ये सत्यासः' ( अ १८,३,४८ ) इति" ( कौसू ८७,२२ ) इति ।

'यास्ते धानाः' ( ४३ ) इत्यस्या अस्थिषु तिलमिश्रधानाविकिरणे विनियोग उक्तः ।

'इदं पूर्वम्' ( ४४ ) इत्यनया दहनार्थं प्रेतम् उत्थाप्य शकटे निदध्यात् ।

'सरस्वतीं देवयन्तः' ( ४५ ) इति तिसृणां प्रेतशरीरे अग्निदानानन्तरं सारस्वतहोमे विनियोग उक्तः ।

'पृथिवीं त्वा' ( ४८ ) इत्यनया सवयज्ञेषु मृद्गोमयादिना चरुस्थालीम् आलिम्पेत् । " 'पृथिवीं त्वा पृथिव्याम्' इति कुम्भीम् आलिम्पति" (कौसू ६१,३०) इति सूत्रं प्रागेव प्रदर्शितम् ।

'आ प्र च्यवेथाम्' ( ४९ ) इति ऋचा प्रेतवाहनवृषभौ अभिमन्त्र्य कर्ता गृह्णीयात् ।

पितृमेध एव चतुर्थेऽहनि 'एयमगन्' ( ५० ) इति ऋचा दक्षिणारूपां गाम् अभिमन्त्र्य प्रतिगृह्णीयात् ।

समिन्धते अमर्त्यं हव्यवाहं घृतप्रियम् ।
स वेद निहितान् निधीन् पितॄन् परावतो गतान् ॥ ४१ ॥

सम् । इन्धते । अमर्त्यम् । हव्यऽवाहम् । घृतऽप्रियम् ।
सः । वेद । निऽहितान् । निऽधीन् । पितॄन् । पराऽवतः । गतान् ॥ ४१ ॥

अमर्त्यम् अमरणधर्माणं घृतप्रियम् प्रियं[1] प्रीतिकरं घृतम्[1] आज्यं यस्य[1] । 'वा प्रियस्य' ( पावा २,२,३५ ) इति प्रियशब्दस्य पूर्वनिपातविकल्पनाद् अत्र परनिपातः । आज्येन अग्निः प्रवृद्धज्वालो भवतीति घृतप्रियत्वम् । हव्यवाहम् हव्यस्य हविषो वोढारम् अग्निं समिन्धते समिन्धनसाधनैः काष्ठैः सम्यग् दीपयन्ति कर्तारः । इन्धेर्लेटि बहुवचने रूपम् । यद्वा । तस्मादेव धातोर्लेटि अडागमः[2] । समिद्भिः समिन्धीत । यतः स अग्निः निहितान् भूमौ स्थापितान् निधीन् निक्षेपान् । लुप्तोपमम् एतत् । यथा भूम्यां[3] निगूढा निधयः प्रदर्शकेन विना न प्रकाशन्ते एवं पितरोपि पुरःस्फूर्तिका न भवन्ति । निधीनिव[4] स्थितान् परावतः । परावच्छब्दो दूरवाची । पराशब्दाद् 'उपसर्गाच्छन्दसि°' ( पा ५,१,११८ ) इति वतिप्रत्ययः । अतिदूरान् देशान् गतान् प्राप्तान् पितॄन् वेद जानाति । अस्य पितरः अत्र देशे वर्तन्त

---

१. बहुव्रीहौ स्वरो न सिध्यति. २. आडा° S'. ३. भ्यां S'. ४. अतः निधीनिव S'.

इति सम्यग् जानाति। वेत्तेः 'विदो लटो वा'. (पा ३,४,८३) इति तिपो णल् आदेशः। अतः समिन्धत इति सम्बन्धः।

यं ते[1] मन्थं[1] यमोदनं यन्मांसं [2]निपृणामि ते[2]।
ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः ॥ ४२ ॥

यम्। ते। मन्थम्[3]। यम्। ओदनम्। यत्। मांसम्। निऽपृणामि। ते।
ते। ते। सन्तु। स्वधाऽवन्तः। मधुऽमन्तः। घृतऽश्चुतः[4] ॥ ४२ ॥

प्रेतस्य हि प्रीणनाय सक्तुमन्थादयः प्रदीयन्ते। "'ये अग्नयः' (अ ३,२१) इति दशर्चेन पलाशपर्णैः सक्तुमन्थं विकिरेत्" (कौसू ८२,२५) इति हि सूत्रम्। 'अपूपवान् मांसवान्' (२०) इति "°अन्नवान्, (२१) इति च मन्त्रयोर्मांसान्नदानं विहितम्। उपलक्षणम् एतत् क्षीरौदनदध्योदनतिलमिश्रधानादेः[5]। यन्मन्थादिकं हे प्रेत ते तुभ्यं निपृणामि ददामि। निपरणं नाम पित्र्योपवीतिना पराचीनपाणिना पित्रर्थं चोदितद्रव्यस्य प्रक्षेपः। ते मन्थादयः ते तव स्वधावन्तः बह्वन्ना मधुमन्तः मधुयुक्ता घृतश्चुतः घृतसहिताश्च सन्तु भवन्तु।

यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः।
तास्ते सन्तूद्भ्वीः[6] प्रभ्वीस्तास्ते यमो राजानु मन्यताम् ॥ ४३ ॥

याः। ते। धानाः। अनुऽकिरामि। तिलऽमिश्राः। स्वधाऽवतीः। ताः। ते। सन्तु।
उत्ऽभ्वीः। प्रऽभ्वीः। ताः। ते। यमः। राजा। अनु। मन्यताम् ॥ ४३ ॥

'यास्ते धानाः' इति तृतीया ऋग् अस्मिन्नेवाऽनुवाके तृतीयसूक्ते (२६) व्याख्याता।

इदं पूर्वमपरं नियानं येना ते पूर्वे पितरः परेताः।
पुरोगवा[7] ये अभिपाचो[8] अस्य ते त्वा वहन्ति सुकृतामु लोकम् ॥ ४४ ॥

इदम्। पूर्वम्। अपरम्। निऽयानम्। येन। ते। पूर्वे। पितरः। पराऽइताः।
पुरःऽगवाः। ये। अभिऽसाचः[9]। अस्य। ते। त्वा। वहन्ति। सुकृताम्। ऊं इति। लोकम् ॥

इदं नियानम्। नीचीनं पराङ्मुखं यान्ति अनेन प्रेता इति नियानं शकटम्

---

१. ते मन्थं Km,C,R,WM.; ते मंथं > ते मंथं Dc. २. °पृणामि ते Km; °पृणामि ते > °पृणामि ते Dc. ३. मंथम् Cp. ४. °श्च्युतः Cp. ५. क्षीरोदन° S'. ६. सन्तु विभ्वीः अ १८,३,६९. ७. गवा B; °गवा C. ८. तु. V. सा. RW अ १९,११,२ Dc च वैतु. शंपा. सात. अभिशाचो. ९. तु. मंपा. वैतु. शंपा. अभिऽशाचः,

इदं पुरोवर्ति प्रेतवहनाय संनद्धं नियानं शकटं पूर्वम् पुरातनम् अपरम् अद्यतनं[1] च। पूर्वेषां प्रेतानां वहनाय एतदेव शकटम् अपरेषाम् इदानींतनानामपि इदमेव शकटम् इति पूर्वम् अपरं चेत्युच्यते। पूर्वत्वमेव उपपादयति— येन शकटेन ते तव पूर्वे पुरातनाः पितरः परेताः इतः पराङ्मुखं गताः। अस्य अपरस्य इदानीं संनह्यमानस्य शकटस्य अभिवाचः अभितः पार्श्वद्वये सचमानाः संगच्छमानाः पुरोगवाः शकटस्य पुरस्ताद्भागे धुरि युज्यमानाः अनड्वाहो[2] ये सन्ति। 'गोरत-द्धितलुकि' (पा ५,४,९२) इति टच् समासान्तः। ते पुरोगवाः त्वा त्वां सुकृताम् सुकृतकर्मणाम्। उशब्दः अवधारणे। लोकन् एव वहन्तु प्रापयन्तु। वहिर्द्विकर्मकः।

सर॑स्वतीं देव॒यन्तो॑ हवन्ते॒ सर॑स्वतीमध्व॒रे ता॒यमा॑ने।
सर॑स्वतीं सु॒कृतो॑ हवन्ते॒[3] सर॑स्वती दा॒शुषे॒ वार्यं॑ दात् ॥ ४५ ॥

सर॑स्वतीम्। दे॒व॒ऽयन्तः॑। ह॒वन्ते॒। सर॑स्वतीम्। अ॒ध्व॒रे। ता॒यमा॑ने।
सर॑स्वतीम्। सु॒ऽकृतः॑। ह॒वन्ते॒। सर॑स्वती। दा॒शुषे॑। वार्य॑म्। दा॒त् ॥ ४५ ॥

'सरस्वतीं देवयन्तः' इति पञ्चम्याद्यास्तिस्र ऋचः अस्मिन्नेव काण्डे प्रथमेऽनुवाके पञ्चमे सूक्ते (अ १८,१,४१-४३) व्याख्याताः।

सर॑स्वतीं पि॒तरो॑[4] हवन्ते दक्षि॒णा[4] य॒ज्ञम॑भि॒नक्ष॑माणाः।
आस॒द्यास्मिन् ब॒र्हिषि॑ मादयध्वमनमी॒वा इ॒ष आ धे॑ह्य॒स्मे ॥ ४६ ॥

सर॑स्वतीम्। पि॒तरः॑। ह॒वन्ते॒। द॒क्षि॒णा। य॒ज्ञम्। अ॒भि॒ऽनक्ष॑माणाः।
आ॒ऽसद्य॑। अ॒स्मिन्। ब॒र्हिषि॑। मा॒द॒य॒ध्व॒म्। अ॒न॒मी॒वाः। इषः॑। आ। धे॒हि॒। अ॒स्मे इति॑ ॥

सर॑स्वति॒ या स॒रथं॑ य॒याथो॒क्थैः[4] स्व॒धाभि॑र्देवि पि॒तृभि॒र्मद॑न्ती।
स॒ह॒स्रा॒र्घमि॒डो अत्र॑ भा॒गं रा॒यस्पोषं॒ यज॑मानाय धेहि ॥ ४७ ॥

सर॑स्वति। या। स॒ऽरथ॑म्। य॒याथ॑। उ॒क्थैः। स्व॒धाभिः॑। दे॒वि॒। पि॒तृऽभिः॑। मद॑न्ती।
स॒ह॒स्र॒ऽअ॒र्घम्। इ॒डः। अत्र॑। भा॒गम्। रा॒यः। पोष॑म्। यज॑मानाय। धे॒हि॒ ॥ ४७ ॥

पृ॒थि॒वीं त्वा॑ पृथि॒व्यामा वे॑शयामि दे॒वो नो॑ धा॒ता प्र ति॑रा॒त्यायुः॑।
परा॑परैता[5] वसु॒विद् वो॑ अ॒स्त्वधा॑ मृ॒ताः पि॒तृषु॒ सं भ॑वन्तु ॥ ४८ ॥

---

१. पूर्वश्चातनं S'. २. वोनड्वाहो S'. ३. अह्वयन्त ऋ १०,१७,७. ४. द्र १६५८,२,४,५ टि. द्र. ५. परापरेत O; परापरेताः S.

पृथिवीम् । त्वा । पृथिव्याम् । आ । वेशयामि । देवः । नः । धाता । प्र । तिराति । आयुः । पराऽपरैता[१] । वसुऽवित् । वः । अस्तु । अध । मृताः । पितृषु । सम् । भवन्तु ॥ ४८ ॥

पृथिव्याम् पृथिवीविकारभूतायां कुम्भ्यां हे मृत्तिके पृथिवीम् त्वा त्वां मृदम् आ वेशयामि आलिम्पामि । मृद्गोमयादिलेपनेन चरुस्थालीं [२]ईषद् दृढां[२] करोमि । धाता विधाता सर्वस्य देवो नः अस्माकं सवयज्ञानुष्ठातॄणाम् आयुः जीवनं प्र तिराति । प्रपूर्वस्तिरतिर्वर्धनार्थः । प्रतिरतु प्रवर्धयतु । प्रपूर्वात् तिरतेर्लेटि आडागमः । हे परापरेताः[३] परावतं दूरदेशं पराङ्मुखम् इतो गता[४] हे पितरः वः युष्माकं वसुवित् वसु अन्नलक्षणं धनं तस्य लम्भयित्री[५] प्रापयित्री अस्तु भवतु । एषा मृदालिप्ता चरुकुम्भीति लभ्यते । अथ परोक्षस्तुतिः— अध अथ चरुस्वाहाकारानन्तरं पितृषु पितृत्वं प्राप्तेषु पुरातनेषु स्वपूर्वजेषु अमृताः[३] अमरणधर्माणः सन्तः सं भवन्तु संप्राप्ताः संयुक्ता भवन्तु । इदानींतनाः पितरः स्वपूर्वजान् पितॄन् संयुञ्जन्तु[६] । भवतिरत्र प्राप्त्यर्थः ।

आ प्र च्यवेथामप तन्मृजेथां यद् वामभिभा[७] अत्रोचुः[८] ।
अस्मादेतमघ्न्यौ[९] [१०]तद् वशीयो[१०] दातुः [११]पितृष्विहभोजनौ[११] मम ॥४९॥

आ । प्र । च्यवेथाम् । अप । तत् । मृजेथाम् । [१२]यत् । वाम्[१२] । अभिऽभाः । अत्र । ऊचुः । अस्मात्[१३] । आ । इतम्[१४] । अघ्न्यौ[१५] । तत् । वशीयः[१६] । दातुः । पितृषु । इहऽभोजनौ । मम ॥

हे प्रेतवाहनवृषभौ युवाम् आ अस्मदभिमुखं प्र च्यवेथाम् शकटात् प्रच्युतौ वियुक्तौ भवेतम् । च्युङ् प्लुङ् गतौ । भौवादिक आत्मनेपदी । तत् वक्ष्यमाणं निन्दारूपं वाक्यम् अप मृजेथाम् अपमार्जयतं शोधयतम् । मृजेर्लोटि व्यत्ययेन शः । 'आतो ङितः' ( पा ७,२,८१ ) इति इयादेशः । किं तद् अपमार्जनीयं तद् आह । अभिभाः अभिभावका दूषकाः पुरुषाः । अभिपूर्वाद् भवतेः 'डोन्यत्रापि दृश्यते' (पावा ३,२,४८) इति डः । अत्र अस्मिन् प्रेतवहनकर्मणि वाम् युवां यद् ऊचुः पुंगवौ किल अस्पृश्यम्[१७] अनिरीक्ष्यं प्रेतम् ऊढवन्तौ इत्यादिनिन्दारूपं यद् वाक्यम् उदितवन्तस्तच्छोधयतम् इति । अतो हेतोः हे अघ्न्यौ[३] अहन्तव्यौ हे वृषभौ युवाम् अस्मात् निन्दानिमित्ताच्छकटाद् एतम् आगच्छतम् । तत् आगमनं वसीयः[३] श्रेष्ठं भवति युवयोः । ततः इह[३] अस्मिन्

---

१. पराऽपरैता Bp,P,P². पराऽपरीता Cp. वैप १,१९२० b द्र. २. °ष दृढां S'. ३. वैतु. मंपा. ४. स्वरानुरोधादामन्त्रितं युज्यते, किंतु पदपाठो विरुध्यते. ५. लम् नास्ति S'. ६. संयुजंतु S'. ७. °मभिजा Km. ८. अत्रोचुः WM. ९. तमघ्न्यो B; तमघ्न्यौ C. तंमघ्न्यौ RW. १०. तद्दशी° V; °वशीयो C; वशायो M,I, तद्वशायं RW. ११. पितृनौष्विह° C; °भोजनौ B. १२. यत् । वाम् P,P²; यत्र Cp. १३. अस्मान् Cp; अस्मात् P,P². १४. इतम् Cp. १५. अघ्न्यौ P,P². १६. वशायः P²; वशीयः P; वशायः D². १७. अञयस्पृश्यम् S'.

पितृमेधे पितृषु । विषयसप्तमी । पितृविषये पितॄन् उद्दिश्य दातुः अग्नेः प्रदातुः हविः प्रदातुर्वा मम भोजनौ[1] भोजयितारौ पालयितारौ भवतम् इति ।

एयमगन् दक्षिणा भद्रतो नो अनेन दत्ता सुदुघा वयोधाः ।
यौवने[2] जीवानुपपृञ्चती[3] जरा पितृभ्य उपसंपराणयादिमान्[4] ॥ ५० ॥

आ । इयम् । अगन् । दक्षिणा । भद्रतः । नः । अनेन । दत्ता । सुऽदुघा । वयःऽधाः । यौवने[5] । जीवान् । उपऽपृञ्चती[6] । जरा । पितृऽभ्यः । उपऽसंपरानयात्[7] । इमान् ॥ ५० ॥

इयं दक्षिणा गोरूपा नः अस्मान् संस्कर्तॄन् भद्रतः कल्याणात् प्रदेशाद् आ अगन् आगच्छति । गमेर्लुङि 'मन्त्रे घस°' (पा २,४,८०) इति च्लेर्लुक् । 'हल्ङ्या' (पा ६,१,६८) इत्यादिना तिपो लोपे 'मो नो धातोः' (पा ८,२,६४) इति नत्वम् । अनेन प्रेतेन दत्ता वितीर्णा सुदुघा सुष्ठु दोग्ध्री वयोधाः । वय इति अन्ननाम । अन्नस्य क्षीरलक्षणस्य[8] विधात्री प्रदात्री गोरूपा दक्षिणा यौवने युवत्या भावो यौवनम् । 'हायनान्तयुवादिभ्योण्' (पा ५,१,१३०) इति अण्प्रत्ययः[9] । यौवनं नाम शरीरस्य मध्यावस्था तस्याम् । लुप्तोपमम् एतत् । यौवन इव वार्धके जरा उपपृञ्चती आत्मानं जरया संपर्चयन्ती[10] संयोजयन्ती । अपिशब्दः अध्याहार्यः । संयोजयन्त्यपि यौवने वर्तमानेव जीवात्[1] जीवतु । किं च गोरूपा दक्षिणा पितृभ्यः पूर्वजेभ्यः । तादर्थ्ये चतुर्थी । इमान् अधुना संस्क्रियमाणान् पितॄन् उप[1] समीपं संपराणयात्[1] सम्यक् पराङ्मुखं नयतु पूर्वजान् प्रापयतु । उभयत्र लेटि आडागमः ।

इति चतुर्थेऽनुवाके पञ्चमं सूक्तम् ।

'इदं पितृभ्यः' (५१) इति प्रथमायाः प्रथमार्धेन चितिकाष्ठानाम् उपरि दर्भान् स्तृणाति । उत्तरार्धेन आस्तीर्णदर्भायां चितौ प्रेतम् उत्तानशयं कुर्यात् ।

तथा श्मशानचयनकर्मणि 'इदं पितृभ्यः' इत्यर्धर्चेन गर्ते दर्भान् स्तृणीयात् । 'तदा रोह' इत्युत्तरार्धेन अस्थीनि तस्मिन् गर्ते निदध्यात् ।

'एदं बर्हिः' (५२) इति ऋचा कुले ज्येष्ठः अस्थीनि यथापरु संचिनुयात् ।

'पर्णो राजा' (५३) इति ऋचा 'अपूपवान् क्षीरवान्' इति मन्त्रोक्तान् प्रतिदिशं मध्ये च स्था-

---

१. वैतु. मंपा. २. युौवने B,V,Dc; यौवने Km,R,B²,O,K²; युौवनेषु Op. ३. तु. ऋ १,२,३ वैतु. शंपा. सात. RW प्रभृ. नुपपृञ्चती; जीवाङुप° S °पृंचन्ती Km. ४. तु. B,V,O,Op,R², Dc. वैतु. शंपा. सात. उपसंपरा°; उपसंपरा° K,O,R²;. ५. यौ । वने Bp²; यौ । वने D². ६. तु. मंपा. वैतु. शंपा. उपऽपृञ्चती. ७. तु. मंपा. Cp,Op; वैतु. शंपा. उपऽसंपरानयात्; उपसम् । परानयात् Bp²,Kp; उपऽसम् । परानयात् D². ८. °लवणस्य S'. ९. अण्प्रत्यये स्वरो नोपपद्यते वस्तुतो मन्त्रे एव स्वरः ? तु. PW.MW. प्रभृ. १०. संवर्चे³ S'.

पितान् नव चरून् शतच्छिद्रसहस्रच्छिद्रादिपात्राणि च मध्यपलाशपत्रैराच्छादयेत्।

'ऊर्जो भागः' (५४) इति ऋचा चरून् पात्राणि च पाषाणैरिष्टकाभिर्वा पिदध्यात्।

'यथा यमाय' (५५) इति ऋचा शलाकाभिरिष्टकाभिर्वा प्रसव्यं चितं श्मशानप्रदेशं कुट्टयेयुः। सर्वत्र कर्तुरेव मन्त्रवचनम्। तत्र पितृगृहम् उन्नतं कुर्यात् 'उन्नतं स्वर्गकामस्य' इति श्रुतेः।

'इदं हिरण्यम्' (५६) इति प्रथमार्धेन प्रेतहस्ते विद्यमानं हिरण्यम् आज्येन अभिघार्य ज्येष्ठपुत्रेण अग्नावादीपयेत्। 'स्वर्गं यतः' इत्युत्तरार्धेन पुत्रः प्रेतहस्तं मार्जयेत्।

'ये च जीवाः' (५७) इति ऋचा सर्पिर्मधुसहितं चरुद्वयम् अभिमन्त्र्य अस्थिसमीपे निदध्यात्।

'पिण्डपितृयज्ञे अनया[1] बर्हिषि पित्रर्थं दत्तान् पिण्डान् घृतेन अभिघारयेत्।

'वृषा मतीनाम्' (५८) इत्यादीनां तिसृणां पितृमेध एव काण्डोक्तो विनियोगोऽनुसंधेयः।

इ॒दं पि॒तृभ्यः॒ प्र भ॑रामि[2] ब॒र्हिर्जी॒वं[3] दे॒वेभ्य॒ उत्त॑रं स्तृणामि[4] ।
[5]तदा रो॑ह पुरुष॒ मेध्यो॒‡[6] भव॒न् प्रति॑ त्वा जानन्तु पि॒तर॒ः परे॑तम् ॥५१॥

इ॒दम्। पि॒तृऽभ्य॑ः। प्र। भ॒रा॒मि॒। ब॒र्हिः। जी॒वम्। दे॒वेभ्य॑ः। उत्ऽत॑रम्। स्तृ॒णा॒मि॒। तत्। आ। रो॒ह॒। पुरु॒ष॒। मेध्य॑ः[6]। भव॑न्। प्रति॑। त्वा॒। जा॒न॒न्तु॒। पि॒तर॑ः। परा॑ऽइतम् ॥

पितृभ्यः पित्रर्थम्[7] इदं बर्हिः प्र भरामि प्रहरामि आस्तृणामि। तस्मिन्नास्तीर्णे बर्हिषि देवेभ्यः देवार्थं जीवन्[8] जीवनवान् अहं संस्कर्ता उत्तरम् उपरितनं बर्हिः स्तृणामि। स्तृञ् आच्छादने। हे पुरुष त्वं मेध्यः मेधो यज्ञः पितृमेधाख्यः। तदर्हो भवन् तत् बर्हिः आ रोह आतिष्ठ। भवतेः शत्रन्तं पदं भवन्निति। पितरः पूर्वजाः परेतम् इतः पराङ्मुखं गतं त्वा त्वां प्रति जानन्तु अनुजानन्तु। बर्हिरारोहणाय अस्मदीयोयं पितृलोकं प्राप्नोत्विति स्मरन्तु इत्यर्थः। 'संप्रतिभ्यामनाध्याने' (पा १,३,४६) इति आध्यानपर्युदासाद् आत्मनेपदाभावः।

एदं ब॒र्हिर॑स॒दो मेध्यो॑ऽभूः॒ प्रति॑ त्वा जानन्तु पि॒तर॒ः परे॑तम्।
य॒था॒प॒रु॑ त॒न्वं॒ सं भ॑रस्व॒ गात्रा॑णि ते॒ ब्रह्म॑णा कल्पयामि ॥ ५२ ॥

---

१. °यज्ञेत्यनया S'. २. भरेम तैआ ६,७,२. ३. जीवन्तः तैआ. ४. भरेम तैआ. ५. तत्त्वमारोहासो मेध्यो भव तैआ. † तया R. ‡ मेध्यो Km,C,R; मेध्यो> मेध्यो Dc. ६. पुरुष। मेध्यः P,P²; पुरुऽमेध्यः Cp. ७. पित्र्यर्थम् S'. ८. वैतु. मंपा. ९. तु.सा.; वैतु. A,B,C,Km,R,V,Dc,Cp °पुरु; P,P² °पुरु.

आ । इदम् । बर्हिः । असदः[1] । मेध्यः । अभूः । प्रति[2] । त्वा । जानन्तु । पितरः । पराऽइतम् ।
यथाऽपरु । तन्वम् । सम् । भरस्व । गात्राणि । ते । ब्रह्मणा । कल्पयामि ॥ ५२ ॥

हे प्रेत त्वम् इदं चितावास्तीर्णं बर्हिः आ असदः आरुक्षः । सदेर्लृदित्त्वात् च्लेः अङ् । अतो मेध्यः पितृमेधयज्ञार्हः अभूः । दहनेन संस्कृतोभूरिति यावत् । प्रति त्वेति पादो व्याख्यातः । जानन्त्विति लोडन्तं पदं भूतकालपरतया व्याख्येयम् । अथवा क्रियमाणास्थिसंचयनार्थम् अनुजानन्त्विति यथास्थितम् अस्तु । तन्वम् तनूम् अस्थिरूपां यथापरु । परुशब्दः पर्ववाची । यथापर्व जीवदवस्थायां येन संनिवेशेन अस्थीनि संहितानि तं संनिवेशम् अनतिक्रम्य । पदार्थानतिवृत्तौ अव्ययीभावः । सं भरस्व संहरस्व । 'हृग्रहोर्भः°' (पावा ८,२,३२) । संधेहि । अहमपि कुले ज्येष्ठः ते तव गात्राणि अङ्गानि अस्थिरूपाणि ब्रह्मणा मन्त्रेण कल्पयामि पूर्वस्थितपर्वानतिक्रमेण समर्थानि संहितानि करोमि ।

पर्णो राजापिधानं चरूणामूर्जो बलं सह ओजो न आगन् ।
[3]आयुर्जीवेभ्यो विदधद्[3] दीर्घायुत्वाय शतशारदाय ॥ ५३ ॥

पर्णः । राजा । अपिऽधानम् । चरूणाम् । ऊर्जः । बलम् । सहः । ओजः । नः । आ ।
अगन् । आयुः । जीवेभ्यः । विऽदधत्[4] । दीर्घायुऽत्वाय । शतऽशारदाय ॥ ५३ ॥

चरूणाम् 'अपूपवान् क्षीरवान्' (१६) इति मन्त्रोक्तद्रव्ययुतानां नवानां चरूणां पिधानम्[5] आच्छादनभूतः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति अपिशब्दस्य आदिवर्णलोपः । पर्णः पलाशवृक्षपलाशो राजा यज्ञियत्वात् सर्ववृक्षाणाम् अधिपतिः नः अस्माकम् ऊर्जः ऊर्जयति बलवन्तं करोतीति ऊर्जः अन्नरसः । ऊर्ज बलप्राणनयोः[6] । अस्मात् ण्यन्तात् पचाद्यच्[7] । बलम् शारीरं बाह्यं च मनुष्यसंपत्त्यादिलक्षणं द्विविधं बलं सहः शत्रुधर्षणसामर्थ्यम् । सहतेरभिभवार्थाद् असुन् । ओजः तेजः शरीरकान्तिः सर्वधात्वन्तरभूतः शरीरधारकोष्टमधातुर्वा आ अगन् । सकलचरुपिधायकः पलाशपर्णः अस्माकम् ऊर्जबलाद्यात्मक एव आगच्छतु । यद्वा ऊर्जो बलम् इत्यादीनि[8] द्वितीयान्तानि पदानि । अन्नादीनि दातुम् आगच्छतु इति क्रियाध्याहारेण योज्यम् । गमेर्लुङि च्लेर्लुक् । न केवलम् अन्नादिदानं किं तु जीवेभ्यः जीवनवद्भ्यः अस्मभ्यम् आयुः जीवनं विदधत् विदध्यात् प्रयच्छतु । दधातेर्लेटि श्लुः । 'घोर्लोपो लेटि वा' (पा ७,३,७०) इति धातोः आकारलोपः । 'लेटोऽडाटौ' (पा ३,४,९४) इति अडागमः ।

---

१. असतः Cp. २. परि Cp; प्रति P,P². ३. °जीवेभ्यो विदध° V,Op, RW.; °जीवेभ्यो विदध° > °जीवेभ्यो विदध° Dc (तु. वैप १,२८६७ m). ४. विऽदधात् P. ५. वैतु. संपा. ६. °ने शंपा. ७. चिन्त्यमिदम् अर्थतः स्वरतश्च क्विबन्तस्यैव न्याय्यत्वात् (तु. अ १८,४,५४, W. प्रभृ. च). ८. इत्यादि S'.

**किमर्थम्** । शतशारदाय । **शरच्छब्दः संवत्सरवाची शतसंवत्सरपरिमिताय । उत्तरपदवृद्धिश्छान्दसी** । दीर्घायुत्वाय **दीर्घायुष्ट्वाय पृषोदरादित्वाद् अन्त्यलोपः । चिरकालजीवनाय ।**

**ऊर्जो भागो[1] य इमं जजानाश्मान्नानामाधिपत्यं[2] जगाम[3] ।**
**तमर्चत विश्वमित्रा[4] हविर्भिः स नो यमः प्रतरं जीवसे धात् ॥ ५४ ॥**

ऊर्जः । भागः । यः । इमम् । जजान । अश्मा । अन्नानाम् । आधिऽपत्यम्[5] । जगाम[6] ।
तम् । अर्चत । विश्वऽमित्राः[7] । हविःऽभिः । सः । नः । यमः । प्रऽतरम् । जीवसे । धात् ॥५४॥

ऊर्जः **अन्नस्य अस्थिसमीपस्थापितचरुलक्षणस्य** भागः **संभक्ता कर्तरि व्यत्ययेन घञ् ।** यो **यमः** इमं **प्रेतं** जजान **जनयामास । [8]येन च यमेन** अश्मा[8] **यमदेवत्यचरुपिधायकः[9] पाषाणः** अन्नानां **चरूणाम्** आधिपत्यम् **अधिपतित्वम् उपर्यवस्थायित्वं** जगाम **प्राप्तवान् ।** हे [10]विश्वमित्राः **विश्वं मित्रं येषां ते सकलोपकारिजनवन्तो हे बान्धवाः** तं **यमं** हविर्भिरर्चत **प्रीणयत । अर्चतिर्भौवादिकः ।** स यमः नः **अस्मान्** प्रतरम् **प्रकृष्टं** जीवसे **जीवनाय** धात् **विदधातु । अयम् अर्धर्चः पूर्वानुवाके** (अ १८,३,६३) **व्याख्यातः ।**

**यथा यमाय हर्म्यमवपन्[11] पञ्च मानवाः ।**
**एवा[12] वपामि हर्म्यं[11] [13]यथा मे भूरयोसत[13] ॥ ५५ ॥**

यथा । यमाय । हर्म्यम् । अवपन्[14] । पञ्च । मानवाः ।
एव । वपामि । हर्म्यम् । यथा । मे । भूरयः । असत[15] ॥ ५५ ॥

पञ्च **पञ्चसंख्याका** मानवाः **मनोरपत्यादिजनाः ।** 'निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः' (तु. नि ३,८) **इति हि यास्कः । अथवा देवमनुष्यादयः पञ्च जनाः । तथा च ऐतरेयकब्राह्मणे समाम्नायते** — 'सर्वेषां वा एतत् पञ्चजनानाम् उक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां च। एतेषां वा एतत् पञ्चजनानाम् उक्थम्' (ऐब्रा ३,३१) **इति । एते पञ्च जना** यथा **येन प्रकारेण** यमाय **प्रेताधिपतये** हर्म्यम् **निवासस्थानं सौधम्** अवपन् **निर्मितवन्तः** एव **एवं** हर्म्यम् **स्थानम् उन्नतं पितृगृहम्**

---

१. भागं Km. २. °श्वान्नाम° Km,C,R²; °श्मान्नामा° > °श्मान्नानाम° Dc; °माधिपत्यं V,O,Op,R². ३. जगाम्न Km,B,O,R²,K². ४. विश्वमित्रा M,RW. ५. अधिऽपत्यम् Cp; अधिऽपत्यम् P; आधिऽपत्यम् P². ६. जगाम Cp. ७. विश्वऽमित्राः Bp². ८. ···श्मा इत्यत्र रिक्तं स्थानं द्वित्राणां वर्णानाम् S'. ९. देवेभ्यः चरु° S'. १०. वैतु. मंपा. वै १,२९३७ j (तु. अ १८,३,६३). ११. हार्म्यं° तैआ ६,६,२. १२. एवं तैआ. १३. °संतः A,B,C,Km,R,V,Dc. यथासाम जीवलोके भूरयः तैआ. १४. अवऽपन् WM. १५. असतः P,P²

आवपामि[1] मृत्तिकया संपादयामि प्रेतनिवासार्थं विदधामि । यथा येन प्रकारेण मे मदीया बान्धवा यूयं भूयः बहवः असत स्यात । प्रेतोन्नतस्थानाऽकरणे[2] बान्धवानां प्रत्यवायो भवतीति उन्नतपितृगृहकरणम्[3] । अस्तेर्लेटि अडागमः ।

इदं हिरण्यं बिभृहि यत् ते पिताबिभः पुरा ।
स्वर्गं यतः पितुर्हस्तं[4] निर्मृड्ढि[5] दक्षिणम्[6] ॥ ५६ ॥

इदम् । हिरण्यम् । बिभृहि । यत् । ते । पिता । अबिभः । पुरा ।
स्वःऽगम् । यतः । पितुः[6] । हस्तम् । निः । मृड्ढि । दक्षिणम् ॥ ५६ ॥

हे प्रेत इदं हिरण्यम् सुवर्णनिर्मितम् अङ्गुलीयं पिपृहि[1] पूरय । आज्येन अभिघारयेत्यर्थः । पृ पालनपूरणयोः । जौहोत्यादिकः । 'अर्तिपिपर्त्योश्च' (पा ७,४,७७) इति अभ्यासस्य इत्त्वम् । यत् हिरण्यं ते तव पिता पुरा पूर्वम् अबिभः भृतवान् हस्ते धारितवान् । डुभृञ् धारणपोषणयोः । शपः श्लुः । 'भृञामित्' (पा ७,४,७६) इति अभ्यासस्य इत्त्वम् । तिपि धातोर्गुणे 'हल्ङ्या°' (पा ६,१,६८) इत्यादिना तिपो लोपे विसर्जनीयः । स्वर्गम् सुखेन गन्तव्यं कर्मार्जितं लोकं यतः गच्छतः पितुः जनकस्य दक्षिणं हस्तं निर्मृड्ढि निर्मार्जय शोधय । हिरण्यस्य दक्षिणहस्ते धारणात् तस्य प्रमार्जनम् । मृजेः आदादिकात् लोटि हित्वधित्वादिकार्याणि ।

ये च जीवा ये च मृता ये जाता ये च यज्ञियाः ।
तेभ्यो घृतस्य कुल्यैतु[7] मधुधारा[8] व्युन्दती ॥ ५७ ॥

ये । च । जीवाः । ये । च । मृताः । ये । जाताः । ये । च । यज्ञियाः ।
तेभ्यः । घृतस्य । कुल्या[9] । एतु । मधुऽधारा[10] । विऽउन्दती ॥ ५७ ॥

ये जीवाः जीववन्तः ये मृताः परासवः । समुच्चयार्थाः चकाराः । ये जाताः जनिमन्तः उत्पन्नाः ये जज्ञियाः[1] जनिष्यमाणाः जज्ञिम् उत्पत्तिं यान्ति गच्छन्तीति जज्ञियाः । जनी प्रादुर्भावे । 'आदृगमहनजनः°' (पा ३,२,१७१) इति किप्रत्ययः । लिड्वद्भावाद् द्विर्वचनादिकार्यम् । जज्ञिपदोपपदाद् यातेर्विच्प्रत्ययः । तेभ्यः जीवादिभ्यः सर्वेभ्यस्तदर्थं मधुधाराः[11] मधुप्रवाहान् व्युन्दती विशेषेण सिञ्चती अभिवर्षन्ती घृतस्य आज्यस्य कुल्या कृत्रिमा सरित् एतु तत्प्रीणनाय गच्छतु ।

---

१. वैतु. मंपा. २. प्रेतथोनाकरणे S'. ३. ···तृगृह° रिक्तं स्थानमुपचतुराणां वर्णानाम् ४. पिंतु° C,K^m,WM.; पिंतु° > पितु° Dc. ५. निर्मृढ्ढि° WM.; निर्मृड्ढि S'. ६. पितुः Cp,WM. ७. कुल्यैतु B,K^m,C,V,Dc,WM. ८. मधुधारा दक्षि° K. ९. कुल्मा P,P²; कुल्या Cp. R, मधुधारा C,V,WM.; मधुधारा > मधुधारा Dc. १०. मधुऽधारा > मधुऽधारा Cp. ११. वैतु. पपा.

वृषा मतीनां पवते विचक्षणः [1]सूरो अह्नां[1] [2]प्रतरीतोषसां[2] दिवः ।
प्राणः[3] सिन्धूनां कुलशाँ आचिक्रदुदिन्द्रस्य[4] हार्दिमाविशन्मनीषया[5] ॥५८॥

वृषा । मतीनाम् । पवते । विऽचक्षणः । सूरः । अह्नाम् । प्रऽतरीता[6] । उषसाम् । दिवः ।
प्राणः । सिन्धूनाम् । कुलशान् । अचिक्रदत् । इन्द्रस्य । हार्दिम् । आऽविशन् । मनीषया ॥

पितृत्वं प्राप्ताः पुरुषा धूमादिमार्गेण पितृलोकं प्राप्य सोमयागादिजनितसुकृत-फलम् उपभुञ्जते । अतः अनया पित्र्यप्रकरणे सोमः स्तूयते । मतीनाम् मन्तृणां स्तोतृणां वृषा वर्षिता अभिमतफलवर्षकः मतीनाम् स्तुतीनां वा वर्षकः स्तुति-विषये विचक्षणः विशेषेण द्रष्टा सर्वस्य सर्वैर्वा द्रष्टव्यः सोमः पवते । पवतिर्गति-कर्मा । गच्छति दशापवित्रात् स्यन्दते । यद्वा । पूञ् पवने । व्यत्ययेन कर्मणि कर्तृप्रत्ययः शप् । पूयते शोध्यते अध्वर्युभिः । अह्नाम् अहोरात्राणाम् इत्यर्थः । सूरः प्रेरयिता निष्पादयिता । षू प्रेरणे औणादिको रक्प्रत्ययः[7] । उषसाम् उषः-कालानां दिवः द्युलोकस्य च प्रतरीता प्रवर्धयिता । तरतेस्तृचि[8] 'वृतो वा' (पा ७,२,३८) इति इडागमस्य दीर्घः । सिन्धूनाम् स्यन्दमानानां वसतीवरीणाम् अपां प्राणः प्राणभूतः स्वात्मरूपत्वेन कर्ता सोमः कलशान् द्रोणकलशपूतभृदाधवनीयान् ऐन्द्रवायवादि-ग्रहान् वा । अभिलक्ष्य इत्यध्याहारः । अचिक्रदत् अत्यन्तं शब्दायते । अथवा कलशान् अचिक्रदत् धारापातध्वनिना तद्वतः करोति । यद्वा कलशान् अचिक्रदत् कामयते । ततः इन्द्रस्य सवनत्रये यष्टव्यस्य हार्दिम[6] । हृदयम् इत्यर्थः । हृदयमेव हार्दिम । पृथ्वादिषु पाठो द्रष्टव्यः । स्वार्थिकश्चेमनिच् अवगन्तव्यः । हृदययुक्तं जठरं वा मनीषया मनस ईषया यथामनोभिलाषम् अविशत्[6] प्रविशति । यद्वा मनीषया मननीयया इष्यमाणया धारया अविशत् ।

त्वेषस्ते धूम ऊर्णोतु[10] दिवि षंछुक्र[11] आततः ।
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥ ५९ ॥

त्वेषः । ते । धूमः । ऊर्णोतु[12] । दिवि । सन् । शुक्रः । आऽततः ।
सूरः । [13]न । हि[13] । द्युता । त्वम् । कृपा । पावक । रोचसे ॥ ५९ ॥

---

१. सोमो अह्नः ऋ ९,८६,१९; सोमो[3] अह्नां कौ १,५५९. २. प्रतरीता उषसां C; प्रतरीत उषसां R; प्रतरीत उषसां > प्रतरीतोषसां Dc; प्रतरीतोषसां ऋ. प्रतरीतोषसां[2र] कौ. ३. क्राणा ऋ. प्राणा कौ. ४. अवीवशदिन्द्रस्य ऋ. ५. हार्दाविशन् मनीषिभिः ऋ. कौ. ६. प्रऽतरीताः P,P[2]; प्रऽतरीता: Cp. ७. रकि स्वरः? क्रन्प्र. द्र. (तु. पाउ २,२४). ८. तृचि स्वरः? तृन्प्र. द्र. ९. वैतु. संपा. १०. ऋण्वति ऋ ६,२,६ कौ १,८३. ११. षञ्छुक्र ऋ.; सं चञ्छुक्रं कौ. १२. ऊर्णोति P[2]; ऊर्णोति Cp; ऊर्णोतु P. १३. नहि Cp.

अत्र प्रेताग्निः स्तूयते। हे प्रेताग्ने ते तव त्वेषः दीप्तो धूमः ऊर्णोतु आच्छादयतु अन्तरिक्षं कर्म सर्वत्र मेघात्मना परिणतः। अथवा त्वेषः। त्विष दीप्तौ। 'अन्येभ्योपि दृश्यन्ते' (पा ३,२,७५) इति विच्प्रत्ययः। लघूपधगुणः। द्वितीयाबहुवचनं शस्। व्यत्ययेन अन्तोदात्तत्वम्। दीप्तीः सूर्यस्य त्वदीयो धूम ऊर्णोतु। दिवि अन्तरिक्षे सन् भवन् शुक्रः शोचिष्मान्[1] आततः विस्तीर्णः। किं च हे पावक शोधक दाहक प्रेताग्ने त्वं सूरो न सूर्य इव। हि इति पूरणः। कृपा दीप्त्या रोचसे दीप्यसे कृपा। तृतीयायाः पूर्वसवर्णदीर्घः। कृपया स्तुत्या सहितः। स्तूयमान इत्यर्थः।

[2]प्र वा एतीन्दुरिन्द्रस्य निष्कृतिं सखा सख्युर्न प्र मिनाति संगिरः[3]।
मर्य इव [4]योषाः समर्षसे[4] सोमः कुलशे शतयामना[5] पथा ॥ ६० ॥

प्र। वै। एति। इन्दुः। इन्द्रस्य। निःऽकृतिम्[6]। सखा। सख्युः। न। प्र। मिनाति। सम्ऽगिरः। मर्यःऽइव। योषाः। सम्। अर्षसे[7]। सोमः। कलशे। शतऽयामना। पथा ॥ ६० ॥

पितृलोकाधिपतिः सोमः स्तूयते। इन्दुः स्यन्दमानः सोमः इन्द्रस्य निष्कृतिम्। जठरलक्षणं स्थानम् इत्यर्थः। वै प्रैति प्रगच्छति[8]। वैशब्दः प्रसिद्धौ। 'अस्मिन् यज्ञे बर्हिष्या निषद्या दधिष्वेमं जठर इन्दुमिन्द्र' (ऋ ३,३५,६) इति हि मन्त्रवर्णः। सखा सखेव हितकारी सोमः सख्युः अभिषवस्तोत्रादिना सखिभूतस्य यष्टुः संगिरः संगीर्यमाणानि इदमेव फलं सोमादेव लभेय इत्येवं प्रतिज्ञायमानानि काम्यमानानि वस्तूनि न प्र मिनाति न हिनस्ति मोघानि न करोति किं तु प्रयच्छति। यद्वा सखा सोमः सख्युः इन्द्रस्य संगिरः। एकवचनस्य बहुवचनम्[9] आदेशः। संगिरम्। उदरम्[10] इत्यर्थः। संगिरति निगिरति[11] अत्र ओदनादिकम् इति व्युत्पत्तेः। न प्र हिनस्ति शून्यं न करोति। सर्वदा स्वेन पूर्णं करोतीत्यर्थः। मीञ्[12] हिंसायाम्। 'मीनातेर्निगमे' (पा ७,३,८१) इति ह्रस्वत्वम्। मर्य इव मर्यो मरणधर्मा मनुष्यः यथा योषा[13]। तृतीयाया आकारः। योषया युवत्या संगच्छते एवं सोमः कलशे सोमाधारे द्रोणकलशे शतयाम्ना[13] शतयानेन पथा मार्गेण समर्षसे। पुरुषव्यत्ययः। समर्षते संगच्छते। ऋषी गतौ। तौदादिकः[14]। व्यत्ययेन आत्मनेपदम्। उदकमिश्रितस्य सोमरसस्य दशापवित्रात् स्यन्दनसमये बहुधारासद्भावात् शतयाम्नेत्युक्तम्।

इति चतुर्थेऽनुवाके षष्ठं सूक्तम्।

---

१. शोचयिष्मान् S'. २. प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं ऋ ९,८६,१६ कौ १,५५७. ३. सुंगिरः Km,O; सुंगिरः > संगिरः Dc; सुंगिरम् ऋ. कौ. ४. युवतिभिः समर्षति ऋ. कौ. ५. °याम्ना ऋ. ६. निःऽकृतिम् Cp. ७. अर्षते Cp; अर्षते P². ८. प्रयच्छति S'. ९. स्वरानुरोधादकारान्तप्रातिपदिकस्यैकवचनमेव युक्तं द्र., ऋ. तु क्विबन्तमिति विशेषः १०. दुरम् S'. ११. निगरति S'. १२. माङ् S'. १३. वैलु. संपा. १४. भौवादिकः शंपा.

पिण्डपितृयज्ञे 'अक्षन्नमीमदन्त' इति प्रथमया ऋचा पिण्डोपस्थानानन्तरम् उत्तरपरिषेकं कुर्यात्।

'आ यात पितरः' (६२) इति ऋचा पिण्डदानार्थं स्तीर्णे बर्हिषि तिलान् प्रकिरेत्।

'परा यात' (६३) इति ऋचा पितॄन् विसर्जयेत्।

पिण्डपितृयज्ञ एव अनया सांयवनांस्तण्डुलान् जुहुयात्।

पिण्डपितृयज्ञे 'अभूद् दूतः' (६५) इति ऋचा समिदाधानानन्तरं सर्वप्रणीतम् अग्निं प्रत्यानयेत्। सूत्रितं हि—"'अभूद् दूतः' इत्यग्निं त्रिः[1] प्रत्यानयति यदि। सर्वः प्रणीतः स्याद्। दक्षिणाग्नौ त्वेतद् आहिताग्नेः। [2]गृह्येष्वनाहिताग्नेः" (कौसू ८९,१४-१६) इति।

'असौ हा इह ते' (६६) इति द्वाभ्यां श्मशानदेशं विषमसंख्याकाभिः शलाकाभिरिष्टकाभिर्वा[3] प्रसव्यं चिनुयात्।

'येऽस्माकं पितरः' (६८) इति अर्धर्चेन पिण्डप्रदानार्थं बर्हिः स्तृणीयात्।

'उदुत्तमम्' (६९) इति ऋचा शवदाहानन्तरं सर्वे ब्राह्मणाः स्नानं कुर्युः।

'प्रास्मत् पाशान्' (७०) इति ऋचं पितृमेधे दशरात्रपर्यन्तं सायंप्रातः स्वस्त्ययनार्थं पठेयुः।

अक्षन्नमीमदन्त [4]ह्यव॑ प्रि॒याँ[4] अ॑धूषत।
अस्तो॑षत॒ स्वभा॑नवो॒ विप्रा॒ यवि॑ष्ठा[5] ईमहे[5] ॥६१॥

अक्ष॑न्। अमी॑मदन्त। हि। अव॑। प्रि॒यान्[6]। अ॒धू॒ष॒त।
अस्तौ॑षत। स्वऽभा॑नवः। विप्राः॑। यवि॑ष्ठाः। ई॒म॒हे॒ ॥ ६१ ॥

अत्र पितरः स्तूयन्ते। अक्षन् अघसन् बर्हिषि दत्तान् पिण्डान्। अद भक्षणे। 'लुङ्सनोर्घस्लृ' (पा २,४,३७) इति घस्लादेशः। 'मन्त्रे घस॰' (पा २,४,८०) इति च्लेर्लुक्। 'गमहन॰' (पा ६,४,९८) इति उपधालोपः। 'शासिवसिघसीनां च' (पा ८,३,६०) इति षत्वम्। 'खरि च' (पा ८,४,५५) इति चर्त्वेन घकारस्य ककारः। कषयोगे क्षः। 'लुङ्लङ्॰' (पा ६,४,७१) इति अडागम उदात्तः। पादादित्वाद् अनिघातः। अमीमदन्त। हिशब्दश्चार्थे। तिङ उत्तरत्वाद्[7] निघाताभावः। पिण्डभक्षणेन तृप्ताश्च अभूवन्। मद तृप्तियोगे। चुरादेरात्मनेपदिनश्चङि रूपम्। यद्वा हिशब्दो हेत्वर्थे। यतस्तृप्ता अतः प्रियान् स्वकीयान् देहान् अवाधूषत अकम्पयन्। अतिशयितरसास्वादनेन

---

१. नास्ति Bl. २. गृह्येष्वना॰ शंपा. ३. ॰भिरष्ट॰ S'. ४. ह्यवा॑प्रि॒यँ R; ह्यवा॑प्रि॒याँ Km,V,M,O;Op,R², K²; ह्यव॑प्रि॒यँ > ह्यवा॑प्रि॒याँ Dc; ह्यव॑ प्रि॒या ऋ १,८२,२ मा ३,५१ तै १,८,५,२ मै १,१०,३ कौ १,४१५. ५. नवि॑ष्ठया म॒ती ऋ. मा. तै. मै. कौ. ६. अप्रियान् P²; अ॒प्रि॒यान् Cp,D². ७. भिन्नवाक्यत्वाच्चेति शेषः.

गन्तुम्[1] अशक्नुवन्तः शरीराण्येव अकम्पयन्। धू विधूनने कुटादिः। लुङि सिच्। 'गाङ्कुटादिभ्यः०' ( पा १,२,१ ) इति सिचो ङित्त्वाद् गुणाभावः। व्यत्ययेन आत्मनेपदम्। अनन्तरं स्वभानवः स्वायत्तदीप्तयः पितरः अस्तोषत अस्ताविषुरस्मान् साधु कृतम् इति। ष्टुञ् स्तुतौ। लुङि सिच्। 'सार्वधातुकार्धधातुकयोः' ( पा ७,३,८१ ) इति गुणः। एवं पिण्डभक्षणेन तृप्तान् पितॄन् विप्राः मेधाविनो यविष्ठाः युवतमा वयम् ईमहे। याच्ञाकर्मा। याचामहे स्वेष्टानि फलानि। ईङ् गतौ। दैवादिक आत्मनेपदी। श्यनो लुक् बाहुलकात्।

आ यात पितरः सोम्यासो गम्भीरैः[2] पथिभिः पितृयाणैः[3]।
[4]आयुरस्मभ्यं दधतः प्रजां च रायश्च पोषैरभि नः सचध्वम्[4] ॥ ६२ ॥

आ । यात । पितरः । सोम्यासः । गम्भीरैः । पथिऽभिः । पितृऽयानैः ।
आयुः । अस्मभ्यम् । दधतः । प्रऽजाम् । च । रायः । च । पोषैः । अभि । नः । सचध्वम् ॥६२॥

हे पितरः सोम्यासः सोमार्हा यूयम् आ यात आगच्छत गम्भीरैः दुर्गमैः पितृयाणैः पितरो यान्ति एभिरिति तैः पथिभिः मार्गैः। आगत्य च अस्मभ्यं पिण्डदानार्थं स्तीर्णे[5] बर्हिषि तिलान् विकिरद्भ्यः आयुः बहुकालजीवनं प्रजाम् प्रकर्षेण जायमानां पुत्रपौत्रादिलक्षणां संततिं च दधत[6] धत्त प्रयच्छत। दधातेर्लेटि 'घोर्लोपो लेटि वा' (पा ७,३,७०) इति धातोराकारलोपः। अडागमः। यद्वा दध धारणे। भौवादिक आत्मनेपदी। अत्र व्यत्ययेन परस्मैपदम्। अथवा श्लुश्च शश्चेति विकरणद्वयम्। शस्य ङित्त्वात् 'श्नाभ्यस्तयोरातः' ( पा ६,४,११२ ) इति आकारलोपः। किं च नः अस्मान् रायः धनस्य पोषैः समृद्धिभिः अभि सचध्वम् अभितः समवेत। रयिपोषेण अस्मान् संयोजयतेति।

[7]परा यात[7] पितरः सोम्यासो[8] गम्भीरैः[2] पथिभिः पूर्याणैः[3]।
अधा मासि पुनरा यात नो गृहान् हविरत्तुं[9] सुप्रजसः सुवीराः ॥६३॥

परा । यात । पितरः । सोम्यासः । गम्भीरैः । पथिऽभिः । पूःऽयानैः ।
अध । मासि । पुनः । आ । यात[10] । नः । गृहान् । [11]हविः । अत्तुम्[11] । सुऽप्रजसः । सुऽवीराः ॥

हे पितरः सोम्यासो यूयं पूर्याणैः पूः पुरं स्वीयः पितृलोकस्तं यान्ति [12]एभिरिति पूर्याणास्तैः स्वपुरप्राप्तिसाधनैः गम्भीरैः पथिभिः परा यात इतः पराङ्मुखा

---

१. शक्तुम् S′.   २. गम्भीरं B. गम्भीरेभिः मै १,१०,३ काठ ९,६ आश्रौ २,७,६.   ३. पूर्वैभिः मै. पूर्विणेभिः काठ. आश्रौ पूर्व्यैः तै १,८,५,२ हिगृ २,१०,५.   ४. पृ ११७९ ४-७ टि द्र.   ५. स्तीर्ण० S′.   ६. वैतु. मंपा.   ७. परेत तै. काठ. परेतन मै.   ८. सोम्यासो काठ. सोम्या तै.   ९. हुविरत्तुं C, हुविरत्तुं Dc.   १०. अयात P,P²; अ॒या॒थ Cp.   ११. हुविः । अत्तुम् > हुविः । अत्तुम् Cp; हविः । अत्तुम् P; हविः । अत्तुम् P².   १२. येभि० S′.

यात स्वस्थानं गच्छत । अध अथ अनन्तरं मासि मासे पूर्णे । अमावास्यायाम् इत्यर्थः । हविरत्लून्[1] हविरदन्ति[2] एषु गृहेष्विति ते हविरत्त्वः तान् हविर्भक्षस्थानभूतान् नः अस्मदीयान् गृहान् पुनरा यात आगच्छत । किंविशिष्टान् । सुप्रजसः । प्रजा संततिः पुत्रलक्षणा । शोभनपुत्रयुक्तान् । 'नित्यमसिच् प्रजामेधयोः' ( पा ५,४,१२२ ) इति असिच् समासान्तः । सुवीराः । वीरः कर्मणि कुशलः पौत्रादिः । शोभनपौत्रादिसमेतान् । शसो जसादेशः । एवंविधान्[3] गृहान् आ यात । पितृणां वा विशेषणम् । शोभनप्रजसः[4] सुवीराः सन्तः अस्मभ्यं पुत्रपौत्रादिलक्षणां संततिं दातुं पुनरायातेति संबन्धः ।

'यद् वो अग्निः' इत्यनया चितिस्थानाद् विप्रकीर्णं प्रेतावयवं पुनरग्नौ प्रक्षिपेत् । सैषा सूक्ते चतुर्थी—

यद् वो॑ अ॒ग्निरज॑हा॒देक॒मङ्गं॑[5] पितृलो॒कं ग॒मय॑ं[6] जा॒तवे॑दाः ।
तद् व॑ ए॒तत् पु॒नरा प्या॑ययामि सा॒ङ्गाः स्व॒र्गे पि॒त॑रो[7] मादयध्वम् ॥६४॥

यत् । व॒ः । अ॒ग्निः । अज॑हात्[8] । एक॑म् । अङ्ग॑म् । पि॒तृ॒ऽलो॒कम् । ग॒मय॑न् । जा॒तऽवे॑दाः ।
तत् । व॒ः । ए॒तत् । पुन॑ः । आ । प्या॒य॒या॒मि॒ । स॒ऽअङ्गाः॑ । स्व॒ःऽगे । पि॒तर॑ः । मा॒द॒य॒ध्व॒म् ॥

हे प्रेताः वः युष्मान् पितृलोकम् पितृभिरधिष्ठितं स्थानं गमयन् प्रापयन् जातवेदाः जातानां वेदिता पुण्यापुण्यकर्मणः यद्वा जातानां कर्मफलस्य लम्भयिता प्रापयिता अग्निः प्रेतदाहकः यद् युष्मदीयम् एकम् अङ्गम् अजहात् त्यक्तवान् । चितेर्विप्रकीर्णम् अवयवं नादहद् इत्यर्थः । ओहाक् त्यागे । जौहोत्यादिकः । [9]वः युष्माकं तद् एतत् पुरोवर्ति अङ्गम् अवयवं पुनरा प्याययामि अग्नौ प्रक्षेपेण प्रवर्धयामि । यूयं साङ्गाः संपूर्णावयवाः पितरो भूत्वा स्वर्गे मादयध्वम् मोदध्वम् ।

अभू॑द् दू॒तः प्रहि॑तो जा॒तवे॑दाः सा॒यं न्य॑ह्न[10] उप॒वन्द्यो॒ नृभि॑ः ।
प्रादा॑ः पि॒तृभ्य॑ः स्व॒धया॒ ते अ॑क्षन्ना॒द्धि त्वं दे॑व॒ प्रय॑ता ह॒वींषि ॥ ६५ ॥

अभू॑त् । दू॒तः । प्र॒ऽहि॑तः । जा॒तऽवे॑दाः । सा॒यम् । नि॒ऽअह्ने॑ । उ॒प॒ऽव॒न्द्य॑ः[11] । नृ॒ऽभि॑ः ।
प्र । अ॒दा॒ः । पि॒तृ॒ऽभ्य॑ः । स्व॒धया॑ । ते । अ॒क्ष॒न् । आ॒द्धि । त्वम् । दे॒व॒ । प्र॒ऽय॑ता । ह॒वींषि॑ ॥

सायं न्यह्ने सायंप्रातः नृभिरुपवन्द्यः मनुष्यैरुपासनीयो जातवेदाः जातानां वेदितानिः दूतः प्रहितोभूत् दूतत्वे नियुक्तः सन् प्रेषितोभूत् अस्माभिः पितॄन् प्रति । अथ

---

१. वैतु. मंपा. २. °दंतु S'. ३. एवंत्यधान् S'. ४. शोभनप्रजावीराः S'. ५. °रंजहा° O,R². ६. गमयन् B. ७. पितरो RW. ८. अजहात् Cp,Op. ९. इत आरभ्य उत्तरमन्त्रभाष्ये त्वमपि प्रय इति यावत् नास्ति S'. १०. न्यह्न C,R,PW; न्यह्न > न्यह्ने Dc. ११. उप । वंद्यः P.

प्रत्यक्षनिर्देशः । हे अग्ने एतादृशस्त्वं पितृभ्यः प्रादाः अस्माभिः प्रयतानि हवींषि प्रयच्छ । ते पितरः स्वधया अक्षन् स्वधाकारेण दत्तानि हवींषि भक्षयन्तु । अनन्तरम् हे देव अग्ने त्वम् अपि प्रयता[1] प्रयतानि तुभ्यमेव दत्तानि हवींषि अद्धि भक्षय । अद भक्षणे । प्रातकाले लोट् । पित्रर्थं त्वदर्थं च अस्माभिस्त्वयि हुतानां हविषां पितृभ्यः प्रदानानन्तरं तावकीनहविर्भक्षणस्य कालः प्रात इति यावत् ।

**असौ[2] हा इ॒ह ते॒ मनः॑ ककु॑त्सलमिव जा॒मयः॑ । अ॒भ्ये॑नं[3] [4]भूम ऊर्णुहि ॥६६॥**

असौ[5] । हा । इ॒ह । ते॒ । मनः॑ । ककु॑त्सलम्ऽइव । जा॒मयः॑ । अ॒भि । ए॒न॒म् । भू॒मे॒ । ऊ॒र्णु॒हि॒ ॥६६॥

असौ इति प्रेतस्य संबोधनम् । हे[7] अमुकनामधेय प्रेत ते तव मनः इह अस्मिन् प्रसव्यम्[6] इष्टकचिते प्रदेशे वर्तते । हा[7] संतोषे । हे भूमे चितश्मशानदेशे एनम् अन्वादिष्टम् अत्रैव अवतिष्ठमानं[8] प्रेतम् अभ्यूर्णुहि अभितः सर्वत आवृणु आच्छादय । तत्र दृष्टान्तः । जामयः भगिन्यः । उपलक्षणम् एतत् । आप्ता बान्धवाः ककुत्स्थलम्[7] इव । ककुच्छब्दः प्रधानवाची । प्रधानावयवप्रदेशमिव । यथा मात्रादय आप्ता बान्धवाः पुत्रादीनां शिरःप्रभृतीन्यङ्गानि शीतातपवातनिवारणाय वाससाच्छादयन्ति एवम् । यद्वा जामिशब्दः स्त्रीमात्रपरः । यथा स्त्रियः ककुत्स्थलम् । ग्रीवापरभागः ककुत् । स्वकन्धरप्रदेशं वाससा प्रोर्णुवन्ति तद्वत् ।

**[9]शुम्भ॑न्तां लो॒काः पि॑तृ॒षद॑नाः पितृ॒षद॑ने त्वा लो॒क आ सा॑दयामि ॥६७॥**

शुम्भ॑न्ताम् । लो॒काः । पि॒तृ॒ऽसद॑नाः । पि॒तृ॒ऽसद॑ने । त्वा॒ । लो॒के । आ । सा॒द॒या॒मि॒ ॥६७॥

हे प्रेत तव पितृसदनाः पितरः सीदन्ति अत्र इति पितृसदना लोकाः शुम्भन्ताम् प्रकाशन्ताम् । शुभ शुम्भ शोभार्थे । तौदादिकः । अहं संस्कर्ता पितृसदने पितृभिरधिष्ठिते लोके त्वा त्वाम् आ सादयामि स्थापयामि ।

एकपदाग्रमी ऋक् एवम् आम्नायते—

**[10]ये॒३॑स्माकं॑ पि॒तर॒स्तेषां॑ ब॒र्हिर॑सि ॥ ६८ ॥**

ये । अ॒स्माक॑म् । पि॒तरः॑ । तेषा॑म् । ब॒र्हिः॑ । अ॒सि॒ ॥ ६८ ॥

ये अस्माकं पितरः पितृत्वं प्राप्ताः पूर्वजाः तेषां बर्हिः आसदनस्थानम् असि भवसि । इति पिण्डदानार्थं स्तीर्यमाणं बर्हिः संबोध्यते ।

---

१. गतपृष्ठे टि ९ द्र. २. तु. सा. अ १८,४,३३ च वैतु. शंपा. प्रभृ. अ॒सौ. ३. अभ्येनं Km,R. ४. भूम ऊर्णुहि Km. पृ १७२९, ४ टि. द्र. ५. तु. मंपा. वैतु. शंपा. अ॒सौ. ६. प्रसव्याम् S. ७. वैतु. मंपा. पपा. च. ८. अवतिष्ठासमानं S'. ९. शुन्धन्तां मा ६,१. १०. ये॒१॑स्माकं A,B; ये॒३॑स्माकं > ये॒१॑स्माकं Dc.

उदु॑त्त॒मं व॑रुण॒ पाश॑म॒स्मदवा॑ध॒मं वि म॑ध्य॒मं श्र॑थाय ।
अधा॑[1] व॒यमा॑दित्य व्र॒ते तवाना॑गसो॒ अदि॑तये स्याम ॥ ६९ ॥

उत् । उ॒त्ऽत॒मम् । व॒रु॒ण॒ । पाश॑म् । अ॒स्मत् । अव॑ । अ॒ध॒मम् । वि । म॒ध्य॒मम् । श्र॒थ॒य॒ ।
अध॑ । व॒यम् । आ॒दि॒त्य॒ । व्र॒ते । तव॑ । अना॑गसः । अदि॑तये । स्या॒म॒ ॥ ६९ ॥

एषा पुरस्ताद् ( अ ७,८८,३ ) व्याख्याता । वरुणपाशास्त्रिविधा उत्तमाधममध्यमभेदेन[2] । तत्र हे वरुण त्वदीयम् उत्तमं पाशम् अस्मत् अस्मत्तः उत् श्रथाय ऊर्ध्वम् उन्मोचय । अधमम् निकृष्टं पाशम् अव श्रथाय अवस्ताद् मोचय । मध्यमं तु पाशं वि श्रथाय विश्लेषय । श्रन्थ प्रतिहर्षविमोचनयोः । क्र्यादिकः । 'छन्दसि शायजपि' ( पा ३,१,८४ ) इति हेः[3] शायजादेशः । अथ[4] अनन्तरं विमुक्तपाशा वयम् हे आदित्य अदितेः पुत्र वरुण तव व्रते कर्मणि परिचरणरूपे अनागसः निर्दोषाः प्रत्यवायरहिताः सन्तः अदितये अखण्डनाय अहिंसायै स्याम इति संग्रहार्थः । दो अवखण्डने । क्तिनि 'द्यतिस्यतिमास्थामित् ति किति[5]' ( पा ७,४,४० ) इति इत्वम् ।

प्रास्मत्[6] पाशा॑न् वरुण मुञ्च॒ सर्वा॒न् यैः स॑मा॒मे[7] ब॒ध्यते॒[8] यैर्व्या॒मे ।
अधा॑ जीवेम श॒रदं॑[9] श॒तानि॒ त्वया॑ राजन् गुपि॒ता रक्ष॑माणाः ॥ ७० ॥

प्र । अ॒स्मत् । पाशा॑न् । व॒रु॒ण॒ । मु॒ञ्च॒ । सर्वा॑न् । यैः । स॒म्ऽआ॒मे । ब॒ध्यते॑[10] । यैः । वि॒ऽआ॒मे ।
अध॑ । जी॒वे॒म॒ । श॒रद॑म् । श॒तानि॑ । त्वया॑ । रा॒ज॒न्[11] । गु॒पि॒ताः[12] । रक्ष॑माणाः ॥ ७० ॥

हे वरुण वारक देव पाशान् वक्ष्यमाणान् बन्धनसाधनभूतान् सर्वान् अस्मत् अस्मत्तः प्र मुञ्च प्रमोचय । यैः पाशैः समामे बध्यते[13] पुरुषः व्यामे च यैः बध्यते व्यामो नाम 'व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्' (अको २,६,८७) इत्येवंविहितप्रमाणकः प्रदेशः । पञ्चारत्निर्व्याम इति याज्ञिकाः । समामो नाम व्यामसंज्ञितप्रदेशात् संकुचितप्रमाणको देशः । संनिहिते प्रदेशे दूरे प्रदेशे च इति यावत् । अध अथ पाशमोचनानन्तरम् हे राजन् वरुण त्वया गुपिताः रक्षिताः पूर्वं पालिता रक्षमाणाः । यगभावश्छान्दसः । रक्ष्यमाणा इतः परमपि पाल्यमाना वयं शतानि शरदम् शरदः । 'कालाध्वनोः०' ( पा २,३,५ ) इति द्वितीया । बहुवर्षपर्यन्तं जीवेम जीवनवन्तः स्याम ।

इति चतुर्थेऽनुवाके सप्तमं सूक्तम् ।

---

१. तु. पृ १०१५ टि २. २. °मध्यभेदेन S′. ३. हे S′. ४. वैतु. मंपा. ५. कति S′. ६. प्रास्मत्. ७. स॑मा॒ने Km,O,R. ८. बं॑ध्यते॒ Km; ब॑ध्यते॒ > ब॒ध्यते॒ Dc. ९. श॒रदः॑ Km,O′R²; श॒रदा॑ RW. १०. ब॒ध्यते॒ Cp. ११. राज॑न् Cp,MW. १२. गुपिता P,P²; गु॒पि॒ता WM. १३. ब नास्ति S′.

**पिण्डपितृयज्ञे** 'अग्नये कव्यवाहनाय' **इति त्रिभिर्मन्त्रैः** 'स्वधा पितृभ्यः पृथिविषद्भ्यः' **इति अष्टमनवमदशमैश्च त्रिभिः स्थालीपाकं जुहुयात्। सूत्रितं हि—** 'ये रूपाणि' **इति प्रक्रम्य** "कुम्भीपाकम् अभिघारयति। 'अग्नये कव्यवाहनाय' इति जुहोति। यथा निरुप्तं द्वितीयाम्। 'यमाय पितृमते' (७४), 'स्वधा पितृभ्यः' (७८) इति तृतीयाम्" (कौसू ८८,१-४) **इति। निर्वापप्रकारस्तु एवं कौशिकेन उक्तः—** "यज्ञोपवीती दक्षिणपूर्वम् अन्तर्देशम् अभिमुखः शूर्पे एकपवित्रान्तर्हितान् हविष्यान् निर्वपति। इदम् 'अग्नये कव्यवाहनाय' 'स्वधा पितृभ्यः पृथिविषद्भ्यः' इति। इदं 'सोमाय पितृमते स्वधा', 'पितृभ्यः सोमवद्भ्यः', 'पितृभ्यो वान्तरिक्षसद्भ्यः' इति। इदं 'यमाय पितृमते स्वधा', पितृभ्यश्च दिविषद्भ्यः" (कौसू ८७,७;८) **इति।**

**पिण्डपितृयज्ञे**[1] **एव** 'एतत् ते प्रततामह स्वधा' **इति पञ्चमषष्ठसप्तमैर्मन्त्रैर्बर्हिषि त्रीन् पिण्डान् संहितान् निदध्यात्। सूत्रितं हि—** "उद्धृत्याज्येन संनीय त्रीन् पिण्डान् संहितान्[2] निदधाति 'एतत् ते प्रततामह' इति" (कौसू ८८,११) **इति।**

**एतत् सूक्तं सर्वं यजुर्मन्त्रात्मकम्।**

**तत्र प्रथमादितो मन्त्रचतुष्टयपाठस्तु—**

**अ॒ग्नये॑ क॒व्य॒वाह॑नाय स्व॒धा नमः॑ ॥ ७१ ॥**

अ॒ग्नये॑। क॒व्य॒ऽवाह॑नाय। स्व॒धा। नमः॑ ॥ ७१ ॥

**सोमा॑य पि॒तृम॑ते॑[3] स्व॒धा नमः॑ ॥ ७२ ॥**

सोमा॑य। पि॒तृ॒ऽम॑ते॑[4]। स्व॒धा। नमः॑ ॥ ७२ ॥

**पि॒तृभ्यः॑ सोम॑वद्भ्यः स्व॒धा नमः॑ ॥ ७३ ॥**

पि॒तृऽभ्यः॑। सोम॑वत्ऽभ्यः। स्व॒धा। नमः॑ ॥ ७३ ॥

**य॒माय॑ पि॒तृम॑ते॑[3] स्व॒धा नमः॑ ॥ ७४ ॥**

य॒माय॑। पि॒तृ॒ऽम॑ते॑[4]। स्व॒धा। नमः॑ ॥ ७४ ॥

**दैवहविःप्रापकोऽग्निः हव्यवाहनः। पित्र्यहविःप्रापकोऽग्निः कव्यवाहनः। तत्र** कव्यवाहनाय **कव्यं पित्र्यं हविः। तद्वहते पितॄन् प्रापयते। कव्योपपदाद् वहेर्ञ्युट्प्रत्ययः। ञित्वाद् उपधावृद्धिः। तस्मै** अग्नये स्वधा **स्वधाकारेण इदं हविः हुतम् अस्तु** नमः **नमस्कारोऽस्तु। स्वाहाकारवषट्कारप्रदाना हि देवाः।**

---

१. °यज्ञम् S'. २. संहतान् Bl. ३. तु. मा २,२९ माश २,४,२१,३ प्रभृ.; वैतु. शंपा. पि॒तृमंते. ४. तु. मंपा., ३ टि. च; वैतु. शंपा. पि॒तृऽमंते.

स्वधाकारनमस्कारप्रदानाः खलु पितरः । स्वाहाकारवषट्कारौ विकल्पितौ । स्वधानमःशब्दौ समुच्चितौ[1] । 'स्वधा नम इति वषट्करोति । स्वधाकारो हि पितृणाम्' (तैब्रा १,६.९,५) इति तैत्तिरीयश्रुतेः । 'नमःस्वस्तिस्वाहा°' (पा २,३,१६) इति अव्वय इति चतुर्थी । एवम् उत्तरे मन्त्रा योज्याः । सोमस्य पितरो विशेषणभूताः सोमो वा पितृणां विशेषणम् ।

पिण्डप्रदानमन्त्रा एवम् आम्नायन्ते—

एतत् ते प्रततामह स्वधा ये च त्वामनु ॥ ७५ ॥

एतत् । ते । प्रऽततामह । स्वधा । ये । च । त्वाम् । अनु ॥ ७५ ॥

एतत् ते ततामह स्वधा ये च त्वामनु ॥ ७६ ॥

एतत् । ते । ततामह । स्वधा । ये । च । त्वाम् । अनु ॥ ७६ ॥

[2]एतत् ते तत[2] स्वधा ॥ ७७ ॥

एतत् । ते । तत । स्वधा ॥ ७७ ॥

हे प्रततामह प्रपितामह । ततशब्दः पितृवचनः । सृष्ट्यादौ हि प्रजापतिना स्वजनकाह्वानार्थं ततेति तातेति व्याहृतम् । तथा च ऐतरेयकम्— 'एतां वाव प्रजापतिः प्रथमां वाचं व्याहरद् एकाक्षरद्व्यक्षरां ततेति तातेति । तयैव तत् ततवत्या वाचा प्रतिपद्यते' (ऐआ १,३,३) इति । अतः प्रशस्तत्वात् ततेति आम्नातम् । आश्वलायनेन तु स्वपित्रादीनां नामधेयान्यजानानः[3] पुत्रस्ततशब्दं प्रयुञ्जीतेति सूत्रितम्— 'नामान्यविद्वांस्ततपितामहप्रपितामहेति' (आश्रौ २,६,२४) इति । ततामहप्रततामहेत्यर्थः । यद्वा देवानां परोक्षनामप्रियत्वात् ततेत्यादिना परोक्षनाम्ना व्यवहारः । अथवा पितृलोकं प्राप्ताः सर्वेऽपि पितरः । तत्र श्रृङ्गग्राहिकया स्वजनकादीनाम् आह्वानाय ततेतिशब्दप्रयोगः । हे प्रततामह प्रपितामह ते तुभ्यम् एतत् पिण्डलक्षणं हविः स्वधा स्वधाकारेण दत्तम् अस्तु । ये च पितरः भार्यापुत्रादयः त्वाम् अनु अनुसृत्य वर्तन्ते तेभ्योऽपि स्वधास्तु । ते च अत्र अंशभागिनो भवेयुरिति । एवम् उत्तरौ मन्त्रौ व्याख्येयौ । हे ततामह पितामह । हे तत पितः । अत्र तृतीये मन्त्रे पिण्डप्रदातरि पुत्रे जीवति सति अनुगामिनाम् अन्येषाम् अभावाद् ये च त्वाम् अनु इति मन्त्रशेषो नाम्नातः[4] ।

---

१. समुतौ S'. २. एतत्ते ततः Km,C,R,WM.; एतत्ते तत > एतत्ते तत Dc.
३. °न्यजमानानः S'. ४. तः नास्ति S'.

अष्टमादिमन्त्रास्त्रय एवम् आम्नायन्ते—

**स्वधा पितृभ्यः पृथिविषद्भ्यः ॥ ७८ ॥**

स्वधा । पितृऽभ्यः । पृथिविसत्ऽभ्यः ॥ ७८ ॥

**स्वधा 'पितृभ्यो अन्तरिक्षसद्भ्यः'[1] ॥ ७९ ॥**

स्वधा । पितृऽभ्यः । अन्तरिक्षसत्ऽभ्यः ॥ ७९ ॥

**स्वधा पितृभ्यो दिविषद्भ्यः ॥ ८० ॥**

स्वधा । पितृऽभ्यः । दिविसत्ऽभ्यः ॥ ८० ॥

पृथिविषद्भ्यः **पृथिव्यां सीदद्भ्यः । पूर्वपदस्य ह्रस्वत्वं छान्दसम् ।** 'पूर्वपदात्' ( पा ८,३,१०६ ) **इति षत्वम् ।** पितृभ्यः स्वधा । **इदं हविः स्वधाकारेण हुतम् अस्तु । एवम् उत्तरौ व्याख्येयौ ।** दिविषद्भ्यः **दिवि द्युलोके सीदद्भ्यः ।** 'तत्पुरुषे कृति बहुलम्' ( पा ६,३,१४ ) **इति सप्तम्या अलुक् । पूर्ववद् उत्तरपदस्य मूर्धन्यादेशः ।**

**इति चतुर्थेऽनुवाके अष्टमं सूक्तम् ।**

'नमो वः पितरः' **इति अष्टभिर्यजुर्मन्त्रैर्बर्हिषि पिण्डेषु आवाहितान्[2] पितॄन् उपतिष्ठेत । सूत्रितं हि—**" 'नमो वः पितरः' इत्युपतिष्ठेत । 'अक्षन्' ( ६१ ) [3]इत्युत्तरसिचम् अवधूय[3] । 'परा यात' ( ६३ ) इति परायापयति" ( कौसू ८८,२६-२८ ) **इति ।**

**तत्रैव कर्मणि** 'आ त्वाग्ने' **इत्यनया समिधम् आदध्यात् ।** 'समिधोऽभ्यादधाति' **इति प्रक्रम्य सूत्रितम्—**" 'त्वमग्न ईळितः'[4] ( अ १८,३,४२ ), 'आ त्वाग्न इधीमहि' ( अ १८,४,८८ ) इति" ( कौसू ८९,१३ ) **इति ।**

'वारुणीं जलभये [5]जलसंक्षये च'[5] ( शांक १७,४ ) **इति विहितायां वरुणदेवत्यायां महाशान्तौ** 'चन्द्रमा अप्स्वन्तरा' **इत्येनाम् ऋचम् आवपेत् । उक्तं हि शान्तिकल्पे—**" 'यद् देवा देवहेळनम्'[4] ( अ ६,११४,१ ) इति याम्यायां 'चन्द्रमा अप्स्वन्तरा' ( अ १८,४,८९ ) इति वारुण्याम्" ( शांक १८,६ ) **इति ।**

**मन्त्रपाठस्तु—**

**नमो वः पितर ऊर्जे नमो वः पितरो रसाय ॥ ८१ ॥**

नमः । वः । पितरः । ऊर्जे । नमः । वः । पितरः । रसाय ॥ ८१ ॥

---

१. °भ्योंतरि° Km,R,Dc,O,R[2],K[2]. २. अवाहृता° S'. ३. °त्तरस्य समवधूय S'. ४. वैतु. मंपा. ५. जलभयजलसंक्षययोः BOI.

**नमो वः पितरो भामाय नमो वः पितरो मन्यवे ॥ ८२ ॥**

नमः । वः । पितरः । भामाय । नमः । वः । पितरः । मन्यवे ॥ ८२ ॥

**नमो वः पितरो यद् घोरं तस्मै नमो वः पितरो यत् क्रूरं तस्मै ॥ ८३ ॥**

नमः । वः । पितरः । यत् । घोरम् । तस्मै । नमः । वः । पितरः । यत् । क्रूरम् । तस्मै ॥

**नमो वः पितरो यच्छिवं तस्मै नमो वः पितरो यत् स्योनं तस्मै ॥८४॥**

नमः । वः । पितरः । यत् । शिवम् । तस्मै । नमः । वः । पितरः । यत् । स्योनम् । तस्मै ॥

**नमो वः पितरः स्वधा वः पितरः ॥ ८५ ॥**

नमः । वः । पितरः । स्वधा । वः । पितरः ॥ ८५ ॥

**एते मन्त्रा निगदव्याख्याताः । एतैर्मन्त्रैः पितृणां नमस्कारः प्रतिपाद्यते ।** 'नमस्करोति[1] । नमस्कारो हि पितृणाम्' ( तैब्रा १,३,१०,८ ) **इति श्रुतेः । नमस्कारस्य फलप्रतिपादकानि** ऊर्जे **इत्यादीनि । यद्वा पितृभिर्युष्माभिर्दीयमानाय** ऊर्जे नम **इति । एवम् उत्तरत्र ।** ऊर्जे **अन्नाय** रसाय **अन्नरसाय ।** भामाय **। भाम क्रोधे । अस्मात् घञ् । क्रोधाय । अत्र पितृसंबन्धी क्रोध एव नमस्कार्यः । तथा अन्यत्र समाम्नायते—** 'नमस्ते रुद्र मन्यवे' ( तै ४,५,१,१ ) **इति । मन्युः मानसः क्रोधविशेषः । घोरम् अहितकारिणां भयंकरं रूप** तस्मै नमः । क्रूरम् **हिंस्रं रूपं** तस्मै नमः । शिवम् **मङ्गलं रूपं** स्योनम् **सुखप्रदं** तस्मै **च** नमः **नमस्कारोस्तु ।** हे पितरः वः **युष्मभ्यं** नमः । हे पितरः वः **युष्मभ्यं** स्वधा **स्वधाकारेण इदं हविर्हुतम् अस्तु ।**

**[2]येऽत्र पितरः† पितरो येऽत्र यूयं स्थ[2] युष्मांस्तेऽनु यूयं तेषां श्रेष्ठा भूयास्थ[3] ।८६।**

ये । अत्र । [3]पितरः । पितरः । ये । अत्र । यूयम् । स्थ । युष्मान् । ते । अनु । यूयम् । तेषाम् । श्रेष्ठाः । भूयास्थ[3] ॥ ८६ ॥

**य इह पितरो जीवा इह वयं स्मः[4] । अस्माँस्तेऽनु वयं तेषां श्रेष्ठा भूयास्म ॥८७॥**

---

१. नमस्कारोति S'. २. येत्र पितरं पितरो येत्र यूयं स्थ B; येत्र पितरः पितरो येत्र यूयं स्थ K,Kᵐ; येत्र पितरः पितरो येत्र यूयं स्थ C; येत्र पितरः पितरो येत्र यूयं स्थ R; येत्र पितरः पितरो येत्र यूयं स्थ > येत्र पितरः पितरो येत्र यूयं स्थ Dc; न स्वरमङ्कयति A. † वैप १,२००७ b द्र. ३. पितरः । पितरः । ये । अत्र । स्थ । युष्मान् ते । अनु । यूयम् । तेषाम् । श्रेष्ठाः । भूयास्त । Cp. वैप १,२३५२ g द्र. ४. समः > स्मः Dc; स्म ( नात्र विरमति ) RW.

ये । इह । पितरः । जीवाः । इह । वयम् । स्मः । अस्मान् । ते[1] । अनु । वयम् । तेषाम् । श्रेष्ठाः । भूयास्म ॥

अत्र[2] अस्मिन् पिण्डपितृयज्ञे ये पितरो यूयं स्थ देवतात्वं[3] प्राप्ताः स्थ । आदरार्थं व्यतिहारेण पुनर्वचनम् । युष्मान् अनु अनुसृत्य ते अधिकत्वेन प्रसिद्धाः पितरो वर्तन्ते । तेषां यूयं श्रेष्ठाः प्रशस्यतमा उपजीव्या भूयास्थ भवत । युष्मत्प्रसादात् तेषां पिण्डांशभागित्वात् [८६]। इह अस्मिन् यज्ञे ये पितरः पितृत्वेन संभावितास्तेषां श्रेष्ठा भूयास्थेति संबन्धः । इह अस्मिन् लोके वयं पिण्डदातारो जीवाः जीवनवन्तः आयुष्मन्तः स्मः । अस्मान् अनुसृत्य ते प्रसिद्धाः समानवयोवंशविद्याधना[4] वर्तन्ते । तेषां श्रेष्ठा भूयास्म । इति पिण्डेष्वावाहितान् पितॄन् उपतिष्ठेत [८७]।

आ त्वा॑ग्न[5] इधीमहि द्युमन्तं॑[6] देवाजरम् ।
यद् घ[7] सा[8] ते पनी॑यसी स॒मिद्[9] दी॒दय॑ति[10] द्यवि॑ । इषं॑[10] स्तो॒तृभ्य॒आ भ॑र ॥८८॥

आ । त्वा । अग्ने । इधीमहि । द्युऽमन्तम् । देव । अजरम्[11] । यत् । घ[12] । सा । ते । पनीयसी । सम्ऽइत् । दीदयति । द्यवि । इषम् । स्तोतृऽभ्यः । आ । भर ॥ ८८ ॥

हे देव द्योतमान अग्ने द्युमन्तम् दीप्तिमन्तम् अजरम् जरारहितं त्वा त्वाम् आ इधीमहि समिधा अभिमुखं समिधीमहि दीपयामः । इन्धेर्लिङि बाहुलकात् श्नमो लुक् । 'अनिदिताम् (पा ६, ४,२४) इति धातुनकारलोपः । यत् । सुपो लुक् । यस्य ते तव । घेति पूरणः । सा प्रसिद्धा पनीयसी । पनतिः स्तुतिकर्मा । स्तुत्यतरा समित् सम्यक् प्रकाशिका दीप्तिः । द्यवि । द्योशब्दाद् ओकारान्तात् सप्तम्येकवचनम्[13] । दिवि अन्तरिक्षे दीदयति दीप्यते । दीदेतिर्दीप्तिकर्मा । हे अग्ने समिधा समिध्यमानस्त्वं स्तोतृभ्यः स्तुतिकारिभ्यः अस्मभ्यम् इषम् इष्यमाणम् अन्नम् इष्टं फलं वा आ भर आहर देहि । हृग्रहोर्भः° (पावा ८,२,३२) ।

चन्द्रमा॑ अ॒प्स्व॑१॒न्तरा सुपर्णो धावते[14] दिवि ।
न वो॑ हिरण्यनेमयः प॒दं वि॑न्दन्ति[15] विद्युतो[16] वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥८९॥

चन्द्रमाः । अप्ऽसु । अन्तः । आ । सुऽपर्णः । धावते । दिवि । न । वः । हिरण्यऽनेमयः । पदम् । विन्दन्ति[17] । विऽद्युतः[18] । वित्तम् । मे । अस्य[19] । रोदसी[20] इति ॥ ८९ ॥

---

१. ते Cp. २. तत्र S'. ३. दैवतात्वे S'. ४. °विद्याना S'. ५. त्वा अग्न B,R; त्वा अग्न > त्वाग्न Dc; तं अग्न ऋ ५,६,४ तै ४,४,४,६ मै २,१३,७ काठ ९,६ कौ १,४१९. ६. द्युमंतं B. ७. ध WM. ऋ. तै. मै. काठ. कौ. ८. स्या ऋ. तै. मै. काठ. कौ. ९. समिद् B,C. १०. द्यवीषं RW. ऋ. तै. प्रभृ. ११. °रन् Cp. १२. ह WM. १३. न गोश्वन् ( पा ६,१,१८२ ) इत्यत्र गोशब्देन ओकारान्तस्योपलक्षणाद् विभक्तिस्वरप्रतिषेधः द्र. १४. धावते B. १५. विंद्यति B; विंदति A.K[m]. १६. विद्युतो A,B,WM. १७. विंदति Cp; वंदति P; विदंति P[2]. १८. विऽद्युतः Cp. १९. अस्य Cp. २०. रोदसी P,Cp

अत्र शाट्यायनिन इतिहासम् आचक्षते । एकतो द्वितस्त्रित इति पुरा त्रय ऋषयो बभूवुः । एते कदाचिद् मरुभूमौ अरण्ये वर्तमानाः पिपासया संततगात्राः सन्तः एकं कूपम् अविन्दन् । तत्र त्रिताख्य एको जलपानाय कूपं प्राविशत् । प्रविश्य स्वयम् अपः पीत्वा इतरयोश्च कूपाद् उदकम् उद्धृत्य प्रादात् । तावुभौ तद् उदकं पीत्वा तं त्रितं कूपे पातयित्वा तदीयं धनं सर्वम् अपहृत्य कूपं च रथचक्रेण पिधाय प्रास्थिषाताम् । ततः कूपे पतितः स त्रितः कूपाद् उत्तरीतुम् अशक्नुवन् सर्वे देवा माम् उद्धरन्तु इति मनसा सस्मार । अथ स त्रितो रात्रौ कूपस्य अन्तश्चन्द्रमसो रश्मीन् अपश्यन् अनया ऋचा परिदेवयत इति । अस्या ऋचः अयम् अर्थः— अप्सु आन्तरिक्षासु उदकमये मण्डले अन्तः मध्ये । यद्वा आप इति अन्तरिक्षनाम । तत्र मध्ये वर्तमानः सुपर्णः शोभनपतनः । यद्वा सुपर्ण इति रश्मिनाम । सुषुम्नाख्येन सूर्यरश्मिना युक्तः चन्द्रमाः चन्द्रम् आह्लादं सर्वस्य जगतो निर्मिमीत इति चन्द्रमाः । 'चन्द्रे मो डित्' ( पाउ ४,२२८ ) इति असुन् । दासीभारादिषु पाठात् पूर्वपदप्रकृतिस्वरत्वम् । आह्लादकारी सोमो दिवि द्युलोके आ धावते शीघ्रं गच्छति । सृ गतौ । 'पाघ्रा' ( पा ७,३,७८ ) इत्यादिना वेगितायां गतौ धावादेशः । व्यत्ययेन आत्मनेपदम् । तादृशस्य चन्द्रमसः संबन्धिनो हे हिरण्यनेमयः सुवर्णसदृशपर्यन्ता हितरमणीयप्रान्ता वा हे विद्युतः विद्योतमाना रश्मयः वः युष्माकं पदं पादस्थानीयम् अग्रं न विन्दन्ति मदीयानि इन्द्रियाणि कूपेन आवृतत्वाद् न लभन्ते । न पश्यन्तीत्यर्थः । अतः इदम् अनुचितम् । तस्मात् कूपाद् माम् उत्तारयतेत्यर्थः । अपि च हे रोदसी द्यावा-पृथिव्यौ मे मदीयम् अस्य इदं स्तोत्रं वित्तम् जानीतम् । विद ज्ञाने । लोटि अदादित्वात् शपो लुक् । पादादित्वात् 'तिङ्ङतिङः' ( पा ८,१,२८ ) इति निघाता-भावः । यद्वा मे मदीयं कूपपतनरूपं यद् इदं दुःखं तद् अवगच्छतम् । मदीयं स्तोत्रं श्रुत्वा मदीयं दुःखं ज्ञात्वा अस्मात् कूपाद् माम् उत्तारयतम् इत्यर्थः । अस्येति । 'क्रियाग्रहणं कर्तव्यम्' ( पावा १,४,३२ ) इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । 'ऊडिदम्' ( पा ६,१,१७१ ) इति विभक्तेरुदात्तत्वम् ।

इति चतुर्थेऽनुवाके नवमं सूक्तम् ।

अनुवाकश्च समाप्तः ।

श्रीमद्राजाधिराजराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराजकारिते
सायणाचार्यविरचिते अथर्ववेदार्थप्रकाशे
अष्टादशं काण्डं समाप्तम् ।

---

